आस्तिकशास्त्रेषु बौद्धग्रन्थेषु च सुतरां निष्णात आसीदयं ज्ञानश्रीमित्र इति तन्निबन्धपाठाद् विज्ञायते। तस्य प्राक्प्रदिष्टं तन्त्रयानानुगत्वं तु न ग्रन्थपर्यालोचनातः स्पष्टीभवति। प्रमाणवार्तिकस्थश्लोकविशेष[१.१६]व्याख्यावसरे स्वगुरोर्मतमपि प्रदर्शितमेतेन। सुवर्णद्वीपवासिनो धर्मपालाचार्यस्य शिष्यत्वस्वीकारोप्यऽस्य श्रूयते। स्वसम्प्रदायपरिचायकस्तत्कृतश्लोकस्तु तदीयसाकारसिद्धौ,

आर्यासङ्गमनङ्गजिन्नयवहो यद्भूपतीशोऽन्वशाद्
आचार्यो वसुबन्धुरुद्धुरमतिस्तस्याशया दीधुतत्।
दिङ्नागोऽथ कुमारनाथविहितासामान्यसाहायक-
स्तस्मिन् वार्तिकभाष्यकारकृतिनोरद्यानवद्या स्थितिः॥

इति। अत्र स्ववचसानेन मैत्रेयनाथोपज्ञयोगाचारविज्ञानवादसम्प्रदाये प्रज्ञाकरप्रवर्तिते च धर्मप्रस्थानेऽस्यान्तर्भाव इति स्फुटीकृतम्। प्राचार्येण स्थिरव्रतकेन [Stcherbatsky] प्रज्ञाकरानुयायिनां त्रेधा विभागः प्रदर्शितः। तेषु विभागेषु जिनो रविगुप्तो यमारिश्च प्रवक्तारः संजाताः। प्रज्ञाकरशिष्यो रविगुप्तो ज्ञानश्रीसमकालं काश्मीरेषूवास। यमारिश्च काश्मीरकस्य ज्ञानश्रियः शिष्यः, कार्यक्षेत्रं चास्य वङ्गेष्विति तेन प्रतिपादितम्। अथ रविगुप्तकृतिर्जिनेन स्वग्रन्थे खण्डिता जिनकृतिश्च यमारिणा इति तत एव श्रूयते।

ज्ञानश्रीमित्रस्तु क्षणभङ्गाध्यायस्यान्तिमे भागे कञ्चनाचार्यं रविनामानं द्वेधा नामग्राहं ससम्मानं चोल्लिखति। एतं विषयं मनसि निधाय रविगुप्तज्ञानश्रीयमारीणां परस्परसंबन्धः पुनर्विवेचनमर्हति। सर्वे इमे वङ्गमगधप्रचलिते प्रज्ञाकरीये प्रस्थानेऽन्तर्भूता न वेति, रविगुप्तयमार्योरन्तरा च ज्ञानश्रीमित्रस्य स्थानमुत ज्ञानश्रीभद्रस्येति च पुनरवेक्षणीयम्। अत्र निर्णयस्तु ज्ञानश्रीमित्रनिबन्धैः सह भोटभाषानुवादनिबद्धाभ्यां रविगुप्तस्य यमारेश्च कृतिभ्यां कृच्छ्रसाम्येन तुलनेनैव संभाव्यते॥

२. *उपलब्धनिबन्धपरिचयः*

उपलब्धानां ज्ञानश्रीमित्रनिबन्धानां कश्चित् परिचयोऽत्रापेक्षित इति कृत्वा स्वल्पपरिसरेणैव स प्रस्तूयते।

(१) क्षणभङ्गाध्यायाख्यः सर्वेषां वस्तूनां क्षणभङ्गसाधनपरो मुख्यतमो ज्ञानश्रीमित्रनिबन्धः। एष च ग्रन्थान्तरस्याध्यायविशेष इति न मन्तव्यम्। एतस्यैव चत्वारः परिच्छेदाः सन्ति। अत्र न्यायवैदिस्तम्भभूतानां शङ्करभासर्वज्ञत्रिलोचनवाचस्पतीनां मतानि समुन्मूल्य स्वमतं स्थापितमिति ग्रन्थकृता कण्ठत एवापादितम्। दृश्यते चात्र तत्तन्मतानि प्रोद्धृत्य बाहुल्येन खण्डितानीति।

यत् सत् तत् क्षणिकं यथा जलधरः सन्तस्तु भावा इमे
सत्ता शक्तिरिहार्थकर्मणि मितेः सिद्धेषु सिद्धा न सा।
नाप्येकैव विधान्यदापि परकृन्नैव क्रिया वा भवेद्
द्वेधापि क्षणभङ्गसंगतिरतः साध्ये च विश्राम्यति॥

इत्यादिमश्लोके शास्त्रार्थः संगृहीतः। ततश्चतुर्षु परिच्छेदेषु पक्षधर्मान्वयव्यतिरेकाहेतुकविनाशाधिकाराख्येषु स्थिरवादं दीर्घविश्लेषणेन खण्डयित्वा स्वमतं प्रतिष्ठापितम्। विचारश्चात्र पूर्णाङ्गो मार्मिकश्च॥

(२) व्याप्तिचर्चा तु बौद्धोपज्ञव्याप्तिस्वरूपप्रदर्शनपरो निबन्धः। व्याप्तिश्च भारतीयदर्शनप्रस्थानेषु चार्वाकान् प्रहाय सर्वैः स्वीक्रियते। किं तु तस्या मूलं स्वरूपं चाधिकृत्य तेषु मतभेदो वर्तततराम्। नैयायिका व्यभिचाराज्ञानं सहचारज्ञानं च व्याप्तिनिश्चयोपाय इति कथयन्ति, बौद्धाश्च तादात्म्यतदुत्पत्तिभ्यामभावेन च व्याप्तिमुपपादयन्ति। अत्र तु प्रासङ्गिके विचारे त्रिलोचनवाचस्पतिप्रभृतीनां मतान्युद्धृत्य खण्डितानि। अन्ते च प्रत्यक्षानुपलम्भसंभवैव हेतुफलभावस्वभावव्याप्तिसिद्धिरिति निष्कर्षः प्रदत्तः॥

(३) ज्ञानश्रियो निबन्धावलौ भेदाभेदपरीक्षा ह्रस्वतमा। ज्ञानज्ञेययोः संबन्धविचारोऽस्या विषय इति भाति। तयोर्भेदमेके आमनन्ति, ऐक्यं चापरे। पक्षयोरुभयोरपि दोषाः प्रदिष्टा इतीतरे भेदाभेदपक्षमुररीकुर्वन्ति। भेदस्याकारेणाभेदपक्षस्य, अभेदावलम्बनेन च भेदपक्षस्य दोषा अपयन्तीति तेषामाशयः। सिद्धान्तस्तु ज्ञानश्रियोऽभेदपक्षपाती, भेदाभेदस्वीकारे उभयपक्षपरिदृष्टदोषाणां सन्निपातापत्तेः॥

[illegible] द्रमाकारेण। बौद्धदार्शनिकस्वीकृताया अनुपलब्धेर्लक्षण
भेदाश्च [illegible] नि॥

(५) सर्वशब्दाभावचर्चा त्वनुपलब्धिरहस्यस्य खिलरूपेण स्वीकारमर्हति, शब्दसामान्याभावे कार्यानुपलब्धिसामर्थ्यविवेचनात्। शब्दसामान्याभावे च न सिद्धान्तिनो विमतिः; प्रस्तुते कार्यानुपलब्धिस्थले स्वभावानुपलब्धिप्रतिष्ठापनमेवात्र तस्य कृत्यम् ॥

(६) अपोहप्रकरणं बौद्धसिद्धान्तानुसारं शब्दार्थविवेचनपरमतीव गम्भीरार्थकम्।

शब्दैस्तावन्मुख्यमाख्यायतेऽर्थ-
स्तत्रापोहस्तद्गुणत्वेन गम्यः।
अर्थश्चैकोऽध्यासतो भासतोऽन्यः
स्थाप्यो वाच्यस्तत्त्वतो नैव कश्चित् ॥

इति प्रकरणार्थसंग्राहकः श्लोको ज्ञानश्रीमित्रस्य। एष ग्रन्थो बाहुल्येन खण्डित उदयनाचार्येण तदनुसारिणा च शङ्करमिश्रेणेति बौद्धाधिकारचर्चानिरतैरवधेयम् ॥

(७) ईश्वरवादस्तु विश्वनिर्मातुर्नित्यस्य परमेश्वरस्य खण्डनं विदधाति। प्रथमे परिच्छेदे शङ्करवाचस्पतिवित्तोकभासर्वज्ञत्रिलोचनशतानन्दानां जगत्कर्तृसाधकानि मतानि तत्तद्वचसा समुपस्थाप्य, द्वितीये बौद्धदृशा सामान्यतस्तत्खण्डनम्। तृतीये च धर्मकीर्तिकृतप्रमाणवार्तिकस्थेश्वरखण्डनपरस्य श्लोकसप्तकस्य विस्तरव्याख्यानम्। तृतीयोऽपि परिच्छेदस्त्रेधा विभक्तो ग्रन्थकारेण ॥

(८) स्वसिद्धान्तानुसारं कार्यकारणभावनिर्णयः कार्यकारणभावसिद्धौ विहितो ज्ञानश्रीमित्रेण। त्रिकपञ्चकचिन्तेत्यस्यापरं नामधेयम्। धर्मयोः कार्यकारणभावस्थापनविधावुपलम्भानुपलम्भानां संख्यानिर्णयमधिकृत्य बौद्धेषु मतविरोधः। धर्मोत्तरस्य पञ्चकपक्षः, ज्ञानश्रीमित्रस्य तु त्रिकपक्षः। गद्यपद्यनिबद्धेऽत्र ग्रन्थे कारिकासु सिद्धान्तः प्रदर्शितः, गद्यभागे च तदर्थको विचारः। ज्ञानश्रीमित्रनिबन्धेष्वयमेक एव भोटभाषायामनूदितोऽभूत् ॥

(९) योगिनिर्णयप्रकरणे योगिस्वरूपं तत्प्रत्यक्षं च बौद्धसम्मतं विवेचितवानाचार्यः ॥

(१०) अद्वैतबिन्दुप्रकरणं साकारविज्ञानवादव्याख्यानपरम्। अत्र ज्ञानज्ञेययोस्तात्त्विकभेदनिरासः कृतः ॥

(११) साकारसिद्धिशास्त्रं साकारविज्ञानवादमेव महता आडम्बरेण प्रपञ्चयति। धर्मकीर्तिरस्य वादस्य प्रवर्तक इति श्रूयते। प्रज्ञाकरेणायं विशदीकृतः। अत्र शास्त्रे वादस्यास्य

व्याख्यानं नागार्जुनमैत्रेयनाथासङ्गादिप्राचीनाचार्यसम्मतिप्रदर्शनपुरःसरं समुपलभ्यते। धर्मकीर्तेः प्रज्ञाकरस्य च मतानि प्रदर्शितानि। षट्सु परिच्छेदेषु विभक्तमिदं शास्त्रम्। प्रथमे निराकार-ज्ञानवादविवेचनम्, द्वितीये सङ्क्लेशव्यवदानचर्चा, तृतीये मध्यमावतारप्रदर्शनम्, चतुर्थे चित्राद्वैतप्रपञ्चनम्, पञ्चमे स्वसंवेदनविचारः, षष्ठे च योगाचारविज्ञानवादेन माध्यमकसिद्धान्तस्य मौलिकमैक्यं समागच्छन्ति ॥

(१२) साकारसङ्ग्रहसूत्रं तावत् साकारसिद्धिशास्त्रस्य पद्यात्मकः सारसङ्ग्रहः। अत्र तु चत्वारः परिच्छेदाः। तेष्वेव शास्त्रस्थानां षण्णां परिच्छेदानां विषयाः समाहृताः ॥

## २. प्रस्तुतनिबन्धानां कर्तृत्वविचारः

अत्र क्षणभङ्गाध्यायं विहायैकादशनिबन्धा मातृकामेकामवलम्ब्यैव सम्पादिताः। बहुत्र च ग्रन्थकृन्नामनिर्देशः पुष्पिकायां नायाति। अतएव प्रस्तुतनिबन्धानामेककर्तृत्वस्वीकारकारणं स्पष्टीकरणीयम्।

(१) क्षणभङ्गाध्याये पुष्पिकासु न ग्रन्थकारोल्लेखः। अन्तिमश्लोके तेनस्तात् पर-पारगस्त्रिभुवने ज्ञानश्रियोऽयं जन इत्यत्र तस्य सङ्केत इति प्रतिभाति। रत्नकीर्त्युदयनवादिदेवादिभिः क्षणभङ्गाध्यायस्थाः श्लोका ज्ञानश्रीनाम्ना समुद्धृताः।

(२) व्याप्तिनिर्णयस्तु ज्ञानश्रीमित्रकृतिरेव, पुष्पिकायां तथा निर्देशात्।

(३) भेदाभेदपरीक्षापि ज्ञानश्रीमित्रनिर्मिता, तदीयसाकारसिद्धौ तथा कथनात्।

(४,५) अनुपलब्धिरहस्यस्य सर्वशब्दाभावचर्चायाश्च कर्ता नोल्लिखितः, न चेतरत्र तदुपलम्भः।

(६) अपोहप्रकरणस्थः सन्दर्भो वादिदेवेन ज्ञानश्रीमित्रस्यैवेति नामग्राहं गृहीतः स्याद्वादरत्नाकरे।

(७) ईश्वरवादकर्तुरेव ग्रन्थान्तरं निकपञ्चकचिन्तेति ईश्वरवादे निर्दिष्टम्। साकार-सिद्धिशास्त्रे च तत्कर्तुर्बृहदीश्वरवादः समुल्लिखितः।

(८) निकपञ्चकचिन्तापराख्या कार्यकारणभावसिद्धिर्ज्ञानश्रीमित्रकृतिरिति तस्य ग्रन्थस्य भोटभाषानुवादात् परिज्ञायते।

(९) रत्नकीर्तेः सर्वज्ञसिद्धेराधारभूतो योगिनिर्णय इति भाषासाम्याद् विषयसाम्याच्च समायाति ।

(१०) साकारसिद्धौ ज्ञानश्रीमित्रग्रन्थत्वेनाद्वैतबिन्दुप्रकरणस्योल्लेखो दृश्यते ।

(११-१२) साकारसिद्धिशास्त्रं साकारसंग्रहसूत्रं च पुष्पिकानिर्देशाज् ज्ञानश्रीमित्रकृती एव ।

एतत् सर्वं मनसि निधाय, एकां शैलीं सर्वत्र चावलोक्य, विमृश्य चैकमातृकायां सर्वेषां समुपलम्भं द्वादश इमे ग्रन्था ज्ञानश्रीमित्रनिर्मिता इति निर्णयः स्वत एवापतति ।

एभिः सहानुपलब्धा सर्वज्ञसिद्धिर्ज्ञानश्रीमित्रस्य समुल्लेखमर्हति । सापि रत्नकीर्तिना स्वसर्वज्ञसिद्धौ व्यवहृतेति प्रतिभाति । साकारसिद्धौ व्याप्तिचर्चायां च ज्ञानश्रीमित्रेण सर्वज्ञसिद्धिः काचिदुल्लिखिता, योगिनिर्णये च ज्ञानश्रीमित्रकृतिः सर्वज्ञसिद्धिः । अन्यत्र योगिनिर्णये सर्वज्ञसिद्धेः श्लोकार्धोद्धारो दृश्यते । एकैव सर्वज्ञसिद्धिर्ज्ञानश्रीमित्रकृता सर्वत्रामृष्टेति प्रतिभाति ।

क्षणभङ्गाध्याये 'हेतुफलग्रहणे व्यवस्थितप्रतिसन्धातृवादस्तु प्रस्तोष्यतेऽनेकान्तचिन्तायाम्' इति निर्देशदर्शनेन ज्ञायते ज्ञानश्रीमित्रस्याभिप्रेतमनेकान्तवादमालम्ब्य ग्रन्थान्तरमासीदिति । सा त्वनेकान्तचिन्ता निर्मिता न वेति न परिज्ञायते ॥

## ४. *प्रस्तुतनिबन्धानां कालक्रमः*

संस्करणेऽत्र मातृकादृष्टग्रन्थक्रम एवानुसृतः । इतरेतरोल्लेखदर्शनात् कुत्रचिदन्यथाभावसंभवेऽपि मातृकाया एकत्वाद् विपरिवर्तनमत्र न युक्तियुक्तम् । न च पूर्णो ग्रन्थक्रमोऽन्यतः कुतश्चिदागच्छति । निबन्धाश्चात्र परस्परनिरपेक्षाः । उदयनाचार्यकृते आत्मतत्त्वविवेके ज्ञानश्रीमित्रमतखण्डनविधावपि निबन्धनिर्माणक्रमो नानुसृत इति लक्ष्यते । इतरेतरोल्लेखदर्शनबलेन प्राप्तं ग्रन्थक्रमविवरणमत्र प्रस्तूयते ।

अनुपलब्धिरहस्यं, सर्वशब्दाभावचर्चा, योगिनिर्णयप्रकरणं, साकारसंग्रहसूत्रं च कुत्रचित् निबन्धान्तरे नामग्राहं नोपात्तानि । अतो ज्ञानश्रीमित्रकृतिषु तेषां क्रमिकस्थाननिर्देशो न शक्यक्रियः । व्याप्तिचर्चायाम्, अपोहप्रकरणे, ईश्वरवादे चोद्देशात् तेभ्यः प्राक् क्षणभङ्गाध्यायस्य स्थानम् । ईश्वरवादात् पूर्वं व्याप्तिचर्चा निर्मिता, तस्यास्तत्रोल्लेखात् । साकारसिद्धावुल्लिखिता

भेदाभेदपरीक्षा ततः पूर्वं निर्मितेत्यायाति। तथैव व्याप्तिचर्चातोऽपोहप्रकरणस्य प्राचीनत्वम्। व्याप्तिचर्चायामपि भाविनोऽपोहप्रकरणस्य निर्देशो दृश्यते। साकारसिद्धेः पूर्वमीश्वरवादस्य निर्माणं निश्चप्रचम्, तस्य तत्रोल्लेखात्। क्षणभङ्गेश्वरवादयोः पूर्वं कार्यकारणभावसिद्धिर्विरचिता, उभयत्र तस्या व्यवहारात्। अद्वैतबिन्दुप्रकरणमपि तथैव साकारसिद्धिशास्त्रात् पूर्वं पतति। समानन्यायेन साकारसिद्धिशास्त्रं चापोहप्रकरणक्षणभङ्गाध्याययोः पूर्ववर्ति।

एतावता बहुषु स्थलेषु पौर्वापर्ये निर्णीतेऽपि पूर्णलेखनक्रमनिर्धारणं दुःशकमेवैतेषां निबन्धानामिति स्फुटं विज्ञायते॥

## ५. ज्ञानश्रीमित्रस्य रचनाशैली

ज्ञानश्रीमित्रस्य शैली तावदकुण्ठा सरला च यया सत्यपि विषयकाठिन्ये निबन्धा इमे विदुषां मनोहराः संजाताः। बौद्धपरिभाषातो बाहुल्येन मुक्ताः, भाषादृष्ट्या च नैयायिकादिभिः संबद्धाश्च सर्वे। पूर्वसूरिणो धर्मकीर्तिप्रज्ञाकरादयस्तु न शैलीसौष्ठवमधिकृत्य ज्ञानश्रियमतिशेरते।

विषयकाठिन्यमन्तर्निहितं मनोहारिकथानकादियोजनेन लघूकृतं ज्ञानश्रिया। भौतविचाराख्यानमेतत्प्रयुक्तमुदयनादिग्रन्थेषु बहुत्र स्वीकृतं दृश्यते। लौकिकन्यायाः कौतुकोक्तयश्चान्तरान्तरा निविष्टा नवीनतां विदधते नीरसस्यापि विषयजातस्य।

प्रायः सर्वेऽत्र निबन्धा विचारबहुलाः। सम्मुखस्थित इव प्रतिपक्षो दृश्यतेऽत्र युक्तिप्रयोगः। अतएव जल्पकथावत् कटुकशब्दप्रयोगा अपि न दुर्लभाः। आदौ प्रतिपक्षवचसैव तन्मतमनूद्य ततस्तद्विश्लेषणं युक्त्या खण्डनं च ज्ञानश्रीमित्रस्य वैशिष्ट्यम्। अनुकृतोऽसावत्र स्वशिष्येण रत्नकीर्तिनापि।

इह दार्शनिकेष्वपि प्रबन्धेषु बहुत्र भाषा कवित्वसुषमामण्डिता समायाति। अलङ्कारप्रयोगाश्च परं प्रीतिकराः। भट्टनारायणकृतेर्वेणीसंहारस्य श्लोकविशेषमाधारीकृत्य

प्रत्यक्षं येन खलीकृताम्बरदशामाकृष्य नः प्रेयसी
　　सायूयं सदसि स्थितेषु कृतिषु प्रख्यातकीर्तिष्वपि।
क्रूरन्यायमयो निराकृतिनयो दुःशासनः साम्प्रतं
　　सोऽयं मद्भुजपञ्जरे निपतितः संरक्ष्यतां कौरवाः॥

इति श्लेषपरः साकारसंग्रहोपोद्घातश्लोकोऽत्र द्रष्टव्यः। स च निबन्धः कृत्स्न एव वृत्तनिबद्धः। इतरत्रापि ज्ञानश्रीमित्रो वृत्तव्यवहारं बाहुल्येन करोति। तत्रापि दीर्घवृत्तानां प्रयोगोऽधिकरुचिकरः पाठकस्य। छन्दःशास्त्रोपदेष्टा आसीदसौ ज्ञानश्रीमित्र इति श्रूयते। तत्तु प्रस्तुतग्रन्थदर्शनादवितथमिति भाति।

कवित्वख्यातिरप्यस्य ज्ञानश्रीमित्रस्य बहुप्रथिता आसीदिति संभाव्यते। सुभाषितरत्नकोषे विद्याकरेण ज्ञानश्रीमित्रनाम्ना लोकेश्वरस्तुतिमूलकं श्लोकद्वयम्

अत्युद्गाढरयस्थिराकृतिघनध्वानभ्रमन्मन्दर-
क्षुब्धक्षीरधिवीचिसञ्चयगतप्रालेयपादोपमः।
श्रीमत्पोतलके गभीरविवृतिध्वानप्रतिध्वानिते
सान्द्रस्वांशुचयश्रिया धवलितो लोकेश्वरः पातु वः॥

उदरस्येदमणुत्वं सहजगुरुत्वं यदि नेदं हृदयस्य।
स्वार्थे कथमलसत्वं कथमनुसत्वं हितकरणे मतिरस्य॥

इति समुद्धृतम्। पण्डितज्ञानश्रीनाम्ना च

तरन्तो दृश्यन्ते बहव इह गम्भीरसरसि
स्वसाराभ्यामाभ्यां हृदि विदधतः कौतुकशतम्।
प्रविश्यान्तर्लीनं किमपि सुविवेच्योद्धरति य-
श्चिरं रुद्धश्वासः स खलु पुनरेतेषु विरलः॥

इति श्लोकस्तेनैवोद्धृतः। संभाव्यते चायमपि ज्ञानश्रीमित्रस्येति, पण्डितशब्देन स्वकृतिषु तस्य व्यपदेशदर्शनात्।

ज्ञानश्रीमित्रात् पूर्वं जरन्नैयायिकेन जयन्तभट्टेन, तदनन्तरं च वादिदेवप्रभृतिभिर्दर्शननिबन्धेषु सालङ्कारपद्यप्रयोगो विहितः॥

## ६. बौद्धेतरे ग्रन्थकारा ग्रन्थाश्चामृष्टा ज्ञानश्रीमित्रेण

प्रस्तुतानां निबन्धानां पर्यालोचनया ज्ञानश्रीमित्रस्य विभिन्नशास्त्राभिज्ञतानन्यसाधारणी लोचनपथमापतति। स्वयूथ्यान् बौद्धान् नैयायिकांश्च प्रमुखान् प्रतिपक्षान् विहाय सोऽन्यशास्त्र

ग्रन्थान् ग्रन्थकारांश्च बहुधा समुल्लिखति। वर्ततेऽत्र निबन्धेषु साधारणव्यपदेशो वेदानाम्। विशिष्य च दृश्यते ऋग्वेदात् श्वेताश्वतरोपनिषदश्च मन्त्रोद्धारः। महाभारतादपि श्लोकानुवादः कृतो ज्ञानश्रिया। पाणिनीयं व्याकरणप्रस्थानं सयत्नमनेनासेवितम्। उद्धृतानि बहुत्राष्टाध्यायीसूत्राणि। पाणिनीयपरिभाषानुसारं गङ्गा यमुना च न नदीसंज्ञार्हे [-यूस्त्र्याख्यौ नदी १।४।३ इत्यनुशासनात् ], स्थली तु तथेत्यधिकृत्य कौतुकमपि कृतम्। व्याकरणसंग्रहकारो व्याडिर्महाभाष्यकारः पतञ्जलिश्चोल्लिखितौ।

दार्शनिकस्य सतो ज्ञानश्रीमित्रस्य घनिष्ठतरः सम्बन्धो दार्शनिकैर्दृश्यते। चार्वाकास्तीर्थिकाश्च तेनोद्दिष्टाः। अह्रीकशब्देन च दिगम्बरा अत्रामृष्टा भवेयुः। दिगम्बराश्च नामग्राहमुल्लिखिताः। अनेकान्तवादमधिकृत्य ग्रन्थनिर्माणेच्छा त्वस्य प्रागेवोद्दिष्टा। वेदान्तिनोऽपि सामान्योल्लेखभाजोऽत्र निबन्धेषु दृश्यन्ते।

वैशेषिकसिद्धान्तनिष्णातो ग्रन्थकारः काणादसूत्राणि समुद्धरति। अभ्युदयं निःश्रेयसं च स्पृशति। द्रव्यगुणसामान्यविशेषसमवायानां च वैशेषिकपदार्थानां खण्डनं कुरुते। कुत्रचित् कठोरवचसा वैशेषिकगर्हणमप्यत्र दृष्टिपथमापतति।

मीमांसकाः खलु ज्ञानश्रीमित्रदृशा गौरवातिशयभाजः। जैमिनिसूत्रं तेन व्यवहृतम्। अद्यत्वेऽनुपलभ्यमाना कुमारिलकृता बृहट्टीका समं श्लोकवार्तिकेन समुद्धृता। भट्टश्चायं सानुगोऽन्यत्रापि निर्दिष्टः। श्लोकवार्तिककाशिकाकारः सुचरितमिश्रोऽपि दृढं परिचित आसीज् ज्ञानश्रियः। वाचस्पतिकृतेन्यायकणिकातः सन्दर्भसंग्रहस्तत्खण्डनं च बहुधात्र दृष्टिपथमायातम्। नातिपरिचितो महोदधिकृतो ग्रन्थो द्वेधा समुल्लिखितवानसौ। अयं ग्रन्थकारो जल्पमहोदधिनाम्नापि निर्दिष्टः। तेन त्वस्य कथापाण्डित्यं सूचितं भवति। अयं भट्टपक्षावलम्बीति नयविवेकधृतैतत्कृतान्विताभिधानदूषणसूचनातः स्पष्टीभवति। हेतुबिन्दुटीकालोके धर्मोत्तरप्रदीपे च दुर्वेकमिश्रो महोदधिमामृशति। प्रबोधचन्द्रोदये च श्रीकृष्णमिश्रः शालिकवाचस्पतिमहाव्रतैः सह महोदधिरपि प्रवीणमीमांसकत्वेनोल्लिखितः। ग्रन्थोऽप्यस्य महोदधिनाम्ना प्रसिद्ध आसीदित्याभाति।

प्रकृतप्रतिपक्षास्तु ज्ञानश्रियो नैयायिका एव। आद्यपादानां बौद्धनैयायिकानां च सारस्वतप्रतिस्पर्धिता बौद्धन्यायशास्त्रस्य प्रवर्तनादेव दृश्यते। आदौ बौद्धाः प्रमाणहेत्वाभासजातिनिग्रहस्थानादिविभागलक्षणादौ न्यायसूत्रानुसारिण आसन्। वस्तुतत्त्वस्वरूपनिर्णये तावद्

उभयोर्मतभेदो दृश्यते स्म। प्राचीनबौद्धवादग्रन्थाः केचन रोमकप्राचार्येण तुषितेन [ Dr. Tucci ] महापण्डितेन राहुलसांकृत्यायनेन चाविष्कृताः।

नागार्जुनः किल प्रमाणविहेटने विग्रहव्यावर्तन्यां च न्यायमतखण्डनं विदधाति। प्रमाणविहेटने गोतमसंमताः षोडशपदार्थाः परीक्षिता इति भोटभाषाविदः कथयन्ति। विग्रहव्यावर्तन्यां न्यायमतखण्डनं सुलभदर्शनं संस्कृताभिज्ञानामपि।

वात्स्यायननिर्मिते न्यायभाष्ये बौद्धमतोपरि कटाक्षा न तिरोहिता विद्वल्लोचनेभ्यः। दिग्नागेन प्रमाणसमुच्चयादौ न्यायभाष्यमतानि खण्डितानि। भाष्यस्यास्य प्राचीनटीकाग्रन्थेषु भारद्वाजोद्द्योतकरकृतं न्यायवार्तिकमेवोपलभ्यते। तत्र वसुबन्धुदिग्नागादयो बौद्धा सयुक्तिकं प्रक्षिप्ताः। विश्वरूपाध्ययनाविद्धकर्णभाविविक्तादिकृता न्यायभाष्यटीकाग्रन्थास्तु विस्मृतिविलीनाः संजाताः। एतेऽपि टीकाकृतो भृशं बौद्धमतखण्डनं चक्रुरिति शान्तरक्षितादिग्रन्थेषु तत्तन्मतोद्धरणं खण्डनं चालोकयतो न तिरोहितम्। उद्द्योतकरग्रन्थसम्प्रदायस्त्वयत्वेऽपि लब्धप्रसरः। कारणं त्वत्र वाचस्पतिमिश्रस्य तत्र बहुमानमिति भाति। बौद्धधुरन्धरो धर्मकीर्तिस्तावदुद्द्योतकरस्य प्रतिपक्षः। स च खण्डितो वाचस्पतिमिश्रेण। न्यायवार्तिकतात्पर्यटीकायोजनेन वाचस्पतिना कृतः परमोपकारो न्यायसम्प्रदायस्य। स्मरणीयात्र विषये तात्पर्यपरिशुद्धौ न्यायाचार्यस्योदयनस्योक्तिः—उद्द्योतकरसम्प्रदायो ह्यमूषां यौवनम्। तच्च कालपरिपाकवशाद् गलितमिव। किं नामात्र त्रिलोचनगुरोः सकाशादुपदेशरसायनमासादितममूषां पुनर्नवीभावाय दीयते इति।

वैशेषिकदर्शनं परिहाय मीमांसावेदान्तन्यायसांख्ययोगदर्शनेषु ग्रन्थान् निर्माय सर्वत्र वैशिष्ट्यं व्यधाद् वाचस्पतिः। सत्सु च तेषु तेषु गौरवस्थानेषु वाचस्पतिकृतिषु यथाप्राप्ति धर्मकीर्त्यादिबौद्धैर्विरोधस्तु सर्वत्र दृश्यतेतमाम्। न्यायवार्तिकतात्पर्यटीका तु तद्ग्रन्थेषु मुख्यतमः। तदनुसारेणैवास्य टीकाकार इति तात्पर्याचार्य इति च नामनी संवृत्ते।

वाचस्पतिसमकालं तदनन्तरं च बौद्धदार्शनिकाः प्रबला आसन्नित्यत्र न वर्तते सन्देहलेशोऽपि। उदयनाचार्यकृतौ न्यायवार्तिकतात्पर्यपरिशुद्धौ प्रज्ञाकरो ज्ञानश्रीमित्रश्च नामग्राहमुल्लिखितौ। प्रज्ञाकरादपि ज्ञानश्रीमित्र उदयनदृष्टिमधिकामाकृष्टवान्। अत्र न्यायशास्त्रेतिहासे ज्ञानश्रीमित्रावदानस्य गौरवातिरेकः। वाचस्पतिमुदयनं चान्तरा समागतोऽसौ खण्डयति वाचस्पतिमतम्, स्वयं चोदयनेन खण्डित इति तयोर्ग्रन्थैः समं प्रस्तुतनिबन्धानां पर्यालोचनातः स्पष्टीभविष्यति। सुदीर्घं कालं यावत् नाम्ना परिज्ञातस्यापि ज्ञानश्रीमित्रस्य ग्रन्थमहिमा न विदित

आसीत्। तद्विषये च विविधाः कल्पनाः प्रचलिता दृश्यन्ते स्म। अधुना स खलु रिक्तस्थानविशेषः प्रपूरितो ज्ञानश्रीमित्रनिबन्धानामाविष्कारात्।

ज्ञानश्रीमित्रस्तु न केवलं वाचस्पतिकृतिं खण्डयति, अपि तु तदितराचार्यनिर्मिता अपि न्यायग्रन्थास्तेन निबन्धेष्वेतेषु समुद्धृत्य दूषिताः। क्षणभङ्गाध्यायान्ते शङ्कर-भासर्वज्ञ-त्रिलोचन-वाचस्पतयस्तावदाक्षपादन्यायवेदिकास्तम्भत्वेन निर्दिष्टाः। विव्वोकः शतानन्दश्चापरौ नैयायिकौ तदुपात्तौ दृश्येते। एतेषां सर्वेषां मतविवेचनं बाहुल्येन विहितं ज्ञानश्रिया।

शङ्करस्तावत् क्षणभङ्गाध्याये ईश्वरवादे च बहुधा समुद्धृतः। धर्मकीर्तेरनन्तरमसौ नैयायिकः शङ्करः समायाति। स्पृष्टश्चासौ जरन्नैयायिकेन जयन्तभट्टेनान्यैश्च बहुभिः। एतस्य ग्रन्थः कोऽपि नाद्यत्वे विद्यते, ग्रन्थसन्दर्भास्तु विक्षिप्ता दृश्यन्तेऽर्वाचीनदर्शननिबन्धेषु।

भासर्वज्ञस्तु भूषणकारनाम्ना समुल्लिखितोऽत्र निबन्धेषु। क्षणभङ्गाध्याये, योगिनिर्णये, अपोहप्रकरणे, ईश्वरवादे चास्य ग्रन्थसन्दर्भाः समागच्छन्ति। मौलोऽस्य ग्रन्थो न्यायसाराख्योऽसकृत् प्रकाशितः। संग्रहवार्तिकापराभिधं न्यायभूषणं तद्व्याख्यानभूतमद्यापि मातृकापिहितं वर्तते।

क्षणभङ्गाध्याये, व्याप्तिचर्चायाम्, अपोहप्रकरणे, ईश्वरवादे च त्रिलोचनस्य मतान्यामृष्टानि। असौ त्रिलोचनस्तु वाचस्पतिमिश्रस्य विद्यागुरुः। दुर्वेकमिश्रस्तस्य न्यायभाष्यटीका मुद्दरति, वादिदेवस्तु न्यायप्रकीर्णकम्। ज्ञानश्रीमित्रस्ततोऽप्यपरां कृतिमेतस्य न्यायमञ्जरीनाम्नीमुल्लिखति। ईश्वरवादे त्रिलोचनकृतमञ्जरीतः सन्दर्भः समुद्धृतः खण्डितश्च। क्षणभङ्गाध्याये समागच्छति न्यायमञ्जरीति पूर्णं नामधेयमस्य त्रिलोचनग्रन्थस्य। एकत्र चास्मिन् ग्रन्थे यस्तावन्न्यायमञ्जरीसन्दर्भः सहकारिवादमधिकृत्य प्रदत्तः, स एव संक्षिप्य त्रिलोचनमतमिति रत्नकीर्तिना तदीयक्षणभङ्गसिद्धौ समुद्धृतः। अन्यत्र च त्रिलोचनमतप्रदर्शनार्थं न्यायमञ्जरी समुद्धृता क्षणभङ्गाध्याय एव। तात्पर्यटीकाव्याख्यानावसरेऽनिरुद्धो मञ्जरीकारानुसारित्वं वाचस्पतेरसकृत् प्रदर्शितवान्। एतैर्न्यायमञ्जरीसन्दर्भैर्जयन्तभट्टकृतेः कोऽपि संबन्धो नास्तीति रत्नकीर्तिनिबन्धावलीप्रस्तावनायां दृष्टम्। विदितचरमेव वाचस्पतेस्त्रिलोचनानुसारित्वम्, तात्पर्यटीकायाम्, अस्माभिः

त्रिलोचनगुरून्नीतमार्गानुगमनोन्मुखैः।<br>
यथामानं यथावस्तु व्याख्यातमिदमीदृशम्॥

इति विस्पष्टोल्लेखात्। न्यायकणिकामुखे तु पुनः,

अज्ञानतिमिरशमनीं परदमनीं न्यायमञ्जरीं रुचिराम् ।
प्रसवित्रे प्रभवित्रे विद्यातरवे नमो गुरवे ॥

इत्यत्र त्रिलोचनस्यास्य न्यायमञ्जरी कण्ठतः प्रशंसति वाचस्पतिः, त्रिलोचनं च भक्तिभूम्ना नमस्करोति। एतावता च वाचस्पतिगुरोस्त्रिलोचनस्यैवेयं न्यायमञ्जरीति निश्चप्रचमायाति।

उल्लिखितानां त्रिलोचनग्रन्थानां परस्परसम्बन्धनिर्णयो न शक्यक्रियः, ग्रन्थानामलाभादुपलब्धसन्दर्भाणां चानिर्णायकत्वात्।

न्यायकणिकातो न्यायवार्तिकतात्पर्यटीकातश्च वाचस्पतिसन्दर्भा ज्ञानश्रीमित्रेण समुद्धृताः। क्षणभङ्गाध्याये, व्याप्तिचर्चायाम्, अपोहप्रकरणे, योगिनिर्णये च वाचस्पतिमतचर्चा दृष्टा।

चतुर्णामेषां न्यायवेदिकास्तम्भानां कालक्रमोऽपि ज्ञानश्रीमित्रेण सूचितोऽभ्रान्त इति प्रतिभाति।

वित्तोकोऽपि विशिष्टो न्यायमताचार्य इति ज्ञानश्रीमित्रोल्लेखात् परिज्ञायते। ईश्वरवादमधिकृत्य तन्मतानि ज्ञानश्रीमित्रेण रत्नकीर्तिना च प्रदर्शितानि। स्वन्यायग्रन्थेऽसौ ईश्वरप्रतिष्ठां युक्त्या विहितवान्, आसीचास्य मौलिकत्वं युक्तिप्रयोग इत्येतावदेवाधुना निश्चेतुं शक्यते। विद्याकरसंगृहीते सुभाषितरत्नकोषे कस्यचन वित्तोकस्य केचन श्लोकाः संगृहीता दृश्यन्ते। कवेर्दार्शनिकस्य चैक्यनिर्धारणाय प्रमाणं न वर्तते, संभावना त्वस्त्येव।

अपरस्यापि कस्यचिन्नैयायिकस्य मतमीश्वरास्तित्वविषयकं महता प्रपञ्चेन खण्डितं ज्ञानश्रिया। मातृकाप्रान्तनिर्देशात् शतानन्दाख्योऽसाविति ज्ञायते। समकालिकोऽयं ज्ञानश्रीमित्रस्येति संभाव्यते। ईश्वरवादमधिकृत्य बौद्धमतमसौ खण्डितवान् यत्र ज्ञानश्रिया दोषाः प्रदर्शिताः। सुभाषितरत्नकोषे कतिचन श्लोकाः शतानन्दकृता अपि संगृहीता दृश्यन्ते। प्राचार्येण कौशाम्बीमहोदयेन पालसम्राजां सभाकविरयमभिनन्दजनकः ख्रीष्टीयनवमशतकपूर्वार्धस्थित इति संभावितम्। नैयायिकः शतानन्दोऽप्यनेन कविना अभिन्न इत्याभाति। सुभाषितरत्नकोषधृताः शतानन्दश्लोकास्तु विभिन्नजातीयाः। तेषु गङ्गां शोणं शिवं कृष्णं चादाय विलिखिताः कवेर्देशनिर्णये धर्ममतनिर्णये च साहायका भवन्ति।

दृढप्रतिपक्षकण्टकितमार्गपरिशोधनं विधाय स्वशेमुषीपरिचालनं कृतमत्र निबन्धेषु ज्ञानश्रीमित्रेणेत्येतद्दर्शनात् स्फुटीभवति। तद्विचारितेषु नैयायिकग्रन्थेषु बहवश्चिराय लुप्ताः। न्याय-

सम्प्रदायेऽगणितेषु ग्रन्थेष्वतिविशिष्टा एव सुरक्षिताः। तादृशयोर्द्वयोरन्तरा समागतास्तु प्रनष्टाः। कानिचित् तत्रत्यानि मतानि सुरक्षितान्यर्वाक्तनग्रन्थेषु। तथा चेश्वरवादमधिकृत्य प्राचीननैयायिकमतानि बहूनि न्यायकुसुमाञ्जलावुदयनेन समाविष्टानि। बौद्धा जैनाश्च सनामोल्लेखं तेषां सन्दर्भान् बहुत्र रक्षितवन्तः। धर्मकीर्तिमुदयनं चान्तरा समागतानां नैयायिकानां बहूनि मतानि ज्ञानश्रीमित्रः स्वनिबन्धेषु विधृतवानिति न्यायशास्त्रालोचकानां कृते इमे निबन्धा बहुमूल्या इत्यत्र न वर्तते संशयलेशोऽपि॥

## ७. अत्रामृष्टा बौद्धाः पूर्वसूरयः

ज्ञानश्रीमित्रकालात् पूर्वमेव बौद्धन्यायप्रस्थानं दृढप्रतिष्ठं बभूव। स च सप्रसादं प्राचीनग्रन्थानामृशति, तत्र विशेषाभिज्ञः स्वेच्छया तान् व्यवहरति च। मुख्यतो धर्मकीर्तिमतव्याख्यानपरस्यास्य महायानतन्त्रपरिज्ञानं पूर्णतया आसीत्। बौद्धसाहित्ये नूतनतया संयोजिते न्यायप्रस्थाने धर्मकीर्तिकृतेः प्रमाणवार्तिकस्यान्तर्भावः। एष खलु आचार्यः प्रज्ञाकरोपज्ञधर्मप्रस्थानानुसारी प्राचीनानां मतान्यपि वार्तिकेऽत्रानुस्यूतानीति मनुते। अतएवैतस्य व्याख्यानं प्राचीननवीनयोः संयोगसूत्रमिति सुवचम्। एतदर्थमेवैतस्य निबन्धेषु प्राचीनग्रन्थोद्धारस्तद्व्याख्यानं च भृशं दृश्येते। एभिः प्रतिपक्षप्रत्यायनं सुकरमभूदिति न संभाव्यते। तथापि प्राचीनार्वाचीनयोः संयोगविधानचेष्टात्र साधीयसी विहिता। एवं प्रज्ञाकरस्याशयः समर्थितो ज्ञानश्रिया। कथयति चासौ तद्व्याख्यानवैभवेन वार्तिककारस्य धर्मकीर्तेः, तद्भाष्यकारस्य च प्रज्ञाकरस्य स्थितिरनवद्या संजातेति।

सुविशाले बौद्धसूत्रसाहित्ये नितरामभिज्ञोऽसौ ज्ञानश्रीमित्रः सन्धिनिर्मोचनसूत्रं समाधिराजसूत्रं च नामग्राहमितराणि च सूत्राणि सामान्यत उल्लिखति। प्रज्ञापारमितासु तावदस्य विशेषपरिज्ञानं दृश्यते। अर्वाचीनेषु प्रज्ञापारमितासारसंग्रहेषु दिग्नागकृतः प्रज्ञापारमितापिण्डार्थस्तु बहुधानेनोद्धृतः। मैत्रेयनाथपादकृतिषु अभिसमयालङ्कारो, महायानसूत्रालङ्कारो, मध्यान्तविभागसूत्रम्, महायानोत्तरतन्त्रं च भृशं प्रमाणरूपेणानूदितानि निबन्धेष्वेतेषु।

योगाचारमतप्रस्थापकस्य मैत्रेयनाथपादस्यैतिहासिकत्वे विप्रतिपत्तिरासीद् गरीयसी। चैनिकसंप्रदायानुसारं प्रोल्लिखितग्रन्थानामसङ्ग एव निर्माता। एष तावद् विषयः कलिकाताविश्वविद्यालयभाषणमालायामाचार्यवरेण तुचितेन [ Dr. Tucci ] विशिष्य विवेचितः। स्थापितश्च तेन प्रमाणोपन्यासेन भोटदेशीयः प्रवादो मैत्रेयनाथपादस्यैवैतेषां कर्तृत्वख्यापकः।

असङ्गस्तु मैत्रेयकृतीनां व्याख्याता। काले गच्छति मूलकर्तृटीकाकारस्य च भेदो बहुत्र विस्मृतिग्रस्तः संजातः। ज्ञानश्रीमित्रो मैत्रेयनाथपादस्य श्लोकमुद्दधार। स च श्लोकस्तच्छिष्येण रत्नकीर्तिना मैत्रेयनाथस्येति कण्ठतः प्रतिपादितम्। अतो भोटदेशीयोऽयं प्रवादो ज्ञानश्रीमित्रकालप्रचलितभारतीयप्रवादादभिन्न इति शोभतेतराम्।

मैत्रेयनाथपादस्य शिष्यो गुरुश्च वसुबन्धुपादस्य आचार्योऽसङ्गपादः प्रमाणभूतो ज्ञानश्रीमित्रस्य। स्वकृतिगौरवादसौ प्रसिद्धिमतितरां लेभे। साकारसिद्धौ साकारसंग्रहसूत्रे चास्य मतसारोद्धारो दृश्यते।

आचार्यवसुबन्धुपादस्य धर्मधर्मिताप्रविभागोऽत्रोद्धृतः। धर्मधर्मिकारिका धर्मधर्मिताविभङ्गश्च भोटभाषायामुपलभ्येते। उभयत्र ग्रन्थकर्तृत्वेन मैत्रेयनाथ एवोदिष्टः। धर्मधर्मिताविभङ्गवृत्तिस्तु काचिद् वसुबन्धुकृता भोटभाषानुवादमयी दृश्यते। अत्र सैवोल्लिखिता भवेत्। वसुबन्धोरभिधर्मकोषात् त्रिंशतिकाविंशत्योश्च श्लोकोद्धारः कृतोऽत्र निबन्धेषु।

वसुबन्धुशिष्यो दिग्नागस्तावन्मध्यकालिकन्यायशास्त्रस्य जनकतया प्रसिद्धः। तत्कर्तृकं प्रत्यक्षलक्षणं ज्ञानश्रिया समुद्धृतं धर्मकीर्तिकृततल्लक्षणेन साकम्। तस्य प्रज्ञापारमितापिण्डार्थव्यवहारस्तु प्रागेवोद्दिष्टः।

कुमारनाथनाम्ना युवराजनाम्ना च प्रसिद्धं कञ्चन दिग्नागसहायं समुद्धरति ज्ञानश्रीमित्रः, संगृह्णाति च भूयसा तन्मतानि। रत्नकीर्तिरपि राजकुलपादनाम्ना एतमेव परामृशतीति भाति। बोधिसत्त्व आर्यमञ्जुश्रीः प्रमाणसमुच्चयनिर्माणार्थं दिग्नागं समुत्साहयितुं तत्समीप आविरभूदिति श्रूयते। दिग्नागसहायभूतस्तु कुमारनाथो नान्यत्रोद्दिष्टः। ज्ञानश्रिया स्वनिबन्धेषु तन्मतरक्षणं विहितमिति किमपि नूतनमेतत् प्रमोदस्थानं च प्राचीनबौद्धशास्त्रालोचकानां कृते।

मैत्रेयासङ्गग्रन्थव्याख्याता स्थिरमतिस्तावदतिप्रसिद्ध आचार्यः। तस्य ग्रन्थसन्दर्भा अपि केचन सुरक्षिता प्रस्तुतनिबन्धेषु।

दिग्नागादूर्ध्वं धर्मकीर्तिः स्वग्रन्थमहिम्ना बौद्धप्रस्थानं भारतीयदर्शनं चोज्ज्वलयांचकार। ज्ञानश्रीमित्रमतेनायं योगाचारविज्ञानवादप्रस्थानस्य मूलः स्तम्भः। असौ तु बहुधा समुद्दिष्टः समुद्धृतश्च। वस्तुगत्या सर्वे चैते निबन्धाः धर्मकीर्तिकृतप्रमाणवार्तिकेन दृढं संबद्धाः। प्रज्ञाकरीयव्याख्याप्रस्थानमनुसृत्य धर्मकीर्तिमतान्येव स्फुटीचकार ज्ञानश्रीमित्र एतेषु स्वनिबन्धेषु। न्यायप्रसूतिन्यायवादीत्यादिनाम्ना समुद्दिष्टोऽसावाचार्यो दृश्यते, तद्ग्रन्थाश्च शास्त्रशब्देन।

ईश्वरवादे प्रमाणवार्तिकश्लोकाः सविस्तरं व्याख्याताः। अन्यत्र प्रमाणवार्तिकश्लोकाः प्रमाणत्वेनोद्धृताः। धर्मकीर्तेः प्रमाणविनिश्चयोऽप्यत्र समुद्धृतो दृश्यते।

धर्मकीर्तिग्रन्थास्तु सर्वाण्येवास्तिकप्रस्थानानि शिथिलमूलानि चक्रुः। तत्र तत्र वाचस्पतेर्ग्रन्थनिर्माणं तु धर्मकीर्तिमतखण्डनेन तेषां दृढीकरणायेति संभाव्यते। उदयनस्त्वस्य वैदिकधर्मपरित्यागकथामुल्लिखति। प्रसिद्धश्चायं भद्दभिक्षुनाम्ना।

धर्मकीर्तेरनन्तरं प्रज्ञाकरस्तावदत्र निबन्धेषु विशेषादरभाग् दृश्यते। प्रमाणवार्तिकालङ्कारापरनामकं प्रमाणवार्तिकभाष्यं तु धर्मकीर्तिमतस्य धर्मीयव्याख्यानसम्प्रदायस्यादिमो ग्रन्थः। भाष्यमिदमवलम्ब्य रविगुप्तस्य जिनस्य यमारेश्च व्याख्याग्रन्थाः प्रवर्तिता इति प्रागेव संदिष्टम्। बहुमानपूर्वकं ज्ञानश्रीमित्रः प्रज्ञाकरं समुल्लिखति। साकारवादनयनाटकस्य त्वयं सूत्रधाररूपेण निर्दिष्टः। एतस्य प्रमाणवार्तिकभाष्यं च दार्शनिकैर्वाक्तनैर्बहुत्र चर्चितम्। तेषु प्रधानतयोल्लेखमर्हति प्रमाणविनिश्चयकृद्वादिराजः। वादिविनोदे शङ्करमिश्रः, न्यायतत्त्वालोके च द्वितीयो वाचस्पतिरेनमुल्लिखतः। तथैव पदार्थरत्नमालायां रघुनाथः, न्यायसिद्धान्तमालायां जयरामश्च प्रसिद्धबौद्धाचार्यगणनायामेतस्यापि कठिनीपातं कुरुतः।

एषोऽपि वैदिकधर्मं विहाय बौद्धशासनमाश्रितवानिति बौद्धाधिकारे उदयनाचार्यवचनाज् ज्ञायते।

अन्ये केचन बौद्धा ज्ञानश्रीमित्रसम्प्रदायेन साक्षादसंबद्धा अपि निबन्धेष्वेतेषु प्रसङ्गवशादुद्दिष्टाः। तेषु माध्यमिका वैभाषिकाः सौत्रान्तिकाश्च सामान्यतः स्पृष्टाः। विशिष्य च माध्यमिकमतप्रस्थापक आर्यनागार्जुनपादो ज्ञानश्रीमित्रदृशा परं सम्मानभाजनम्। आ मैत्रेयनाथात् प्राचीनविज्ञानवादिनो नागार्जुनप्रभाविता दृश्यन्ते। उभयमतयोर्भेदस्तावदनतिगभीरः। ज्ञानश्रीमित्रस्तु भेदं परिहाय मतयोरेतयोर्मौलिकमैक्यमेवोररीचकार।

साकारसिद्धिशास्त्रे शान्तिदेवपादस्य बोधिचर्यावतारः प्रमाणरूपेणोद्धृतः।

अत्रोल्लिखितः शुभगुप्ताचार्यो वैभाषिको भवेत्। असौ वार्तिकानुसारीति अनेकान्तजयपताकाव्याख्यायां हरिभद्राचार्याः। वार्तिकं चेदं प्रमाणवार्तिकमिति भाति। तत्त्वसंग्रहपञ्जिकायाम् अनेकान्तजयपताकायां च तत्कृताः श्लोकाः समुद्धृता दृश्यन्ते। शास्त्रवार्तासमुच्चयटीकायामप्यसौ समुल्लिखितः।

धर्माकरदत्तापराख्योऽर्चटस्तु धर्मकीर्तिग्रन्थव्याख्यातृष्वन्यतमः। स तु भट्टार्चटशब्देन ज्ञानश्रिया निर्दिष्टः।

अर्चटशिष्यो धर्मोत्तराचार्यस्तु प्रत्यर्थित्वेनात्र स्वीकृतः। तत्समर्थितं निराकारज्ञानवादं निरस्य साकारज्ञानवादोऽनेन ज्ञानश्रीमित्रेण प्रसाधितः। अपोहप्रकरणे च द्वेधा धर्मोत्तरस्यापोहसिद्धिरुद्दिष्टा। कार्यकारणभावसिद्धौ च तत्सम्मतः पञ्चकपक्षः खण्डित इत्याभाति। बौद्धसम्प्रदाये टीकाकारशब्देनास्य धर्मोत्तरस्य निर्देशस्तु धर्मकीर्तिग्रन्थव्याख्यानस्य तत्कृतस्य वैशिष्ट्यं सूचयति। ज्ञानश्रीमित्रश्च तद्विपक्षभूतः तमधिकृत्य कर्कशशब्दानपि प्रयुङ्क्ते।

*अर्वाक्तनदार्शनिकग्रन्थेषु ज्ञानश्रीमित्रमतचर्चा*

ज्ञानश्रीमित्रादनन्तरं तद्ग्रन्थानां बाहुल्येन परिशीलनं दृश्यते भारते वर्षे। कुत्रचिद् एतन्मतप्रभावो मुख्यः, कुत्रचिच्च गौणः। बौद्धा आचार्यास्तं प्रमाणभूतं स्वीकुर्वन्ति। आस्तिका जैनाश्चैनं परिपन्थित्वेन गणयन्ति।

तत्र ज्ञानश्रीमतानुवर्तिषु बौद्धेषु रत्नकीर्तिरेव मुख्यतमः। अन्वयव्यतिरेकात्मिकयोः क्षणभङ्गसिद्ध्योरपोहसिद्धेश्च कर्तृत्वेनासीदसौ परिचितः पण्डितेषु। आभिः सह सप्त चान्ये रत्नकीर्तिनिबन्धाः संस्कृतमया महापण्डितेन राहुलसांकृत्यायनेन संगृहीताः। सर्वे च ते रत्नकीर्तिनिबन्धावलीनाम्ना ग्रन्थमालायामत्रैव सम्पाद्य प्रकाशिताः। एतेषु दश निबन्धेषु कोऽपि भोटभाषायाम् अनूदितो नाभूदिति भाति। भोटभाषानिबद्धबौद्धग्रन्थसूचीपत्रे तोहोकुराजकीयविश्वविद्यालयप्रकाशिते रत्नकीर्तेरपरे केचन ग्रन्थाः समुद्दिष्टाः। तत्र (१) योगचतुर्देवस्तोत्रम् (२) शासनसर्वस्वसाधनम् (३) प्रज्ञापारमितामण्डलविधिः (४) वज्रविदारणासाधनम् (५) वज्रविदारणास्नानविधिः (६) सर्वसाधनकर्म (७) अभिसमयालङ्कारवृत्तिकीर्तिकला (८) कल्याणकाण्डप्रकरणम् (९) धर्मधर्मिविनिश्चयप्रकरणं चागच्छन्ति। एतेषां संस्कृतं मूलं लुप्तम्। नामदर्शनात् केचन तान्त्रिका अपरे च दार्शनिका ग्रन्था इत्यनुमीयते। रत्नकीर्तिमधिकृत्य किमपि विवरणमस्माभिस्तन्निबन्धप्रस्तावनायां प्रदत्तम्। दर्शनशास्त्रेऽसौ ज्ञानश्रीमित्रशिष्य इति ज्ञानश्रीमित्रनिबन्धस्थितानां भूयसां श्लोकानां स्वगुरुकृतत्वेन तेनोल्लेखात् परिज्ञायते। कतिचन पुनस्तद्गुरुकृताः श्लोका नात्र निबन्धेषु दृष्टा इति ज्ञानश्रियोऽपरनिबन्धनिर्माणानुमानं समर्थयति।

उभयोर्ग्रन्थानां पर्यालोचनतो रत्नकीर्तिना केषांचन ज्ञानश्रीमित्रनिबन्धानां सारसंग्रहो विहित इत्यायाति। एतदधिकृत्य तेन स्वीयाधमर्णतापि गुरोरसकृत् प्रकटीकृता। समाने विषये

उभावप्यभिन्नां युक्तिं प्रदर्शयतः, परमतोद्धारविचारौ तुल्यतया विदधतः, सिद्धान्तं च समानं प्रकटयतः। उभयोर्निबन्धशीर्षकपर्यालोचनमात्रादपि समानक्षेत्रपरिचरणमेतयोः स्पष्टीभवति। ज्ञानश्रीमित्रनिबन्धेभ्यः समुद्रसदृशेभ्यः कतिचन रत्नान्येव रत्नकीर्तिराहृतवानिति स्वयमसौ कथयति। कवित्वगुणगरिष्ठेभ्यो ज्ञानश्रीमित्रनिबन्धेभ्यस्तच्छिष्यकृतसारसंग्रहास्तु संक्षिप्ताः, न्यायपद्धत्यनुगाश्चेति दृश्यन्ते।

ज्ञानश्रिया रत्नकीर्तेरयं संबन्ध उदयनाचार्येण परिज्ञात आसीदिति भाति। आत्मतत्वविवेके—आगमश्च न किञ्चिद् वदतीति त्वयैव ग्राहितः शिष्यः। न चैवं चेतनो ग्राहयितुमपि शक्यते, स्ववाग्विरोधस्योद्भटत्वात्। तथाहि,

शब्दस्य कस्यचिदवस्तुनि मानसिद्धा
　　बाधाविधिव्यवहृतिः क्वचिदस्ति नो वा।
अस्त्येव चेत् कथमियन्ति न दूषणानि
　　नास्त्येव चेत् स्ववचनप्रतिरोधसिद्धिः॥

इति तत्रैव विषयसञ्चारमात्रेण श्लोकः इत्यायाति। अत्र प्रसङ्गागतो ज्ञानश्रीमित्रश्लोकस्तु,

धर्मस्य कस्यचिदवस्तुनि मानसिद्धा
　　बाधाविधिव्यवहृतिः किमिहास्ति नो वा।
क्वाप्यस्ति चेत् कथमियन्ति न दूषणानि
　　नास्त्येव चेत् स्ववचनप्रतिरोधसिद्धिः॥

इति, यत्र विषयसञ्चार उदयनस्य। रत्नकीर्तिस्तु स्वगुरुनिर्मितमिमं श्लोकं क्षणभङ्गसिद्धौ द्वेधा समुद्धृतवान्।

कवित्वख्यातिरपि रत्नकीर्तेरासीदिति विद्याकरसंगृहीते सुभाषितरत्नकोषे तत्कृतलोकनाथस्तुतिमूलकस्य,

वरदकरसरोजस्यन्दमानामृतौघ-
　　व्युपशमितसमस्तप्रेतसंघाततर्षः।
जयति सितगभस्तिस्तोमशुभ्राननश्रीः
　　सदृगुरुदयार्द्रालोकनो लोकनाथः॥

इत्येतस्य श्लोकस्य संग्रहात् परिज्ञायते ।

वरेन्द्रयां जगद्दलविहाराचार्यो मोक्षाकरगुप्तोऽपि ज्ञानश्रीमित्रानुसारी आसीदिति तत्कृत-तर्कभाषापरिशीलनादायाति । असौ तावत्,

कार्यत्वस्य विपक्षवृत्तिहतये संभाव्यतेऽतीन्द्रियः
कर्ता चेद् व्यतिरेकसिद्धिविधुरा व्याप्तिः कथं सिध्यति ।
दृश्योऽथ व्यतिरेकसिद्धिमनसा कर्ता समाश्रीयते
तत्त्यागेऽपि तदा तृणादिकमिति व्यक्तं विपक्षेक्षणम् ॥

इति ज्ञानश्रीमित्रश्लोकमुद्धरति तर्कभाषायाम् । शङ्करमिश्रेण त्वात्मतत्त्वविवेककल्पलतायामत्र श्लोकार्धक्रमविपर्यासः कृतः, श्लोकश्चासौ ज्ञानश्रीमित्रस्येति निर्दिष्टः । ज्ञानश्रीमित्रस्येश्वरवादे च मोक्षाकरगुप्तधृतः श्लोकपूर्वार्धः समायाति । द्वितीयार्धस्थले तु

बाधात्वाहितहेतुमात्रनियतिर्भेदेन न व्याप्तये
नाप्यर्थो व्यभिचारगोचरचरः पक्षीक्रियायां क्षमः ॥

इति प्रक्षिप्तं दृश्यते ।

*उदयनज्ञानश्रियोः संबन्धः*

भविष्यपुराणपरिशिष्टे न्यायाचार्यस्योदयनस्य किमपि जीवनवृत्तमुपलभ्यते । तत्र विशिष्य मिथिलेशसभायां समागतेन बौद्धतार्किकेण केनचित् तस्याध्यात्मवादं सपणबन्धो विचारः बौद्ध-मतखण्डनपूर्वकं न्यायमतस्थापनं च दृश्येते । आत्मवादद्वेषिणो बौद्धाचार्यस्य पणबन्धानुरूपं तालवृक्षात् पतनेन पञ्चत्वप्राप्तिः, राज्ञा बौद्धशास्त्रग्रन्थानां स्रोतसि विसर्जनम्, दण्डपूर्वकं बौद्ध-मतानुसारिणामास्तिकत्वविधानम्, राजगुरुत्वेन वृतस्योदयनस्य पुरुषोत्तमदिदृक्षया जगन्नाथक्षेत्र-गमनम्, तत्र मन्दिरद्वारेषु पिहितेषु च तेन भक्त्यहङ्कारपूर्वकम्,

ऐश्वर्यमदमत्तोऽसि मामवज्ञाय वर्तसे ।
उपस्थितेषु बौद्धेषु मदधीना तव स्थितिः ॥

इति श्लोकपाठः, ततो भगवदनुग्रहश्च तत्र समागच्छन्ति ।

कथेयं न निर्मूला । आचार्यस्यास्य ग्रन्थेष्वपि बौद्धैः सह दृढः संघर्षो दृश्यते । मिथिलायां जनप्रवादोऽपि बौद्धमतापाकरणे तस्यावदानं द्योतयति । तत्कृतिषु किरणावल्यां तात्पर्यपरिशुद्धौ

कुसुमाञ्जलौ च यथाप्रासं बौद्धमतखण्डनं न तिरोहितं विद्वल्लोचनेभ्यः। आत्मतत्त्वविवेकाख्यो ग्रन्थरत्नश्च बौद्धमतखण्डनपरो बौद्धाधिकारनाम्ना बौद्धधिक्कारनाम्ना वा वरीवर्त्ति।

किं तु को वासौ बौद्धाचार्यो यन्मतखण्डनं राजसभायां कृतमाचार्येण? के वा तल्लिखिता ग्रन्थाः? कुत्रत्यो वासाविति न तथा परिज्ञायते स्म। मन्ये न्यायाचार्यस्यालौकिकप्रतिभया, तच्छिष्यस्य च मिथिलाधिपस्य दण्डबलेन बौद्धग्रन्थानां कुत्रचिन्नाशे कुत्रचिद् वानादरे संजाते बौद्धसिद्धान्ताः विस्मृतिविलीना बभूवुः। कियत्कालानन्तरं यावनविप्लवेन नालन्दाविक्रमशीलादिबौद्धविहाराणां सर्वथा विनाशे शिष्टानामपि बौद्धग्रन्थानां विलोपः संजातः। येन सर्वतन्त्रस्वतन्त्रस्य वाचस्पतिमिश्रस्य सिद्धान्तेषु बौद्धाचार्याणामाक्षेपा दुर्ज्ञेया बभूवुः। यद्यपि बौद्धमतखण्डनपूर्वकं वाचस्पतिमतसमर्थनमुदयनग्रन्थेषु भृशं दृश्यते, तथापि पूर्वपक्षत्वेन धृतानां तत्तन्मतानां माहात्म्यावगमः कर्तृनिर्णयो वा न शक्यक्रिय आसीत्।

पक्षप्रतिपक्षपूर्विकायां न्यायप्रवृत्तौ प्रतिपक्षप्राबल्यं शास्त्रकाराणां सिद्धान्तेषु पुष्टिमावहति। एतत्तु सर्वतोऽप्याधिक्येन न्यायशास्त्रेतिवृत्तविवेचकानां परिज्ञातमेव। सुदीर्घकालं यावत् परम्पराक्रमेण बौद्धैर्न्यायमतखण्डनं स्वसिद्धान्तमण्डनं च विहितम्। नैयायिकैश्च तथैव स्वप्रस्थानरक्षणविस्तरौ बौद्धमतखण्डनमुखेनैव विहितौ। अनेनैव खण्डनमण्डनप्रक्रमेण न्यायशास्त्रस्य समृद्धिः संजाता। लुप्तेष्वपि बौद्धेषु प्रभाकरैः, वैदान्तिकैः, स्वयूथ्यैश्च नैयायिकानां विवादः परत्रापि न्यायशास्त्रविवृद्धौ वैशिष्ट्याधानं चकार।

आधुनिके काले क्षीणोऽपि न्यायग्रन्थानां संप्रदायो वर्तते, न तु बौद्धग्रन्थानाम्। ते तु बाहुल्येन लुप्ताः। प्राप्ताः प्रकाशिताश्च केचन संप्रदायविच्छेदात् न तथा जायन्ते स्म न्यायशास्त्रपाठविधौ सहायाः।

महापण्डितराहुलसांकृत्यायनकृतं भोटदेशपरिभ्रमणं प्राचीनशास्त्रगवेषकाणां परमहिताय संवृत्तम्। तेन महापण्डितेन ततः संगृहीता विविधबौद्धन्यायग्रन्थानां छायाप्रतिलिपय विहारप्रान्तीयसर्वकारप्रयत्नेन पाटलिपुत्र एव संरक्षिताः सुलभाश्च गवेषकाणमिति प्रमोदस्थानमस्माकम्। अत्रागच्छन्ति बौद्धग्रन्थाः प्राचीनन्यायशास्त्रेण भृशं संबद्धा येषां समीक्षणेन न्यायसिद्धान्तेष्वपि प्रचुरालोकसंपातो जायते। अत्र वाचस्पतेरनन्तरमुदयनाच्च पूर्वं समुपलभ्यन्ते ज्ञानश्रीमित्रस्य रत्नकीर्तेश्च ग्रन्थाः। रत्नकीर्तिश्च ज्ञानश्रियः शिष्यस्तन्मतसंग्रहपरश्चासीदिति दृष्टम्। अतो ज्ञानश्रीग्रन्था एव विशिष्य विवेचनमर्हन्ति। अनेन शङ्करन्यायभूषणत्रिलोचनादिभिः साकं वाचस्पतिः प्रतिद्वन्द्वित्वेन स्वीकृत इति दृष्टचरम्।

उदयनकृतग्रन्थेषूपलभ्यमानेष्वात्मतत्त्वविवेक एव प्रथमः। तत्र त्वादित आरभ्य ज्ञानश्रीमतमेव विविच्य खण्डितमिति ज्ञेयम्। सत्यपि सिद्धान्तभेदे ज्ञानश्रीनिबन्धैः सहास्य वर्तते विषयगतं साम्यम्। ज्ञानश्रीपंक्त्युद्धारः, तत्कृतश्लोकोद्धारश्चात्र दृश्येते। एकत्र तु कण्ठतः प्रतिद्वन्द्वित्वेन ज्ञानश्रियो नामोल्लेखः। प्रवचनव्यवहारे खण्डनप्रकारे चोभयोः साम्यम्। आत्मतत्त्वविवेकल्पलताकारेण शङ्करमिश्रेण बहुधोदयनधृतानि ज्ञानश्रीमतानि नामग्राहं प्रदर्शितानि। उपलभ्यन्ते च तानि प्रस्तुतग्रन्थेष्वक्षरशः।

आत्मतत्त्वविवेके क्षणभङ्गभङ्गस्तावत् प्रथमपरिच्छेदस्य विषयः। अत्र ज्ञानश्रियः क्षणभङ्गाध्यायगता विषया आदित एव पूर्वपक्षत्वेन समागच्छन्ति। ज्ञानश्रियोऽपोहप्रकरणस्थाः सिद्धान्तास्तदभ्यन्तरेऽपोहखण्डनप्रकरणे विवेचिताः। द्वितीये च परिच्छेदे बाह्यार्थभङ्गात्मकेऽद्वैतबिन्दुप्रकरणं पूर्वपक्षत्वेन गृहीतम्। तुरीयेऽनुपलम्भवादाख्ये परिच्छेदेऽपि ज्ञानश्रीमतं खण्डितम्। ईश्वरसाधनं सामान्यत आत्मतत्त्वविवेके विशिष्य च न्यायकुसुमाञ्जलौ समागच्छति। अत्र प्रथमे ग्रन्थे ज्ञानश्रिय ईश्वरवादसमालोचनं सुस्पष्टमेव। चित्राद्वैतवादोऽपि ज्ञानश्रीपरिगृहीतः खण्डित आत्मतत्त्वविवेके। शङ्करमिश्रेण तु तत्र रत्नकीर्तिमतखण्डनं कृतमित्युच्यते। वर्तते रत्नकीर्तेरपि चित्राद्वैतवादाख्यो ग्रन्थः। स तु ज्ञानश्रीकृतस्य साकारसिद्धिशास्त्रस्य सिद्धान्तसंग्रहपर इति ध्येयम्। किरणावलौ क्षणभङ्गाध्यायानुसरणेन क्षणभङ्गवादसारो ग्रथितः। तात्पर्यपरिशुद्धौ चानेकत्र ज्ञानश्रियो मतानि श्लोकाद्युद्धारपूर्वकं खण्डितानि।

सिद्धान्तेषु द्वयोरन्यतरस्य वा वैशिष्ट्यप्रतिपादनस्य नात्रावसरः। परस्परसंबन्धद्योतकेषु च बहुषु सन्दर्भेषु केचनैवात्र निर्दिश्यन्ते।

[क] न ह्यनुभवमवधूय भवितुं क्षमम्— आत्मतत्त्वविवेके पृः २८६। तुल॰ न खलु शास्त्रमनुभवं परिभूय भवितुं क्षमम्— अपोहप्रकरणे पृः २०३

[ख] इतरेतराश्रयत्वमुक्तम्। सङ्केते सञ्चार्य यत् परिहृतं ज्ञानश्रिया तदेतद् ग्राम्यजनधन्धीकरणम्— आत्मतत्त्वविवेके पृः २६२। तुल॰ ये पुनरगोऽपोहे गोशब्दसङ्केतविधावन्योन्याश्रयणं ग्राम्यजनधन्धीकरणमुद्भावयन्ति तेऽपि... अपोहप्रकरणे पृः २०३

[ग] यस्तु निपुणम्मन्यो विकल्पमेव पक्षयति स्म, यज्ज्ञानं यद्भावाभावसाधारणप्रतिभासं न तेन तस्य विषयित्वम्, यथा गोज्ञानस्याश्वेनेति— आत्मतत्त्वविवेके पृः ३१६
तुल॰ यज्ज्ञानं यत्र भावाभावसाधारणप्रतिभासं न तेन तस्य विषयवत्वम्, यथा गोज्ञानस्याश्वेन— अपोहप्रकरणे पृः २१२

[ घ ] स्वभावादेव कश्चिद् विकल्पः कस्मिंश्चिदेवाऽऽस्फुरितेऽपि प्रवर्तयति। किमत्र क्रियताम् ? स चास्य स्वभावभेदः स्वकारणादेवायातः। तत्र कः पर्यनुयोज्यताम् ?—आत्मतत्त्वविवेके पृः ३६६ अत्र नियतशक्तयो हि भावाः प्रमाणपरिनिष्ठितस्वभावा न शक्तिसाङ्कर्यपर्यनुयोगभाज इति अपोहप्रकरण[ पृः २२६ ]स्थसंदर्भस्य प्रतिध्वनिः। तुल° आत्मतत्त्वविवेककल्पलता पृः ३६७

[ ङ ] शब्दैः किं वाच्यमित्यनुयोगे किं प्रतिभासात्, अथाध्यवसायात्, यद् वा तत्वत इति विकल्पे विकल्पस्थोऽन्यापोढाकार अन्यापोहस्वलक्षणं न किञ्चिदिति यत् क्रमेण प्रत्युक्तम् ......आत्मतत्त्वविवेके पृः ४२६

अत्र शब्दैस्तावन्मुख्यमाख्यायतेऽर्थ-
स्तत्रापोहस्तद्गुणत्वेन गम्यः।
अर्थश्चैकोऽध्यासतो भासतोऽन्यः
स्थाप्यो वाच्यस्तत्त्वतो नैव कश्चित् ॥

इति अपोहप्रकरण[ पृः २०३ ]कारिका तदुत्थो विचारश्च सूचिताविति प्रतिभाति।

[ च ] अन्यथा तपनीयमपनीय वाससि ग्रन्थिकर्तारमुपहससि स्वयं च कनकमुपादाय गगनाञ्चले ग्रन्थिं करोषि— आत्मतत्त्वविवेके पृः ४८१ तुल° तदयमाकारस्य बाह्यवादव्यसनिनो भेदसाधनविधिस्तपनीयमपनीय वाससि ग्रन्थिकरणवृत्तान्तमनुहरति— अद्वैतबिन्दुप्रकरणे पृः ३५६

[ छ ] न ग्राह्यभेदमवधूय धियोऽस्ति वृत्ति-
स्तद्बाधने बलिनि वेदनये जयश्रीः।
नो चेदनिन्द्यमिदमद्वयमेव विश्वं
तथ्यं तथागतमतस्य तु कोऽवकाशः ॥
आत्मतत्त्वविवेके पृः ५२६

तुल° नाकारभेदमवधूय धियोऽस्ति वृत्ति-
स्तद्बाधने बलिनि मध्यनये जयश्रीः।
नो चेदनिन्द्यमिदमद्वयमेव चित्रं
चेतो निराकृतिमतस्य तु कोऽवकाशः ॥
साकारसिद्धौ पृः ३८६

उदयन-ज्ञानश्रियोर्घनिष्ठसंबन्धप्रकटन एतावदेवालमिति मत्वोदाहरणप्रगुणीकरणाद् विरम्यते। उदयनस्त्वात्मानं 'बहुतरपरतन्त्रप्रान्तरभ्रान्तभीतिस्तिमितपथिकरक्षासार्थवाहं' मनुते। अत्र 'बहुतरपरतन्त्रेषु' ज्ञानश्रियो निबन्धाः प्रामुख्येन स्वीकृता इति निश्चप्रचम्। तेषु समालोचितानां न्यायमतानां दृढीकरणार्थमेव न्यायाचार्यस्य प्रयत्नविशेषः। बौद्धन्यायतत्त्वजिज्ञासाया ज्ञानश्री-कृतिष्वेव निष्ठा। तथैव प्राचीनन्यायस्योदयनग्रन्थावली। संबन्धं चोभयोर्मनसि विधायोभयोरेव ग्रन्थानां समं परिशीलनमपेक्षते।

उदयनादनन्तरं न्यायलीलावतीकारः श्रीवल्लभः

कर्मनिर्मितवैचित्र्यं यदि विश्वमनीश्वरम्।
अस्त्वनिर्मितवैचित्र्यं जगदेतदहेतुकम्॥

इत्यत्र

कर्मनिर्मितवैचित्र्यमनीशं यो जगज्जगौ।
प्रणमामि प्रमाणेन तमव्याहतशासनम्॥

इति ईश्वरवाद[ पृः २३३, २६५ ]स्थज्ञानश्रीमित्रश्लोकं समुद्दिशतीति भाति।

गङ्गेशोपाध्यायश्च तत्वचिन्तामणौ [ प्रत्यक्षखण्डे पृः ७१७ ] क्षणभङ्गाध्यायस्थं

दृष्टस्तावदयं घटोऽत्र च पतन् दृष्टस्तथा मुद्गरो
दृष्टा खर्परसंहतिः परमितोऽभावो न दृष्टः परः।
तेनाभाव इति श्रुतिः क निहिता किं चात्र तत्कारणं
स्वाधीना कलसस्य केवलमियं दृष्टा कपालावली॥

इति श्लोकं समुद्धृत्य विवेचयति।

माधवाचार्यकृते सर्वदर्शनसंग्रहे [ पृः २२६ ] क्षणभङ्गाध्यायगतो यत् सत् तत् क्षणिकम् इत्यादिश्लोको ज्ञानश्रीमित्रनामोल्लेखपुरःसरं समुद्धृतो दृश्यते। अत्र संग्रहे बौद्धदर्शनपरिच्छेदे ज्ञानश्रीमित्रप्रभावोऽन्यत्रापि प्रस्फुटः।

ज्ञानश्रीमित्रनिबन्धैः शङ्करमिश्रस्य प्रत्यक्षपरिचय आसीत्। आत्मतत्त्वविवेककल्पलतायां तेनापोहप्रकरणाद्वैतबिन्दुसाकारसिद्धिसाकारसंग्रहेभ्यः श्लोकाः गद्यसन्दर्भाश्चोद्धृता विवेचिताश्च।

वादिविनोदे च प्रख्यातानां बौद्धाचार्याणां गणनावसरे भदन्तज्ञानश्रीरपि स्मृतः शङ्करेण। शङ्करस्य काले बौद्धशास्त्रस्य धारा निरुद्धा बभूव, ततः पूर्वमेव बौद्धविद्याविहाराणां तद्ग्रन्थ-सम्प्रदायस्य चोच्छेदात्।

जयरामन्यायपञ्चाननोऽपि न्यायसिद्धान्तमालायां वादिविनोददृष्टां बौद्धाचार्यनामावलीं समुद्धरति। तस्य ज्ञानश्रीमित्रनिबन्धपरिज्ञानमासीदित्यत्र तु प्रमाणं नोपलभ्यते।

जैनेषु वादिदेवः स्याद्वादरत्नाकरे क्षणभङ्गाध्यायदपोहप्रकरणाच्च श्लोकसंग्रहं चकार। इतरस्मात् कस्माच्चन ज्ञानश्रीमित्रग्रन्थादपि सन्दर्भावुद्धार।

न्यायवतारटिप्पनके देवभद्रकृते क्षणभङ्गाध्यायगतं सत्त्वलक्षणं समुद्धृतम्। ज्ञानश्रीमित्रश्च नाम्ना समुद्दिष्टः।

मल्लिषेणनिर्मितायां स्याद्वादमञ्जर्यां ज्ञानश्रीकृतापोहप्रकरणस्थस्य एतासु पञ्चस्ववभासिनी-ष्वित्यादिश्लोकस्य समुद्धरणं दृश्यते। पण्डिताशोककृतायां सामान्यदूषणदिक्प्रसारितायामप्येष श्लोकः आयाति। पण्डिताशोकस्य ज्ञानश्रीमित्रात् प्राचीनत्वं न सन्देहातीतम्। अत्र तु प्रस्तुत-श्लोकस्य कर्तृनिर्धारणे कृते सति भविष्यति ज्ञानश्रिया मल्लिषेणस्य सम्बन्धनिर्णयः।

स्वर्गतेन पण्डितमहेन्द्रकुमारशास्त्रिणा न्यायकुमुदचन्द्रप्राक्कथने अपोहः शब्दलिङ्गाभ्यां न वस्तुविधिनोच्यते इति ज्ञानश्रियोऽपोहप्रकरणस्थश्लोकांशसमुद्धरणात् प्रभाचन्द्रोऽपि ज्ञानश्रियो-ऽधमर्णो भवेदिति सूचितम्। ज्ञानश्रीमित्रश्लोकांशस्तु भिन्न एव उद्धृतात्, अपोहः शब्दलिङ्गाभ्यां प्रकाश्यत इति स्थितिरित्यपोहप्रकरणे पाठदर्शनात्। शास्त्रिमहोदयेन प्रभाचन्द्रस्य कालो निर्णीतः। स च ज्ञानश्रीमित्राज् ज्यायानिति प्रतिभाति। अतएव कनीयसो ज्ञानश्रियः श्लोकस्यो-द्धारोऽपि तस्यासम्भव एव।

यशोविजयाचार्यस्याप्रत्यक्षः परिचयो ज्ञानश्रीमित्रेणासीत्। अनेकान्तव्यवस्थाप्रकरणे तेन ज्ञानश्रीमित्रकृतः श्लोक उद्धृतः। न्यायखण्डखाद्यस्य तस्यात्मतत्त्वविवेकेन सह संबन्धः सुविदितः। अतो ज्ञानश्रीमतानि तत्र परम्परया आगच्छन्ति। न च कुत्रापि ज्ञानश्रीमित्रो नामधेयेनोल्लिखितो यशोविजयेन। नारायणाचार्यकृता आत्मतत्त्वविवेकव्याख्या, रघुनाथशिरोमणेरात्मतत्त्वविवेक-दीधितिः, गुणानन्दविद्यावागीशकृतआत्मतत्त्वविवेकदीधितिविवेको बहुधा समुद्धृता यशोविजयेन। एतेभ्य एव ज्ञानश्रीमतपरिज्ञानं तस्य भवेत्। नारायणादेरपि ज्ञानश्रीनिबन्धपरिज्ञानं नासीदिति भाति; आसीत् शङ्करमिश्रस्य। तस्यात्मतत्त्वविवेककल्पलता पुनर्न विज्ञाता यशोवि—

अत्र निबन्धेषु श्रीहर्षमहासम्मतयोरुल्लेख ऐतिहासिकानां कौतूहलस्थानम्। तयोस्तु विवरणान्तरं न लभ्यते। पञ्चालकपाठोऽप्येकत्र समुद्दिष्टः। प्रसङ्गपर्यालोचनया नीरसस्य दीर्घ-व्याख्याप्रबन्धस्यैवात्र पञ्चालकशब्देन निर्देश इति भाति। वङ्गेषु पञ्चालीग्रन्थाः परवर्तिनः प्रसिद्धाः। गदाधरभट्टाचार्यस्य दीर्घव्याख्यानग्रन्था वङ्गीयनैयायिकेषु गदाधरस्य पञ्चालिकेति (गदुर पाँचाली) कथ्यन्ते।

## उपसंहारः

सुदीर्घकालादनन्तरं ज्ञानश्रीमित्रनिबन्धावलिरियं प्रकाशमायाति। अत्र जीर्णोद्धारविधौ बहुभिर्बहुधा हस्तालम्बो दत्तः, समुत्साहश्च वितीर्णः। तेभ्यः सर्वेभ्यः साञ्जलि कृतवेदिता विज्ञाप्यते। स्मर्यते च भूयो भूयो ज्ञानश्रीमित्रस्यैव

पोतेनेप्सितमाप्यते जलनिधावित्युक्तिमात्रान्वयाद्
आरब्धं शिशुनापि चापलबलाच्छ्रुत्वापि भीतिर्यतः।
तत्तीरान्तमियाद् विनाशमविशन् यद्येष मुख्यः सुधा-
सिन्धोरस्य गुणः स वेपितवियद्वेलावलीमालिनः॥

इति साकारसिद्धिशास्त्रस्योपान्त्यः श्लोक इति शम्॥



द्रः—आङ्गलभूमिकायां पादटीकासु प्रमाणादिसन्निवेशो विहितः। अत्र पुनरुक्तिभिया स परिहृतः।

# ज्ञानश्रीमित्रनिबन्धावली

## १

## ॥ क्षणभङ्गाध्यायः ॥

### ॥ प्रथमः पादः—पक्षधर्माधिकारः ॥

[Ib] ॥ नमो बुद्धाय ॥

आदित्यबन्धोः किरणैरिवान्यैरातन्यमाने क्षणभाजि लोके ।
सुप्ता इवानिष्टविलापिनो[1]ऽतस्तलप्रहारादिव चेतयध्वम्[2] ॥१॥

यत् सत् तत् क्षणिकं यथा जलधरः सन्तस्तु[3] भावा इमे
सत्ता शक्तिरिहार्थकर्मणि मितेः सिद्धेषु सिद्धा न[4] सा ।
नाप्येकैव[5] विधान्यदापि परकृत्नैव क्रिया वा भवेद्
द्वेधापि क्षणभङ्गसंगतिरतः[6] साध्ये च विश्राम्यति ॥२॥

अत्र प्रथमपादोपदर्शितः स्वभावहेतुः । अयं न तावदसिद्धः । तथा हि यदि नाम प्रतिदर्शनं [7]सत्त्वलक्षणभेदः, तथापि इहार्थक्रियासामर्थ्यमेव सत्त्वमभिप्रेतं हेतुतयोपात्तम् । तच्च नासंभवि सर्वथा शक्यमभिधातुमभिमतं वा केषाञ्चित् । तल्लक्षणासहिष्णवो हि यदि परमव्याप्तमस्मद्रूपणमभिदध्युः, तत्र य एवैते भावाः प्रमाणसमधिगतार्थक्रिया-विशेषव्यापाराः, त एव पक्षीकृता इति स्वरूपेणाश्रयद्वारेण वा नासिद्धिशङ्का । ये पुनरर्थ-क्रियासामर्थ्यसंभवेऽपि तत्त्वतोऽनवधारिततद्भावाः, तेषामिदानीं पक्षाद् बहिर्भावेऽपि पश्चान्निरूपयतो[8] यद्यर्थक्रियोपलम्भो भविष्यति, [9]भविष्यत्येवानुमानान्तरम् । तदभावे तु साध्याप्रतिपत्तिरिष्टैव लिङ्गान्तरवत्[10] ।

---

१. °विलोपि र श्रा  २. वेपन्तां र  ३. मन्तश्च र  ४. च र  ५. नोत्येकैव र
६. 'सङ्गिति' र  ७. सत्नेन लक्षण' श्रा  ८. 'पतो श्रा र  ९. 'ष्यत्ये भनु' श्र  १०. 'वतः र

नन्वेवमव्यापिनी क्षणिकतासिद्धिरिति चेत्-न, यत्किञ्चित् कदाचित् क्वचिदर्थक्रियायामुपयोगि, तस्य सर्वस्य तद्भावसाधनायेष्टत्वाच्च[1] क्वचिदुपयोगिन्येव, विशेषचिन्तायाः प्रक्रमार्हत्वात्। तस्मान्नानिष्टरूपपरिहारेण। न च हेतुनिरूपणाशक्तौ। नापि सर्वत्र साध्यधर्मवति धर्मिणि सकृदनुमानप्रवृत्तिविरहकृतं प्रादेशिकत्वं साध्यसिद्धेरीश्वराद्यनुमानवत्। एतेन निश्चितार्थक्रियाशक्तयो भावभेदाः [2]धर्मिणोऽर्थक्रियासामर्थ्यसामान्यं हेतुरिति दर्शितम्। अथवा इमे प्रत्यक्षादिगोचराः सर्व एव भावा धर्मिणोऽर्थक्रियासामर्थ्यं हेतुः[3], तत्र प्रमाणाविषयस्य क्वचिदपि विधिसाधनानुमाने धर्मीकर्तुमशक्यत्वात्, प्रमाणविषये च सर्वत्रानुमानप्रवृत्तेः, का अपरा व्याप्तिः साध्यसिद्धेः ? प्रमाणगोचरतया धर्मिणो नाश्रयासिद्धिः साधनस्य। नापि स्वरूपासिद्धिः, यतो येषु तावदविवादेन बहिरर्थक्रियोपलम्भः, तेषु चिन्तैव नास्ति। येष्वपि न साक्षात् तदवधारणम्, तत्रापि प्रमाणजननादेवार्थक्रियासामर्थ्यव्यवस्थापनमनवद्यम्। अध्यक्षे साक्षादनुमाने च कार्ये पारम्पर्येणेति।

अत्र केचिदाचक्षते- यत्कार्यकारिणः कारणस्य सामर्थ्यव्यवस्थापनं तस्यैव कथं सत्त्वसिद्धिः ? तदसिद्धौ मूलस्यापि नार्थसामर्थ्यम्। अथ यथाङ्कुरापेक्षया बीजस्य[4] सामर्थ्यम्, तथा अङ्कुरस्यापि पत्रकाण्डाद्यपेक्षयास्तु। बुद्धेरपि बुद्ध्यन्तरस्मृत्यभिलापप्रवृत्त्याद्यपेक्षया[5] स्वपरोपकाराद्यपेक्षया वेति।

स्यादेतत्। केवलं कार्यपरम्परानुसरणपर्यवसानाभावे [ 2a ] यदेकमपि किञ्चिदर्थक्रियाकारि कलयित्वा क्षणभङ्गसाधनम्, तन्न स्यात्। यदेव च[6] कार्यं पर्यवसानेऽनर्थक्रियाकारि तेनैव पूर्वेषां तद्भावप्रसङ्गे नैकमप्यर्थक्रियाशक्तं सिद्ध्यतीति नासिद्धिपरिहारः।

यत् पुनरेतद्भिन्नव्यावृत्तिकतया [7]सत्तासिद्धावपि न कार्यत्वक्षतिरित्युच्यते, तदपि न सम्यक्। व्यावृत्तिभेदेऽपि हि सत्त्वसिद्धौ कृतकत्वस्यापि कथं [8]सिद्धिः ? अभूत्वा भवनं हि कृतकत्वम्, भवनं च भवतामर्थक्रियाकारित्वमेव। ततोऽर्थकारित्वसंदेहे भवतीत्येव न शक्यम्। अपेक्षितपरव्यापारत्वं [9]स्वभावनिष्पत्तौ कृतकत्वमित्यपि नासतो धर्मः। सत्ता चार्थक्रियैव। एवं [10]प्रत्ययभेदे भेदित्वादयोऽपि सद्धर्मा न सत्तानिश्चयेऽभिधातुं शक्यन्त इति।

---

१. साधनादिष्ट' र २. धर्मिणि र ३. सामर्थ्यहेतुः अ ४. बीजस्येति नास्ति अ ५. 'त्यभिलास' र
६. वा र अ। ७. सत्ता असि' र ८. सत्त्वसिद्धिः अ। र ९. अभाव' र १०. 'भेदभेदि' र

अत्रोच्यते। न तावदङ्कुरादयः परितो निरस्तविभ्रमाशङ्केऽभ्यासविशेषासादितपटिम्नि[1] प्रत्यक्षचेतसि परिस्फुरन्तो न[2] सन्तः शक्यन्तेऽभिधातुमदर्शनेऽपि फलस्य[3]। अन्यथा अर्थक्रियायामपि न कश्चिदाश्वास इति सदितरव्यवहारविरहान्निरीहं जगज्जायेत।

अथ सत्त्वलक्षणं [4]तावद् भवतामर्थक्रियासामर्थ्यमेवेति चेत्? तत् किमिदानीं समयसिद्धेन लक्षणेन प्रत्यक्षबाधोऽभिधेयः[5]? तद् यदि भवतोऽपि लक्षणदोष एवानेन क्रमेण वक्तुमिष्टोऽभिधीयताम्। अस्माकं तु न[6] तल्लक्षणप्रसाधनाय परिकरबन्धः[7], किं तु तल्लक्षणेन[8] क्षणभङ्गसाधनाय। अतस्तल्लक्षणानवधारणं क्षणभङ्गसिद्धिप्रतिबन्धमादधीत कार्यं। कार्यान्तरदर्शने तु तत्रापि तदनुमानप्रसवः क्रमेण केन वार्यते? इदानीं त्वर्थक्रियासमर्थस्यैव पक्षीकरणात् पक्षबहिर्भूते साध्यसाधनयोरसिद्धावपि न कश्चिद् दोष इत्युक्तप्रायम्[9]।

तस्मात् सामयिकलक्षणक्षतावपि किं पुनरनिश्चयमात्रे पटुतरप्रत्यक्षबलावलम्बितवस्तुभावे[10] अङ्कुरादिवस्तुनि वस्तुधर्मस्य कार्यत्वस्य विरोध[1] इति। तदपेक्षया बीजादिकमर्थक्रियासामर्थ्यसमर्थनसहमेव[2], कथमसिद्धिः?

नन्वर्थक्रियासामर्थ्यमितरद्वा[3] वस्तुलक्षणमस्पृशतेन्द्रियज्ञानेन कथं वस्तुत्वमुपस्थापितमित्युच्यते[4]? तदपि यत् किञ्चित्, अनुभवे प्रमाणान्तरचिन्ताया निरवकाशत्वात्। दृश्यते हि शास्त्रीयलक्षणानुल्लेख्यप्यभ्यासभावितप्रत्यक्षोदयमात्राद्[5] वस्तुत्वमवसाय प्रवृत्तिरविसंवादभागिनीति किमत्र क्रियताम्[6]? एवं तु स्यात्। यदि परमार्थतोऽर्थक्रियासामर्थ्यमेव वस्तुत्वं तदा इदमतो जायत इति जन्माधिरणं वस्तूल्लिखता [7]अध्यक्षेणार्थक्रियासामर्थ्यमेवोल्लिखितम्। अथान्यदेव वस्तुलक्षणं तदा तदेवोल्लिखितम्। यथा [8]त्रिगुणमयत्वमितरद्वाऽनुल्लिखता तदबहिर्भूतं नीलं नीलग्राहिणा [9]गृहीतमेवातत्सिद्धमध्यक्षेण वस्तुत्वमङ्कुरा[2b]देः [10]कार्यतासंवादेऽपि[1] कार्यान्तरादर्शनेऽपि कारणस्य बीजादेरर्थसामर्थ्यमवस्थापयतीति। कार्यवत् तर्हि

१. °सादि पटि° अ २. नोऽसन्तः र ३. हूलस्य अ ४. तावदिति नास्ति र ५. °धोविधेयः र ६. नेति नास्ति अ ७. साधनोपपरि° र ८. 'क्षणे अ ९. प्रायः अ १०. 'तावस्तु° र आ १. 'न वरोध' आ २. सामर्थनसहमेव आ ३. 'मतरद् र ४. 'मवस्थापितं आ ५. भरित' आ ६. क्रियात्ता' अ ७. 'ध्येयणार्थ' र आ ८. 'गुणमयत्व' आ र ९. 'मेव तत्सि° अ, मेवा' र १०. नस्तत्तमङ्कुरादेः र
१. कार्यतामस्वामि' अ

बीजादिकमपि प्रत्यक्षोदयादेवास्तु वस्तुसत्[1], किमर्थसामर्थ्यगवेषणेनेति चेत्– न वै वस्तुव्यवहारे प्रत्यक्षपाटवं परिभूयार्थशक्तिमनुसरामः, तस्या अपि प्रत्यक्षाधीनत्वात्। किं तु क्षणभङ्गमङ्गीकारयितुम्। प्रत्यक्षकृतो हि वस्तुव्यवहारः उक्तक्रमेण तदतल्लक्षणसाधारणो न क्षणिकत्वसाधनाय[2] नियमेन प्रभवति। अर्थक्रियासामर्थ्यं तु वस्तुलक्षणमभवदपि यत्र स्वयं वर्तते, तत्रावश्यं तदनुपनीय न [3]स्वरूपसत्तामाविशति। ततः [4]साधनत्वेनास्य प्रस्तावोऽत्र न वस्तुलक्षणत्वेनेति स्थितम्॥

एवं ज्ञानेऽपि स्वरूपसंवेदनं सत्त्वाव्यभिचारीति सर्वं पूर्ववत्। तदनेनापि विषयस्य [5]सामर्थ्यसिद्धिरव्याहतेति वेदितव्यम्। परेण हि[6] परवेदने[7] भ्रान्तिशङ्कावकाशः। स्वरूपवेदने पुनः सर्वथा तदभाव एव। अथ स्ववेदने विप्रतिपद्येत, तदेकार्थसमवायिनापि ज्ञानेन वेदनस्वीकारेऽङ्कुरादिवदेव[8] परेणापि स्वरूपोपधानान्न कश्चिद् दोषः। अन्यथा दृष्टार्थव्यवहारहानिः सर्वथा प्रसज्येत।

ननु विषयज्ञानयोर्हेतुफलभाव एव कथमवगन्तव्यः, उपलम्भात् पूर्वं विषयस्यानुपलम्भात्? व्यतिरेकबलादितिब्रूमः। सति च बाह्येऽर्थे स्थिरेतरत्वनिर्णयारम्भः। तस्मादर्थक्रियाकारिकदम्बकपक्षीकरणवत् प्रमाणगोचरचक्रपक्षीकरणेऽपि नाश्रयस्वरूपद्वारा द्विविधाप्यसिद्धिरस्थिरसाधनस्य॥

अथार्थशक्तेः सर्वथा सूक्ष्मविचारासहत्वाद् अ[र्थ]शक्तं सर्वमिति क्व पक्षोद्धरणम्, किं वा साधनमिति चेत्– ननु बीजादेरङ्कुरादिषु दृष्टा शक्तिः, नहि दृष्टे अनुपपन्नं नाम। सर्वस्य हि विचारनाम्नः प्रमाणस्यानुभव एव सीमा। किं चैवमनिच्छन् प्रामाणिकः कथं धूमादपि दहनमनुमास्यति? जलज्वलनयोर्वातातपशीतार्तः सदृशीं प्रवृत्तिमालम्बेत, अप्रवृत्तिं वा? भवानेव कथं वा मिथ्याशक्तिमारोपयता परेण साधन उपन्यस्ते तदभावं विद्वानेवैतत्पराजयाशंसी दूषणोपन्यासोत्तरितोऽस्ति? तत्राप्यसिद्ध्यादिकमेव वक्तुमाद्रियसे, न तु जात्युत्तरम्[9]? तदेतदायातम्, नात्मनापि प्रत्यय इति। तस्माद् ब्रूयाः किञ्चित् केनचित् प्रतारितः। दुरपह्नवा तु शक्तिरर्थेषु। साभासा चेत्– संवृत्त्या, न परमार्थेन। अस्तु यथा तथा संवृत्त्या परमार्थेन वा, किमत्र निर्बन्धेन?

---

१ प्रस्तुतं॰ भ, वस्तुकिमर्थो र २. साधनीय र ३. स्वरूपतामा॰ र ४. साधनके र ५. विषयसाम॰ भा ६. हीति नास्ति र ७. परतो वेदने र ८. ज्ञानेनास्वीकारेऽङ्कुरादिवदे(व) र स्वीकाराङ्कुरादिव भ ९. नात्युत्तरः भ, ॰त्तरं र

[1]अथ [2]भावसांवृतशक्तिसमन्वयिनो क्षणिकतापि सांवृती स्यान्न[3] पारमार्थिकीति मतिः, [4]तत्राप्युच्यते । इह तत्त्वाभ्यासोऽभ्युदयनिःश्रे[3a]यसफलहेतुरिति नित्यानित्यादिविचारमारभन्ते सन्तः, तदनिश्चयेऽभ्यासानुपपत्तेः । [5]स चाभ्यासो नित्येश्वरादिदत्तसाहायकस्तन्निरपेक्षो वा तत्फलहेतुः स्यादितीदृशि[6] प्रकरणे प्रमाणपरीक्षादक्षाणां क्षणभङ्गावतारः । अत्र यदि[7] परमपुरुषार्थसाधनमनिष्टपरिहारेण [8]शक्तिरिथतिनान्तरीयकतया संवृतिरेवेयम्, क्षणिकतापि संवृतिरेवास्तु, परमपुरुषार्थोपयोगेनैव क्षणिकतायामादरात् । किमस्माकं परमार्थचिन्तया, यत्र [9]न प्रमाणप्रमेयविभागः साध्यसाधनव्यवहारो वा कश्चित् ? अथ परमार्थेऽप्येवं संभवति, तदा तदाकृष्टः शक्तिसम्भवः, तदन्वयी[10] वा क्षणभङ्गो न पारमार्थिकत्वमापतति । प्रमाणप्रमेयविभागाद्यभावे तु सर्वथा चैतन्यव्यावृत्तौ,[1]स्वचिन्मात्रव्यवस्थितौ वा पक्षधर्मत्वाद्यभावनिश्चयकालवत् क्षणभङ्गसिद्धिरभवन्त्यपि न पीडयति[2] । तत्र क्षणिकतासिद्धिरतात्त्विकीति यस्त्रासयति, स स्वर्गापवर्गफलप्राप्तिरपारमार्थिकीति किं न त्रस्यति ?

तस्माद्[3] यावत् साध्यसाधनभावव्यवहारः, तावत् [4]परीक्षाक्षममित्येव पारमार्थिकत्वम्, मूलदूषणं[5] प्रति सूक्ष्मविचारान्तरस्यासत्कल्पत्वादिति । अलमतिविस्तरेण ॥

एतेन यदस्थानाभिनिवेशिना न्यायभूषणकारेण[6] भाष्यकारीयं कार्यकारणभावदूषणप्रबन्धमुत्थाप्य वर्णितम्, तत् सर्वं निरुपयोगमिति प्रतिपादितम् । तथाहि यद्येतावतः [7]श्रमस्यासिद्धतोद्भावनायामेवोपयोगः, किमनेन कर्तव्यम् ? असिद्धिश्च परिहृता, पुरुषार्थसमीहया [8]वस्तुतत्त्वनिरूपणप्रवृत्तस्य शक्तिसिद्धिनान्तरीयकव्यापारत्वात् । तत एव तथा क्रमाक्रमाभ्यां [9]कार्योत्पत्तिर्व्याप्तेत्येतदप्यसिद्धमिति यदुक्तं तदपि निरवकाशम् । यदप्यनेन तत्तदाशङ्कयोत्तराभिमानात् पर्यन्ते सांवृतत्वार्थक्रियापातात्—

अर्थक्रियासमर्थं यत् तदत्र परमार्थसत् ।

[प्र. वा. १. ३.]

१. अथेति नास्ति अ २. भाव इति नास्ति र ३. स्यादिति नास्ति र ४. अत्राप्यु° र ५. सदा° र ६. °दृशी अ ७. तव यदि र ८. शक्तिमिति° र ९. नेति नास्ति र १०. सम्भवतस्त° अ

१. स्वेति नास्ति र २. °सिद्धिश्च...पीडयन्ति र ३. तत्रा अ ४. परीक्षाक्षममिति नास्ति अ ५. °भाषिणं अ। र ६. भाष्यकार्यं अ। ७. भ्रमस्या° अ ८. वस्तुत्व° र ९. कार्योपपत्ति° र

[1]इत्युक्तिवैयर्थ्यमुद्भाव्य लिखितम्। यथा संवृत्यार्थक्रियासमर्थं, तथा तत् परमार्थसदिति चेत्–सामान्यावयविसंयोगादेः किं न तथा सत्त्वमिष्टम्? तस्य संवृत्त्याप्यसामर्थ्यमिति चेत्–[2]न, अन्वयव्यतिरेकप्रतिभासस्योभयथा तुल्यत्वात्। तथाहि यत्र यत्र चक्षुः प्रवर्तते तत्र तत्र तैमिरिककेशादिवन्न [3]स्तम्भादिप्रतिभासो भवतीति स्तम्भादेः सामर्थ्यगतिः। तथा[4] महिषादिषु गवाद्यन्वयबुद्धिर्न भवति। परमाणुमात्रेषु संयोगादिरहितेषु चावयविसंयोगबुद्धिर्न भवतीति सामान्यादेरपि सामर्थ्यगतिरिति। तदप्यसारम्। नहि संवृतिरित्येव परिग्रहस्त्यागो वा, बालसंवृतेरपि[5] ग्रहणप्रसङ्गात्। पण्डितसंवृतेरपि परमपुरुषा[3b]र्थसाधनप्रवणायास्त्यागप्रसङ्गात्[6]। अविचारितरम्या हि प्रतीतिः संवृतिः। अस्ति च बालकस्य दर्पणतलावलीनसत्यवदनग्रहो विचारविधुरः। पुरुषार्थसाधनग्रहो वा पण्डितानां त्वद्विचारेण विधुरितो न च त्याज्यः, तत्परित्यागे क्षणभङ्गपरीक्षानपेक्षाया इष्टत्वात्।

अथ [7]बौद्धस्यायं विचारो मम त्वत्रानिष्टिरेव[8]। ततो बौद्धस्यैव[9] सिद्धान्तविरोधः, साधनस्य च वाद्यसिद्धता दोष इति चेत्—स तावदयं विचारः प्रमाणम् अप्रमाणं वा? प्रमाणत्वे तवैवायं[10] न ममेति विभागानुपपत्तिः। प्रत्युत प्रमाणाद् बहिर्भावस्वीकारे नाधिकारः प्रतिवादेऽपि तवेत्यायातम्। अथाप्रमाणम्, तदा यदि नामागमप्रदेशप्रतिपादितोऽर्थः कश्चिन्न समर्थः[1] प्रकृतस्य तु न क्षतिः। तदेतदायातम्—

यदि किञ्चित् क्वचिच्छास्त्रे न युक्तं प्रतिषिध्यते।
ब्रुवाणो युक्तमप्यन्यदिति राजकुलस्थितिः॥

[प्र. वा. ४. ६३]

इति। सौत्रान्तिकसमयस्थितस्य हि क्षणभङ्गं प्रसाधयतः स्थित्यन्तरविरोधो न बाधकः। अन्यथा

आकाशं द्वौ निरोधौ च नित्यं त्रयमसंस्कृतम्,

[अभिधर्मकोशे २.५]

इत्यनेन किं नवाभिधानम्? नैयायिकस्य चोपमानं प्रमाणमिच्छतो वैशेषिकापेक्षया कथं न सिद्धान्तविरोधः? भिन्नप्रस्थानत्वं तु समानम्। शक्तिसंश्रयश्च न

---

१. इति व्यक्ति र २. °मिति चेतर अन्वय° र ३. °यतस्त° र ४. तथा हि र ५. गोपाल स[]-६ते र ६. प्रमाणाया° र ७. °स्यैवायं र ८. °रिव र ९. °स्याय° र १०. तवाय° र १. मायम° र

सौत्रान्तिकनीतिमतिक्रम्य[1]। यदि तु तत्रापि न स्यात् शक्तिरिस्थितिः, तदा[2] स्वप्रतिभासमात्रमाचष्टे न[3] बौद्धसिद्धान्तस्थित इति स्यात्। तस्मान्नयान्तरविरोधेऽपि न सिद्धान्तविरोधयोगः। नापि बाह्यसिद्धिः। न च वस्तुबलप्रवृत्तानुमाने शास्त्रानुरोधः कश्चित्। तद्विचारप्रामाण्ये तु सांवृतत्वेऽप्यर्थशक्तेरवश्याभ्युपगन्तव्यतया तदुपनीतक्षणभङ्गसिद्धिबाधितनित्याभिमतसामान्यसमवायादिकल्पनमधरसंवृतित्वाद् बालसंवृतिवन्नोपादेयमर्थक्रियाशक्तौ। अशक्तौ [4]स्वविषयज्ञानजननेऽप्ययोग्यस्य सत्त्वाभ्युपगमः संवृतिरस्तु किं त्वधरतोऽप्यधरेति निश्चयः। अतएवाधराधरसंवृत्यपेक्षयोत्तरोत्तरासु परमार्थत्वेन[5] [6]व्यवस्थाप्यमानावश्याभ्युपगन्तव्या; निरुत्तरार्थक्रियैव संवृतिः परमार्थ इति तया सत् परमार्थसदुच्यते[7]। तथाहि बालस्य दर्पणतले वदनग्रहमपेक्ष्यासदेव वदनमत्र ख्यातीति[8] परमार्थ इति उच्यते। तदपेक्षया च दर्पणप्रतिहतिव्यावृत्त्या नेत्रांशवः स्वमुखमेव गृह्णातीति परमार्थः। एवमुत्तरोत्तरपरिकल्पेषु[9] घलघस्सु पूर्वपूर्वः संवृतिरुत्तरोत्तरः परमार्थो यावदर्थक्रियास्थितिः। तदतिक्रमे हि ग्राह्यग्राहकभङ्गादायातं प्रतिभासमात्रव्यवस्थानमिति क्व संवृतेर्वार्ता? तस्मात् संवृतीनाम[4a]न्तिमार्थक्रियाशक्तिरेव परमार्थशब्दवाच्येति न संवृतिमात्रत्वेन सामान्यादिसंवृतिस्तत्कलाम्[10] अधिरोहति। तद्विचारप्रामाण्यं तु [1]गजनिमीलिकयावधीर्य तत्त्वत एव शक्तिः परमार्थस्तत्र तन्नोच्यते, सामान्यादयश्च संवृतिसन्त इति। एवमवयविसंयोगादयोऽपि संवृतिसन्तस्तद्वदुभयथा वेदितव्याः—शक्तेः परमार्थतया नित्यताभ्युपगमत्वात् क्षणस्थितिधर्मतायाः। अणव एव हि[2] विशिष्टोत्पन्ना द्रव्यद्वयं वा संयोगशून्यं तत्तद्बुद्धिसाधनमिति किमवयव्यादिना? तत् कथं सामान्यादिपरिग्रहः संवृतिमात्रत्वेनार्थक्रिया समीक्रियते[3]। यदि च तावतैव साम्यं किमुपपत्तिघोषणेन? माभूदधरसंवृतित्वमिति [नियमो]पन्यासः[4]। तत्र शक्तिसमन्वयिनः तदाधारस्य वा क्षणभङ्गसङ्गमेन दुर्निवारम्। यथोक्तं प्राक्–शक्तिसमन्वयाभावे[5] तदाधारस्यापि संवृतिसत्त्वे कुतस्तद्धर्मस्य [6]सामान्यादेरधरसंवृतित्वपरिहारः? तस्मात् संवृतिमात्रत्वमेव साम्यम्। तत्र चोक्तो दोषः। या चेयमुपपत्तिर्बुद्धिव्यतिरेको नाम[7] साप्यपोहे चिन्तयिष्यते।

१. कमस्य र २. ॰स्तया श्र ३. ॰माविष्टेन श्र ४. स्वेति नास्ति श्र ५. ॰र्थ केन र ६. ॰प्यमानावस्व॰ र, ॰प्यसामर्थवश्या॰ श्र ७. उच्यते इति नास्ति र ८. इतीति नास्ति श्र ९. निर्विकल्पेषु श्र १०. भुत्कन्धा॰ र
१. ॰निमीलितेन र २. अणव हि र ३ समाह्वयते श्र ४ [...पन्यासः श्र, ॰ति न्यापन्यासा र ५. ॰कि समर्थार्थायिन[?] र ६. समर्थभावे र ७. ॰रधरं स॰ र ८. साप्य ष्यते इति नास्ति र; ॰सापि क्षीणा; नहि बुद्धिरूानव्यतिरेकेण व्यतिरेकवस्तुसिद्धिक्रमः। किं तर्हि वस्त्वन्तराकारपरिहारेण यत्राकारविशेषो बुद्धेः स्फुटतर...वस्तु...तस्य यदा नार्थस्य ग्राह्यवस्तुग्रहः तद्व्यतिरेकव्यतिरेकि वस्तुकथनम्।

यच्चेदमूचे—किं च यद्यनिरूपिततत्त्वा प्रतीतिः संवृतिः, तत एव कार्यकारणव्यवस्थितिरिष्टा, तथा सत्यक्षणिकानामेव कार्यकारणभावः सर्वव्यवहारिप्रसिद्धोऽन्वर्थो ज्ञेयः[1], किं तत्र सूक्ष्मविचारेणेति—तदप्ययुक्तम्। तथाहि यस्तावत् तत्त्वत एव क्षणभङ्गुरभावग्रामसाधनाय साधनमाह सौत्रान्तिकः, स्वचिन्मात्रास्थितौ साधनदूषणावधानाभावात् तस्य तात्त्विकमेव सामर्थ्यं त्रिविधं[2] प्रत्यक्षानुपलम्भोपलभ्यम्। कथं तस्यायमुपालम्भः ? परविषयप्रमाणोपस्थापितमन्यं वा[3] परिहृत्य कथमासितुमसौ समर्थः ? तावता च तात्त्विकी क्षणभङ्गसिद्धिरक्षणिकानामेव कार्यकारणभावं सांवृतमुपपादयति इति किमस्याङ्गीकरणप्रयासेन ? न च विचारः परिस्फुरन्नेव परिहर्तुं शक्यः[4], "छायाद्रव्यतादिनिषेधेश्वरसिद्ध्यादिष्वप्यनादरप्रसङ्गात्[5]। तदनिष्टवादिनः प्रतीतस्यापि[6] विचारस्य सूक्ष्मत्वादिति कृतमिदानीं शास्त्रपरम्परापरिश्रमेण। ततश्च किं तत्र सूक्ष्मविचारेणेति विमुच्य विचारश्चारुरसौ न भवति, येनाक्षणिकत्वेप[7] इति वक्तुमुचितम्। तच्च न प्रतिज्ञामात्रेण सिध्यति। अस्माभिस्तु नित्यमत्येतु[8] साधनमुपन्यस्तम्। न च तत्र दोषः।

अथ प्रस्तुतसूक्ष्मविचारादरे सूक्ष्मविचारान्तरस्याप्यवकाशप्रसङ्गो[10] दोष एव। यदाह-सूक्ष्मेक्षिकया हि कार्यकारणभावाद् भेद[1] एव स्यात्, त्वदुक्तात् न्यायादिति। इदमपि श्रद्धाजडस्यैव[2] शोभते। यावद्धि भावानामर्थक्रियाशक्तिपरित्यागं न सहामहे तावदव्याहतः क्षणभङ्गाङ्गीकारो नित्यनिग्रहश्च। यदा तु शक्तिविवेचन[3]-वि[4b]चारान्तरे च[4] बलवति चेतः क्रमिष्यते[5] तदा क्षणिकताविमोक्षमपीत्यक्षमः[6], समानत्वाद्दण्डस्य। न चैवं शक्तेरुपगमो नित्यतामनित्यतां च प्रत्युज्जीवयितुं[7] शक्नोति, असाधारणत्वात्। तथाहि न खलु शक्तिरिति प्रमाणशून्यमेव किञ्चित् क्वचित् कदाचिद् अस्तीत्यविमोक्षः। किं तर्हि ? एतद्बीजादिकमङ्कुरादिसमर्थमित्यनेनाकारेण प्रत्यक्षप्रतिवेद्यतयैव। तच्च प्रत्यक्षं यथान्वयव्यतिरेके प्रमाणमिष्टं तथा कार्याणां [8]क्रमीतरत्वेपीत्येवं प्रकारेण न्यायेन शक्तिः क्षणिकतायां[9] विश्राम्यन्ती न नित्यसाधारणीति[10]

न चैवमाधाररूपव्यतिरेकेण रूपनिर्भासः। सामान्यादेर्विकल्पमात्रस्य तु कल्पिते सामान्ये क्वापि सामान्यं सामान्यमिति—इति प्रान्ते केनचिद् योजितम्—अ ॥

१. 'दोऽप्यनुज्ञेयः र २. 'त्रिविध' र ३. 'मन्वर्था[?] अ ४ शक्यते र ५ तानि र ६ दिष्वना' र ७. अपीति नास्ति र ८. नाक्षणिकत्वक्षे र ९. नित्यमित्येतुः अ १० पसङ्ग र १. भावोच्छेद र २. 'स्यै[व]नोभ' र ३. विवेचिनि अ ४ चकारो नास्ति अ ५. भमिष्यते अ ६ विनोक्षमप[?] र ७. प्रत्य...पयितुं अ ८. भमी अ ९. शक्तिक्षणि[क]ताया' र १० 'रणी कथं अ

कथमुभयोरपि प्रत्युज्जीवनम्? तदेवं बलवति [1]हेतुफलताभ्रंशशंसिनि विचारे शक्ति-सिद्धा क्षणिकतैवास्ति। सा[2] संवृतिः। नित्यता [3]त्वधरसंवृतिरेवेति सामान्यवद् भाव्यम्[4]। तद्विचारबलने तु न किञ्चिदाशंकास्थानमिति सिद्धैव शक्तिः।

तत्कथमुच्यते– तथाप्यसिद्धत्वान्न सत्त्वेन क्षणिकत्वसिद्धिः[5]। नाप्यर्थक्रियायाः क्रमाक्रमाभ्यां व्याप्तिसिद्धिरिति, [6]सांवृतशक्तिपक्षेऽपि निर्वाहस्य दर्शितत्वात्?

ननु यथा संवृतौ परमपुरुषार्थं प्रार्थयमानस्योपायान्वेषणप्रवृत्तस्य नार्थशक्ति-मनाश्रित्य स्थातुं शक्तिः, तथा मया तत्फललाभिना[7] भाव्यमित्युपायान्वेषणान्नित्यता-ग्रहोऽप्यवश्यमायात इति नित्योऽपि सत्संवृतिसन्न भवतु कथमधरसंवृतिविषयः? नित्यात्मा तु चिन्तान्तरमर्हति। न च[8] तन्मात्रेणोपगमार्हः, यतः संवृतिविशेषविषयः स्यात्। एवं शक्तिग्रहोऽन्वेषणे प्रयोजकोऽस्तु। शक्त्या किं कर्तव्यमित्यभिदधीत नाम। न तु शक्तिव्यतिक्रमोऽनेन वचसा दलितः[9], शक्तिग्रहस्योपायान्वेषण-[10]हेतुत्वस्वीकारात्। नन्वेवमात्मनि शक्यम्। शक्तिग्रहोऽपि संवृत्त्यैव प्रयोजक इति चेत्– अस्तु संवृत्त्या तत्त्वेन वा। शक्तिसिद्धौ च[1] पुनरात्मग्रहस्यापि[2] प्रयोजकत्वसिद्धे-र्नावश्यमात्मसिद्धेराक्षेप इति। निर्णयापेक्षणे क्षणिकत्वसिद्धिस्तद्बाधनीत्युक्तप्रायम्[3]। हेतुफलग्रहणे व्यवस्थितप्रतिसन्धातृसिद्धिवादस्तु प्रस्तोष्यतेऽनेकान्तचिन्तायाम्।

यदपीदमुक्तम्, सूक्ष्मेक्षिकयापि त्वन्मत एव कार्यकारणभावग्रहणं नष्टं भवति, अन्येनान्यस्याप्रतिबद्धस्य ग्रहणानभ्युपगमात्। प्रतिबन्धश्च द्विष्ठः[4] प्रत्यक्षेणा-द्वयग्राहिणा[5] न गृह्यत इत्यनुमानस्य तत्राप्रवृत्तेः[6]। अस्मन्मते तु कार्यकारणभाव-स्यापि न ग्रहणानुपपत्तिः, प्रत्यक्षस्यैकक्षणविषयत्वनियमानभ्युपगमात्। तथा च व्याप्तिग्रहणसमर्थनप्रस्तावेऽस्मदादिप्रत्यक्षमप्यतीतानागतादिविषयं कदाचिददृष्टादिहेतु-वशात् प्रवर्तत[7] इति समर्थितम्। न[8] ह्यन्यथा कारणतावादप्रतीतिः [9]संभवतीति[10]।

---

१. ˚फलभावभ्रं˚ र २. ˚वान्तिमास˚ र ३. ˚ताधर˚ र ४. वाच्य˚ र ५. सिद्धिरिति नास्ति र ६. सांवृति˚ र ७. लाभिनां र ८ चकारस्त्यक्तः र ९. दर्शितः र १०. ˚पणे हेतु˚ र १. शक्तिसिद्धयैव र २ प्रयोजकत्वा˚ र ३. ˚प्राय: अ ४ द्विष्टं˚ र ५. प्रत्यक्षे द्वय˚ र ६. प्रवृत्तिः र ७. प्रवर्तित˚ र ८ ध(? ह्य)न्यथा र ९. कारणभावादि र १०. इतीति नास्ति र

तदपि सकलं विफलम्[1]। तथाहि परेण परस्य वेदनं तावदुभयोरपि क्षणिकेतरवादिनोरिष्टम्। तत्र च[2] यदि प्रत्यक्षेण[5a]द्वयग्रहणं[3] नाम, न्यायविरुद्धमेतत्। द्वयग्रहणमेव न्याय्यम्। तथा च सति [4]कार्यकारणभावग्रहणस्य न व्याघातः। क्षणभङ्गवाद्यपि तथोपगच्छन् [5]कियतीं क्षतिमासादयेत्। न ह्यदृष्टमनिष्टमेवास्य।

पूर्वमप्येष सिद्धान्तं स्वेच्छयैव गृहीतवान्।
कथञ्चिदन्यं स पुनर्ग्रहीतुं लभते न किम्॥
[प्र° वा° ४. ७४]

अथ कथञ्चिद्द्वयग्रहणमेव न्याय्यम्, तदा तद्विपरीतं कार्यकारणभावग्रहणप्रवणमपि[6] त्वदिष्टिमात्रं कुत्रोपयोगि ?

अथ क्षणभङ्गवादे कार्यकारणभावग्रहणमपि न प्राप्नोतीत्याकूतम्[7], तर्ह्यस्ति कार्यकारणभाव इति विरोध उद्भाव्यताम्, नासिद्धिः। तत्र च वक्ष्यामः। यदपोदमुक्तम्– अनादिवासनात एवेयं प्रतीतिरिति चेत्– न, अत्रापि प्रमाणाभावादिति, तत्रापि कायचित्तव्यतिरिक्तात्मद्रव्यसमवाये[8] वस्त्वन्तरधर्माधर्मलक्षणगुणप्रसाधकमयं[9] प्रमाणमुपन्यसितुं शक्तो नापरश्चेतःशक्तिविशेषः कर्मेत्यस्य प्रसाधकमिति महती श्रद्धा। चित्तशक्तिरेव हि वासनेत्यभिधीयते। तस्मादसंसृष्टक्षणमात्रवेदनवादिनो हि व्यवहारस्यानादिरभ्यासः। ततो वासना। ततो मिथ्या प्रतीतिरिति। एतत्[10] सर्वमन्धपरम्परावदप्रमाणकमित्यपि धन्धान्धविलसितमिति मन्तव्यम्[1]। असंसृष्टक्षणमात्रवेदनवादी हि प्रस्तुतः क्षणभङ्गवादी[2] सौत्रान्तिक इत्यर्थः। तस्य[3] कार्यकारणभावप्रतीतिः मिथ्या प्रतीतिरिति महती भ्रान्तिः। कार्यकारणभावापलापी तु योगाचारः स्वसंविन्मात्रवेदनवादीति वदितुमुचितम्[4]। न च तस्य दूषणेन क्षणभङ्गवादिनः किञ्चित्। हेतुफलापलापिनोऽपि [5]यदि तदपलापाय न्यायसंभवः, तदा तदपि न दूरमिति किमत्र [6]निर्वन्धेनेति। स्थितमेवत् यदि कार्यक्रियाशक्तिस्वात्त्विकी, तदितरा वा। उभयथापि नासिद्धिदूषणावतार इति॥

॥ पक्षधर्मताधिकारो नाम प्रथमः पादः ॥

---

१. फल्गु र २. चकारो नास्ति र ३. °णाद्वुपण' अ ४. 'ताव' अ ५. कियता' र ६. प्रवण इति नास्ति र ७. ग्रहणमेव प्राप्नोतीत्याद्भुतं अ ८. समवायि' र ९. प्रसा...नय' अ १०. °रित्येव तत् र १. मन्त्ये अ २. हि प्रस्तुतः क्षणभङ्गवादीति नास्ति र ३. तस्य च कार्यस्य प्रभावः र ४. उचितः अ ५. यद्येत' अ ६. निर्वन्धो नास्थित' र

## क्षणभङ्गाध्याये

### द्वितीयः पादः—अन्वयाधिकारः

नाप्ययं विरुद्धो हेतुः, सपक्षीकृते जलभृति[1] दर्शनात्, साध्यविपर्ययव्याप्तिलक्षणस्य विरुद्धस्य साध्यवति दर्शनानुपपत्तेः। ननु साहसमेतत्, क्वचिदपि धियः क्षणभङ्गगोचरीकरणसामर्थ्यानुपलब्धेः, तथावसायाभावात्। न च[2] प्रमाणबलावलम्बनाद् अम्बुदे क्षणभङ्गसिद्धिः। प्रत्यक्षतो हि स एवायं तोयद इति प्रत्यभिज्ञानमस्य कालान्तरस्थायितामेवोपस्थापयति। तद्बाधितत्वाच्चानुमानमनवकाशम्। न चानुमानमन्यदस्ति। सत्त्वानुमाने च पुनर्निदर्शनान्तरसमीक्षायामनवस्थाप्रसंगः। तस्मात् सपक्षेऽदर्शनात् न [3]विरोधपरिहारः। विपक्षीभूतेऽम्भोभृति भावाच्च [अ]विरोध एवानैकान्तिकत्वस्यासत्त्वस्य। पक्षे च क्षणभङ्गप्रतिज्ञायाः प्रत्यक्षबाधा।

यदाह शंकरः, [5b] प्रत्यक्षेणैव स्थितिविपर्ययाभावस्य सिद्धत्वादिति। न चायमेकताग्रहः पूर्वापरकालयोरप्रमाणम्, संवादित्वात्। तथा च न्यायभूषणः, यथा चेदमसत्कार्यमित्यस्याः प्रतीतेर्विसंवादाभावादेव प्रामाण्यं, [4]तथाऽनेनैतानि क्रमेण कृतानि न युगपदिति प्रतीतेः, स एवाह[5] स एवायं स्फटिक इत्येवमादिप्रत्यभिज्ञायाश्च विसंवादाभावादेव प्रामाण्यमेष्टव्यम्, तुल्ययोगक्षेमत्वादिति। तदेतदसंगतम्। अलिङ्गस्य हि विकल्पस्या[6]विसंवादो नामार्थक्रियाप्राप्तिः,[7] प्रमाणान्तरसंगतिर्वा[8] स्यात्। तत्र स एवेत्यध्यवसायमात्रान्नापरप्रमाणवृत्तिरत्र। अर्थक्रियापि नैकप्रतिबद्धा [9]सिद्धा काचित्[10], भिन्नेनापि तत्समानशक्तिना तादृगर्थक्रियायाः करणाविरोधात्, तथाहि यथैको घटो वारि धारयतीति तत्कालभाविनोऽप्यन्यस्य न वारिधारणम्, तथा द्वितीयक्षणेऽप्यन्यो यदि वारि धारयति तदा[1] कीदृशो दोषः स्यात्? विसदृशक्रियायां तु चिन्तैव नास्ति। तस्मात् यथा पाचकादेः पाकादिक्रिया प्रतिबद्धा सिद्धानुभूयमाना

---

१. जलकृति अ; जलभृति र २. चकारस्तत्कः र ३. नाविरोध र ४. तथा ताने र ५. स एवाहमिति नास्ति र ६. स्य वि॰ अ ७. नामार्थक्रियाशक्तिः र ८. ॰ति वा अ ९. ॰बन्धा र १०. कारितः अ
१. तदेति नास्ति र

दहनज्ञानस्य संवादमापादयति, न तथा प्रथमचरमकालयोरेकीभावप्रतिबद्धा[२] काचित् क्रियोपलब्धिगोचरा[३], ययैकभावग्रहोऽपि संवादी स्यात्।

सर्वेषां सर्वदैकाध्यवसायसाम्यात् किमपरसंवादापेक्षयेति[४] चेत्—न, असिद्धत्वात्। यद्यपि हि समानशक्तिभिरेकत्वमवसेयं तथापि सर्वैरिति न शक्यमसर्वविदा। अतीन्द्रियदर्शिनां [५]सुरमुनियोगिनामुल्लंघनीयतया तेषु कश्चित् कदाचित् क्षणभङ्गदर्शी[६] यदि स्यात्, न विरोधः[७]। अधिकाधिकशक्तिदर्शनं च संभावनाबीजम्। यदि तु स्वभाव एवायं क्षणभङ्गनामा न भवति न तैर्ग्रहणमिति, युक्तमेतत्। तच्च निरूपयितुमारब्धम्। अतो यावन्न स्वभावसिद्धिः, तावन्न सर्वेषां क्षणध्वंसनिषेधाध्यवसायसिद्धिः[८]। अतीन्द्रियदर्शिद्वेषिणो हि[९] नानुपलब्धिमात्रेण निषेधमभिदधानाः[१०] साधवः, अतिप्रसङ्गात्। योग्यानुपलब्धिस्तु देशादिविप्रकर्षिण्यसमर्थेत्यास्तां तावत्[१]। कतिपयसंप्रतिपत्तिस्तु तैमिरिककलित-केशादिष्वपि संभविनी न संवादमवस्थापयितुं शक्नोति। एतच्च प्रत्यक्षापेक्षयोच्यते। अनुमानतस्तु क्षणभेदे भावभेदं प्रतियन्तः किमिहापि परिषदि निषेद्धुं शक्यन्ते, तत्साधनाभ्यासस्य क्वचिदनिवारणात्? तस्मान्न सर्वेषामध्यक्षकृतोऽनुमानात्मा[२] वा एकाध्यवसायो नियमेन भेदाध्यवसायनिषेधो वेति न[३] प्रमाणान्तरवत् संवादसंवादितमस्य प्रामाण्यम्, लूनपुनर्जातकेशकुशकदलकाण्डादिषु[४] [6a] व्यभिचाराच्च। यत् पुनरनेन विशेषवचनाभिमानिनाभिहितम्, अथ विसंवादिन्यपि प्रत्यभिज्ञा दृश्यते। कार्यकारणभावप्रतीतिः किं विसंवादिन्यपि न दृश्यते? या विसंवादिनी सा कार्यकारणप्रतीतिरेव न भवति, अप्रमाणत्वादिति चेत्? समानमत्रापि। विसंवादिनी या सा प्रत्यभिज्ञैव न भवति तदाभासत्वादिति।

स्यादेतत्, यदि कार्यकारणभावप्रतीतिवल्लक्षणभेदः[५] प्रतिपादयितुं शक्यैत। तथाहि कार्यकारणभावप्रतीतावपि यदि वस्तुमात्रेण जननं धूमादेर्गृह्णीयात्[६], गर्दभादिव्यभिचारेण वह्नावपि हस्तकं त्यजेत्। एवमन्वयमात्रेण[७] व्यतिरेकमात्रेण[८] वा यथायोगं भाव्यम्। यदा पुनरन्वयव्यतिरेकग्रहणप्रवणप्रत्यक्षानुपलम्भसम्भवः कार्यकारणभावप्रत्ययः पुरस्क्रियते, यथा [९]निर्णीतमस्माभिः त्रिकपञ्चकचिन्तायाम् —

२. रेकभा' र ३ गोचरो अ ४. 'दात्पक्ष(स्ये)ति र ५. अस्पष्टम् अ ६. क्षणदर्शी अ ७. स्यान्निरोधः अ ८ 'धावमाय' र ९ हीति नास्ति अ १०. समिदधाना र १. 'कषिण्यस्वान्तावत् र २. अनुमानकृतो एका' र ३. न कारत्यक्तः र ४. 'दिष्व' अ ५. घर्णक्षण' र ६. अस्पष्टम् अ. ७. अर्थमात्रेण र ८ व्यतिरेकमात्रेणेति नास्ति अ, वाच्य' र ९. निर्ञात' (?) अ

न स्थितं तत्र नान्यस्माज्जातं नायातमन्यतः।
यस्य भावे भवेत् कार्यं न चेत्तस्य न कस्यचित्॥
[कार्यकारणभावसिद्धौ ४]

इति, तदा त्वव्यभिचारः[10]।

एवं यदि प्रत्यभिज्ञानेऽपि लक्षणभेदो दर्शितः स्याद् दर्शयितुं वा शक्यो व्यभिचाराव्यभिचारोपयोगी, तदा युक्तमेतत्। न चैवमस्ति, सर्वत्रात्यन्तसदृशवस्तुनि[1] पृथग्जनप्रत्यभिज्ञाया एकरसत्वात्। यदि चावश्यमेतावता कालेन भ्रान्तिभ्रंशो[2] भवतीति कालनियमः स्यात्, तदाप्युचितमेतत्। यावता छिन्नोद्भिन्नकेशपाशादौ पुरुषायुपक्षयेणापि नैकताभ्रमभ्रंशोऽवश्यं यत्नवतो भवत्येवेति चेत्—न, तत्रापि नियमाभावात्। प्रयतमानस्यापि हि वचनमात्रमप्रमाण[3]मुपपत्त्यन्तरं च दुर्लभम्। यदि चोपपत्त्यन्तरं प्रत्यभिज्ञासिद्धैकत्वबाधकम्, प्रस्तुतेऽपि किं नैवमाशंक्यते ? केवलं प्रत्यभिज्ञयातीतमनुमानं वराकमसमर्थमिदानीं केशादौ तव[4] वचनमात्रमपि समर्थमिति महती परामर्शशक्तिः। भिन्नेऽपि केशादावभेदाध्यवसायदर्शनाद् भवतु तत्र यथाकथञ्चिद् भेदसंप्रत्यय[5] इति चेत्—न, अन्यत्रापि बहुलं तथा दर्शनात्। न हि स्तम्भमेकमपनीय निवेशिते सदृशे स्तम्भान्तरे न भवत्येव प्रत्यभिज्ञानम्॥

एवं घटपटस्फटिकादिष्वपि यत्र यावदत्यन्तसदृशलाभः। भिन्नकालदर्शने धायं न्यायः। समसमयं तु अयोगोलकयुगलोपलम्भेऽपि[6] भवत्येव भेदव्यवसायः[7]। तस्मात् कालभेदेनैकाभिमतेऽपि स्तम्भादौ भिन्न एव[8] किमयमेकत्वाध्यवसायः[9] स्तम्भान्तरेणैव ? अथाभिन्न इति संशयः प्रत्यभिज्ञायाः प्रामाण्यप्रतिषेधी कथं निषेध्यः ?

अथ [10]क्षणभेदेनाभेदस्यादृष्टपूर्वत्वान्न[1] संशय इति चेत्—नैतदपि साधु। न ह्यदृष्टमित्येव नास्तीति शक्यते वक्तुम्, सतोऽपि सूक्ष्मतयाऽनुपलक्षणात्[2]। तत्क्षणोदयव्ययं[3][6b]देहोपचयापचयवत्। ततोऽनुपलक्षणेऽपि[4] भेदस्य सत्ताङ्गोल्लेखशेखरो[5] दुर्निवारः संशयः। एतावद्विमर्शाभावे तु इतरजनस्य निश्चल एकावसायः स्यात्। यौक्तस्तु सोऽपि[6] संशय एव। किं च क्षणभेदेनापि भेदः प्रमाणपरिदृष्टत्वाद् दृष्ट एव।

१०. क व्यभिचारः र १. 'दृशे वस्तु' र २. भङ्गो ३. 'मात्र प्रमाणं र ४. तवेति नास्ति र ५. भेदप्रत्यय° र ६. अपीति नास्ति अ ७. भेदाध्यवसायः र ८. भिन्न एवेति नास्ति अ ९. किमनेकत्वाध्यवसायः अ
१०. न भेदस्या° अ १. पूर्वक र २. 'नुपलक्ष्यमाणत्वात् र ३. व्यय इति नास्ति र ४. ऽन्वयलक्षणेऽपि र ५. 'त्तांशोल्लेख' र ६. यौक्तभ्रमेपि(?) अ

यथा धारादौ कियत्यपि नभोभागेऽपरापरपयःपातेऽपि तदेवेदमुदकमित्यवधारणस्य विपर्ययस्थितेश्च[७] संभवात्।

अनभ्यासदशायामेकताग्रहः तत्र[८] स्तम्भादौ त्वभ्यासवतोऽपीति चेत्? ननु क्षणभेदभाविनि विशेषे[९] सर्वत्रैवास्मादृशोऽनभ्यास इत्युपपादितमेव। अम्भःस्तम्भादौ तु [१०]तत्क्रियासार्थसामान्यालम्बनः सर्वत्राभ्यासः स्थूलविषयः। तस्मान्न प्रत्यक्षेण क्षणद्वये[१]अभेदसाधनव्यापारः स्वीकर्तुं शक्यः। एकावसायमात्रं तु सदपि व्यभिचारादसमर्थम्।

ननु सर्वत्र नीलादौ पृष्ठभाविना विकल्पेन[२] प्रत्यक्षस्य व्यापारोऽनुगम्यमानः प्रामाण्यमुपनयति। तदेकतावसायोऽप्येकविषयमेव प्रामाण्यमस्य दीपयत्विति चेत्– न खलु सर्वत्र पृष्ठभाविविकल्पविषये[३] प्रामाण्यमिन्द्रियज्ञानस्य। मरीचिविषयस्यापि जलावसाये जलविषये[४] प्रामाण्यप्रसङ्गात्। विकल्पापेक्षं तु प्रामाण्यमिति तदनुदये न[५] प्रामाण्यमिति न्यायः। तदुदये तु [६]संवादापेक्षमेव तत्। न चैकाध्यवसायस्य संवादः[७] स इत्यावेदितमेतत्।

ननु यत्र[८] बाधः, तत्राप्रामाण्यमबाधिते प्रामाण्यमिति किं न पर्याप्तम्? [९]इयं गतिरवनतगगनप्रतिभासेऽपि देशकालनरान्तरव्यापिनी संभवति, निरूप्यमाणा त्रुट्यतीति[१०] प्रत्यभिज्ञायामपि समानम्।

किं चायमबाधो नाम बाधाविरहो बाधानुपलब्धिर्वेति विकल्पयोः क्रमात् असिद्धिरनैकान्तश्च[१] दुष्प्रतिविधानः। अनुपलब्धिमात्रेण निषेधासिद्धेः[२], बाधकस्य चानुमानस्याभिधास्यमानत्वात्। अथ प्रत्यक्षसमाख्यातेयं प्रत्यभिज्ञा, कथमनुमानेन बाध्यते? न [३]चाबाध्यत्वप्रतिज्ञानाद्बाधकस्य[४] सद्भावचिन्तावकाशोऽनुमानस्याप्यवकाशः स्वयमेव दत्तः। प्रामाण्यस्यैव सिद्धिबाधनयो[५]रधिकारात्, प्रत्यक्षमेवास्या बाधकम् अस्त्विति चेत्- संवादद्रढिम्नि प्रत्यक्षशतेनापि किमस्याः? ततः प्रत्यक्षेणापि बाधनमस्याः संवादशैथिल्यं संभावयदनुमानमपि सन्निधापयति।

---

७. 'मितेश्च र ८. ग्रह(ए)तत्र र ९. स च एवास्मां र १०. 'यत्क्रियापरम्पा र १. प्रत्यक्षेण द्वये र; प्रत्यक्षेण क्षण' अ २. वैकल्येन अ ३. विषयप्रा' अ ४. विषयप्रा' ५. तदनुदयन' र ६. तदुत्पत्तिसम्वादा र ७.;पाठो घृष्टः अ ८. यत्र एवा' र ९. इयं च भिनवतमं (?) र १०. 'ति (अ)भिज्ञा र १. 'रनैकान्तिकश्च र २. मात्रनिषेधा अ ३. च बारस्त्यक्तः अ ४. सद्भावे अ ५. बाधयो' अ

अपिच। मायाकरः शिरसि निमज्जितं गोलकमास्येन निःसारयतीति प्रत्यभिज्ञा शिरसि छिद्रप्रसङ्गसङ्गतेनानुमानेन बाध्यमाना किं नोपलब्धा? बाध्यमाना न प्रत्यक्षमिति प्रस्तुतेऽप्यस्तु। अतः प्रत्यक्षत्वकीर्तनमस्या याचितकमण्डनमात्रमत्राणम्। यथा चावनताकाशप्रतिभासः सर्वसंप्रतिपत्तावपि नाबाध्य[6] एव, तथा नाविसंवाद्येवेत्यपि व्यक्तम्। तद्वदेव चैकताग्रहः [7a] सर्वसंप्रतिपत्तावपि नाविसंवादी। नहि तदपराध्यवसायोदयमन्तरेण प्रणताम्बरसंवेदने स एवायमिति प्रत्ययेऽपरः संवादोऽर्थक्रियादिस्वभावः[7] संभवति। अतश्च बाधकाभावेऽपि[8] नामाप्रामाण्यव्यवहारोऽशक्यसाधनः। तद्वदेव[9] संवादेन प्रामाण्यमन्वशासतः[10] तदभावात् प्रामाण्यव्यवहारोऽपि कुतः प्रत्यभिज्ञायाः? उभयनिश्चयाभावे च तदुभयावलम्बी संशयः सिद्धः। तल्लक्षणे कदलकाण्डादौ व्यभिचारदर्शनात् परिपुष्टानिष्टाङ्गश्च[1]। तत्कुतः प्रामाण्यम्?

किं च, य एवमाह विसंवादिनी या सा प्रत्यभिज्ञैव न भवति तदाभासत्वादिति, तेन शब्दादौ प्रमेयत्वं [2]हेतूकृत्य [3]यत् साध्यव्यभिचारि प्रमेयत्वं, तत्प्रमेयत्वमेव[4] न भवति तदाभासत्वादित्यपि वक्तव्यमेव[5]।

अथ प्रमाणविषयत्वमात्रं प्रमेयत्वम्, तच्च व्यभिचारिणोऽप्यक्षीणम्। एवं तर्हि पूर्वापरैकीकरणमात्रं प्रत्यभिज्ञार्थः[6]। तच्च व्यभिचारिण्या अप्यस्ति। प्रत्यभिज्ञानाम क्रियतां मा वा[7], केवलं सा प्रमाणमेव न [8]भवतीति वक्तव्यम्। प्रमेयत्वमपि यद्व्यभिचारि, तत् लिङ्गमेव न भवतीत्यपि ब्रूहि। एकलक्षणतया यथैकत्र व्यभिचारस्तथान्यत्रापि संभवन्न [9]निवार्यत इति प्रत्यभिज्ञानेऽपि नाशक्यम्॥

नन्वग्निरत्रेत्यनुमानमननुमानं च हेत्वाभासकाले समानाकारम्। तत्कथम् एकत्राश्वासो[10] नान्यत्र? हेतुद्वारेण विशेषात्। यथा हि एकं त्रिरूपलिङ्गनिश्चयजनितम् अन्यदन्यथा, यथा कार्यकारणभावप्रतीतिरेव काचित्परिशुद्धा या अध्यक्षानुपलब्धिसाधना, काचिदन्यथेति दर्शितम्। तथा च सति भिन्नलक्षणत्वात् नाश्वासानाश्वाससङ्करः। तथा न प्रत्यभिज्ञायां शक्यम्, अनुपहतेन्द्रियस्यैव तज्ज्ञानस्य वा व्यभिचारिण्यामपि व्यापारात्। नापरः परैरपि[1] परिदीपिते विशेषः। दीर्घकालानुबन्धमात्रं तु बहुल-

६. न बाध्य° र ७. स्वेति नास्ति र ८. °वे तायिना(म)प्रा र ९ °रतदेव र १०. °मनुशा° र १. परिमुष्टनि° अ २ प्रमेयहेतू अ ३. या सा व्यभि° र ४. तत्प्रमैव र ५ व्यक्तमेव र ६. ज्ञानार्थे° र ७ नामनक्रियतां सावा° र ८. न तव भव° र ९. निवार्य इति र १०. कत्रात्मा° अ १. दीपितो परिदीपतो नि° अ

व्यामोहाद् अदृष्टादिहेतुप्रभावाद् [2]विपर्ययसामग्रीसमवधानपरिलम्बेऽप्युपपत्तिमत्, यथोक्तं प्राक्। यद् वा यतः कुतश्चित् परोक्षार्थप्रतिपत्तिमनुमानमनुमत्य यत्र व्यभिचारः, तल्लिङ्गमेव न भवति/ अनुमानं वेति निर्वृत्तिमालम्बमानः[3] पक्षधर्मत्वादिकं[4] लिङ्गलक्षणं तत्प्रभवमनुमानं किमर्थमभिदध्यात् ?

अथ व्यभिचारिणोऽपि[5] व्यभिचारदर्शनमसमर्थम्, [6]सामग्रीलाभविलम्बे व्यभिचारादर्शनमात्रेण लिङ्गत्वप्रसङ्गाद् वक्तव्यमेव लक्षणम्, यदीक्षणान्निर्वृत्तिरनीक्षणादनाश्वासश्च जायते ? यतो न [प्रे]क्षस्तदनुरूपानुष्ठान[7]प्रारम्भमासादयेत्। सन्ति हि प्रत्यनीकदर्शनस्थानां साधनानि [8]चिरकालाभ्यासभाविता समसमाधिबलोन्मीलदध्यक्षगोचरव्यभिचाराणि[9] क्षणिकत्वादिसाधनवत्। तत्किमिदानीं व्यभिचारादर्शनमात्रेण भाविन्याः प्रमाणानुपपत्तेः साधनान्येव भवन्तु तदनुरूपा-[7b]नुष्ठानेन वा विफलमायासमाविशतु प्रेक्षः[10]। पक्षधर्मत्वादिलक्षणे तु तल्लक्षणनिरूपणायां तदप्राप्तौ तदैव [1]हस्तकत्यागान्नायासमाविशति। [2]तल्लक्षणप्राप्तौ वा तदेव उपाददीत। तन्न व्यभिचारावलम्बनं साधु, [3]व्यतिरेकनिराकरणायैव विवेकारम्भात्। तत्कथं लक्षणमवाच्यमिति चेत्– एतत् सर्वं प्रत्यभिज्ञायामपि आलोचयन् यावन्न लक्षणभेदं पश्यसि, तावन्नैकस्यां[4]व्यभिचारादर्शी [5]व्यभिचारादर्शनमात्रेणापरस्यामाश्वासमेकान्तेन कर्तुमर्हसि। तस्माल्लक्षणयुक्ते बाधासंभवे तल्लक्षणमेव दूषितं स्यादिति सर्वत्रानाश्वासः। तदियं प्रत्यभिज्ञा व्यपनयतु व्यभिचारशङ्कां, कलङ्किता तया[6] न कालान्तरस्थितिमर्थस्य स्थापयितुं प्रभवति, नाप्यनुमानमनवकाशयितुम्। तत् कथं तदपेक्षया प्रत्यक्षबाधितः पक्ष उच्यते ? सपक्षे वा जलधरे कथमन्वयाभावः ?

अथ माभूत् प्रत्यभिज्ञायाः प्रामाण्यम्, तदनुसारी स्थिरतानिश्चयो वा। क्षणिकत्वावधारणं तु सपक्षीकृते कथं यतः सपक्षे सत्त्वं हेतोरुपपद्यते ? उच्यते, इह जलधरस्य जलधारणक्रियासमर्थस्तावदेकार्थस्वभावो[7]ऽशक्यपरिहारः। क्षणान्तरे च द्वितीयादौ तत्क्रियायाः [8]कृतत्वात् पुनः कर्तुमशक्यत्वात् तज्जातीयामन्यजातीयां[9] वा कुर्यात्। न कुर्याद् वा कामपि क्रियामिति पक्षः। एवं[10]तत् क्रियाकरणक्षणात् प्रागपि

२. म पाठो पृष्ठः, नि(र्वे)य र ३. 'लम्ब्यमा' म ४. दिति र ५. अपीति नास्ति र ६. 'र्शनसमर्थसामग्री' म ७. तदनुमानुष्ठान' र ८ 'कालाभ्यासाभ्यास' म ९. व्यभिचारीणि क्षणिक' १०. सभो संविशत प्रेक्षाः र
१ हेहतकत्या र २. उ(?)न लक्षण म ३. व्यतिरेके र ४. नैकस्याव्यभि' र ५. व्यभिचारदर्शी म ६. प्रत्यभिज्ञान्यायानयेत्। व्यभिचार शंकातया र ७. स्तावदेकदाम्भावो र ८. क्रियेयं र ९. अन्य जातीयामिति नास्ति र १०. तदिति नास्ति म

वक्तव्यम्। तत्र यदि [1]तत्करणसमर्थस्वभावोऽम्भोधरः, तत्क्षणवत् क्षणान्तरेऽपि[2] कथं कदाचित् क्रियाविच्छेदः ? क्षणान्तरनिवर्तनीयक्रियासमर्थस्वभावत्वे वा क्षणान्तरवत् तत्रापि क्षणे सजातीयेतरक्रियाप्रसवप्रसङ्गः। क्षणान्तरेऽपि हि तच्छामर्थ्यस्य संभवाज्जननं[3] तत्रान्यदाप्यक्षीणम्[4]।

कार्याणि हि विलम्बन्ते कारणासन्निधानतः।
समर्थहेतुसद्भावे क्षेपस्तेषां तु[5] किंकृतः[6] ॥
[ तत्त्वसंग्रहे ३६५ ]

एतेनाकरणपक्षोऽपि प्रतिक्षिप्तः। यदा विलम्बोऽप्यसह्यः, तदा [7]दूरोत्सादितम् अकरणम्। असामर्थ्ये वा समीहितसमयेऽप्यकरणप्रसङ्गः, सदैकस्वभावत्वात्। स्वभावभ्रंशे च प्रतिक्षणं क्षयः सिद्धो जलधरस्य। तत्र प्रयोगः, यद् यदा यज्जननसमर्थं तत्तदा तज्जनयत्येव[8]। यथाऽन्त्या कारणसामग्री स्वकार्यम्। स एव वा जलधरस्तदवस्थायां वारि धारयन्[9] कृषीबलविलोचनोत्सवादिकार्यम्, वारिवितरणकाले वा तत्क्रियाम्, शक्तश्चायमुभयदशायामुभयकार्यमर्जितुमिति स्वभावहेतुप्रसङ्गः। जननमन्तरेण सामर्थ्यव्यवस्थायां सर्वस्य सर्वत्र शक्तिव्यवहारप्रसङ्गः। नियतश्चायं प्रतिपन्नो व्यवहारः। न चास्य जननादन्यन्निमित्तमुपपद्यते। ततो[10] जननविनाभावे विपक्षे नियमवत्त्वेन [8a] [1]क्षणव्यापकवियोगेनात्मसत्तया [2]वियुज्यमानो जनन एव विश्राम्यतीति समर्थव्यवहारगोचरत्वमात्रानुबन्धि[3] जनकत्वं सिद्धमिति[4] व्याप्तिसिद्धिः ॥

एवं यद् यदा यत्करणसमर्थं तत्तदा तत्करोत्येव। यथाऽन्त्या कारणसामग्री। शक्तश्चायं सकलक्रियातिक्रमकालेऽपीति। अन्यदा [5]सर्वथाऽकरणपक्षे योज्यम्। असमर्थस्वभावत्वे तु यद् यत्राशक्तं न तत् तत्करोति, यथा शाल्यङ्कुरं कोद्रवः। अशक्तश्चायमुदवाहनोऽकरणक्षणवत् क्षणान्तरेऽपीति व्यापकविरुद्धोपलब्धेः[6] न कदाचित् कुर्यादिति हेत्वर्थः।

विपर्ययप्रयोगश्च, यद् यत्र करोति न तत् तत्र शक्तम्, यथा शाल्यङ्कुरमकुर्वन् कोद्रवः। न करोति च[7] प्रथमक्षणसाध्यां क्रियां द्वितीयादिक्षणे, द्वितीयादिक्षणसाध्यां

१. समर्थ इति नास्ति अ २. अपीति नास्ति अ ३. ॰म्भवादेवजनन॰ र ४. ॰पाक्षीणं अ
५. तेषां हि त स॰ ६. किं कुतः अ ७. दूरात् र ८. तदा करोत्येव अ ९. वारिधारण॰ र
१०. अतो॰ अ १. नियमवत्वे लक्षण॰ अ २. पाठो घृष्टः अ ३. ॰बन्धे अ ४. सिध्यतीति अ
५. अन्यदाऽकारण॰ र ६. लब्धिः र ७. न र

वा प्रथमक्षण इति व्यापकानुपलब्धिर्जलधरस्य तत्तत्क्रियासु समर्थासमर्थस्वभावतया प्रतिक्षणं भेदमुत्पादयतीति ॥

एवं सर्वथाऽकरणापेक्षया यद् यन्न करोति न तत्र समर्थं[8] यथा शाल्यङ्कुरमकुर्वन् कोद्रवः। न करोति चाकरणकाले करणकालकार्यां क्रियामिति[9]। [10]सामर्थ्यापेक्षया, यद् यत् करोति न तत् तत्राशक्तम्, अन्त्यसामग्रीवत्। करोति चायं[1] तोयधरस्तोयधारणमिति विरुद्धव्याप्तोपलब्धिरसमर्थक्षणाद् भिनत्ति करणसमर्थम्[2]। यथा हि जननेन व्याप्यते [3]समर्थस्थितियोग्यता, तथा जननं तयापि। तदसामर्थ्यविरुद्धं यत् सामर्थ्यं तेन व्याप्तं करणमुपलभ्यमानमसामर्थ्यं कदर्थयतीति समर्थासमर्थस्वभावतया स्वभावभेदः सिद्धस्तोयदस्य[4]। तत्कथं सत्त्वादन्यदनुमानं नास्तीत्युच्यते ?

अत्र च समर्थव्यवहारयोग्यताजननयोर्भिन्नव्यावृत्तिकतया साध्याविशिष्टता हेतोरित्यवान्तरैः कीर्तितं दूषणमनवकाशं वेदितव्यम्। तस्मादेकार्थकारिणः क्षणान्तरापेक्षया समर्थेतरस्वभावतया भेद एवेति क्षणभङ्गितया[5] सपक्षतामावहति। बलाहके[6] सत्त्वसिद्धिरविरुद्धा।

ननु क्षणभेदेष्ववतिष्ठमानस्यापि[7] भावस्य सहकारिसंगमापेक्षया [8]करणाकरणमुपपद्यमानं कथं स्वभावभेदमापादयितुं प्रभवति ? ततो यथोक्तप्रसंगमौलहेतुष्वनेकान्तः। किं पुनरस्य[9] समर्थस्वभावस्य सहकारिभिः कर्तव्यम्, यदयमनपेक्ष्य सहकारिणो न स्वकार्यकर्मणि प्रवृत्तिमालम्बते ? अनुपकारिण्यपेक्षाया अयोगात्। स्वयम् असमर्थस्तु सामर्थ्यमर्थयमानः[10] सहकारिणोऽपेक्षत इति युक्तमेतत्। ततोऽकिञ्चित्कराश्च सहकारिणोऽपेक्षागोचराश्चेति व्याहतम्।

अत्र शंकरः, सहकारिविरहो हि तस्यासामर्थ्यमुच्यते। तच्चास्य सहकारिसाकल्यहेतुभिरपनीयते, तयोरेकत्र [8b] सहस्थितिविरोधात्। साकल्यहेतुभ्यश्च वैकल्यस्यैव व्यावृत्तिः, न तद्वतः साकल्यस्य सहकारिविरहव्यावृत्तिरूपत्वात्। न च [1]सहकारिसाकल्यवैकल्ययोराविर्भावतिरोभावाभ्यां तद्वतस्तद्भावसिद्धिः, तस्य ताभ्यामन्यत्वात्। अतएव सहकारिविरहव्यावृत्तिहेतोर्न[2] तद्वतस्तिरोभावसिद्धिरिति ॥

---

८. न (त)त् तत्र समर्थं र ९. कार्यं क्रिया' र १०. अस[ा]मर्थ्या' र १. नायं र २. स[ा]मर्थ्यं र ३. स[ा]मर्थ्यमिति र ४. 'स्तोयधरस्य र ५. 'भङ्गतया ध ६. सत्त्वे ध ७. भिद्यमान' र ८. श्मरणाकरण' र ९. पुन[ः] तस्य र १०. सामर्थ्यंयमानः र १. सफलवै' र २. सहकारित्वमेव व्यावृत्त हेतो' ध

एतदेव न्यायभूषणकारोऽप्याह– सहकारिणस्तस्य कमुपकारं कुर्वन्ति;येन तैर्विना न करोतीति चेत्– कार्यमेव कुर्वन्ति। अन्योपकारकरणे हि सहकारित्वमेव न स्यात्। तथाहि यदि तमेव कुर्वन्ति तदा तत्कारिण एव स्युः न तत्सहकारिणः। तेन सहैकं कार्यं कुर्वन्तो हि तत्सहकारिणोऽभिधीयन्त इति। तथा भवतु नामानुपकारकोऽपि सहकारी, तथा यदि तस्य प्रागेव शक्तिरस्ति[3] किं न करोति? नास्ति चेत्[4]– पश्चादशक्तः कथं करोति? पश्चाच्छक्तश्चेत्– शक्ताशक्तयोः कथं न नानात्वम्? विरुद्धधर्माध्यासस्य भेदकत्वादित्याशंक्य सहकारि साकल्यं हि तस्य शक्तिः। तद्वैकल्यं चाशक्तिः। तेन सहकारिवैकल्ये प्रागशक्त उच्यते। पश्चात् साकल्ये च शक्तः।[5] धर्मधर्मिणोश्च[6] भेदः प्रसाधितः। तेन शक्त्युत्पादेऽपि नावश्यं तदुत्पादः। अशक्तिनिवृत्तावपि नावश्यं तद्वतो निवृत्तिः, प्रतिबन्धाभावादिति।

तदेतत् सर्वमपोहप्रस्तावे धर्मधर्मिणोरभेदप्रतिपादनेनैव निरस्तं वेदितव्यम्, साकल्यवैकल्ययोराविर्भावतिरोभावाभ्यां धर्मिण एव तथावस्थानात्।[7] अस्तु वा धर्मधर्मिणोर्भेद[8] एव। नापि सहकारिणामकिञ्चित्करत्वे विप्रतिपद्यामहे। केवलं न तावन्त एव सहकारिणः कार्यकारिणः। नापि साकल्यमेव कार्यमर्जति, किं तु सोऽपि भावः। [9]तदर्थं तैरेव [10]प्रयत्तमिति न विस्तरेणोपयोगः। तस्य च भावस्य यादृशश्चरमक्षणेऽक्षेपक्रियाधर्मा स्वभावः, तादृश एव चेत् प्रथमक्षणेऽपि, तदैव प्रसह्य कुर्वाणो गीर्वाणशापेनापि[1] नापहस्तयितुं शक्यः[2]। किं पुनस्तवामुना मर्मपीडाजनितविक्लवविक्रोशमात्रेण? यथाहि शक्ताशक्ततया भङ्गप्रसङ्गपरिहाराय साकल्यवैकल्यलक्षणधर्मान्तरस्वभावे [3]शक्त्यशक्ती भिन्नस्वभावे कल्पिते, तथा न सोऽप्यक्षेपक्रियाधर्मा स्वभावो भावाद् भिन्न एवाभिधातुं शक्यः, भावस्याकर्तृत्वप्रसङ्गात्।

अथ यथा शक्त्यशक्ती भिन्नौ धर्मौ प्रतिजानीमहे, न च तयोरुदयव्ययाभ्यां भावस्य किञ्चित्, तथाऽक्षेपक्रियाधर्मत्वं क्षेपक्रियाधर्मत्वं च धर्मान्तरमेव। तच्च [4]सहकारिसन्निधानप्रत्ययभावाभावाक्षेपमुदेति व्येति चेति[5]। तथैव भावस्य न किञ्चिदित्युच्यते।

उच्यताम्। केवलमस्तु नेदानीं कार्यजन्म, कारणाभिमतस्य तादवस्थ्यात्। तथाहि यथा न सहकारिण एव, नापि साकल्यमेव जनकं तथा[6] साकल्ये [9a] सति[7]

३. शक्तिरिति र ४. नेति चेत् र ५. °कल्ये शक्त इति र ६. धर्मिधर्मणो र ७. स्थानतः र ८. एव...कारिणामिति नास्ति अ ९. एतदर्थं र १०. प्रतिपन्न° र १. गोपेना° र २. शक्तः अ ३. शक्त्युक्ती (?) अ ४. °धापन° र ५. चेतीति नास्ति र ६. तथेति नास्ति र ७. °नमि° अ

सङ्केतेन परिहारमारचयतीति[२] महन्नैपुण्यं[३] नैयायिकप्रवरस्य। यो हि धूमादत्राग्निना भाव्यमित्याह– तत्रापि यदि कश्चिद् गर्दभादौ धूमशब्दं संकेत्य वह्निमपह्नुवीत, न कश्चिद् दोषः। क्षणिकवादी हि यज्जनयतीति[४] समाख्यया[५] यदनन्तरभावि कार्यं तत्स्वरूपं शक्तमित्याह[६]। न चेदमपूर्वं सङ्केतमात्रम्। लोकेऽपि हि जननद्वारक एव[७] शक्तव्यवहारः। यद्यपि च साकल्यवत एव जननं तथापि न साकल्यद्वारेण शक्त उच्यते, किं तु जननात्। क्षेपवति साकल्येऽपि शक्तव्यवहारस्याञ्जसस्याभावात्, अनध्यवसितसहकारिविशेषसाकल्यस्यापि जननदर्शने[८] इदमत्र शक्तमिति व्यवहारात्। तादृशं च स्वरूपं शक्तिरुच्यते। अस्य शक्तिरिति भेदनिर्देशेऽप्यस्य स्वरूपमितिवद-भिन्नैव। स च जनयिता स्वभावः प्रागप्यस्ति, न च [९]जनयतीति नियतं माता च वन्ध्या चेति[१०] प्राप्तमिति। अत्र प्रकरणे यदि नाम त्वया क्वचित् शक्तिशब्दनिवेशनं कृतम्, तदाविर्भावतिरोभावाभ्यां च न भावस्य किञ्चित्। ततः प्रस्तुते किमायातम्? यत् खलु जनयितृरूपमजनयितृभावादभिन्नं तयोर्यदि नोदयव्ययौ कुतः [10a] कादाचित्कता कार्यस्य? उदयव्यययोगे वा स्वभावभेदस्तदवस्थः।

यदि तु तदपि न जनयद्रूपं भिन्नमेव, तदा तस्यापि नोदयव्ययाभ्यां भावत्रुटिः। केवलमजनक[१] एव भावः स्यादिति मूलनाशः[२]। तस्माद् ब्रूयाः किञ्चित् किञ्चित्करस्य क्वचित् कार्यकालभेदेन [३]शक्ताशक्तस्वभावयोर्विरुद्धधर्माध्यासाद् भेद एव।

अतएव यदाह भूषणकारः, तत्र कालभेदेनाविरोधात्। यथाक्रियोत्पत्तेः पूर्वं निष्क्रियः स्फटिकः, स एव पश्चात् सक्रियः। साध्यत्वादहृष्टान्त इति चेत्– न प्रमाण-सिद्धस्य साध्यत्वायोगात्। एवं [४]हि विरुद्धधर्माध्यासाद् भेदोऽप्यसिद्ध[५] इत्यपि ब्रुवाणः कथं वार्यते? तस्माद् ययोर्धर्मयोर्यथा विरोधो दृष्टः, [६]तयोस्तथैवाभ्युप-गन्तव्यः। यथा स एव हेतुः स्वकार्यं प्रति शक्तः, कार्यान्तरं प्रत्यशक्त इत्येकस्यैव विषयभेदं प्रति शक्त्यशक्ती न विरुद्धे, तथा कालभेदेनापि[७] शक्तिभेदे शक्तिमद्भेदस्य प्रमाणसिद्धेरुभयत्राविशेषादिति[८]। एतदप्यसारम्। एतया हिण्डीरपिण्डाडम्बरं विडम्बयते[९]। तथाहि न खलु[१०] प्रमाणसिद्धिर्नाम प्रत्यक्षानुमाने परिभूयाभिधातुं शक्यते। तत्र च प्रत्यक्षमिति न प्रत्यभिज्ञाविकल्पादन्यत्। सा च निवारिता[१]।

२. 'माचरती र ३. नैपुन' र ४. जजनयती र ५. समाख्येयं र ६. शक्तमाह ख ७. एवं र ८. 'दर्शने र ९. सर्वजन' र १०. चकारो नास्ति र १. 'लं जनकं र २. पूर्णनाशः र ३. शक्ता-स्वभा' र ४. होति स्यक्रम् ख ५. भेदोऽसिद्ध' र ६. दृष्टयोः र ७. भेदेऽपि र ८. उभयत्र वि' र ९. विडम्बयति र १० स गलु र १. नवारिता ख

यथानुमानमाह शंकरः स्थिरसिद्धौ नोत्पत्त्यनन्तरं विनाशी भावः प्रमेयत्वात् । [2]वस्तुव्यावृत्तिवदिति । अविद्यमानविपक्षत्वादन्वय्येव हेतुः । प्रमेयत्वस्य क्षणिकत्वेन विरोधाभावात् सन्दिग्धव्यतिरेकमिति चेत्– न खलु[3] क्षणिकत्वे कस्यचित् प्रमेयत्वं सेत्स्यति, क्षणस्थितिधर्मणः प्रमाणकालेऽतिपातात्, अतीतस्य च प्रत्यक्षत्वेऽतिप्रसङ्गात् । तदपि मनोरथमात्रम् । तथाहि । मा भूदतीतस्य ग्रहणम् । वर्तमानस्य च क्षणिकस्यैव क्षणिकेन[4] ज्ञानेन ग्रहणं भविष्यति । तस्मादविरोध एव प्रमेयत्वक्षणिकत्वयोः ।

अथ कारणं विषय इति ज्ञानात्[5] प्रागपेक्षितसत्ताकोऽर्थः क्षणान्तरेऽननुवर्तमानो न ग्राह्य[6] एव स्यात्, क्षणान्तरानुवृत्तौ वा अक्षणिकत्वमेवेति चेत्– तत् किमियं राज्ञामाज्ञा यदजनकेन ग्राह्येण न भवितव्यमिति ? अयमस्य समय एवेति चेत्– न्यायस्यायमवसरो न समयस्य । तस्मात् समयमनपेक्ष्य वादव्यसनिना न्यायोपन्यासेन परो बोधयितव्यः ।

समयस्य हि साधनत्वे सर्वसिद्धेर्न्यायो नाम न किञ्चित् ।
न्यायस्तु समयबाधनायैव कथं समयमेव शरणीकुर्यात् ॥
[ ]

कथमजनितेन[7] ग्रहणमतिप्रसङ्गश्चैवमिति चेत् ? जनितेनापि कथं ग्रहणम् ? जायमानं हि ज्ञानं विषयमनुभवदुपजायते । तच्च[8] जन्मविषयकृतमन्यकृतं[9] वा स्यात्, को विशेषः ? अतिप्रसङ्गस्तु साधारणः, चक्षुरादिनापि तस्य जननात् । तस्याविषयस्वभावत्वादिति चेत्– ननु गृह्यमाण एव विषयो व्यवह्रियते, न जातिनियतः कश्चिद् विषयो नाम । ततोऽविषयत्वादित्यगृह्यमाणत्वान्न गृह्यत इति केदमु[10b]त्तरं संबध्यते । तथाहि[10] स्वभावादेव नेन्द्रियं गृह्यत इति चेत्– न, योगिनां दर्शनस्वीकारात् । पृथग्जनापेक्षया नियम एष इति चेत् ? पृथग्जनापेक्षया तर्हि सूक्ष्मादयोऽपि स्वभावेनैव गृह्यन्त इति [1]नातिप्रसङ्गः । अथवा,

पूर्विकैव[2] तु सामग्री सज्ज्ञानं विषयक्षणम् ।
सालोकरूपवत् कुर्याद् येन[3] स्यात् सहवेदनम् ॥
[ ]

२. कुम्भव्यावृत्ति' र ३. न खल्व' अ ४. स्यैव केन अ ५. विज्ञानात् र ६. अग्राह्य र
७. ग्रहणमिति प्रस' र ८. तत् अ ९. कृतमन्य' इति नास्ति र १०. तर्हि अ १. कथमति' र.
२. पूर्वैकेवत्त' र ३. 'धन' अ

तेन वा स्वविषयनियतमुत्पादितं ज्ञानं तदेकग्राहि, तत्कारणसामग्र्या वा तन्नियतमुत्पादितमिति निर्विशेषः। अतस्तस्या एव ते अर्थज्ञाने[४] ग्राह्यग्राहकभावनियतजन्मनी कथमतिप्रसज्येयाताम् ?

अथ साकारवेदनवादिनो हि विषयादेव तत्स्वरूपसंवित्तेरुत्पत्तिरभिमता, तत्रातीतग्रहणेऽतिप्रसङ्गः, ग्रहणक्षणानुवृत्तौ च स्थिरसिद्धिरिति विवक्षितम्। तत् किमयं प्रसङ्गहेतुर्यत्परोपगमनमनपेक्ष्य न भवति ? तथा च सति विपर्ययपर्यवसानात् तव[५] स्थिरसिद्धिरतीतग्रहणं वेति न ग्राह्यात्तत्स्वरूपज्ञानोत्पत्तिरिति स्यात्। एवं च सति व्यक्तमन्यद् भुक्तमन्यद् वान्तमिति न्यायः। स्थिरमारब्धः साधयितुं [६]तद्विपर्ययेण साकारबोधं विधुरयतीति।

अथ सौत्रान्तिकस्येदमुभयमसमञ्जसमितीयन्मात्रमुच्यते, तदपि नास्ति। साकारवेदनोदयपक्षस्थितौ हि द्वितीयक्षणानुवृत्तावप्यर्थस्य[७] जडतया प्रकाशानुपपत्तेः [८]विपर्ययसरूपस्वरूपसंवेदनमेव ज्ञानस्य विषयवेदनम्। एवं च न वर्तमानानुरोधः, अतीतेऽपि तत्प्रत्ययासत्तेरप्रच्युतेः। न चातिप्रसङ्गः, विषयान्तरेणापि सारूप्यसमर्पणात्। न च [९]तन्मतनिर्वाहः प्रकृतः[१०]। भवतस्तु तन्मताश्रयेणापि प्रमेयत्वहेतुः स्थिरसिद्धये न[१] प्रभवतीति सिद्धमनेकान्तपरिहारादिति। ततः स्थिरवपुषि प्रमाणान्तर[२]सिद्धेरयोगात् वज्रोऽपि पक्षकुक्षौ निक्षिप्तः, किं पुनः स्फटिको वराकः ? तदयं [३]सत्क्रियाक्रियावस्थयोर्भिद्यमानः कथं कालभेदेनाविरोधे [४]दृष्टान्तोभवितुमर्हतीति ? यच्च विषयभेदेनेव कालभेदेनापि शक्त्यशक्त्योरविरोधप्रतिपादनम्, तदप्यनौपयिकम्। प्रवियोगी हि धर्मो विरोधकः सर्वत्र। न च [५]स्वकार्यकरणस्य परकार्याकरणं प्रत्यनीकम्। किं तु स्वकार्याकरणमेव। एवं परकार्याकरणस्यापि परकार्यकरणं प्रत्यनीकम्। न स्वकार्यकरणम्। स्वकार्यं न करोतीति व्यवच्छेत्तुमेव हि[६] स्वकार्यं करोतीत्युच्यते। प्रत्यक्षव्यापारश्च ते[७] स्वकार्यकारिणं [८]परकार्यकारिणं च भावभेदेनावस्थापयति। कालभेदे तु नैकताव्यवस्थापकं[९] प्रत्यक्षम्, प्रत्यभिज्ञाया दूषितत्वात्। ततः स्वकार्यस्य करणमकरणं च परिशिष्यमाणं न विरोधपरिहाराय पर्याप्नोति।

---

४. ऽर्थज्ञि[या]' र ५. 'क्षणानु[वृ]त्तौ र 'क्षणात न च अ ६. तदिति नास्ति श ७. क्षणानुवृत्त्या' अ ८. विपर्यसरू' श ९. तन्मात् र १०. प्रकृतिः र . नेति नास्ति र २. प्रमाण' अ ३. ऽक्रियेति नास्ति र ४. न विरोधद' र ५. सर्वत्रानवक्ता' र ६. 'गेन हि अ ७. 'व्यान्न र ८. 'कार्यांकि' र ९. 'देन व्यवस्था र

[10]कालानेकत्वापेक्षस्वकार्यकरणाकरणं[1] विरुद्धमिति चेत्? स्यादियमपेक्षा परभागभागिनो यदि विषयभेदवदभेदापादकप्रमाणवृत्तिः स्यादित्युक्तप्रायम्। भवतोऽपि तदनपेक्ष्य विरोधस्थितौ किं प्रमाणमिति चेत्– उक्तमेव, यद् यदा यज्जननसमर्थं[2] [11a] तत्तदा जनयत्येवेत्यादि, सहकार्यपेक्षायाश्च तत्सन्निधानासन्निधानयोः कार्योर्जनप्रसङ्गेन [3]निरस्तत्वात्। तस्मात् जनयद्रूपमेव शक्तिर्विवक्षिता क्षणभङ्गवादिनः। तस्याश्च भेदे कथं[4] न भावभ्रंशः?

यच्च न्यायभूषणेन प्रलपितम्; यद्यस्य भिन्ना[5] शक्तिः शक्तिमतोऽभ्युपगम्यते, तथापि[6] नावश्यं शक्ताशक्तयोर्भेदः। कस्मात्[7]? त्वन्मतेऽपि धर्मभेदाद् धर्मिभेदनियमासिद्धेः[8]। तथा च भिन्नेऽपि[9] कार्ये सहकारिणां पृथगुपयोगं दर्शयताऽभिहितम्– मृत्पिण्डादेर्मृत्स्वभावेभ्य इत्यादि हेतुबिन्दुं लेखित्वा। यथा च तत्र मृदात्मतादिस्वभावभेदेऽपि न[10] कार्यभेदः, तथा शक्ताशक्तादिस्वभावभेदेऽप्यभेदोभविष्यति, अबाधितत्वाध्यवसायस्य[1] समानत्वादिति, तदप्यनेन प्रत्यादिष्टम्। सन्ति हि धर्मा ये परस्परविरोधिनोऽविरोधिनश्च। न तु धर्मा इत्येव[2] विरोधाविरोधः[3]। न हि ब्राह्मण्यं वैयाकरणत्वेनाविरुद्धमिति[4] चाण्डालत्वेनाप्यविरुद्धमित्यभिधातुं शक्यम्। न चात्र ब्राह्मण्यव्याप्तं चाण्डालत्वम्। न च वैयाकरणत्वेनापि विरुद्धम्। यथा चात्र स्वप्रतियोगिब्राह्मण्येतरत्वमेव विरोधमाधत्ते न वैयाकरणत्वेन, तथा जनयद्रूपमजननतयैव[5] [6]विरुद्धभावान्न वस्तुसन्तानभेदेन। नीलचतुरस्रादिता तु श्वेतपरिमण्डलतादिभिर्विरोधमासादयतु, न तु क्वचित् कार्यकारणादिभिः। अतो[7] यदि विरोधगन्धासंभवात् संस्थानमृत्स्वभावयोरभिन्नेन[8] धर्मिणा भाव्यम्, तत्[9] किमत्यन्तप्रत्यनीकयोरेककार्यं प्रति[10] जनयद्रूपेतरयोरपीति कः सचेतनश्चिन्तयेत्? विरुद्धाविरुद्धत्वमेव[1] कथमवगन्तव्यमिति चेत्? यद्व्यवच्छेदेन यद्विधानम्, यद्विधानेन वा यद्व्यवच्छेदः, तत्तेन विरुद्धम्। न च मृन्मयमिति विधानेन पृथूदरताव्यवच्छेदशङ्कापि संभवति। तज्जनकाभिधानेन चातज्जनकत्वं व्यवच्छिद्यत एव, अतज्जनकत्वेन च तज्जनकत्वम्। न तज्जनकमित्येव ह्यतज्जनकमिति नञ्समासवाक्यमपि विस्मारि।

१०. कालैकत्वापेक्षं र १. स्वकार्यकरण अ २. 'स्वरूपं र ३. प्रसङ्गो न र ४. भेदेयं र ५. यद्यभिन्ना र ६. तदापि र ७. तस्मात् र ८. नियममिद्धेः र ९. चाभिन्नेऽपि र १०. नकारो नास्ति अ १. 'त्वावसाय' र २. धर्म इत्येव र ३. विरोधोऽविरोधो वा' र ४. विरुद्धधर्ममिति र ५. 'मजनयतैव र ६. विरुध्यतां। नवर्णे' र ७. ततो र ८. स्वभावापर' र ९. तदिति नास्ति अ १०. 'रेककार्यस्पृति' अ १. त्वेति त्यक्तम् अ

तस्माद् ययोर्धर्मयोर्यथा विरोधो दृष्टः तथैवाभ्युपगन्तव्य इत्येवमेव[2] विशेषमभिप्रेत्य युक्तः, नैककालापेक्षया, समानप्रमाणयोरप्रवृत्तेः। येन हि कालभेदेनाभिन्नमेव[3] वस्तु सक्रियाक्रियनीलानीलत्वादियुक्तमभ्युपगतं, यस्य वा तदात्मनि प्रमाणं प्रवृत्तं, तस्य क्वचिद्विवादसंभवे कालभेदेनाविरोधः [4]तद्वतीति युक्तम्। तच्च द्वयमपि नास्तीति व्यक्तम्। [5]अत एकत्वाध्यवसायस्याबाधितविषयविशेषणमसिद्धम्[6]। एकत्वाध्यवसायमात्रं पुनरनैकान्तिकं बाधकापेक्षमेव। अन्यथा केशादावपि न बाधकमपेक्षेत। बाधकं चोक्तम्। यदप्ययं[7] स्वप्नायमान इव विप्लवते।

अथ नैवाभिन्नात्मनः कस्यचित् स्वभावभेद इष्यते, एवं तर्हि सहकारिपृथगुपयोगकथनं[8] बालोन्मत्तप्रलपितं स्यादिति[9]। तेन यदि [11b] धर्मधर्मिणोस्तादात्म्यतिरस्कारेण भेदापादनमात्रमिष्टम्, तदा न प्रकृतोपयोगि। तथाहि धर्मिणः सकाशाद् धर्मा भेदभागिनो भवन्तु न वा ? सन्ति तावत्केचिदन्योन्यविरोधिनो ये स्वाधिकरणं धर्मिणमभित्वा नोच्छ्वसितुं[10] शक्नुवन्तीति विवक्षितं क्षणिकवादिनः। तत्रानेन तादृशो[1] धर्मा एव न सन्ति, सन्तोऽपि वा कालाद्युपाधिसापेक्षा भेदसाधव इत्येव वक्तुं न्याय्यम्। पृथगुपयोगात् सहकारिणां धर्मिणः पृथगेव त इति किमनेन ?

यदि तु[2] स्वाभाव्यभाज एव भेदका न भिद्यमाना इति[3] समयोऽस्य स्यात्, युक्तमेतत्। यावता वलनादयोऽप्यवलनतो भेदका दृष्टा एव। ते [4]च क्रियादिरूपत्वाद् भिन्ना एव। तस्मात् कल्पनोपरचितविभागा भवन्तु[5] सौगतमतेन, भवन्मतेन वा, तात्त्विकभेदो धर्मधर्मिणोः किमिदानीं नैकान्तेन ? प्रस्तावान्तरं हि तत्। दुष्परिहरास्तु धर्मा[6] धर्मिणं भिन्दाना ये विरोधस्थायिन इति सिद्धं साध्यम्।

अथ कार्यादभेदश्च[7] स्वभावानां पृथक् सहकारिकारणकलापोपयोगविषयत्वं चेति दुःश्लिष्टतामात्रमुद्भाव्यते परनयस्य ? तदापि[8] प्रस्तुतक्षतेरभावात् किमनेन ? भेदवतामपि भेदकत्वाद् धर्माणां दुःश्लिष्टताभासता च भिन्नसमयस्थानां[9] परस्परमगणितेषु स्थानेषु संभवति। तत्त्वं तु कीदृगिति तत्तत्स्थाननिरूपणे व्यक्तीभविष्यति।

२. इत्येव र ३. °न भिन्न° च ४. तद्वदिति र ५. स्वत° च ६. °स्याबाधितविशेष...मसिद्धम् च ७. यदयं च ८. कथं न र ९. स्यादित्यादि च १०. °मभित्वो नामित्तं र १. °नेन दृशो? र २. त्विति नास्ति र ३. भिद्यमाना इति नास्ति र ४. चक्रादि° र ५. विभागात् वर्ण(:) र ६. धर्मा° इति नास्ति च ७. चेति नास्ति च ८. परसमयस्य तथापि र ९. °द्याभासता च भिन्नसमयस्थानां र

तत्र यदि प्रस्तुतानुपयोगियत्किञ्चिद्विस्तारयता स्थातव्यमित्यभिमतम्, सर्वस्य शक्यमेतत्। न चैतावतैव धर्मधर्मिवादपरिसमाप्तिः। तत् किमस्य गर्भार्भकमनतिशयानस्य निन्दावचने निर्बन्धेन ? तथा च सति तस्मान्न धर्मभेदादेव धर्मिभेद इति [10]निगमनमप्यस्यायुक्तम्। बौद्धः किल [न] धर्माणां भेदमात्रेण धर्मिभेदमाह। किं तु विरोधेन। अन्यथा कृतकत्वानित्यत्वादीनामपि धर्मभेदमाचक्षीत। अनेनापि स्वयं विरुद्धधर्माध्यासादित्यक्षरमुत्थापितम्। तद् यदि विरोधभेदमात्रयोर्विशेषं न पश्यति, युक्तमाहेति किमपरं वक्तव्यम् ?

यदप्ययमेवाह– यो [1]ह्यनन्तरकार्यकरणस्वभावः स कथमादौ तत् कार्यं कुर्यात् ? अथ कुर्यान्न तर्हि उत्तरकार्यकरणस्वभावः। न हि नीलोत्पादनस्वभावः पीतादिकमपि करोति। न च प्रथमोत्तरकार्योत्पादनस्वभावभेदात् तद्वतो[2]ऽपि भेदः, स्वभावभेदस्य व्यभिचारित्वेनोक्तत्वादिति। तदपि निःसारम्। यदि हि स्वभावशब्देन स्वलक्षणमभिप्रेतम्, तदा [3]तद्भेदे भेद एव वस्तूनाम्, क्व व्यभिचारवार्ता ? तस्मात् स्वभावभेद इति कल्पितधर्मान्नानात्वं[4] युक्तम्। न च तन्मात्रेण [5]धर्मिभेदमापादयति परः। किं तु विरोधेन। न च[6] तद्विरोधेऽपि धर्मिभेदव्यभिचारोऽस्ति। विरोधो हि न भेदं व्यभिचरति। भेदस्तु विरोधं व्यभिचरतीत्युक्तप्रायम्।

ननु यदि कल्पिता एव ते[7] धर्माः क्व विरोधः, क्व वा [12a] भेद इति चेत् ? इह द्विविधमभिधेयं कल्पितशब्दस्य, तत्तद्व्यावृत्तवस्तुसंभवे भेदमात्रं कल्पनावभासि, तदपि कल्पितं कुवलयनीलत्वादिवत्। कल्पनामात्रनिवेशि च कल्पितं करिकेशरत्रिगुणीमयत्वादिवत्। तत्र यद्यन्तिमः कल्पितार्थः स्यात्, न भेदविरोधादिति युक्तम्। प्राचीने तु कल्पितार्थे वस्तुस्वभावस्यैवाध्यवसानाद् भेदो विरोधो वा व्यवस्थाप्यमानः संवादमादायैव वर्तत इति न दोषः।

यच्चेदम्, उत्तरक्षणे यत्कार्यं कर्तुमस्य स्वभावः, तत्कथं प्रथमक्षणे कुर्यात् ? अन्यथोत्तरकार्यकारितैव[8] न स्वभावस्येति, तदप्यपरिभाव्य भाषितम्। स्थिरस्वभावत्वे हि भावस्योत्तरकालमेवेदं कार्यम्, न पूर्वकालमिति कुत एतत् ? तदभावाच्च कारणमप्युत्तरकार्यकरणस्वभावमिति कुतः ? अर्थानुरोधिन्यो हि वाचः शोभाभाजः, न वागनुरोधादर्थतथाभावो राजवत्। किं कुर्मः, उत्तरमेव तस्य जन्मेति चेत्– अस्तु।

---

१०. नियमन° र १. ह्युतरकार्यं° र २. °भेदोतत्वतो र ३. तद्भेदि° र ४. °धर्माणां नाना° र ५. धर्मि° नास्ति श्च ६. चेति नास्ति र ७. [भ]वतो र ८. °थैतर° र

स्थिरत्वे तु[9] तदनुपपद्यमानमस्थिरतामादिशतु[10]। स्थिरत्वेप्येष एव स्वभावः, तस्य यदुत्तरक्षण एव करोतीति चेत्– हतेदानीं प्रमाणप्रत्याशा, प्रमाणबाधितेऽपि स्वभावालम्बनेन[1] निस्तरणात्। धूमादत्राग्निरग्नेरभावाद् वा नेह धूम इत्युक्तेऽपि हि शक्यमभिधातुं, स्वभाव एवायमस्य यदिदानीमत्र निरग्निरपि धूम इति। तस्मात् प्रमाणसिद्धे स्वभावावलम्बनम्, न स्वभावावलम्बनेन प्रमाणविलोपः। प्रमाणनिर्णयश्च विहित एव। नीलोत्पादनस्वभावश्च न पीतादिकं करोतीत्यसमीक्षाख्यानम्। उपादानत्वेन हि तत्करणनिषेधो, न तु सहकारिकारणत्वेनापि, सहकारितया तत्रापि कथञ्चिदुपयोगस्याशक्यबाधनत्वात्। न चान्यवर्णस्यान्यवर्णोपादानतानिषेध एव। दृश्यते हि पीतैव हरिद्रा चूर्णसहकारिका रक्तस्योपादानं[2] भवन्तीति निदर्शनमसङ्गतम्। यदि च यथा न नीलः पीतमुत्पादयति तथा नोत्तरजनकः पूर्वमुत्पादयति। एवं तर्हि यश्चोत्तरजनकः, यश्च नोत्तरजनकः, तयोर्भेदोऽपि किं नेष्यते, यथा यन्नीलं तन्नानीलमिति? तदलमेवंविधप्रलापेषु निर्बन्धेन। स्थितमेतत् परस्परविरुद्धधर्माध्यासाद् देशभेदवत् कालभेदेऽपि जनकाजनकस्वभावयोर्भेद एव॥

एतेन यदपि न्यायमञ्जरीकारः प्राह, ननु कार्योत्पत्तिहेतुर्येषां सन्निधिमपेक्षते ते[3] खल्वपेक्षितसन्निधयः; सहकारिप्रत्ययास्तस्य किं कुर्वन्ति? न किञ्चित्। केवलं कार्यमेव येषां भावाभावावनुविधत्ते[4] ते कार्येणैवापेक्षितसन्निधयः सन्निपतन्तः तदेव कार्यं विवक्षितं हेतुना सह कुर्वन्तीति सहकारिण उच्यन्ते। न तु येन सह कुर्वन्ति तस्यैव कर्तारो भवन्तः सहकारिणो भवितुमर्हन्ति। [12b] [5]तस्मादक्षणिकस्य स्वकार्यनिर्माणे द्विविधं सामर्थ्यम्, एकं निजं सामर्थ्यम्, द्वितीयं चागन्तुकं सहकार्यन्तरम्, तयोरभावे[6] तत्कार्यानुत्पत्तेः[7]। तस्मादेव हि द्विविधात् सामर्थ्यात् कार्योत्पत्तेरभ्युपगमात्। एकमक्षणिकं गृहीत्वा तस्मादेव कार्योत्पत्तिं संभावयन्तः सामर्थ्यमेव हेतूनामविज्ञातवन्तः परे। यस्मादक्षणिकस्यापि क्रमवतीषु तासु तास्वर्थक्रियासु कव्यासु क्रमवत्सहकार्यन्तरमेव सामर्थ्यमङ्गीकुर्मः। तथा च क्रमवत्सहकारिनानात्वादपि क्रमवत्कार्यनानात्वोपपत्तेरशक्यं भावानां प्रतिक्षणमन्यत्वमुपपादयितुमिति।

---

९. त्विति नास्ति भ १०. ॰दिशतु र १. ॰भावलम्बनेन र २. ॰पादानं भ ३. ते इति नास्ति भ ४. ॰म विधत्ते र ५. यस्मात् भ ६. द्वयोरभावे तत्कार्यं तयोरभावे र ७. कार्यानुपपत्तेः भ

तदप्यपास्तम्। 'यद्यपि हेत्वन्तरकल्पितं सामर्थ्यमविज्ञातमस्माकं तथापि यज्जनयतीति व्यवहारगोचरीभूयमापन्नं स्वरूपमवश्यमभ्युपगन्तव्यम्, भावस्य स्वलक्षणाख्यं सामर्थ्यं संख्यातमस्मन्मते। तत् किं प्रागपि पश्चादेव वेति[9] विकल्प्य दूषणमुदीरितम्? तत्र किमनेनोक्तं भवतीति निवेदितमेव। यत्तु कार्येणैवापेक्षितसन्निधय इत्युपस्कृतम्, तदपि निरुपयोगम्। यदि हि कार्यमेव स्वजन्मनि स्वतन्त्रं स्यात्, युक्तमेतत्[10], केवलमेवं सति सहकारिणामपि सामर्थ्यरूपताकल्पनमफलमिति, हेतोः सामर्थ्यमनपेक्ष्य स्वातन्त्र्यादेव कार्यं कदाचिद् भवति कदाचिन्न भवतीति किं हेतुसामर्थ्यसमर्थनव्यसनेन[1], व्यवहारमात्रं वा सामर्थ्यमिति, न तु क्वचित् किञ्चित् समर्थं नामेति प्राप्तम्। अस्तु को दोष इति चेत्? सन्तो हेतवः सर्वथाऽसमर्थाः, असत्तु[2] कार्यं स्वतन्त्रमिति विशुद्धा बुद्धिः। उत्पत्तौ तु सद्रूपं[3] कार्यं, किमर्थमर्थान्तरमपेक्षत इति निरूपय तावत्।

तस्मात् सामग्रीमपेक्षते कार्यमित्यनेनाक्षरेण सामग्र्येव जननसमर्था कार्यस्येत्येवार्थः न च सा समग्रेभ्यो भिन्ना। ततः समग्रा एव जनकाः। भिन्नत्वेऽपि वाऽर्थान्तरमिव[4] साकल्यमपि सहकारीति न विशेषः। ततो यावन्तः सहकारिणस्तावन्तः[5] प्रत्येकं समर्था इति प्राग्विद्यमानानां कथं क्रियातिक्रमः? साकल्यमेव हि पश्चादुपपत्तिमदिति समयः, तदपि वा तेभ्य एव सहकारिभ्यो[6]लभ्यसंभवं प्रागपि तेष्वसत्सु[7] कथं सत्तावियुक्तं[8] कदाचिद् यावदेकस्यापि प्राग्भावः? अथ कार्यस्यैवायमपराधो यदमीष्वसमर्थेषु कदाचिन्नोत्पद्यत इति चेत्?

सर्वावस्थासमानेऽपि कारणे यद्यकार्यता।
स्वतन्त्रं कार्यमेवं स्यात्तन्न[9] कार्यं तथा सति॥
[वार्तिकालङ्कारे १. ३६६]

इति किं न पश्यसि?

स्यादेतत्। न तद्भावेऽवश्यं भवतीति तत्कार्यमुच्यते किं तु तदभावे न भवत्येवेति व्यतिरेकप्राधान्यादिति चेत्?

---

८. यद्यपि हि' अ, यद्यभिहितत्वत्वारि र ९. पश्चादेवेति र १०. 'स्यायुक्त' र १. हेतोः सामर्थ्यमसमर्थव्यसनेन अ २. असतु र ३. सद्रव्यमानं र ४. °न्तरमेव अ ५. सह...स्तावन्त इति नास्ति अ ६. लभ्यं सं' ७, तेषु स(त्सु) र ८. वियुक्ता अ ९. °भतत्– हेतुबिन्दुटीका, पृ० ३६०। स्यान्न कार्यन्तत्– वार्तिकालं पृः ५६

तद्भावेऽपि न भावश्चेदभावे भाविता कुतः ।
तदभावप्रयुक्तस्य[10] सोऽभाव इति तत्कुतः ॥
[ वार्तिकालङ्कारे १. ४११ ]

यदि हि स्वयं भवनं भावयदेव[1] कार्यं हेतुः, तदा तदभावप्रयुक्तोऽस्याभाव इत्यपि स्यात्। यदा तु हेतौ जननोन्मुखेऽपि स्वातन्त्र्यादेव न भूतमिति कथं तदभावप्रयोजकोऽस्याभाव इति प्रतीतिः ? तस्माद् यदि कार्यकारणभावः [13a] तदा नियतं यथैव तदभावे नियमेन न भवति, [2]तथैव तद्भावेऽपि नियमेन [3]भवेत्। अभवच्च न तत्कारणतामात्मनः क्षमते। तदयं प्रयत्नपरम्परयापि हेतूनां समर्थासमर्थलक्षणोदयव्ययोगो जारगर्भ इव गोपयितुमशक्यश्चतुरबुद्धिषु ॥

यदप्याह शंकरः। न च सर्वत्र सहकारिभेदेन कार्यभेदादपि कारणस्य भेदः[4] सिध्यति। यथैकत्वेऽपि सहकारिभेदाद् [5]विज्ञानवर्तिविकारज्वालान्तराणि प्रदीपः करोति, न चासौ भिद्यते, तद्भेदस्य[6] प्रमाणसिद्धत्वादिति।

अपूर्वोऽयमस्य दम्भारम्भः। यदयमक्षेपक्रियाधर्मो[7] स्वभावः शक्तिशब्दवाच्यः, स[8] किं प्रागप्यस्ति, यदि वा संप्रत्येवेति विकल्प्य चोद्यशक्तिवाच्यं मम सहकारिसाकल्यमिति ब्रवीति, शक्त्यशक्तिलक्षणविरुद्धधर्माध्यासाद् भेद इत्यभिमतेन कार्यभेदात् कारणभेद इति समाधत्ते– कः खलु कार्यभेदात् कारणभेदं [9]वक्तुमुपक्रान्तो यत्रैवमुच्यते, सहकारिभेदेन यः कार्यभेदः स न कारणभेद इति[10], अपि तु यस्य यदा [1]यज्जननस्वभावः सोऽवश्यं तत्करोत्येव। नहि प्रदीप एव विज्ञानादिकार्याणि सकृत् कर्तुं समर्थः क्षेपेण जनयति। तद्वद् वा क्रमभाविन्यपि[2] कार्याणि सजातीयविजातीयानि किं न तदैव करोति ? अतस्तेषामन्य एव कारको दीप इति युक्तम्। एवमन्यत्राप्येष एव न्यायः।

यत्पुनराह, प्रदीपादिव्यक्तीनामिव[3] प्रत्येकमुत्पत्तिविनाशकारणानुपलब्धेरभ्रान्तं स्फटिकादेरवस्थितिविज्ञानमिति, तदप्यन्धशरक्षेपायते, प्रदीपेऽप्यन्यान्यस्योत्पत्तिकारणस्यानुपलब्धेः। वर्तिस्नेहादयो हि प्रदीपहेतवः, ते च प्रतिक्षणं प्रतिलवादि वा-

१०. 'षेऽस्य–हेतुबिन्दुटीका, पृ० ३६० १. स्वयम्भवन्ताय यदेव र २. तथैवद्भ[ा]वे° र ३. भवत र ४. कारणभेदः र ५. भेदम्विज्ञान° अ ६. तदाभेदस्य र ७. धर्मो अ ८. स इति नास्ति म ९. भेदे वक्तुमुप° र १०. कारणभेदक इति र १. यज्जननः स्व° अ २. भावीन्य° र ३. 'मेव र ४. 'देर्व्यवस्थि° र

न्यान्यी[5]भवन्तीत्यध्यवसायः कस्य संभवति ? अन्यथा स्फटिकेऽप्यन्यान्यीभवति पूर्वपूर्वमन्यदन्यदुत्तरोत्तरस्य [6]कारणमन्वयव्यतिरेकानुवृत्तेरिति किं न गृह्यते ? यद्यपि च[7] प्रदीपे कालभेदेनान्यबुद्धिरस्ति तथापि न तैलवर्त्योः, तत्कथं प्रदीपादिव्यक्तीनामुत्पत्तिकारणोपलब्धिर्न स्फटिकस्येत्युच्यते ? विनाशकारणं तु चिन्तयिष्यामः । नापि प्रदीपभङ्गुरतया तत्कारणभङ्गः सङ्गतो वक्तुम्, कारणाभेदात्कार्यस्यापि प्रदीपस्याभेदप्रसङ्गात् ।

अथ वर्तिस्नेहयोः क्षय उपलभ्यते[8], प्रदीपस्यापि क्षीयमाणदेशव्याप्तिवियोगात्, स एव क्षय इति चेत् ? तैलं प्रचलमासीदिदानीमल्पं वर्तते । वर्तिरप्येवम्[9] । प्रदीपोऽप्यन्यान्यतैलवर्तिभागपरिहारेणान्यान्यतद्भागव्यापीति, सर्वथा निवृत्तिस्तु कथमवसातुं शक्या, प्रत्यभिज्ञानस्य[10] तदवस्थत्वात् ?

अथ वर्त्यादीनामपचयकालेऽवयवे क्रियोत्पद्यते । ततो विभागोदयः । ततः संयोगनाशः । ततोऽपि तदारब्धद्रव्यनाशः । पुनः क्रिया, संयोगात् [1]इतरद्रव्योदयश्चेति नैकद्रव्यनिर्वाहसिद्धिरिति चेत् ? अनुभवभुवमवतरन्नपि यद्ययं प्रपञ्चम् आद्रियते, बौद्धोऽप्येवं स्वप्रक्रियामुद्घोषयन् कथं वार्यः ? [13b] पूर्वकेभ्यः सभागहेतुभ्यः सहकारिणमपरमर्थमन्ततो वातातपतिमिरादि [समासाद्य] तेभ्यः[2] परस्य समानपरिमाणस्य[3] यथा [4]सहकारिबलसङ्केतं न्यूनस्याधिकस्य वा संभव इति न स्फटिकशतकोटिप्रभृतीनामेकतानिर्वाहसिद्धिः । यदा पुनरनेन साधनमेवोपन्यस्तं तदा नास्य प्रक्रियया सिद्धिः, त्वत्प्रक्रियया बाधा वा । वातादयः किमुपचिन्वन्ति अपचिन्वन्ति वा स्फटिकादौ, [5]येन [6]सहकारितया कल्प्यन्ते, प्राग्भावित्वमात्रेण कारणत्वेऽतिप्रसङ्गाद् इति चेत्[7]– न वै [8]स्थूलः [9]कश्चिदुपचयोऽपचयो वा क्रियते तैस्तस्य । अतएवात्यन्तसदृशोदयः । सूक्ष्मस्तु [1]अशक्योपलक्षणतया यथेदंतया निर्देष्टुमयोग्यः, तथा निषेद्धुमप्ययोग्य एव । एवमनेकवस्तुसंकरे कदाचित्केनचिदुपयोगे[2] न किञ्चिद् वस्तु प्रस्तुतोपादानस्य सहकारि स्यादिति न सर्वथा सहकार्यन्तरविरहादेकस्य जननसङ्गतिरवगन्तव्या इत्युपन्यासस्यार्थः । स्थिरत्वसिद्धौ तु यदि त्वमपि स्वप्रक्रियां[3] निर्वाहयितुमीशिषे,

---

५. °दिनान्यान्यी° र ६. कारणमर्थ° अ ७. चकारो नास्ति र ८. लक्ष्यते र ९ प्रमाण... वर्तिरप्येवम् इति नास्ति अ १०. प्रतिज्ञानस्य अ १. संयोग इतर र २ °रादि सासा (?) तेभ्यः अ ३. परिणामस्य अ ४. अस्पष्टः पाठः अ ५. स्फटिकादेः र ६ येनेति नास्ति अ ७. इति चेत् इति नास्ति अ ८. नैव अ ९. पाठो घृष्टः अ १० अस्ति तत्र अ १. अशक्योप° र २. केनचिदिति नास्ति र ३. स्वक्रिया °

ईर्षिष्य। बौद्धसाधनविचारस्तावत् प्रस्तुतोऽयम्। तत्र च प्रस्तुतेऽनेककार्येणानेकेन भाव्यमिति केन कर्णे भवतो निवेशितम्, यतः प्रदीपदृष्टान्तीकरणं भवतः शोभेत ? तदिदमुच्यते, अन्यो व्याधिरन्यदौषधमिति।

यदप्याह, यदेव [4]च सहकारिभेदेन[5] कार्यभेदे प्रदीपस्याभेदसिद्धौ साधनं, तदेव क्रमवत्सहकारिभेदेन कार्यभेदेऽक्रमस्यापीति[6], तदप्यत्यन्तमसंबद्धम्[7]। अद्वयाकारमिन्द्रियप्रत्यक्षमेव हि भेदभ्रंशमाशंसति प्रदीपे। सप्रतिघस्य हि प्रदीपस्य नैकस्थानम्। भिन्नदेशस्य चात्यन्तसदृशस्यापि भेदोपलक्षणमनिवार्यं मायागोलकवत्। अत एकाकारमिन्द्रियज्ञानमेकतायामेव प्रदीपमवस्थापयति। कालभेदे हि[8] भिन्नेऽपि वस्तुन्यत्यन्तसदृशे[9] प्रत्यभिज्ञानमुपजायमानमुपलब्धम्। न च प्रत्यभिज्ञानादन्यदेकत्वसाधनम्। तत्कथं तदेव साधनमिति न प्लवते ? न च सदृशतया कालभेदेन प्रत्यभिज्ञानस्य संशयाङ्गत्वं व्यभिचारदर्शनात्, लक्षणभेदविरहात्। सकृदभेदभासिन्यपि प्रत्यक्षेऽनाश्वासः, तथा क्वचिददर्शनात्। इन्द्रियज्ञाने हि [10]क्रमदर्शनेऽपि न योग्यमर्थद्वयं प्रतिघाति एकीभूयोपलभ्यमानमुपलब्धम्[1]। तत्कथं सर्वत्रानाश्वासः ? तस्मादनुपयोगि [2]प्रदीपदृष्टान्तेन प्रत्यवस्थानम्।

एतदेव रूपं दृष्टान्तीकृत्याभिप्रायान्तरमस्य द्योतयन् न्यायभूषणेऽपि यदाह— अपि च येन स्वभावेन रूपं रूपान्तरं करोति, न तेनैव रसादिकम्, रसादेरपि रूपस्वभावताप्रसङ्गात्[3]। ततः सर्वं रूपकार्यं चक्षुषा गृह्यते। न चैतदिष्टम्। तस्माद् यथा रूपं रूपान्तरोत्पादनस्वभावेन तदेव करोति, विज्ञानोत्पादनस्वभावेन विज्ञानमेव करोति, न रूपादिकम्। रसोत्पादनस्वभावेन च रसम्। [14a] एवं [4]ग[न्ध]-स्पर्शनजननस्वभावाभ्यां तावेव जनयति। तद्वदक्षणिकोऽप्याद्यकार्योत्पादनस्वभावेन तदेव करोति। तदुत्तरकार्यजननस्वभावेन तदुत्तरमेव जनयति[5]। नाद्यमुत्तरोत्तरं वा। एवमुत्तरोत्तरकार्येष्वनन्तकालभाविष्वपि[6] प्रतिनियताः स्वभावा द्रष्टव्याः। स्वभावा एव हेतवो न स्वभावीत्यप्ययुक्तम्, [7]रूपस्याहेतुत्वप्रसङ्गात्, स्वभावानामेव हेतुत्वात्। अथ न रूपस्य[8] स्वभावभेद इष्यते, किं त्वेक एव तथाभूतस्वभावो, येन भिन्नाकारं भिन्नदेशं कार्यमुत्पादयति ? तस्य भिन्नस्वभावकार्योत्पादानुरोधेन स्वभावभेदः कथित इति।

४. यदेव र ५. °भेदि र ६. कार्यभेदाऽक्र र ७. 'त्यन्तासम्ब' अ ८. भेदो हि र ९. 'सदृश' अ १०. भ्रमदर्शने र १. 'मुपलम्भर्थे र २. योगिन' अ ३. स्वभावप्रस' अ ४. पाठोऽस्पष्टः अ ५. 'मेवमिति र ६. कार्यपर्यान्तरकाल' र ७. त्वेति नास्ति र ८. अथ रूप' र

नन्वेवं परोऽप्यभिन्नस्वभावस्यैवाक्षणिकस्य क्रमभाव्यनेकस्वभावकार्योत्पादनानुरोधेन भावस्वभावं कल्पयन्नोपालम्भमर्हतीति।

एतदपीर्ष्याकषायितधियः परधन्धीकरणमात्रम्। तथाहि यदि तावदभिन्नात्मापि दीपवदनेकमर्थमन्धःकारनाशादि करोति कल्पितस्वभावभेद इतीयन्मात्रं विवक्षितम्, हन्त को निषेद्धा? अस्त्येष संभवो यदनेकमेकः[९] करोतीति। एवं पूर्वापरकालयोरप्येकस्वभावो यद्यनेकं कुर्यान्न विवादः। केवलं क्वचित् कार्यविलम्बः क्वचिदक्षेपकर्मेति न युक्तम्[१०], प्रदीपवत् [१]सकृदनेककरणमस्त्विति व्यर्थं प्रदीपनिदर्शनम्। अथ क्रमभाव्यनेकमेकात्मनः कार्यमस्त्विति विवक्षितम्, तदा समर्थम्। न खल्वद्यापि दीपो दृष्टान्तयितुं शक्यः। एवं रूपेऽपि निदर्शने क्रियमाणे वक्तव्यम्। नचैवं[२] निर्वहति यदेनकं तदनेकेनैव कर्तव्यम्, दीपकार्यवत् कालभेदभावि चानेकं कार्यमिति, न ह्यनेकं जायमानमेकस्यैव कार्यमापद्यते, एककर्तुरपाये वानेकजन्मैव न स्यादित्युपपादयितुं शक्यम्। दाहगाहनादेरनेकस्यानेकेनैव जलज्वलनादिना [३]करणदर्शनात्। [४]कालभेदाभिन्नमेकं विवक्षितमिति चेत्? अनेककालान्तरितै रेकात्मभिरनेकं[५] न क्रियमाणमुपलक्षयसि। एवं तु ब्रूयाः, एकमनेकं वा भिन्नकालमभिन्नकालं वा नित्यादेव जायत इति। [६]तच्च प्रतिज्ञामात्राविष्करणमभीष्टात्मनः कस्यचिदर्थस्य [न] साधनं, नापि परप्रयुक्तसाधनबाधनमिति[७] किमनेन? तथापि न दीपरूपदृष्टान्तेन किञ्चित्। यदि च कार्यभेदेनापि भावं भिन्द्यादस्थिरवादी, तथापि रूपमेवाभिद्यमानं भिद्यमानौ रूपरसौ कथं[८] जनयतीतीयन्मात्रेणानेकान्तमुद्भाव्य स्वस्थो भव। रूपस्यापि पुनरेकत्वसाधनेन क[९] उपयोगः, सिद्धत्वात्?

ततः शंकरोऽपि, न हि येन स्वभावेन वर्तिविकारस्य हेतुः, तेनैव ज्वालोपलम्भयोरपि तत्स्वभावताप्रसङ्गादित्यभिदधानो न किञ्चिच्चेतयत इति उपलक्ष्यते, एकस्यानेककरणाविरोधात्[१०]।

अथ यथा बौद्धोऽभ्यधात् क्षणान्तरेऽपि यदि स एव स्वभावो भावस्य[१], तदा संप्रतीव प्रागपि जननप्रसङ्गः। न च जनयति। ततः [14b] स्वभावभेदो भावस्येति। तथाहि, यदि ज्ञानजनकेनैव रूपेण वर्तिविकारं करोति दीपः, तदा तस्यापि

९. दनेकमेव[:?] र १०. नेकारो नास्ति अ १. °कारण° अ २. सदैवं र ३. °दिशकारण° र ४. कालभेदभि° र ५. °न्तरितैरनेकामेभिरेरनेकं र ६. पाठोऽस्पष्टः अ ७. °प्रयुक्तं साधनमिति र ८. कथं कथं र ९. साधने क र १०. कारणा° अ १. न भावस्य र

तत्त्वप्रसङ्गः। न च तत्त्वमस्ति। ततो दीपोऽपि किं भिन्नस्वभावोऽस्तु ? यथा च कार्याणां तादात्म्यविरहेऽपि[२] हेतुभेदाभावः, तथा कार्याणां भिन्नकालत्वेऽपि न हेतुभेद इति विवक्षितम्। तदापि बौद्धेन[३] प्रमाणबलमालम्ब्य जनकाजनकावस्थयोः भावभेद आरोपितः। तत्र च यद्यक्षमा, तदाऽसिद्धयादिदूषणमेव वक्तुं साम्प्रतम्। तावतैव तस्य निराशे किमनेन प्रबन्धेन ?

अथ [४]दुष्टमेव तत्साधनम् ? तथापि तेन यत् सिद्धं तत् सिद्धमेव तावत्। प्रदीपस्य स्वभावभेदो भवतु, मा वा भूत्, तथापि[५] किमस्योपन्यासेन ? यच्च दीपस्य स्वभावभेदसाधनाय[६] साधनं कार्याणां तादात्म्यविरहो नाम, सोऽपि यदि सिद्धस्वसाध्यप्रतिबन्धः, तदा तेन यदि युगपदपि भेदसिद्धिः कस्यचित्, तदा तदीर्ष्यया किमनेन बौद्धसाधनेन ? प्रयागवटप्रयातायातयोः[७] द्वितीयमूढकर्णाटेनेव स्वसाध्यसाधनाय प्रवृत्तिनिराशः[८] कर्तव्यः। अन्यथाऽनेन भेदे साधिते प्रदीपभेदसाधनमेव किं[९] प्रवर्तते, न वा किञ्चिदपि साधनं साध्यसाधनाय प्रवर्तेत धूमादिसाधनं स्वसाध्यसाधकं दृष्ट्वा ॥

अथेदं प्रदीपस्वभावभेदसाधनमध्यक्षाधिक्षिप्तं[१०], स्वसाध्यप्रतिबन्धविधुरं वा, तदा तदेव नश्यतु। न तदा बौद्धसाधनस्य क्षतिः। तथापि किं तस्योपन्यासेन ? यदि बौद्धस्पर्द्धया तद्विमर्शमसारीकर्तुमुपमानभूतं [१]विमर्शान्तरमेवेदमुपनीतम्[२], तदायमस्थितः पक्षः स्वभावभेदो दीपस्येति। एवं सति एक एवासौ शक्तिविशेषो यस्तेषामुत्पादक[३] इति चेत् ? एतदपेतागमयुक्तिकं परस्पर्धयाभ्युपगम्यमानमपि न नीतिशीलान् प्रीणाति[४]। प्रतिनियतस्वभावोपादानाभावे तेषां सर्वत्रोत्पत्तेरदृष्टपूर्वत्वादित्यादिना। तथा[५] स्वभावभेदाभावे च कारणस्य कार्यभेदभावे तस्याकस्मिकत्वं प्रसज्येत। तथा चाकरणं विश्वस्य वैश्वरूप्यं स्यादित्यनेन च कथं स्वभावभेदमेव स्वभापया द्रढयेत् ? न चायं न्याय्यः। तथा हि यत्तावदुच्यते, यदि येनैव स्वभावेन दीपो वर्तिविकारहेतुस्तेनैव ज्वालादेः, तदा ज्वालादेरपि वर्तिविकारत्वप्रसङ्गः, न चैवम्। तस्माद्भिन्नेनैव स्वभावेन वर्तिविकारे भिन्नेन च ज्वालादौ दीपः प्रवर्तते इति विपर्ययार्थः। तत्र च प्रत्यक्षबाधैव[६], निरंशस्य दीपादेस्तत्र भासनात्। अन्यथा कदम्ब-

२. विरहो अ ३. बौदे र ४. दृष्ट' र ५. तथापि तत् अ ६. साधनाय इति नास्ति र ७. प्रमातार्थमाया र ८. पाठोऽस्पष्टः अ ९. कं र १०. मध्यमो विक्षिप्त' र १. पाठोऽस्पष्टः अ २. 'मुपनाम' र ३. 'भविसम्पादक' र ४. प्रणाति र ५. दृष्टपर्वतया' र ६. 'बाधे च अ

गोलकवदनन्तस्वभावपरिकरितस्याभासप्रसङ्गात्[7]। न चानुपलभ्यत्वमेषामभिधातुं शक्यम्, प्रदीपस्वभावत्वेऽनुपलभ्यताया[8] विरोधात्। यदि च प्रदीपस्वभावत्वेऽप्यदृश्यत्वं विरुद्धमनुरुध्यसे वर्तिविकारकारणत्वेऽपि ज्वालादिहेतुतां किं न संभावयसि, यतः स्वरूपराशिपरिकल्पनव्यग्रोऽसि? तस्मान्नानुपलभ्यमानस्य प्रदीपस्वभावता। [15a] उपलभ्यत्वे च नाध्यक्षाधिक्षेपपरिहारः। दीपादन्यदेव दृश्यमदृश्यं वा वस्तु दीपस्वभाव इति तु नागलोकभाषा। अनन्यरूपे हि स्वभावस्वरूपस्वलक्षणशब्दाः प्रसिद्धाः। कल्पनोपस्थापिते तु धर्मे भिन्न इवाभासमानेऽपि[9] तदध्यवसायादेव स्वभावशब्दप्रयोगः, यथा नित्यत्वं शब्दस्य स्वभाव इति। ततो यदि सहकारिणि[10] शक्तिशब्दवद्भिन्नेऽपि[1] क्वचित् स्वभावशब्दः[2] प्रयुक्तः, तथापि स्वभावान्तरेण करोतीति वस्त्वन्तरेण सहकारिणा करोतीति यावत्। न च स्वभाविनः [3]करणवारणमभिमतम्। ततः स्वभाविशब्दो बाह्योऽर्थः। तेन स्वभावेनाभिन्नेनैव भिन्नानि कार्याणि करोतीत्यायातम्। केवलमनेकसहकारिपरिवारित इति विशेषः। स च कस्य नेष्टः? न च सहकारिणोऽपि स्वमनीषिकया कल्पनीयाः, किं तु [4]यावन्तोऽन्वयव्यतिरेकग्राहकप्रमाणव्यापारास्तावन्त एव। स च व्यापारः तेजस्तैलवर्त्यादिव्यतिरिक्तस्य नास्तीति किमधिकविधानेन? प्रत्युत स्वभावशब्दाभिधेयानर्थान् परिकल्प्य षट्पदार्थीमन्तर्भावयन् किं विफलमायास्यसि? यदाचैवं[5] पर्यन्ते स्वभावशब्दाभिधेयं निजं[6] रूपमेकमेवानेककार्यहेतुरिति उपपादितम्, तदा यदेकेन रूपेण जनितं, तदेकमेवेति न सिद्धा व्याप्तिः। तथा सति प्रसङ्गवद्विपर्ययस्यापि नानेकान्तपरिहारः। प्रतिनियतस्वभावोपादानतापि तेषां न [7]प्रदीपस्यैव तात्त्विकानेकस्वभावतया, किं तु [8]तत्सामग्र्यामपोद्धारद्वारेणान्वयव्यतिरेकाभ्यां कस्यचित्तैलं कस्यचिद् वर्तिः कस्यचिद् दीप इति कथं [9]सर्वत्रोत्पत्तिरेषामुपलभ्यते?

यत्तु कारणभेदात् भेद इति, तत्र सामग्रीलक्षणकारणवैजात्यात् कार्यवैजात्यनिमित्ताभ्युपगमः[10], तथैव प्रमाणेनार्पणात्। न तु सामग्र्यन्तर्गतकारणनानात्वमेकस्यानेकस्वभावतयेति शास्त्र एव विपञ्चितम्। तदलमेषां प्रमाणनिरपेक्षस्वोत्प्रेक्षा-

७. °परितस्या° र ८. °लभ्यता° र ९. °भासने र १०. यदिह कारिणि र १. शब्द इति नास्ति र २. स्वतो वाशब्द° र ३. करणं च कारण° र ४. यावत्स्व° अ ५. नैनं र ६. °धेयानिजं अ ७. प्रतीप° र ८. तदिति नास्ति र. ९. सर्वत्रोत्पत्ते° र १०. कारणवैजात्यमित्युपगमः अ १. °मेकस्यैवानेक° र

मात्रेण विकल्पेषु निर्बन्धेन। न च तैः स्वभावभेदैर्भाविकैः सिद्धैरप्येषां [3]काचिदर्थसिद्धिरित्युक्तमेवेत्यफल एवैष भावः।

यथा तर्हि त्रिलोचनश्चर्ययति[4] तथानयोरपि नीयतामभिप्रायः[5]। तथा च न्यायमञ्जरी, असाधारणमपि सत्त्वं माध्यमिकन्यायेन शक्यमुद्भावयितुम्। तथा हि, क्षणवादेऽपि [6]पूर्वरूपक्षणो येन [स्व]भावेनानन्तरक्षणमुत्पादयति[7], किं तेनैव रसक्षणमप्याहोस्वित् स्वभावान्तरेण? यदि तेनैव, रसस्यापि रूपत्वप्रसङ्गः। न ह्येकस्वभावात् कारणात् कार्यभेदं पश्यामः, विश्वस्याहेतुकत्वप्रसङ्गात्[8]। अथ स्वभावान्तरेण करोति[9]? यद्येवमेकस्य विरुद्धं स्वभावद्वयं प्रसज्येत[10]। रूपजननस्वभावो हि रसजननस्वभावान्नाव्यभिचारी[1]। तत्र यदि स्वभावान्तरं भवेत्, भवेत्तत्रैव तस्य भावोऽभावश्च। भावाभावौ च [2]साक्षाद्विरुद्धौ पूर्वकं रूपलक्षणं भिन्तः। न च भिन्नो दृश्यते सः।

स्यादेतत्। पूर्वकस्य[3] रूपक्षणस्य रसे कर्तव्ये स्वभावान्तरं पूर्वक [15b] एव रसक्षणो, [4]न च विरुद्ध स्वभावान्तरमस्तीति। यद्येवमक्षणिकस्यापि क्रमवतीषु कार्यव्यक्तिषु[5] स्वभावान्तरं क्रमवत् सहकार्यन्तरमेवेति सर्वं समानमन्यत्राभिनिवेशात्। तस्मादसाधारणमुपाददानस्य स्वभावभेदापत्तेः क्षणिकेभ्यो निवर्तमानं सत्त्वम्। येन च[6] प्रकारेण स्वभावभेदो निराक्रियते, [7]तस्याक्षणिकत्वेऽपि समानत्वात् सत्त्वमक्षणिकान्न निवर्तते। अतो व्यतिरेकासिद्धेः[8] प्रतिबन्धासिद्धिरिति।

तत्र तावद् योगाचारनिष्ठामनालोचयन्नयं सौगतसमयज्ञानाभिमानी माध्यमिकन्यायेनेत्याह– उभयोरपि हेतुफलापवादस्य तत्त्वतोऽभिमतत्वादित्यधरसिद्धिमुद्धूय[9] साकारसिद्धौ दर्शितमेव। स्थिते च हेतुफलभावेऽस्माकमियं क्षणभङ्गचिन्तेत्युक्तम्[10]। सा च स्थितिर्ग्राह्यग्राहकभावस्य तात्त्विकत्वे गृहीते। 'तदा च[1] यदेव यस्यान्वयव्यतिरेकानुविधायि, तदेव कार्यं कारणं च भवतु [2]बीजाङ्कुरवत्। यथा च[3] कस्यचिदेकमन्वयव्यतिरेकानुविधायि दृश्यमानं कार्यं, तथा यद्यनेकमपि [4]कस्यचिदेकस्यान्वय-

---

३. क्वचिद° म ४. चर्वयति म ५. तथानयोरपनीय° म ६. पूर्वो° र ७. येन स्वभावेऽन्तरमुपादेयं क्षण° र ८. प्रसङ्गः म ९. °वान्तरं भवेति र १०. प्रसज्यते र १. स्वभावाव्यभि° र २. साक्षाद्विरुपलक्षणं र ३. पूर्वस्य म ४. न तुस्व° म ५. व्यक्ति इति नास्ति र ६. चकारो नास्ति र ७. तस्य क्षणि° म ८. °रेकासिद्धः र ९. °कद्दित्य° र १०. हेतुफलचिन्ते° म १. यदा च र २. °कारणं चेतरत् बी° र ३. चकारो नास्ति म ४. एकस्य इति नास्ति म

व्यतिरेकावनुविधीयमानमुपलभ्यते[5], तदा किमनेकेनाप्येककार्येण[6] भवितव्यम्? परवेदनापलापे हि एकमप्येकस्य कार्यं न स्यात्। अनपलापे त्वनेकमपि कार्यमेकस्य केन वार्यते? अतः परवेदनापवादिवादिमतावतारणेन न किञ्चित्। माह्यमाहकस्थितौ त्वेकवदनेकस्याप्येककार्यतान्यायः समानः। तत्कथमेकात्मना [7]जन्यमानमेकाकारमेव भवेदिति प्लवते?

यत्तूक्तम्– नह्येकस्वभावात् कारणात्कार्यभेदं पश्याम इति, तदतिसाहसम्। किं वा न पश्यति प्रदीपमेकं विकारकारिणमन्धकारहारिणं च, तरणिं वा तमःकमलयोर्निधनप्रबोधविधायिनम्? सर्वदान्धकारमग्नो वा भवान् पश्यति वा सहस्रमंशुमालिनः कार्यसहस्रकारिणः? एकस्वभावात् तु कारणान्न कार्यभेद इति समानसामग्र्या न कार्यवैजात्यमित्यर्थः। अतएव न विश्वस्याहेतुकत्वम्। तस्मादेकस्मादनेकोत्पत्तिरविरोधिनी[8]। कार्यद्वारेण तु रूपं रूपकारणं रसकारणं चेति समुच्चयेन स्वभावद्वयव्यवहारः। अतएव न विरोधवार्ता। नहि समुच्चये प्रमाणसिद्धे विरोधगन्धः। वातातपयोरिवैकस्मिन्नाकाशदेशे[9]॥

यत्तूक्तम्– रूपजननस्वावो हि [10]रसजननस्वभावताव्यभिचारीति, तावतापि भेदमात्रं सिध्यति, न तु विरोधः, कृतकानित्यवत्[1]। यथाहि नीलाभावाव्यभिचारि पीतं न नीलं भवितुमर्हति, न तु तन्मात्रेण विरोधः। न हि यद् यतो भिद्यते तदशेषं तेन विरुद्धमभिधातुं शक्यम्। विरोधस्तु यद्यप्येकस्मिन् धर्मिणि द्वयोरसंभवयोर्नियमः, स च कदाचिद् वस्तुनोरेकस्य भावेऽन्यपर्यादानाद्, दहनतुहिनवत्। कदाचिद्धर्मयोः स्वभावेनैव एकाधिष्ठितेऽन्यासंभवात् भावाभाववत्, नीलत्वानीलत्ववद् वा। तत्र यदि नीलपीतद्रव्ययोरप्येकभावेऽन्य[2]पर्यादानमापादयेत्, स्यादेव[3] [16a] सहानवस्थाननामा विरोधः। न तु तदभावाव्यभिचारमात्रेण। भेदमात्रं तु तावता। एवं नीलत्वपीतत्वयोरप्यभावव्यभिचारमात्रेण भेदमात्रं तु न तु विरोधः। विरोधस्तु नीलत्वस्वीकृते[4] धर्मिणि स्वयमेवानीलत्वभेदस्य पीतत्वस्याभावात्। अन्यथा [5]कृतकत्वानित्यत्वादीनामपि तदभावाव्यभिचारमात्रेण विरोधप्रसङ्गात्।

अथ कथमत्र तदभावाव्यभिचारः? न हि कृतकेन सता नानित्येन[6] भाव्यमित्युपपत्तिरस्ति। यद्येवं रूपजनकेन[7] सता रसजनकेन न भाव्यमित्यत्रापि कोपपत्तिः?

५. 'मानि' अ ६. 'प्यैक' अ ७. 'मान' इति नास्ति अ ८. °विधिनी अ ९. °रिव कस्मिन् र
१०. °स्वभावाभावा° अ १. 'तकनित्व' अ २. 'कस्वभावे' [illegible] स्वीकारात अ
५. कृतकत्व° अ ६. न नित्येन अ ७. 'कत्वेन र

रूपजनकत्वादेवेति चेत्– न, अयोगव्यवच्छेदेन विशेषणे क्षीणत्वादुपपत्तेः, अन्ययोगव्यवच्छेदस्यासिद्धत्वात्। तथाहि किं रूपस्य जनकमेव ? अथ रूपस्यैव जनकमिति रूपजनकम् ? तत्र प्रथमपक्षे रूपं प्रत्यजनकत्वस्यैव व्यवच्छेदो न पुनरन्यजनकत्वस्य व्यवच्छेदो विधिर्वेति, साधनान्तरमपेक्ष्य तेनैव विरोधे व्यवच्छेदस्यैव असिद्धेः। द्वितीये तु पक्षे, अन्यजननक्षेपसिद्धिरसन्दिग्धा। केवलं न तत्र प्रमाणव्यापारः। यथा ह्येकस्य तन्नान्तरीयकत्वं तथा द्वितीयस्यापि यदि स्यान्न दोषः, प्रदीपवत्। न तु [9]रूपजनकमित्येव [10]रसजनकप्रतिक्षेपो, रूपजनकत्वस्यायोगव्यवच्छेदेनापि चरितार्थत्वादिति न काप्युपपत्तिरत्रापि। केवलं कल्पनाबुद्धौ यथार्थान्तरमिव रूपजनकत्वं प्रतिभाति, तथा तदभावाव्यभिचारि च पृथगेव रसजनकत्वमवसीयते। यतः पृथक् शब्दप्रमाणवृत्तिः अपेक्ष्यते, तावतैव विरोधमध्यवस्यति। सावगतिः[1] [2]कृतकत्वानित्यत्वयोरपि न व्यवसीयते[3] केनापि। नापि तत्र विरोधाभिधानेन [4]कश्चिदुपयोगः। एकत्र धर्मिण्यपरपरिहारार्थमेव हि विरोधः साध्यते। तद् यदि विरोधेऽप्येकधर्मिसम्पर्कः, कृतं विरोधचिन्तया। नीलत्वानीलत्वादिषु[5] तु प्रयुज्यते परस्परपरिहारात्मा विरोधः।

ननु[6] [7]परस्पराभावाव्यभिचाराविशेषेऽपि कथं केषाञ्चिद् धर्माणामेकधर्मिण्यनवस्थानात्मा विरोधः, केषाञ्चित् पुनर्भेदमात्रं न विरोधः ? उक्तमत्र, यद्व्यवच्छेदेन यस्य विधानं यद्विधानेन वा यस्य व्यवच्छेदो नियमेन, तत्तेन प्रतियोगिना विरुद्धम्। यत्र नेयं गतिः, तदविरुद्धमित्यलं पुनः परिश्रमेण। तदेवं रूपजननरसजननयोः परस्पराभावाव्यभिचारेऽपि [8]कृतकत्वानित्यत्ववद् भेदमात्रं शब्दप्रमाणान्तरार्कपि, न तु विरोध इति स्थितम्।

यत्तूक्तम्– तत्र यदि स्वभावान्तरं भवेदित्यादि। स तर्हि न्यायः किं कृतकानित्यत्वाभ्यां विभेति[9] ? प्रसङ्ग एव[10] तत्रापि भवत्विति चेत् ? ननु[1] पराभ्युपगमेन प्रसङ्गः, न च मयेदमङ्गीकृतं परस्पराभावाव्यभिचारमात्रेण विरोध एकत्रानवस्थानहेतुरिति। किं तवैषोऽभ्युपगमः प्रमाणवृत्तिर्वा ? उभयथाऽपि न ममापराधः। [16b] सिध्यतुतरां च कृतकत्वानित्यादीनां विरोधो, न चैवं तस्मात्परस्पराव्यभिचारस्य[2]

---

८. तथाहि इति नास्ति र ९. रूपजनकत्व° र १०. रसजनकत्व° र १. सा च सति र २. कृतकत्व नि° र ३. व्यवधीयते अ ४. °भिधाने कश्चि° र ५. नीलत्वादिषु र ६. नन्व° अ ७. परव्यभिचारा° र ८. कृतकत्व° अ ९. विभाति र १०. एप र १. नन्व° अ २. °मात्रेण......... व्यमिचार° इति नास्ति र

तादात्म्यनिषेधे व्यापारात् न कृतकत्वमेवानित्यत्वम्। अनिषेधे त्वेकस्यैव कृतकत्वस्य भावोऽभावश्च स्यात्। यथा वस्तुनो नीलादनीलस्याव्यवच्छेदे तस्यैव भावोऽभावश्च स्वीकृतः स्यादित्युच्यते। नीलमिति हि तस्य भावः। अनीलमिति चाभावः। तदभावव्याप्तस्यानीलस्य[3] भावो न[4] व्यापकं तदभावमनाकृष्य स्थातुं शक्तः, भावाभावयोश्च विरोधः प्रसाधित एवेत्येकधर्मिण्यनवस्थानमिति यन्नीलं तन्नानीलं पीतादिवस्तु, तथा धर्मोऽपि यत्कृतकत्वं, तन्नाकृतकत्वमनित्यत्वादि। यद्रूपजननं तन्नारूपजननं रसजननादि। अन्यथैकत्र कृतकत्वरूपजननादौ [5]शब्दप्रमाणप्रवृत्तावन्यत्रानित्यत्वरसजननादौ प्रमाणान्तरानपेक्षाप्रसङ्गः।

तस्मात् तादात्म्ये भावोऽभावश्चैकत्र स्यादिति दोषः। न तदाधारत्वे। तौ हि परस्परं भिन्नौ धर्मौ यद्येकत्र स्यातां, कीदृशो दोषः? भावाभावदोषस्य भेदसाधनेनैव चरितार्थत्वात्। शास्त्रेऽपि हि विरुद्धधर्माध्यासो भेद उक्तो, न विरोधः। विरोधलक्षणं त्वन्यत् प्रसिद्धमेव। [6]तादात्म्यनिषेधोऽपि विशेषणानपेक्षस्वभावानुपलम्भादुक्तो न {विरुद्धोपलम्भात्। तदेवं भावाभावलक्षणविरुद्धधर्मसंसर्गात् तद्धर्मित्वेन भासमानौ धर्मावेव भिन्नौ भवत इति न तयोरपि धर्मिवस्तुनोर्नानाधर्मयोगमात्रेण[7] भेदवार्ता। यदापुनस्तथा भिद्यमानावेव धर्मौ यथोक्तपरस्परप्रतिद्वन्द्विनौ भवतस्तदा तद्धर्मिणोऽपि भेदः, [8]नीलत्वानीलत्वभावाभावधर्मिवत्, एककार्यं प्रति [9]जननाजननवच्च। तस्माद् भावाभावौ साक्षाद् विरुद्धौ रूपजनकत्वरसजनकत्वलक्षणौ धर्मावेव स्वधर्मित्वेनाभासमानौ भिन्तः[10]। न तयोरप्याधारं [1]प्राचीनविरूपलक्षणम्, स्वयं विरोधाभावात्। अत एव न[2] भिन्नो दृश्यते सः, एककार्यजनकाजनकत्वे च स्वयं प्रत्यनीकतया स्वधर्मिणं भिन्त[3] एव, अभेददर्शनं च प्रत्यनीकावसायेन विरोधी यत इति अनुमानवृत्तिश्चेति सर्वमनवद्यम्॥

अयं तु स्वयमेव न ह्येकस्वभावात् कारणात् कार्यभेदं पश्याम इति, न च भिन्नो दृश्यते स इति च ब्रुवन्नस्वस्थ एव न निर्बन्धयोग्यः। तस्मान्नैकस्वभावायाः सामग्र्याः कार्यवैजात्यमित्यविरोधः। न तु स्वभावपरम्परारहितादिति। तदेवं स्वभावसन्देहा-

३. नीलत्वस्य र ४. भावेन अ ५. प्रमाणवृत्ता॰ र ६. तदात्म॰ र ७. नानाधर्मयोर्नाम॰ र ८. नीलत्वा॰ नास्ति अ ९. एककार्यजनना॰ र १०. भिन्नः र १. प्राचीनरूप॰ र २. नकारो. नास्ति अ ३. धर्मिणिछिन्त (?) र

पोहाद्[4] यदुक्तम्, क्षणिकेभ्यो निवर्तमानं सत्त्वमसाधारणमुपा[द]दानस्य स्वभावभेदापत्तिरिति तन्निरस्तम्।

काल्पनिक एव भेदप्रतिभासो न तात्त्विको भेदः। किं च तात्त्विकस्वभावभेदापत्तावपि सत्त्वमसाधारणमिति श्रद्धावधेयमेव। न हि वस्तूनां परिमाणातिरेकेण नित्यादिव क्षणिकादपि व्यावृत्तं भवति सत्त्वम्[5], यतोऽसाधारणमवधार्येत। स्वभावभूमनि कश्चिन्नित्योऽपि स्यादिति चेत्? [6]तमनुपतत्तर्हि सत्त्वं[7] [17a] साधारणमनैकान्तिकमाशङ्क्यताम्। तच्च चिन्त्यम्। बाधकानां व्यासवदनानां संभवात्।

अथ स्वभावपरम्परासंभवे भावस्यैव परिभवात् कस्य क्षणिकत्वमिति क्षणिकादपि व्यावृत्तमुच्यते, तदपि नास्ति। स्वयमेव स्वभावेभ्यो भिन्नस्य स्वभाविनः क्रियासमर्थनेन रक्षाविधानात्। न च स्वभावभेदसंभवे [9]मूलस्य क्षयोऽपि युक्तः, अपरिमितोपाधिसंभवेऽपि तद्वतो व्ययानिष्टेः। अस्मद्दर्शनेऽपि यदि नाम [10]वस्त्वन्तरराशेरुदयः, तथापि प्रकृतभावस्य कीदृशी क्षयोपपत्तिरिति [1]व्यक्तमेतत्। स तु राशिः [2]प्रमाणमन्वियान्नवेति चिन्त्यम्। भवतु वा मूलापलापः। ये तु स्वभावा भाविका इष्टाः तदात्मनि ममत्वान्मूलस्यैकं पृथक् सत् क्षणिकं मा भूत्। भूयांसस्तु क्षणिकाः सन्त इत्युपचय एव क्षणिकतायाः[3], कथं क्षणिकतायाः सत्त्वव्यावृत्तिः? तदेवमेवंविधाः प्रलापा [4]ग्राम्यजनजनितमहिमानस्तेष्वेव शोभन्ते, न तर्ककर्कशकुशाग्रीयबुद्धिषु बौद्धेषु। या तु शिक्षा स्वभावभेदसाधनाय स्यादेतदित्यादिः [5]सैषामेवास्तु, अन्योऽन्यस्य स्वभाव इति स्वस्थस्य वक्तुमशक्तेः। स्वभावभेदस्तु[6] साधनासंभवादध्यक्षबाधनाच्च परिहृत एव। न च भवन्नपि प्रकृतदोषसंस्पर्शी[7]। नापि सहकार्यन्तरमेव[8] स्वभावान्तरमिति दन्तनिष्कोषिकया[9] स्वभावभेदसाधना हेतवो विपर्यासयितुं शक्यन्ते[10]। क्षणिकवादी हि सहकारिणः पश्यन्नेव [1]प्रसिद्धस्वभावभेदसाधनाय साधनमुपन्यस्य न कथमप्यनेन वचसा प्रतारयितुं शक्यः। तद्वरं तत्साधनमसाधनमेवेति मुख्यमाख्यायतानिष्टसिद्धव्याघातादिति।

४. सन्देहो मोहाद् र ५. सत्त्वेन च वस्तु...न वस्तु धर्मिणामसा° अ ६. तत्त्व° र ७. तन्न र ८. सत्त्वमिति नास्ति अ ९. सु(?)न्यस्य र १०. °राशि° र १. °रिव्यक्त° अ २. प्रमाणे मन्वि° र ३. क्षणिततायाः अ ४. जन° इति नास्ति र ५. °त्यादि र ६. स्वभावकाभि(?)भेदस्तदैव र ७. दोषस्पर्शी अ ८. कार्यान्तर° अ ९. निष्णोपिक(?) र १०. धाक्षन्ते र १. प्रेति नास्ति र

तत्र [2]चोक्तमस्माभिः। न च सहकारिसाधनायैव [3]प्रत्यक्षस्यातुरयं प्रयत्नः। [4]कार्येणानुभूतान्वयव्यतिरेका हि सहकारिणः प्रत्यक्षादिप्रमाणसिद्धा एव किमत्र साध्यम्? ततोऽक्षणिकाभिमतस्य क्रमवतीषु कार्यव्यक्तिषु स्वलक्षणभेदसाधन उपन्यस्ते दूषणमनुक्त्वा[5] सहकार्यन्तरमेव स्वभावभेद इति लपन्[6] यदि स्वहृदयसन्तोषमालम्बेत, आलम्बताम्। न तु[7] परसाध्यं बाधितमनेन। तस्मात् सिद्धमर्थक्रियाकारित्वमस्थैर्येण व्याप्तमिति॥

यदप्यनेनोक्तम्– किं चेदं तावदयं क्षणिकवादी प्रष्टव्यः। पूर्वस्य क्षणस्योत्तरस्मिन्नेकसन्तानवर्तिनि क्षणे कर्तव्ये[1] नान्यत् किञ्चिदपेक्षणीयमस्ति। ततश्च परोत्पत्तिं प्रत्यनपेक्षत्वात् तन्मात्रानुबद्धेनोत्तरेणापि[10] सत्येव तस्मिन् भवितव्यम्। अभवन् वा तन्मात्रानुबद्धो[1] न स्यात्, अपि तु निमित्तान्तरापेक्षो विज्ञायेत। असभागोत्पत्तौ तु [2]पूर्वे समानसन्तानवर्तिन एकसन्तानान्तर्भूतत्वाविशेषात्[3] समर्था असमर्था वा[4] भवेयुः। तेन सन्तानान्तरवर्तिक्षणप्रतिबन्धसामर्थ्यः सापेक्षः क्षणः स्यात्। न तु सभागक्षणप्रतिबन्धोत्पत्तौ[5]। तथा च सति पूर्वक्षणसत्तामात्रानुबन्धित्वाविशेषादुत्तरोत्तरः क्षणः पौर्वापर्यं त्यक्त्वा युगपदुत्पद्येत। ततश्च [6]प्रबन्धापेक्षकार्य[17b]क्षणकालभाविनां क्षणानां प्रबन्ध उच्छिद्येत। ततश्च त्रैलोक्यवर्तिसकलवस्तुसन्तानभाविनामनेनैव पर्यायेण प्रबन्धोच्छेदादन्योन्यसंपी[डि]ता[7] कृत्स्ना त्रिलोकी प्रसज्येत।

अथापि [8]समसमयभावित्वात् सव्येतरगोविषाणयोरिव कार्यकारणभावो नास्तीत्युच्यते, यद्येवमतीते क्षणे[9] [10]पूर्वस्मिन् वस्त्वन्तर उत्पद्येत, सति च नोत्पद्येत इत्यपूर्वोऽयमन्वयव्यतिरेकानुगमप्रकारः। एतयापि द्वारा क्षणिकानामर्थक्रियाकारित्वमेवानुपपन्नमिति[1]॥

तदपि सर्वमसंबद्धम्। तथाहि यत् तावत् पूर्वस्योत्तरे कर्तव्ये नान्यत्र क्वचिदपेक्षेति, तत्र सभागा उत्तरे सर्व एव क्षणा अभिप्रेता भवतः। अन्यथा सर्वेषां यौगपद्यप्रसञ्जनमनुपपन्नं स्यात्[2]। तत्र यदि स्वाभिप्राये दूषणं तदा न कश्चिद् विपक्षः[3]। अथ सौगत एव प्रष्टव्यः, तदा पूर्वस्य उत्तरस्मिन्ननन्तर एव क्षणे[4] कर्तव्ये निरपेक्षत्वं,

२. तत्रैवो° अ ३. साधनायै प्र° र ४. °नानुकृता° र ५. °समुक्त्वा अ ६. नय(ये)न र
७. यत् अ ८. °व्यक्षरा इति नास्ति अ ९ कर्तव्ये इति नास्ति अ १०. °बन्धे° अ १. °बन्धो र
२. पूर्वत° र ३. भुवो विरोधः अ ४. भ.नवम्वाधा र ५ प्रबन्धो र ६. °न्यादेप° र
७. संपीता अ, संपीडिता र ८. समसमयभावि° र ९ क्षणात् र १०. पूर्वस्मिन्नुत्तर उत्प° र
१. °त्वमनुपपन्न° र २ °पन्नमिति र ३. विपक्ष(?) र ४ क्षण° अ

नोत्तरे क्षणे। स एव तर्हि तस्य स्वभावो नास्ति यस्तदुत्पादकः[5]। ततः स्वभावसापेक्षत्वात्कथमनपेक्षः? स तर्हि स्वभावः कदाचिदस्य भावी, न भावो तर्हि तदपेक्ष इति वाचोयुक्तेः कोऽर्थः? अयमर्थः। यदुच्यते[6] देवदत्तोऽत्र कार्ये यज्ञदत्तापेक्षः समर्थ इति। तत्र द्वयं प्रतीयते, स्वयमसमर्थ इति, यज्ञदत्तेन [7]सह समर्थ इति च। न च सर्वो व्यवहारस्तत्त्वानुरोधी। किं तु क्वचित् किञ्चित् सत्यम्[8]। तदत्रापि स्वयमसमर्थ इत्ययमंश उभयसंमतत्वाद् दुरपह्नवः। स एव पश्चादन्येन सह समर्थ इत्यत्र तु विवादः। अतएव [9]साधने बाधनावतारः। अतस्तदंशासिद्धेः[10] तदपेक्षं स्वयं [1]शब्दमप्यपनीय क्वचित् [2]सापेक्ष इत्यसमर्थ इत्येवार्थः। तत उत्तरोत्तरे कर्तव्ये असंभविनि तदुत्पादनस्वभावे सापेक्ष इति कोऽर्थः? उत्तरोत्तरकर्तव्ये समर्थः। [3]तदत्र यद् दूषणं तदुच्यताम्।

स्यादेतत्। उत्तरस्वरूपाविशिष्टमुत्तरोत्तरम्, ततः पूर्वं यथोत्तरे शक्तं तथोत्तरोत्तरेऽपि। उत्तरोत्तरे अशक्तः तदुत्तरेऽपि कथं शक्तः[4] स्यात्, एकस्वभावत्वाद् द्वयोरिति?

तदप्यसंगतम्, एकस्वभावत्वासिद्धेः[5]। सभागक्षणपरम्परापेक्षया, सिद्धमेकस्वभावत्वमिति चेत्– न, सर्वथा सभागत्वासिद्धेः। सजातीयार्थो हि सभागार्थः। सजातीयत्वं च त्रिविधम्। रूपतः शक्तित उभयतश्चेति। तत्र यद्यपि रूपमात्रकृतं सजातीयत्वमुत्तरस्योत्तरेण, तथापि सामर्थ्यकृतं नास्ति। ततः कृतं[6] विजातीयत्वमेव। अतएव बीजादीनां स्वभावपरिणामपरम्परया कियत्याप्यङ्कुरकार्यनिष्पत्तिः। तत्र हि अन्तिमस्य बीजक्षणस्याङ्कुरे शक्तिः। अन्तिमे पुनरुपान्त्यस्योपान्त्ये च तत्पूर्वस्येत्येवं यावत्प्रथमबीजसंभवः। एवं सहकारिसामग्र्यपि [7]तत्रापरापराविशिष्टैवेति वेदितव्यम्। अतएवापरापरप्रत्ययोगेन प्रतिक्षणभिन्नशक्तयः संतन्वन्तः संस्कारा यद्यपि कुतश्चित् साम्यात् सरूपाः प्रतीयन्ते, तथापि भिन्न एवैषां स्वभावस्तेन किञ्चिदेव कस्यचित् कारणं कार्यं वेति न्यायः। [18a] ततः सर्वथा सभागत्वविरहात् पूर्वस्योत्तरक्षणजननसामर्थ्येऽपि नोत्तरोत्तरजननमस्य, ततः शक्तिविशेषेण विशेषात्[8]। तथा तस्याप्यन्यस्मात् शक्तेरुपचयोऽपचयो वा[9]? उभयोरपि विशेष एवोच्यते। विशिष्यतेऽन्यस्मा-

५. °दनः अ ६. य उच्यते अ ७. सहेति नास्ति र ८. सत्ययं र ९. साधनवा.ध° र १०. °दंशासि° र १. शब्दम° अ २. सापेक्षता इत्य° र ३ तदन्वयद्° अ ४. यथोत्तरे शक्तं भवदुत्तरेऽपि कथं शक्तः अ ५. °सिद्धः अ ६ तत्कृतं र ७. °परापर° र ८ शक्तिविशेषणात् र ९. रुपादयो(!) पचयोर्वा र

दिति। तत् कथमेकक्षण एव सर्वेषां सभागाभिमतक्षणानामुपनिपातचोद्यावकाशः[10] ? अन्वयव्यतिरेकोल्लासोऽपि पश्चिमो दुश्चरितमेव[1]। क्षणभङ्गसाधनसामर्थ्याकदर्थने हि[2] यदेकानन्तरमन्यजन्म, स एवान्वयः। यश्च तत्कारणस्य प्रागसंभवेऽसंभव एव देशकालान्तरे कार्यस्य, स एव व्यतिरेक इति किमत्र क्रियतामनिच्छतापि ? नित्यवादिनोऽपि हि न सहैव[3] हेतुफलयोर्जन्म। किं तु हेतुजन्मानन्तरं फलस्य जन्म। यत्क्षणाच्च कारणस्य कार्यमुदयवत् ततः प्राक् पश्चाद् वा संभवे कारणस्य[4] कार्यस्य क उपकारः ? तत्क्षणानन्तरमस्य जन्मेति तावतैव कृतार्थत्वात् कार्यस्य तावतैवान्वयः, तदभावेऽभावश्चेति व्यतिरेकश्च। केवलं तत्क्षणात् प्राक् पश्चादपि कारणाभिमतस्य भावः प्रमाणोपनीतेन[5] कार्यानुपयोगमात्रेण परिहर्तुं शक्य इति तावन्नित्यवादिनो[6] विशेषः। स च विचारितः। अन्वयव्यतिरेकौ तु यथोक्तमात्रेणेति स्थितम्॥

यदपि सत्त्वस्यासाधारणतां प्रतिज्ञाय एकस्मादनेकस्मादेकमनेकं वोत्पद्यत इति विमृश्यानेकस्मादनेकोत्पत्तिपक्षं स्थितमादायोवाच वाचस्पतिः, किं पूर्वे क्षणा उत्तरेषां क्षणानां परस्परं निरपेक्षा[7] एव जनका आहोस्वित् सापेक्षा[8] इति।

ननूक्तमन्त्यक्षणप्राप्ताः[9] परस्परमनपेक्षाः कार्याणि जनयन्तीति। तत् किमनभ्युपेतारोपप्रपञ्चेन ? तत् किमिदानीं [10]"समर्थबीजक्षणजनकोऽपि तज्जनने बीजक्षणोऽनपेक्ष[1] एव ? ओमिति ब्रूमः[2]। हन्तानेन प्रकारेण सर्व एव बीजक्षणा निरपेक्षाः कार्यजनन[3] इति कृतं सहकारिभिः। ननूक्तं नैते प्रेक्षावन्तः किं तु स्वप्रत्ययाधीननियतसन्निधयो न क्षणमपि[4] व्यवधेरीशत इति। तत् किमयं कृषीवलोऽपि न प्रेक्षावान्, यः[5] कुशूलादपनीय बीजमावपति भूमौ परिकर्षितायां[6] क्षित्यादिसहभावेन [7]एवातिशयोत्पादपरम्परया अङ्कुरजननसामर्थ्याद् बीजस्य। कुशूलस्थाद् वत्सर[श]तेनापि[8] तददर्शनात् तत्रावपतीति चेत् ? अथ किमयं न स्वसन्तानमात्रप्रभवः समर्थो बीजक्षणः ? तथा चेत्, कथं सन्तानान्तरं सहकारि नापेक्षेत[9] कार्यकरणे ?

---

१०. मुपरिपाततत्वाभ्य(?)वकाशः र १. °तश्चरित° र २. °मेरि र ३. सहसैव र ४. सम्भवेन कारणेस्य र ५ प्रमाणोपनीतो न अ ६. इत्ययं नित्य° र ७. °स्परनिर° र ८. ता° टी° पृः ८४१ ९. मनक्षये(?)भागे र १०. सम्बन्ध° र १. °पिक्षणोऽत° र २. ओमिति चेत् र ता° टी° पृः १४१ ३. कार्योपजन° ता° टी° ४. क्षणमपीति नास्ति ता° टी° ५. प्रेक्षावान् यतः प्रयत्नेनेत्यधिकम् ता° टी° ६. परिकर्मिता° र ७. सहभुव एव बीजक्षणस्यातिशयो ता° टी° ८. गतेनापि र; सहस्रेणापि वर्षैः ता° टी° ९. °न्तरस्तु सहकारि नापे° र, कारिणा अ, सन्तानान्तरं नापेक्षेत स्वकार्ये ता° टी°

नन्वपेक्षत एव किं तु स्वोत्पादे, न पुनः स्वकार्ये। [१०]तत्र तस्यानपेक्षत्वमुच्यते[१], न तु स्वोत्पत्तौ। ननु स्वोत्पत्तावप्यस्य स्वसन्तानवर्ती जागर्ति पूर्व एव निरपेक्षः क्षणः? एवं तस्य तस्य पूर्वः पूर्वः क्षणः[२] स्वसन्तानवर्तित एवानपेक्षो जागर्ति जनन इति कुशूलनिहितबीज एव स्यात् कृती कृषीवलः। कृतमस्य प्रेक्षावतः कृषिकर्मणा दुःखाकरेणेति।

यदि मन्येत द्विविधमिह कार्यं, एकं [18b] सहकारिभिराहितातिशयविशेषपरम्पराप्रसवधर्मकम्[३], द्वितीयं सहकार्यतिशयनिरपेक्षजनकम्[४]। यत्राङ्कुरोऽतिशयविशेषपरम्परापेक्षजन्मा। आद्यातिशयस्तु सहकारिकृतातिशयपरम्परानिरपेक्षोत्पादः। न चैतदुभयविधमपि कार्यं[५] बीजस्य स्वसन्तानमात्रादुत्पत्तिमर्हति[६]। क्षित्यादिसन्तानान्तरापेक्षमेव बीजं[८] स्वसन्तानवर्ति, भिन्नसन्तानवर्ति वा[९] कादाचित्कं कार्यं करोतीति कल्पते[१०]कृषिकर्म, सन्तानान्तराणि तु कादाचित्ककार्योत्पत्तौ ये [१]सहकारिप्रत्ययाः, त एव यथाङ्कुरोत्पत्तौ सहकारिणो बीजस्य सामर्थ्यप्रबोधे हेतवः कदाचित् तेषां क्षित्यादीनां येऽपि जननहेतवः त एव सामर्थ्यहेतवो भवन्ति, यथा बीजादीनामाद्यातिशयोत्पादने सामर्थ्यप्रबोधहेतव उपसर्पणप्रत्ययाः। सर्वथा सन्तानान्तरैरनाहितातिशयं न बीजं कार्यविशेषं कादाचित्कं करोति। सामर्थ्यप्रबोधहेतवश्च द्वये सहकारिप्रत्यया उपसर्पणप्रत्ययाश्चेति।

तदनुपपन्नम्। तथाहि भवतु तथा[२] द्विविधं कार्यम्। अस्तु च तत्कादाचित्कत्वात् सन्तानान्तरापेक्षम्। अपेक्षार्थश्च वक्तव्यः। कारणस्य स्वसामर्थ्यप्रबोध इति चेत्? ननु सामर्थ्यतत्प्रबोधयोः [३]समर्थभावतत्त्वाव्यतिरेकात् समर्थप्रत्ययोत्पाद इत्युक्तं भवति। तथा च [४]स्वोत्पादापेक्षितकारणं सहकारिप्रत्ययात्[५] सत्यम् [६]अभ्युपगम एव दोषत्वेन चोद्यते। अथायमङ्कुरजननसमर्थो वा क्षणः, आद्यातिशयो वा किं निरपेक्षेण स्वसन्तानमात्रजन्मना[७] पूर्वक्षणेन जन्यते, न पुनः [८]स्वसन्तानमात्रजन्मना, अस्यापि [९]पूर्वस्मादेव पुञ्जादुत्पत्तेः।

---

१०. तत्र तास्या(?) तत्तयास्या अ १. °सुपेयते ता° टी° २. तस्य पूर्वः क्षणः अ ३. °कर्मकं र ४. °कार्याति र ५. °जननं अ ६. कार्यमिति नास्ति र ७ उत्पत्ति° र ८. °पेक्षणे च बीज° अ ९. भिन्नसन्तान इति नास्ति र १०. कृषीयमर्न्वमन्ता° अ १. ये इति नास्ति अ २. तथेति नास्ति र ३. °भावत्वात् व्यति° र ४. °देऽपेक्षित र ५. प्रत्ययो न र ६. °नाभ्युप° र ७. °मात्र-जन्मान अ ८. इतीति नास्ति अ ९. तस्यापि र

ननु समानशक्त्या[10] कुशूलजन्मसु बीजसन्तानेषु [1]कस्मात् किञ्चिदेव बीजं परम्परयाऽङ्कुरोपजननानुगुणमुपजनयति बीजक्षणम्, नान्ये बीजक्षणा भिन्नसन्तानान्तःपातिनः ? न खलूपसर्पणप्रत्ययात् प्रागेतेषां समानासमानसन्तानवर्तिनां कश्चित् परम्परातिशयो बीजक्षणानाम्। [2]अर्थोपसर्पणप्रत्ययात् प्राङ् न तत्सन्तानवर्तिनो जनयन्ति परम्परयाप्यङ्कुरोपजननानुगुणं [3]बीजक्षणम्, बीजमात्रजननात्तेषाम्। कस्यचिद् बीजक्षणस्योपसर्पणप्रत्ययसहभुव आद्यातिशयोत्पादः। हन्त तर्हि तदभावे सत्युत्पन्नोऽपि जनयेदेव। न चास्योपसर्पणप्रत्ययेन सहभावनियमः, अतत्सन्तानानां कुशूलवर्तिनां बीजक्षणानां तेन सह [4]समानयोगक्षेमाणामभ्युपसर्पणप्रत्ययसहभावाभावात्[5], क्षणस्य चैकस्य क्षणान्तरेणैकेन कार्यकारणनिश्चयाभावात्। [6]सामान्यविषयोत्पादान्वयव्यतिरेकयोस्तत्रैवोपपत्तेः। तथा च केवलानां व्यभिचारसंभवादाद्यातिशयोत्पादमङ्कुरं वा प्रति क्षित्यादीनां [7]परस्परापेक्षत्वमेवोत्पादकत्वमकामेनाप्यङ्गीकर्तव्यमिति।

तदपि प्राचीनचर्चया निरस्तप्रायम्। तथाहि यदि नाम परस्परापेक्षाणामेवोत्पादकत्वमेतावता समर्थितं, प्रस्तुते किमायातम्? अथ[8] स[41b]मानकालभाविनां परस्परोपकारमन्तरेणापि परस्परापेक्षत्वमुपलब्धम्? एवमक्षणिकस्यापि सहकारिष्वनुपकारिषु त्यक्ष्यते [इति] कदाचित् कस्यचित् करणसंभावना[42a]या[मा]यासंभविनी नित्याद् व्यावृत्तिः सत्यस्येत्यभिप्रायः। यद्येवं कथमसाधारणताप्रतिज्ञानिर्वाहः ? सन्दिग्धविपक्षव्यावृत्तिकत्वमेवाभिधातुमुचितम् ॥

अथ क्षणिकस्य सहकारिषु नापेक्षा नानपेक्षा युक्तेति व्यवस्थितम्, वक्ष्यते च पुरस्तादयमभिप्रायः, ततोऽपेक्षानपेक्षाभ्यां व्याप्तमर्थक्रियाकारित्वमनित्याच्च तदभावाद् व्यावर्तते। स्थिराच्च क्रमयौगपद्यविरहाद् व्यावर्तते त्वन्मतेनेति व्यक्तम साधारणम्। तथा च न क्षणिकस्य सहकारिष्वपेक्षा उपकाराभावात्, नाप्यनपेक्षा, तामन्तरेण कारणाभावादिति सिद्धो व्यापकाभावः।

तदपि यत्किञ्चित्। तथा हि कीदृशमपेक्षार्थमादायेदमुच्यते ? यदि तावत् सहकारिणमपेक्षत इति सहकारिणोपकर्तव्य इत्यर्थः, तदा तदभावादनपेक्षैव क्षणि-

१०. शक्त्या इति नास्ति अ १. जन्मसु व .... षु बीज° अ चतु(?)षु र २, अथो अ ३. बीजक्षणमिति नास्ति र ४. समानायोग° र ५. प्रत्ययेनाभावामहभावात् अ ६ पाठोऽस्पष्टः अ ७. °पेक्षाणामेव अ ८. 19b पृष्ठं परित्यक्तम् अ

कस्य कथमुभयव्यावृत्तिः ? सहकारिभेदमन्तरेण करणानुपपत्तिस्तु क्षणान्तरे स्वयमभावादेव।

अथ तद्वा तादृग्वा आसीदिति न कश्चिद्विशेषः, ततः तादृक्स्वभावसंभवेऽप्यकरणं सहकारिणि निरपेक्षान्न क्षमत इति चेत्– असंबद्धमेतत्, अकर्तुस्तादृक्स्वभावताया विरहात्। [42b] यदेवानन्तरकार्यमपर्यासितशक्तिसकलसहकारिमध्यमध्यासीनस्य स्वरूपं, तदेव यदि देशकालान्तरेऽपि, हन्त तद्वदेव करणक्षमत्वम्। न च वर्णसंस्थानमात्रसाम्ये च साम्यं बीजान्तराणां भवितुमर्हति। दृश्यन्ते ह्याकारसाम्येऽपि फलसद्भावासद्भावादिभेदेन भावानां भिन्नव्यवस्थितयः, तथा शक्तिभेदेनापि स्युः। पाकोपचये हरीतकीवत्[A]। स तु स्वभावभेदस्तेषां बीजत्वे साधारणेऽपि कुत इति प्रश्नेऽपि कारणसामग्रीशक्तिभेद एव शरणं कथञ्चित् साम्यप्रतीतावपीति दर्शितमपरापरप्रत्ययेत्यादिप्रस्तावे।

ततो यदुक्तम्, ननु समानकुशूलजन्मस्वित्यादि, तदपास्तम्। यस्य हि दृष्टादृष्टकारणसामग्रीपरिणामे परम्परायातः स्वभावभेदो बीजस्योपसर्पणप्रत्ययसहकारिभावभूमिः, तत् परिणामपरम्परया जनयत्याद्यमतिशयमङ्कुरं वा। नान्ये बीजक्षणास्तथाभूतहेतुपरम्पराविरहेण तत्स्वभावाभावात्। नन्वेकत्र क्षेत्रे निष्पत्तिलवनादिपूर्वकमानीय कुशूले क्षिप्तानि सर्वाण्येव बीजानि साधारणरूपाणि प्रतीयन्ते तत् कुतस्त्योऽमुकबीजसंभवी विशेषो नान्येषाम्? अतश्चैवं, यतो हि [43a] क्षेत्रलवनाय करस्पर्शस्तस्यैव स स्वभावः, पश्चादन्येषामपि नयने तद्दर्शनात्। तत् कथमस्य समस्वभावत्वमपह्नोतुं शक्यत इति?

अत्रोच्यते। कारणं खलु सर्वत्र द्विविधम्– दृष्टमदृष्टं चेति [19b] सर्वास्तिकसिद्धमेतत्। तत्रादृष्टं कर्मस्वभावमन्यजन्मजनितमदर्शनैकनियतं[B] कार्यवैचित्र्यदर्शनादनुमितवैचित्र्यम्[१]। दृष्टं पुनरैहलौकिकस्वभावं दृश्यमदृश्यं चेति द्वेधा[१०]। तच्च प्रत्येकं चेतनसमवेत[मचेतनसमवेतं][१] चेति चतुर्धा भवति। तदेवं न हेतुसामग्री सर्वा सर्वाकारेण प्रत्यक्षा पुरुषमात्रस्य।

तथा च त्रिलोचनः। कश्चित् सहकारिप्रत्ययः प्रत्यक्षः परोक्षश्चेतरः। ततश्च[२] प्रत्यक्षपरोक्षसहकारिप्रत्ययसाकल्यमसर्वविदा प्रत्यक्षतो न शक्यं प्रतिपत्तुमिति।

---

A. पाकविशेषेण शतपुटादिकरणे भिन्नस्वभावहरीतकीवदित्यर्थः। B. °न्त्रनितम° र १. °वैचित्र्यदर्शनादनुमितेति नास्ति र १०. द्विधा र १. चेतनमचेतनं चेति र, पाठोऽस्पष्टः म २. °श्चेतरः म

यदंशेनापि[३] सा[४] सामग्री प्रत्यक्षा तत्राप्यवान्तरसूक्ष्मभेदपरिगणनाय न[५] समर्थः पृथग्जनः[६] स्थूलदर्शित्वात्। ततो भवेदपि तादृशस्वभावभेदः केषाञ्चिद्बीजानामुपलब्धकर्मकरपाणिप्रणयानां यः परम्परया [७]प्रकृतकार्यमर्जितुमूर्जस्वी, यश्च नान्येषां तदेककुशूलस्थानामपि, न[८] चैनमन्वियाल्लोकः। न चानवधारणमात्रेण[९] तदभावः, संशयस्तु स्यात्। स च कार्येण कस्पर्शेण न[१०] भवता परिभूयते। तथाचैकशरीरावयवानामविभक्तमातापितृसंयोगादिसामग्रीसंभवानां[१] क्वचिदेव तिलकश्चित्रकचिपिट-कादय[२] उदयमासादयन्तः सहजाः क्रमजा वोपलभ्यन्ते। अस्ति च त्वङ्मांसादि-साम्यमन्यावयवेष्वपि[३]। तदमी तिलकादयो विभागेन भवन्तो दृष्टादृष्टकारणसामग्री-परिणतिविभागमनुपलक्ष्यमपि[४] ख्यापयन्तः कथमिव निषेद्धुं शक्याः। एवं बाह्येष्वपि भावेषु। सर्वकार्यग्रामस्य हि साधारणासाधारणकर्मणि जातत्वमिष्टं[५] शिष्टानाम्॥

अथापि स्यात्, शरीरे दक्षिणेतरगोप्यागोप्यस्थानेषु [६]भवन्तस्तिलकादयोऽवश्यं सुखासुखादिकमुपनयन्तीति तत्संवर्तनीयकर्माधिपत्यादुचितः स्थाननियमः। कुशूले तु बीजविसरेण[७] तेनान्येन वा परिकर्मितभूमावुप्यमाने न कश्चिद् विशेष इति वैधर्म्यात् न कर्मशक्तिकल्पनमिति चेत्?

हन्तैवं साक्षादुपयोगदर्शनादर्शनाभ्यां कर्मादिसाधनशक्तिकल्पनाकल्पनयोरल्पीयः किञ्चित्कार्यं[८] जगति कर्मनिर्मेयमनुमन्तव्यमीश्वरादिसाध्यं वा? न हि शिशु-पशुविशेषसाधारणव्यावृत्त्या छागादीनां पुरीषादेर्वर्तुलीकरणेन किञ्चित्प्रयोजनमुप-लभसे। अनुपभुक्तविशीर्णेषु[१०] वाटवीविटपफलप्रसूनपल्लवादिषु। त एव तिलकादि-मन्तः पुरुषाः अपरिचितस्वकीयकार्यतिलकादयः[१]। परिचयेऽपि [२]वानुदीर्णदुःखदौर्म-नस्यादयो दृश्यन्ते मरणमुपगच्छन्त इति कस्तत्राप्युपयोगः[३]? [४]सव्यासव्यगोप्येतरस्था-नेषु वा स्थवीयस्सु तिलकादिसंभवयोग्यस्थानीयस्य देशस्य भूयसः संभवात् कथमुद्भूति-स्थाननियमस्तिलकादीनाम्? मृगादिषु च वर्णमात्रवैकृत्येन क्वचिदङ्गे [५]दौर्मनस्यादि-शङ्कयाप्यलं किं तेषु [६]कीदृशमुपयोगवर्णनम्? [20a] कियद्वा शक्यमेतादृशमुपदर्श-

---

३. दंशेना र ४. सा इति नास्ति अ ५. पु(?तु)न र ६. पृथग्जनः इति नास्ति र ७. प्रेति नास्ति र ८. चैव° र ९. मात्रात् र १०. नकारो नास्ति अ १. °नां सविभक्तमाता° र २. °कश्चित्कणि-कादय° अ ३. °दिनामाद्यावयवेष्वपि र ४. °गमुपल° अ ५. निर्जातत्व° र ६. भवतः ति° अ ७. °रेणेति र ८. कार्ये अ ९. साधारणवृत्त्या र १०. भुक्तशीर्णेषु र १. अपरिचितस्वकीयतिल° र २. चा र ३ इति तत्रा° अ ४. सव्यामध्य° र ५. °दंशे अ ६. °प्यलङ्कितेषु र

यितुम्[७] ? कियति वा त्वयापि प्रतिविधेयम् ? तत् किं विफलमायास्यसि[८] ? उपयोगाभ्यूहविरहेऽपि[९] प्रतिनियतदेशकालस्वभावेषु भावेषु[१०] कार्यभेदोपलम्भः। सर्वत्रावान्तरभेदं दुर्लक्ष्यकर्मादिसाधनशक्तिभेदभावितम्। साक्षात् पारम्पर्येण वा दृश्यादृश्यचेतनाचेतनार्थकर्मण्युपयोगिनं[१] योगिभिरप्यवान्तरैरशक्यपरिच्छेदमिदन्तया[२] नियमेन सामान्यतो व्यवस्थापयतीति गलेपादिकयापि स्वीकारयितव्यो न्यायान्वेषी[३] न्यायविदा। तथा च सति कस्यचिदेव बीजस्यापसर्पणप्रत्ययसम्पर्ककर्कशः स्वभावः, अन्येषां तु तद्विशेषविश्लेषमसृण इत्यवान्तरावान्तरविशेषात्[४] स एव बीजक्षणः परम्परयापि प्रकृतकार्योपयोगी, नान्ये बीजक्षणाः। स चावान्तरो विशेषः करस्पर्शादनुमीयमानो न कर्मादिसाधनशक्तिविशेषानभ्यूहादुपयोगविशेषानभ्युहाद् वा शक्यप्रतिक्षेपः। तिलकादिसंभवादिव देहांशविशेषः, वृक्षाद्यंशविशेषो वा कुतश्चिदेकदेशिकविकारलेशात्[५]। तत्रापि हि विकारबिन्दुस्थानस्यांशस्येदं दृष्टमदृष्टं वा कारणमासाद्योपादानभागविशेषपरम्परयायं[६] स्वभावभेद "इदमन्यभागासाध्यमर्थं कर्तुं समर्थ इति विशेषानवधारणेऽप्यस्ति किञ्चिद्विशिष्टं कारणमुपयोगो वाऽन्या[८]संभवीति सामान्यतो [९]विकारकारणयोगादङ्गस्य स्वभावभेदनिश्चयः। एवमत्रापि बीजे [१०]पुरुषबुद्धिप्रयुक्तकरस्पर्शादस्ति स्वभावभेदः सूक्ष्महेतुफलभेदभागीति सामान्यतो दुर्निवारो निश्चयः। ततः स्वभावभेदसंभवात् तदेव बीजमुपयुज्यते परम्परयाप्यङ्कुरोपजननानुगुणे विशेषे[२] नान्ये बीजक्षणा इति सिद्धमेतत्।

यत्तूक्तं न खलूपसर्पणेत्यादि। तदेतत् कस्य प्रमाणस्य व्यापारमालोच्योच्यते ? न तावत् प्रत्यक्षस्य, आकारसाम्येन स्थूलैकजातीयतानिश्चयेऽप्यवान्तरभेदस्य सूक्ष्मतयानवसितस्याशक्यनिषेधत्वात्[३]। दृष्टं च तिक्तेतरत्रपुषादौ सदृशाकारे स्थूलजातिभेदवत्यपि प्रस्खलदध्यक्षमेकावसायजननात्। तन्नैकावसायमात्रेण तत्त्वस्थितिः, तदंशे बाधकस्य[४] दर्शितत्वात्। अत्यन्ताभ्यासभाविते तु संवादिनि बाधकाभावादेकतास्थितिरविरुद्धेति न प्रत्यक्षीकृतः[५] प्रस्तुते परस्परातिशयनिषेधः। नाप्यनुमानात्, [६]यद्युच्येत क्षित्यादौ जनयितव्ये तदुपादानं पूर्वमेव क्षित्यादिबीजस्य रूपान्तरमिति,

७. मुश[पा]दयितुं र ८. मायास्यसि र ९. अपीति नास्ति र १०. भावेषु इति नास्ति र
१. चेतनार्थकर्मिण्यु° र २. परिच्छेदन्तया र ३. न्यायान्वेषीति नास्ति र ४. इत्यवान्तरविशेषात् अ ५. °लेशतो र ६. °दानता वा विशेष° र ७. इदमन्य भागो र ८. ऽन्यो र ९. °विरा करण° अ १०. बीजेषु रूप° र १. हेत्विति नास्ति अ २. जननगुणे विशेषे अ, °विशेष° र ३. ऽशपिन° र ४. बाधस्य अ ५. न प्रत्यक्षतः र ६. यद्युच्येत इत्यादि उक्तेन क्रमेण सत्त्वं निश्चितमित्यसाधारणानैकान्ताद° इत्यन्तो भागः पतितः अ

न तर्हि बीजं तदनेकं क्षित्यादीनां जनकम्, तदनेकत्वे तेषामङ्कुराद् भेदानुपपत्तेः। न चानुपकारका [अ]पेक्षन्त इति त्वयैवोक्तम्। न च क्षणस्योपकारसंभवोऽन्यत्र जननात्, तस्याभेद्यत्वात्। तथा चार्थक्रियाया एकत्वानेकत्वसापेक्ष[त्वानपेक्ष]त्वव्याप्तत्वात्, तृतीयप्रकारविरहात्। अनयोरन्यतरनिषेधस्यान्यतरविधाननान्तरीयकत्वात्। अक्षणिके च तद्व्यापकयोरेकत्वानेकत्वयोः सापेक्षत्वानपेक्षत्वयोः प्रकारयोरभावात् उक्तेन क्रमेण सत्त्वं निवृत्तमित्यसाधारणानैका[न्ता]द्व्यभिचारिणो लिङ्गस्यानुपदर्शनादुपदर्शयितुमशक्यत्वाच्च। बाधकस्यैव विद्यमानत्वात्। [7]तस्मान्नानिष्टमात्रघोषणेन किञ्चित्।

एतेन नोपकारोऽपेक्षार्थ इत्यनपेक्षैव क्षणिकस्य सहकारिषु नोभयव्यावृत्तिः।

अथ संभूयकरणमपेक्षार्थः[8]। तदपि यदि पूर्वस्थितस्येति विशेषणापेक्षा तदापि क्षणिकस्य नैव[9] काचिदित्यनपेक्षैवाक्षीणा[10]।

अथ पूर्वस्थितस्येति नापेक्षते मिलितावस्थितस्य[1] करणमात्रमपेक्षार्थः, तदा सापेक्षतैव नानपेक्षा। तथापि नोभयव्यावृत्तिः।

[20b] अथास्मत्समयापेक्षया अपेक्षास्थितिः[2]। तदा सापेक्षमसमर्थमेव समर्थितवन्तो वयमिति यत्कार्यं प्रति [3]यदसमर्थं तत्सापेक्षम्, यत्तु समर्थं तदनपेक्षमिति व्यवस्था। तदा[4] चैकनिषेधेनापरविधानात् सामर्थ्यरहितं[5] समर्थमेव भवत्यसामर्थ्यम्। उक्तं च,

समर्थमेवेति [6]न तरामुभयव्यावृत्तिः क्षणिकत्वे ॥

यच्चावोचत, अपि चान्त्यक्षणप्राप्तं [7]बीजमनपेक्ष्याङ्कुरावनिपवनपाथस्तेजांसि जनयत्[8] किं येनैव रूपेणाङ्कुरं[9] जनयति तेनैव तदितराण्यपि, किं वा रूपान्तरेण? न तावत्तेनैव, क्षित्यादीनामप्यङ्कुरस्वाभाव्यापत्तेः। न खलु कारणाभेदे भेदवत् कार्यं भवितुमर्हति, कार्यभेदस्याकस्मिकत्वप्रसङ्गात्।

यदाह, अयमेव हि [10]भेदो भेदहेतुर्वा, यदुत विरुद्धधर्माध्यासः, कारणभेदश्चेति। नापि सामग्रीभेदः, [1]तस्या अप्येकत्वात्। अन्यथा सहभावनियमाभावात्,

७. °न्नानिष्टि° र ८. अक्षार्थः र ९. क्षणिकस्यानेन कदाचिदि° र १०. °दित्यपेक्षै° अ
१. °तावस्थस्य अ २. °समयास्थितिः र ३. प्रतिपद° र ४. तत्र र ५. सामर्थ्यमेव रहित° र
६. न सुतरार्यमुभय° र ७. °पेक्ष्यमङ्कुर° र ८. जनयतु अ ९. रूपेणा......मंकुरं अ
१०. भेदाभेद° अ १. तस्याप्ये° अ

रूपान्तरेण तदितरेषां जनकम्। तथा हि बीजमङ्कुरं जनयदुपादानम्, तद्विक्रियया तदुत्पत्तेः। तदितरेषु पुनरस्य सहकारिप्रत्ययता, तेषां तु पूर्वे पवनादयो यथा [2]स्वमुपादानानि, तद्विक्रियया तदुत्पादादिति चेत्? ननु सहकारितोपादानते किमेकं तत्त्वं नाना वा? एकं चेत्, कथं रूपान्तरेण जनकम्? नानात्वे तु अनयोर्बीजाद् भेदोऽभेदो वा? भेदे कथं बीजस्य जनकत्वम्[3], ताभ्यामेवाङ्कुरादीनामुपपत्तेः? अभेदे वा कथं बीजस्य न नानात्वम्, भिन्नतादात्म्यात्। [4]एतयोर्वैकत्वमेकतादात्म्यात्।

[5]यद्युच्येत, क्षित्यादौ जनयितव्ये तदुपादानं पूर्वमेव क्षित्यादि बीजस्य रूपान्तरमिति? न तर्हि बीजं तदनपेक्षं क्षित्यादीनां जनकम्। तदनपेक्षत्वे तेषामङ्कुराद् भेदानुपपत्तेः। न चानुपकारकारिणोऽपेक्षन्त[6] इति त्वयैवोक्तम्। न च क्षणस्योपकारसंभवोऽन्यत्र जननात्, तस्याभेद्यत्वात्। तथा चार्थक्रियाया एकत्वानेकत्वसापेक्षत्वानपेक्षत्वव्याप्तत्वात्। तृतीयप्रकारविरहात्। अनयोरन्यतरनिषेधस्यान्यतरविधाननान्तरीयकत्वात्। क्षणिकवद् व्यापकयोरेकत्वानेकत्वयोः सापेक्षत्वानपेक्षत्वयोः प्रकारयोरभावादुक्तेन क्रमेण सत्त्वं निवृत्तमित्यसाधारणानैकान्तिकत्वं गन्धवत्त्वा[दिरिवे]ति।

यदि मन्येत, अनुपकारिणोऽपि भवन्ति सहकारिणोऽपेक्षणीयाश्च, कार्येणानुविहितभावाभावत्वात्। सहकार्यकरणाच्च। नन्वनेन [7]क्रमेणाक्षणिकोऽपि भावोऽनुपकारकानपि सहकारिणः क्रमवतः कार्येणानुकृतान्वयव्यतिरेकानपेक्षिष्यते, करिष्यते च क्रमवत्सहकारिसमवधानवशात्[9] क्रमेण कार्याणीति व्यापकानुपलब्धेरसिद्धेः[10] सन्दिग्धव्यतिरेकमनैकान्तिकं सत्त्वं क्षणिकत्वसिद्धाविति। तदपि पूर्वमेव निरस्तम्। यत्पुनरयमधिकमाह– नापि [21a]सामग्रीभेदः, तस्या अप्येकत्वादिति। तत्रापि ब्रूमः– यथा सामग्र्या अभेदः, तथा कार्याणामप्यभेदात् कथं न कारणाभेदानुकारः?

ननु प्रतिनियतानेकरूपाणां कार्याणामभेद इति केयं वाचोयुक्तिः? यद्येवं न खलु[2] समग्रेभ्यो भिन्ना[3] काचिदध्यक्षगोचरः। सौगतमते च चिन्त्येयम्। ततोऽभिन्ना सामग्रीति[4] समग्रा एव प्रतिनियतानेकमूर्तयोऽभिन्ना इत्यपि कीदृशी वाचोयुक्तिः? सामग्रीलक्षणकारणभेदाभेदाच्च कार्यभेदाभेदमाशङ्कमानस्य अयमभिन्नसामग्रीवादो

२. स्वयमु° र ३. जनकं र ४. तयो° र ५. यद्युच्येत इत्यत सत्त्वं निवृत्तमित्यसाधारणानै° इत्यन्तो भागो नास्ति र ६. °कारिण्ये° अ ७. क्रमेण अ ८. °णावक्रमा° अ ९. °समवधारण° र १०. °रसिद्धिः अ २. रात्व° अ ३. भिन्न° अ ४. इतिशब्दो नास्ति र

वाचस्पतेरुचितः। अन्यथा बीजमेकं कथमङ्कुरसरोधरणिधामादि[5] जनयेदित्येतावतैव गतमेतत्। न चेदं चोद्यम्, यतो यदि प्रमाणवृत्तिमनुवृत्त्य[6] एकस्मादनेकोत्पत्तिनिषेधोऽभिप्रेतः, तदा एकस्मादपि दीपाद् वर्तिविकाराद्यनेकं कार्यमुपजायमानमधिगच्छद्ध्यक्षमखिलतद्विपरीतमतिविश्वासं दुस्थयति।

तदपि कथमिति चेत्? ननु प्रमाणपुरस्कारेण विचारे[7] प्रत्यक्षमादावादाय परिशिष्टगणनात्तेन साधिते बाधिते वा[8] नापरस्य बाधनसाधनयोरधिकारः[9]। प्रमाणमार्गोल्लङ्घिनस्तु तादृशैव देयमुत्तरमित्यास्तां तावत्।

अथाङ्कुरकारि कथं धरणिक्षणहेतुः? न ह्यत्रापि प्रत्यक्षबाधाभिधानं युक्तिमत्, क्षणस्य तद्गोचरातिक्रान्तत्वात्[10]। तदापि यद्येककारकोऽन्यकारको न भवतीति व्याप्तिः, तदा दीपेनैव व्यभिचारः। [1]अथाङ्कुरकारको न पृथ्वीहेतुरिति तदाऽसाधारणानेकान्तः। अथाङ्कुरस्य हेतुः कथमन्यस्य भवितुमर्हतीति चेत्? किमङ्कुरस्यैवाथाङ्कुरस्यापि, [2]यद्वा अङ्कुरस्य तावद् भवति, अन्यत्रानिश्चयः? अत्र च पक्षत्रयेऽप्यसिद्धविरुद्धानैकान्तिकत्वं क्रमेण दुष्परिहरम्। तस्मान्नात्र प्रमाणवृत्तिः। प्रसङ्गोद्भावनमपि पराभ्युपगमेन भवति, न चैकमनेकस्याजनकमिति क्षणिकवादिनामभ्युपगमः। तत्र सामग्र्यन्तर्गतवस्त्वेकत्वेन कार्यैकत्वप्रसञ्जनमबालस्य। सामग्रीलक्षणकारणापेक्षणे च भिन्नानामप्यङ्कुरादीनां कारणभेदाभेदानुविधानं[3] सिद्धमिति[4] नाभेदानुविधानानुरोधादङ्कुरादीनामेकतापत्तिः। यथा ह्यङ्कुरादयः प्रत्येककार्यत्वेऽपि भिन्नभिन्नात्म[ा]नः[5], तथा सामग्रीशब्दवाच्या बीजादयः प्रत्येकं कारणीभवन्तो भिन्नाभिन्ना एवेति[6] सिद्धः कारणभेदाद् भेदः।

अथ भिन्नात्मानोऽपि बीजादयः कयाचित् प्रत्यासत्त्या एकव्यवहारगोचरीक्रियन्ते, एवमङ्कुराद्योपीति कारणाभेदेऽभेदोऽपि सिद्धः। तत्र कारणानामेकैकार्थजनकत्वमेकव्यवहारहेतुः। कार्याणां त्वेकैकजन्यत्वमिति समानम्। तत् किमर्थमेकीभवितव्यमङ्कुरादिभिः, सामग्र्यपेक्षायामपि तावतैव [8]हेतुभेदाभेदानुविधानस्य पर्याप्तत्वात्। एतच्च कारणशब्देन सामग्रीं [9]व्युत्पद्यमानस्यापि [21b]परस्य भेदा-

५. °धारिणि अ ६. °वृत्त अ ७. विचारेण र ८. वेति नास्ति र ९. साधनबाधनयो° र १०. क्षणभेदस्य गोचरातिका° र १. यद्वा र २. तदा र ३. °भेदान्न° र ४. सिद्धमिति नास्ति र ५. °भिन्नायोन° र ६. °न्तोभिन्नाएवे° र ८. हेत्विति नास्ति अ ९. व्युत्प[ा]द्य र

भेदयोरव्युत्पत्तिरेव[१०] [१]बुद्धयनुरोधादभिधीयते। तत्त्वतस्तु यथा कारणं सामग्री विवक्षिता, तथा भेदाभेदावपि वैजात्यावैजात्ये विवक्षिते इति दर्शितप्रायम्।

नन्वद्यापि न समग्रेभ्योऽन्या सामग्रीति तेषामेव[२] समग्राणां सादृश्ये वैसदृश्ये वा कार्याणां सादृश्यं वैसदृश्यं वेति प्राप्तम्। एवमेतत्। न तु तत्पुञ्जस्थानां परस्परं सादृश्यादिनिरूपणम्। किं तु पुञ्जान्तरस्थैः सह स्वजात्यपेक्षया सेनायाः सेनान्तरेण सह सादृश्येतरनिरूपणवत्। तत्र यावन्तो यादृशा एकसामग्रीप्रज्ञप्तिगोचरा अर्था हेतुसंमताः, तावन्तस्तादृशा एव यदि देशकालान्तरवर्तिनस्तदासौ सदृशी सामग्री, कार्यं च सदृशमस्या[३] इति कार्यशब्देनापि पुञ्ज एव। यावन्ति यादृशानि कार्याणि जातान्येकत्र[४] तावन्ति तादृशान्येवान्यत्रापि [५]जायन्त इत्यर्थः। वैसदृश्ये तु तारतम्यभेदेन भिद्यमाने कार्यमपि तारतम्यभेदेन भिद्यत इत्यपि कार्यपुञ्जस्यैव तारतम्यभेदेन वैसदृश्यमित्यर्थः। भेदमात्रविवक्षायामप्ययमेव[६] न्यायः। सत्यां विप्रतिपत्तौ भिन्नायाः सामग्र्या भिन्नमेव [७]कार्यं भवतीति एतादृशमेव कारणभेदानुविधानं[८] कार्यस्य प्रमाणानुसारि। तदतिक्रमे च विश्वस्याहेतुकत्वप्रसङ्गः सङ्गतिमवतरति। न प्रमाणबाधितस्य एककारणैककरणनियमस्यातिक्रमे। तदियं भेदाभेदानुकरणवार्ता नैयायिकानां [९]गोपमुखात्पायसमिष्टताश्रुतिमनुहरति।

तस्मादेकमेव बीजमङ्कुरादिकमनेकं जनयति, एवं क्षित्यादिकमपि प्रत्येकम्। अतो नैकानेकयोरुभयोरपि व्यावृत्तिर्यतो व्यापकानुपलम्भोऽयमपरः। क्षणिकपक्षेऽपि क्रियाबाधनं [१०]सत्ताया असाधारणीकरणार्थमुपन्यस्यते[१]। रूपान्तरेण जननपक्षस्तु प्रतिक्षिप्त एवास्माभिरिति[२] न तद्दूषणपरम्परायाः परिहाराभियोगः। एतच्च तत्त्वापेक्षयोच्यते। कल्पनाविलासे तु यदङ्कुरजननं न[३] तत् क्षितिजननम्। तथा न सहकारित्वमेवोपादानत्वमित्येवं प्रकारप्रपञ्चसंभवेऽपि नापराधो वस्तुनः कश्चित् [४]क्रियाविरहलक्षणः, तात्त्विकेनैव रूपेण सर्वनिर्वाहात्। अतएव क्षित्यादौ जनयितव्ये तदुपादानं पूर्वमेव क्षित्यादिबीजस्य रूपान्तरमिति किमर्थं वक्तव्यमस्माभिः, यदुत्तरः प्रबन्धः साधुः स्यात्। अनपेक्षा चैका सहकारिष्वपि[५] साधितेति प्रकरणार्थनिगमनं सकलमाकुलमाकुलधियः परस्य।

१०. °रुत्तेरे° र १. °बुद्धानु° अ २. येषामेव र ३. °मस्य अ ४. जातान्येव[ा]त्र र ५. यास्या अन्नानि अ ६. °मयमेव र ७. कार्यस्तम्भ° र ८. °भेदाभेदानु° र ९. गोपमुख- पयसम्° र १०. बाधनः अ १. °त्तामासाधारणी° र २. °क्षमस्माभि° अ ३. नकारस्त्यक्तः अ ४. क्रियाया र ५. कारिम° र

किं च येनैव रूपेण बीजमङ्कुरमुत्पादयति किं तेनैव क्षौणीक्षणमिति पर्यनुयुञ्जानाः तेऽपि पर्यनुयुज्यन्ते रूपशब्देन किमत्र विवक्षितमिति ? किं तावत् कल्पनातल्पशायिनो भिन्ना इव भासमाना धर्माः [6]कृतकत्वानित्यत्वादिवदङ्कुरेतरजनकत्वादयः स्वरूपशब्देनापि [7]लब्धव्यवहृतयः ? अथ रूपं स्वरूपं [8]स्वलक्षणं यद्भेदात् [22a] नापरो वस्तुभेदः यदधिकारेणोच्यते, यदादौ वस्तुनः स्वरूपं तदेव[9] यदि पश्चादपि प्रागिव[10] पश्चादपि न जनयेदित्यादि ?

यद्वा नैयायिकैः पत्युर्नामाविजानत्या भ्रातृशब्देन व्यवहारवत् सहकारिण एव स्वरूपशब्देन व्यवहृता रूपमित्युक्तम्। तत्र[1] प्रथमपक्षे तावन्न पर्यनुयोगसंगतिः। कल्पनानिर्मिता हि धर्माः परस्परं धर्मिणश्च सकाशाद् भिद्यमाना इव [2]भान्तोऽपि यथा प्रतिभासमसत्त्वात् प्रमाणसहतया न क्वचित्[3] क्रियायां करणभावभाजो भवितुमर्हन्ति। यदेव हि स्वलक्षणमध्यक्षगोचरीकृतमनङ्गं तत एवान्वयव्यतिरेकाभ्यामर्थक्रियानिष्पत्तिनिश्चयेऽप्यनादिवासनावशादुपजायमाने विकल्पचेतसि ततस्ततो व्यावृत्तवस्तुव्यवसायबलावलम्बिसंवादेषु[4] [5]धर्मेष्वपोद्धारेणास्यामस्यां क्रियायामयमयं धर्म उपयुज्यत इति व्यवहारमात्रमातन्यते। न तु तेषां क्वचित् करणभावः, स्वयमसत्त्वात्। विवक्षाकृतस्तु न वार्यते। यथा प्रकाशे पिशङ्गात्मनि प्रदीपेप्ययमखण्डेनैव रूपेण तमसो नाशमवकाशपिञ्जरणं च कुर्वति तथैव निश्चिते च [7]यदयं दीपः प्रकाशरूपः, ततोऽन्धकारं हरति हरिणाङ्कवत्। पिशङ्गत्वाच्च पिञ्जरणहेतुर्हरिद्रादिवदितिव्यवहारः। न च तत्र प्रकाशपिशङ्गभावौ भिन्नौ। विकल्पचेतसि तु भिन्नवद्भासमानावेकैकमपोद्धृत्य भिन्नक्रियाकरणत्वेन [8]व्यवस्थितौ विवक्षितौ, [न व्यवस्थितौ वा] ? न च विवक्षामात्रेण प्रदीपस्याकारकत्वं भेदो वा। तथा बीजस्याप्यङ्कुरजननेन रूपेण कल्पितेनाङ्कुरकरणं पृथ्वीजनकेन च तत्करणमिति व्यवहारेऽपि तत्त्वतो नैकस्याप्यनेककर्मणि निषेधो भेदोपपत्तिर्वा अक्रियैव वा। ततो विकल्पारूढरूपापेक्षयानेकेन[9] रूपेणानेककरणमिति व्यवहारमात्रं न वस्तु। वास्तवी च चिन्तेयम्। तत्[10] किमनेन विकल्पितेन, किं तेन रूपेणान्येन वेति ? विकल्पेऽपि वानेकेनैव विसर्जनं व्यवहारमात्रेण। न च कश्चिद् दोषः। द्वितीयपक्षस्त्वनेकस्वलक्षणदर्शने सत्युपपद्यते। न च बीजस्वलक्षणानि अपि[1]

---

६. कृतकानि र ७. लब्ध° इति नास्ति अ ८. स्वेति नास्ति अ ९. भेदे च अ १०. प्रागेव अ
१. तत् अ २. भ्रान्तो र ३. नेति नास्ति अ ४. संवादिषु ? ५. °ष्वपोद्धारेण अ ६. शङ्का° र
७. यदर्थं र ८. व्यवस्थितौ न व्यवस्थितौ र ९. विशेन एकैकेन र १०. ततः अ १. °स्वलक्षणानि र, अपीति नास्ति अ

सकृदेकसंख्या[२] निरीक्षाविषयः। न ह्यपरिदृष्टभूमनि मनुष्ये किमयमत्र कर्मणि नियोज्यो नरः, किमयं वेति प्रश्नावतारः।

तृतीयविकल्पे त्वयमर्थः स्यात्, येनैव रूपेणाङ्कुरं करोति किं तेनैव [३]क्षितिमिति? येनैव सहकारिणाङ्कुरं जनयति किं तेनैव भुवमिति? एतच्च कदोच्यते यदि बीजस्याङ्कुरकरणे निर्जाते[४] नियतरूपः कश्चित् सहकारी व्यापारवान् परिनिष्ठितोऽन्यकरणे सन्दिग्धव्यापारः। न चैवं शक्योपदर्शनम्।

अथैवं सति बीजस्याङ्कुरकरणे पृथ्वीपाथःप्रभृतयः सहकारिणस्त एव किं तस्य पृथ्वीजननेऽपीति विकल्पार्थः? तेनापि नोपयोगः। सर्वेषां सर्वत्र परस्परं सहकारिभावस्य सुप्रसिद्धत्वात् किमत्र प्रश्नेन? न चोत्तरः प्रबन्धोऽत्रानुरूपः। [६]नहि तदापि कारणभेदाभेदाभ्यां [22b] कार्यभेदाभेदाविति श्लिष्टता काचित्। तस्मादीर्ष्याशल्यकदर्थितनिरर्थकैः प्रलापैः परमाकुलयितुमिच्छन्ति न्यायविन्मानिन इत्यलमत्रनिर्बन्धेन[७]॥

अपि चापूर्वोऽयमसाधारणानैकान्तिककीर्तनप्रकारः। विद्यमानो हि भावः साध्येतरयोरनिश्चितान्वयव्यतिरेको गन्धवत्त्वादिवदसाधारणो युक्तः। प्रकृतव्यापकानुपलम्भबलाच्च[८] सर्वथार्थक्रियैवासतीति [९]तत् कथमसाधारणानैकान्तिकी भवितुमर्हति? [१०]असिद्धिदूषणं तु वक्तुमुचितम्। तत्र चोक्तमेव।

अथ क्षणिकत्वे व्यापकाभाव इत्युक्तम्, तत्र सर्वथासत्त्वमिति चेत्? एवं तर्हि विद्यमानैवार्थक्रिया क्षणिकादेव व्यावर्तते, ततो नियमेनाक्षणिके[१] विश्राम्यन्तीति[२] तेन व्याप्यत[३] इति विरुद्धताप्यस्तु[४]।

अथ साक्षादक्षणिके तस्या बाधकस्य साधकस्य वा विरहात् सन्देह इति चेत्? विद्यमानत्वे क्षणिकाद् व्यावृत्तिरेव साधनी तस्याः सन्देहमनवकाशयति। विद्यमानतासन्देहे च सन्दिग्धासिद्धिरेव दूषणम्।

किं च प्रकृतव्यापकानुपलम्भस्य क्षणिकवदक्षणिकेऽपि सामर्थ्यानपायात् कथं [५]बाधकसिद्धिरित्यसिद्धिरेव सर्वथायाता। शक्यं हि नित्येऽपि वक्तुं न सहकारिणि

२. सकृदनेक° अ ३. क्षितिमिति......किं तेनैवेति नास्ति र ४. कारणेनिर्जति र ५. स्वप्रसिद्ध° र ६. न कारण° र ७. अतिनिर्बन्धेन र ८. °लम्भनाच्च र ९. वासतीत कथ° र १०. प्रसिद्ध° र

१. नियमेन क्ष° अ २. °म्यन्ती तेन अ ३. व्याघात अ ४. विरुद्धताऽस्तु अ ५. बाधकासिद्धि° अ

सापेक्षस्य करणमुपकाराभावात्। न निरपेक्षस्य, तेन विना करणात्। स्थिरं च बीजमङ्कुरजनकेनैव रूपेण क्षितिमुत्पादयति भिन्नेन वेत्यादि यदा विमर्दशक्षित्यादिजन्मोपालम्भः प्रदीपोऽपि चाक्षणिक एव भवताम्[6]। तत्र वर्तिविकारतैलक्षयापेक्षेन भिन्नेन वा रूपेण क्रियेतामिति समानम्[7]। यत्तु समाधिः सहकारिण एव भिन्नाः तस्य स्वरूपभेद इति, एवं च ब्रुवता परोऽप्यात्मा आत्मापि पर इति निवृत्तेदानीमात्मपरादिशब्देभ्यः प्रतिनियतार्थप्रत्यायनप्रत्याशा[8]। न च देवदत्तस्य स्वरूपं यज्ञदत्तः शुक्लस्य वा नीलमित्युचितं कचिदेककर्मणि व्यापारेऽपि।

तदेतदपेतागमयुक्तिकं परस्पर्धयाऽभिधीयमानं नियतमुपहासभाजनीकरोति। सहकारिणोऽवधीर्य च स्वरूपशब्दवाच्यमर्थं पृच्छतः[9] सहकारिणोत्तरमिति व्यक्तं न तेन नान्येन वात्मना जनयति स्थिरोऽपि भाव इति नियतमनुज्ञातैव व्यापकानुपलब्धिः। अन्यस्यापि हि स एवात्मा जनको न स्वयमिति न कश्चिज्जनकः। तदयं स्थिरास्थिरयोः साधारणो न्यायः क्रियानिषेधसाधन इति। तस्य दृढत्वे सर्वथा क्रियैव नास्तीत्यसिद्धिरेव, अन्ततः क्रमयौगपद्यविरहलक्षणस्यापि दोषस्यापरिहारात्। स्थिरेऽपि क्रियानिवृत्तिरवश्याभ्युपेया। कथमन्यथा क्षणिके क्रियानिषेधाभिधानेन केवलेनासाधारणताप्रतिज्ञा निवृत्तिमालम्बेत ? न हि साध्याद् व्यावृत्तिरित्येवासाधारणता। अन्यथा विपक्षाद् व्यावृत्तिरित्येव किं नासाधारणत्वमुच्यते, किमियता प्रयासेन ? [1]ननु विपक्षाद् व्यावृत्त्या साध्ये नियमाद्धेतुरेव स्यादिति चेत् ? साध्याद् व्यावृत्त्या विपक्षे नियमाद् विरुद्ध एव [23a] स्यादिति समानम्। तस्मादर्थक्रियाया[:] प्रतिज्ञामात्रेऽप्यसिद्धिरेव[2]।

अथान्येन प्रकारेण उभयोरनिश्चयमात्रं सत्ताया ख्याप्यते, तथा च सत्यसाधारणता[3] युक्तैव। तदयुक्तम्। व्यापकानुपलम्भो ह्येकान्ततोऽभावनिश्चयकर एव कथमनिश्चयः ? तत्र[4] यदि नाम क्रमाद्यनुपलम्भस्य नित्यात् सत्तानिवर्तकस्य दार्ढ्यम् असंगतम्, तथापि प्रकृतस्य [5]क्षणिनित्यताबाधनस्य दृढत्वमभिप्रेतमेव, अन्यथोपन्यासायोगात्। ततः क्षणभङ्गुरात् क्रियाया ऐकान्तिकी [6]व्यावृत्तिरेव व्यावृत्तिरसाधारणतायाः। नहि गन्धवत्त्वं कुतश्चिदेकान्तेन व्यावृत्तमवसातुं शक्यम्। तदयं[7] व्या-

६. वाऽक्षणिका च भवता र ७. समानमिति नास्ति र ८. °तास्वप्र° र ९. पृत(?) र १०. प्रतिज्ञानेवृत्ति° अ १. नकारस्त्यक्तः अ २. क्रियायां...प्यसिद्धे° र ३. तथा चासाधा° र ४. तद् र ५. क्षणेनि° अ; °बाधक° र ६. °रेवव्यावृत्ति° नास्ति र ७. तदन्वय° अ

पकानुपलम्भः स्थिरेऽपि व्यापकानुपलम्भमपेक्षमाणो[८] न साधुरसाधारणतासाधने। अपेक्षमाणश्च सर्वथा क्रियामेवोन्मूलयतीत्यसिद्धिरेव न साध्यसाधनभावः[९]। तस्माद् बाह्यवेदनं बाह्यवेदकप्रमाणसिद्धां चार्थक्रियां वस्तुसतीमाश्रित्य वादप्रक्रमे तस्यासाधारणतावादिना[१०] न साध्येतरयोरेकत्र वृत्तिरेकतो व्यावृत्तिर्वोपदर्शयितव्या, किं तूभयत्र संशयमात्रं शरणीकरणीयम्। न च व्यापकानुपलम्भे संभवस्तस्य। तस्मान्न साधुरसाधारणतोपन्यास इति स्थितम्।

स्यादेतत्। यदि भिन्नकालकार्यजन्मनि जनकस्य स्वभावभेदः, तदा [१]भिन्नदेशकार्योत्पादेऽप्येष प्रसङ्गः। तदवश्यं सहकार्यपेक्षयैव[२] देशभेदः कार्याणाम्। न च किञ्चित्करः सहकारीति[३] [४]कालभेदोऽप्येषामकिञ्चित्करः सहकार्यपेक्षयैवास्तु[५]। अथोपादानभेदाद् देशभेदः? कालभेदे तु[६] नैवं शक्यमभिधातुम्। कालान्तरजन्यानामुपादानस्य स्थिरपक्षे तदानीमपि प्राप्तिसंभवात्। तस्मात् [७]कारणभेदरूपभेदनिबन्धन एव[८] कार्यस्य कालभेद[९] इति चेत्? तदपि नास्ति, उपादानसहकारिभेदस्य तत्त्वतोऽतात्त्विकत्वात्। [१०]तात्त्विकत्वेऽप्युपादेयसहकार्यभेदेन दीपादेरुपादानसहकारिभावभेदादनेकस्वभावताप्रसङ्गः। तदयमारोपितस्वभाव उपादानसहकारिभावभेदेन भेदः कारणस्य[१] कथं कार्यस्य देशभेदाय प्रभवेत्? यदि चारोपितोऽपि कारणस्य भेदः कार्यस्य देशभेदाय प्रभवेदेवं सत्यारोपित एव कारणभेदः कालभेदाय[२] कार्याणां पर्याप्त इत्यलं तात्त्विकभेदप्रत्याशया।

न चैतद् वक्तव्यम्, यथा कालभेदे यद्यदा[३] यज्जनकमित्यादि बाधकमस्ति न तथा देशभेद इति, एतादृशस्य बाधकस्य देशभेदेऽपि वक्तुं शक्यत्वात्। यथा [४]यत् यत्कार्यं तत् तद्देशं यथोपादेयाभिमतं[५], तत्कार्यं च कार्यान्तरमपीति॥

यदपीदमुच्यते,

सर्वावस्थासमानेऽपीत्यादि
[ वार्तिकालङ्कारे १. ३६६ ]

---

८. °मनपेक्ष° र ९. साधनावतारः र १०. तस्यासाधारतावादिना अ १. °स्तदभिद्ध° र २. °पेक्षैव र ३. सकारीति र ४. कालभेदेप्ये° अ ५. करसहकार्यपेक्षैवा° अ ६. काले तु र ७. कारणरूपनिब° र ८. एवेति नास्ति र ९. कार्यकाल° र १०. °त्वेक्षयादेव र १. भेदकारणस्य र २. °भेदः काल° इति नास्ति र ३. भेदे यदा र ४. यथेति नास्ति अ ५. °देयमभि° र

तत्रापि[6] शक्यमेवं[7] पठितुम्

सर्वदेशसमानेऽपि कारणे यद्यकार्यतेत्यादि ।

अथ कारणस्य वैभवाभ्युपगमे स्यादेष दोषः। तदभावे [23b] तु[8] किंकृतमस्य सर्वदेशसमानत्वम् ? एवं तर्हि देशान्तरेऽपि कार्यं[9] न कुर्यात्, तत्र स्वयमप्रवृत्तेः[10]। योग्यतामात्रेण तु तद्देशवृत्तिमनपेक्ष्य तत्र कार्यकारिणः समानोऽस्य देशः[1]उपकारस्यैकतोऽप्यलाभात्। तस्मात् तद्देशे करोतीति न स्वापेक्षया देशस्याधारभावः, किं तु कार्यापेक्षया। अयोगव्यवच्छेदेन च तत्करणम्। अन्यथा देशान्तरवतः कार्यस्य करणप्रसङ्गात्। एवं तर्हि काले करोतीति स कालः[2] कार्यस्यैवाधारो नियमेन। हेतोस्तु स चासच्च स्यात्। अयोगव्यवच्छेदेन [3]त्वेककालकार्यकरणमिति कालान्तरवतोऽपि कार्यस्य करणमविरोधि[4]। तस्मात् कुशूलादिसर्वावस्थासमानस्वभावस्यापि [5]तदतत्कालकार्यजननमुपपन्नम्, भिन्नदेशानेककार्यार्जनवदिति ।

तदेतन्न सङ्गतम्, [6]बाधकभावाभावाभ्यां विशेषात्। यत्तु तत्कार्यत्वं तद्देशतासाधनायोपन्यस्तं तद्विपर्ययबाधकप्रमाणाभावादसाधनमेव । अन्वयव्यतिरेकसमधिगम्यश्च[7] कार्यकारणभावः। तौ च यथा तद्देशकार्यजन्मनि दृष्टौ[8] तथा भिन्नदेशकार्यसंभवेऽपि। न चैवं स्थितेनापि[9] कारणेन सह तत्कालकार्यस्यान्यकालकार्यस्य[10] वान्वयव्यतिरेकौ समानाविति युक्तम्। कालान्तरेऽपि तदेव कारणमनुवर्तत इति न प्रत्यभिज्ञातोऽन्यत्प्रमाणम्, सा च दूषितेति कथं स्थिरेणान्वयव्यतिरेकग्रहणं कार्याणां कालभेदवतामिति नायं न्यायः समानः। ततो विपर्ययबाधकविकलतया देशभेदे[1] भेदसाधनो हेतुर्यदि स्वसाध्यसाधनसमर्थः किमायातं तद्बलवतः कालभेदे भेदसाधनस्य। नहि [2]वृषभस्यादोह्ययोग्यत्वे धेनोरपि तथेति युक्तम्।

अस्तु वा देशभेदेन भेदसाधनस्यापि विपर्ययबाधा बलम्, कालभेदे भेदसाधनस्य तु किमेतावता दूषणम् ? अनैकान्तिकत्वमुपपाद्यत इति चेत् ? किमयं मन्त्रपाठः ? कदाचिज्जननसमर्थस्याजननस्यान्वयदर्शनात्[3] सन्दिग्धविपक्षव्यावृत्तिकत्वमभिमतमिति चेत् ? तथापि किमनेन श्रमेण ? समर्थं च स्यात्, न च जनयतीतीयतैव तत-

६. अत्रापि अ ७. °मेव अ ८. च अ ९. कार्यमिति नास्ति र १०. °मप्रवृत्तेः र १. उभयस्यैक° अ २. तत्काल(:) र ३. चैक° र ४. विरोधिते र ५. तदत्कार्य° अ ६. °भावभावा° र ७. °गम्याश्च र ८. जन्मिभिर्दृष्टौ र ९. क्षितिनापि र १०. °स्यान्यकालकार्य° इति नास्ति र १. भेदे इति नास्ति र २. वृषस्य अ ३. °स्यानुप° र

सिद्धेः। देशोदाहरणेन[4] संशयपुष्टिः क्रियत इति चेत्? यदि विपर्ययबाधा बलमस्य[5] न पुष्टयापि संशयमनुल्लङ्घयन्त्या [6]किञ्चित्, विपर्ययबाधावैधुर्ये तु संशयमात्रेणापि हेतोर्विपर्यासनात् किमपरं पुष्ट्या[7]? यदि च तन्मात्रं विवक्षितम्, तदा विपर्ययबाधकेन निरस्तेऽस्मिन् किं पुनरुपन्यासेन?

अथ कालदेशयोः सर्वत्र समानन्यायोपलब्धेरेकयोगक्षेमत्वाद् देशभेदवदेव[8] कार्यणं कालभेदवतापि न [9]हेतुभेद इत्युच्यते? तदप्ययुक्तम्। तथाहि न परमाणोः कालव्याप्तिसदृशी देशव्याप्तिरिष्यते नित्यवादिभिः। नापि विद्यु[24a]दुद्योतस्य[10] देशव्याप्तिसदृशी कालव्याप्तिरेवं [1]घटादेरपीति कथं सर्वत्र समानन्यायता? न चान्यत्र समानन्यायतादर्शनेऽपि सर्वत्र तथा भावः, प्रस्तुते वैपरीत्यसंभवे बाधकाभावात्॥

उपादानभेदाच्च देशभेदे यदुक्तमुपादानसहकारिभावोऽवान्तर[2] इति, तदप्ययुक्तम्। यद्यपि विकल्पे प्रतिभासमानौ [3]तावुपादानसहकारिभावौ [4]भिन्नाविव न वस्तु, तथापि वस्तुनस्तत्तद्व्यावृत्तिसंभवान्नावास्तवव्यवस्था, अन्यान्यापेक्षया च न विरोधः। यथैकस्यान्यान्यापेक्षया पितृपुत्रत्वस्य न वास्तवत्वं, न च[5] विरोधः। न च रूपद्वयेन कार्यद्वयस्य करणम्, येन कल्पनाभासिनो[6] रूपयोरवास्तवत्वात् द्वयाकरणम्। यथा चैकरूपेण द्वयाकरणं[7] तथा स्वोपादेयं स्वदेशे परोपादेयं च परदेशे करोतीति उपादानभेदादुपपन्नोऽपि[8] देशभेदः। यतश्च नारोपितस्वभावभेदादेव देशभेदः कार्यस्य, किं तु स्वोपादेयं स्वस्वदेशं[9] जनयद्भिरेवार्थाद् [10]भिन्नदेशं सहकार्यं कार्यमिति न्यायः। ततो न [1]विकल्पितस्वभावभेदादेव [2]भिन्नकालकार्यकरणमभिन्नस्य, बाधकसामर्थ्येन[3] भेदसाधनात्। अत एव न सर्वदेशसमानत्वं कारणस्य। स्वसहकार्युपादेये हि सहकारिता अस्य, तस्य च कार्यस्य स्वोपादानदेश एव संभवात् तत्रैव अस्य [4]सहक्रियासामर्थ्यं न देशान्तर इति कथमस्य सर्वः समानो देशः कुतश्चिदुपकाराभावेऽपि?

यच्चोक्तम्, कार्यस्यैव स काल आधारो[5] नियमेन, हेतोस्तु स चासन्नेति, तदपि देशसाम्येन प्रतिहतम्। तथाहि[6] यथैकदेशस्थ[7] एव हेतुर्भिन्नदेशानि कार्याणि करोति,

४. देशोपहरणेनु° र ५. बलस्य प्रथापि अ ६. न किञ्चित् अ ७. प्रष्टा अ ८. °वतेव अ ९. नाहेतु° र १०. विद्युउद्योतस्य अ १. घण्टा° र २. °वास्तव° र ३. तादुत्त्व (द्गु) र ४. मावो भिन्नो विधन र ५. चकारो नास्ति अ ६. °भाविनो र ७. कारणं र, °द्वयकरणं अ ८. अपीति नास्ति र ९. देयस्वस्वदेश° र १०. °रेवाद्भिन्नभिन्न° र १. कल्पित° अ २. °काल इति नास्ति र ३. सामर्थ्यो न र ४. सहेति नास्ति र ५. आधारे अ ६. यदाहि र ७. °देशस्थं र

तथा एककालस्थ एव भिन्नकालानि कार्याणि करोतीत्यप्राप्यैव कार्यकालं[8] देशवत्। ततश्च कदाचिज्जातनष्टोऽपि सहकार्यपेक्षया सकलकालकलितानि[9] कार्याणि कुर्यादिति स्थाने संभूयैकार्थकरणप्रतिज्ञानिर्वाहः।

अथ देशमपि कार्यस्य प्राप्यैव जननान्न देशदृष्टान्तसिद्धिरिति चेत्– न, पुरुषान्तर्भुवो[10] ज्ञानस्य देशप्राप्तेरभावाद् दीपस्य ज्ञानाधिकरणस्यात्मनः प्रदीपसंयोगेऽपि न ज्ञानसुखादिसंभवदेशे [1]देहान्तःप्रभाप्रवेशावकाश इति काशकुशावलम्बनमेतत्। यश्चायं तद्देशत्वसाधनस्तत्कार्यत्वहेतुरुपन्यस्तः, स न स्वतन्त्रः, प्रतिबन्धाभावाद्। भावेऽपि नास्माकं क्षतिरित्युक्तम्॥

न च प्रसङ्गो भवितुमर्हति, तत्कार्यतायाः प्रमाणसिद्धत्वेन परोपगममात्राभावात्, विपर्ययपर्यवसायिताविरहाच्च[2]। तदाहि [3]न च तद्देशत्वमतस्तत्कार्यत्वमपि नास्तीति स्यात्, न चैवं शक्यम्। शक्यत्वेऽपि नास्माकं मूलप्रसङ्गयोः क्षतिः। न चोक्तदोषः, यतो जननसामर्थ्यमन्यदा परोपगममात्रेणैव, न प्रमाणात्। विपर्यये च जननाभावः प्रमाणसिद्धः[4] क्षणान्तरे तत्का[24b]र्यसामर्थ्यं निवर्तयन् जलधरस्य [5]अन्यक्रियाक्रियापक्षयोर्द्वयोरपि क्षणभङ्गं साधयतीति सपक्षे भावान्न विरुद्धः सत्त्वहेतुरिति।

अन्वयाधिकारो नाम द्वितीयः पादः।

---

८. प्राप्यै कार्यकारणं र ९. °कलिकलितानि र १०. पुरुषान्तभवो र १. 'देश देहा° भ
२. विरहात् र ३. न चद्देत्तद्दे° भ ४. प्रसिद्धः र ५. क्रिया' इति नास्ति र

# क्षणभङ्गाध्याये

## तृतीयः पादः—व्यतिरेकाधिकारः

नाप्यनैकान्तिकशङ्का, सर्वोपसंहारवत्या व्याप्तेः प्रसाधनात्। ननु विपर्ययबाधकप्रमाणवशाद्[1] व्याप्तिसिद्धिः, तस्य[2] च नोपन्यासवार्ता। तत् कथं व्याप्तिः प्रसाधितेत्युच्यते ? [3]तदेतदुपरिपरिप्लवमानतरलतरबुद्धिविलसितम्। तथा ह्युक्तमेतत्, कर्तुः सा न क्रिया अन्यदापि, किं तु परक्रिया अक्रियैव वा। अतएव[4] प्रकारद्वयेऽपि क्षणभङ्गस्य सङ्गतिरवश्यम्भावस्तन्मात्रानुबन्ध इति यावत्। तत्र प्रसाधितमतः साध्येन व्याप्तैव सा अर्थक्रियाशक्तिरिति।

नन्वेवमन्वयमात्रमस्तु, विपक्षात्पुनरेकान्तेन व्यतिरेक इति कथं लभ्यमिति चेत्? व्याप्तिसिद्धेरेव। व्यतिरेकारेके व्याप्तिसिद्धिरेव कथमिति चेत्— न, द्विविधा हि व्याप्तिः, अन्वयरूपा च कर्तृधर्मः साधनवति धर्मिणि साध्यस्यावश्यम्भावो यः, व्यतिरेकरूपा च कर्मधर्मः साध्याभावे साधनस्यावश्यमभावो यः, व्याप्तिर्व्यापकस्य तत्र भाव एव व्याप्यस्य वा तत्रैव भाव इति न्यायात्। [5]एनयोश्चैकसिद्धिर्नियमेन द्वितीयप्रतीतिमाक्षिपति। अन्यथा एकस्याप्यसिद्धेः। केवलं साक्षादेकत्र प्रमाणव्यापारोऽन्यत्र नान्तरीयकतया प्रतीतिरिति [6]तावतैवैकव्यपदेशः। तथा च सत्येकत्र प्रमाणप्रवृत्तेः पूर्वमन्यत्र संशयः प्रवर्तमानोऽपि पश्चात्तन्य।[7] तथा निरस्यते। यथा विपर्ययबाधकप्रमाणवादिनामन्वयः सन्दिह्यमानोऽपि विपक्षादेकान्तेन व्यावृत्तिबलात् निरस्तसंशयः पर्यवस्यत्यक्षणिके सर्वथाऽनुपपद्यमानेयं सत्ता क्षणभङ्गनियतैवेति, एवं सत्तावतः प्रतिक्षणं नियतस्वभावभेदोपस्थापनात् तदभावेऽपि सत्तासंशयक्षणः पूर्वप्रवृत्तोऽपि स्वयमेव परिगलति[8]। क्रियावता चेदवश्यं क्षणभङ्गुरेण भाव्यम्, क्षणिकत्वव्यतिरेके न [9]भवत्येव नियतं सत्तेति।

---

१. °बाधप्र° र २. सिद्धस्तस्य र ३. °दुपरिप्लव° र ४. अत्र च र ५. एतयोश्च र. ६. °तैकैक° र ७. पाठोऽस्पष्टः अ ८. परिगवति र ९. संभवत्तेन निय° र

यदि तु तदभावेऽपि स्यात्, तदा तस्यां सत्यां नियमेन क्षणिकत्वमित्यन्वयोऽपि कथम्? तस्मात् साध्याभावे साधनस्यैकान्तिको व्यतिरेकः, साधने सति साध्यस्यावश्यमन्वयो वेति न कश्चिदर्थतो भेदः। प्रमाणव्यापारस्तु मुख्यतोऽर्थतश्चेति द्विधा व्यवहारः। अतएव यत्र यत्र साध्यविपर्यये बाधकप्रमाणपर्येषणा[10], तत्र साधने सति साध्यान्वयः[1], साधकप्रमाणपर्येषणापि तयोपलक्षिता वेदितव्या। विपर्ययबाधकशब्देन पुनरुभयसंग्रह एव। व्यतिरेकरूपव्याप्तौ हि साध्यविपर्यये बाधकं साधनस्य, अन्वयरूपायां तु साध्यविपर्ययस्य बाधकं साधने सतीति। तदुभयाभावे[2] साधनस्य साध्यप्रतिबन्धानुपपत्तिरित्ययमर्थः। अन्यथा व्यतिरेकनिश्चायकप्रमाणस्य साक्षादलाभेऽपि[3] यदि [4]साधनस्य साध्येनान्वय[25a]नियमप्रसाधकं[5] प्रमाणमुपदर्शयेत्, कस्तस्य [6]साध्यसिद्धौ प्रतिबन्धो व्यतिरेकस्यान्वयस्यापि सामर्थ्याक्षेपात्[7]। अन्यथा साधर्म्यप्रयोगोऽनुपादेय एव स्यात्, साक्षाद् व्यतिरेकानुपदर्शनात्। तद् यदि सामर्थ्यगम्योऽपि[8] न व्यतिरेकात्मा, तदाऽपि यत्र यत्र साधनं तत्र तत्र साध्यमितीयतैव साधने सति[9] [10]साध्यप्रत्याशाप्रयुक्तः कृती[1] कृतार्थः। तदभावेऽभाविन्यपि हि साधने सति[2] यदि तद्भावेऽवश्यंभावि साध्यं तदा फलितः[3] साधनस्वीकारः। तस्मात् साधनवादिना[5] द्वयमपि पर्येषणीयं विकल्पेन, वादिना चैकोऽपि प्रकारः प्रमाणसिद्ध उपदर्शयितव्यः, परसाधनेषु च व्यतिरेकवदन्वयोऽपि नियमवान् दुर्लभ एवेति वेदितव्यम्।

अस्माभिस्तु प्रकृतसाधने नियमवानन्वयः प्रसङ्गविपर्ययाभ्यां पौरस्त्याभ्यां दर्शित एव, तौ च यद्यपि सपक्षीकृते जलभृति प्रवर्तितौ, तथापि यो यत्करणस्वभावः स तज्जनयत्येव, यो यन्न जनयति न स तत्करणस्वभावः, इत्येवं प्रवर्तमानौ सर्वमेव[6]क्रियाशक्तियुक्तं क्षणिकत्वे नियतं दर्शयत इति सर्वोपसंहारो व्यतिरेकाक्षेपबीजं धूमादिवत्। यथा चाध्यक्षं धूमस्य धूमध्वजेन व्याप्तिं प्रतियतो [6]न वह्नेर्महानसे सत्तामुपसंहरत्[7] प्रत्येति, तथा जलभृति क्षणिकतां प्रतियदेव[8] यथोक्तानुमानं सामान्येन क्रियावतः साधारणन्यायतया क्षणिकतया व्याप्तिमातनोतीति। यदुक्तं

---

१०. °धर्मोषण° अ १. °न्वयसाधक° र २. °दुभयभावे र ३. अपीति नास्ति अ ४. यदैव र ५. अन्वयमप्रसाधक° र; प्रभावक° अ ६. साध्यमितौ र ७. °स्यायसामर्थ्या° र ८. °न्वयदर्श° अ ९. अपीति नास्ति र १०. साति र १. पाठोऽस्पष्टः अ २. प्रयुक्तकृती अ ३. सतीति नास्ति र ४. फलिनः र ५. °वादिनि र ६. नर्ह्वे र ७. संहरता र ८. प्रतिपदेव र

प्राक् न सत्त्वादन्यदनुमानमस्थिरसिद्धौ यतोऽनवस्था न स्यादिति, तदपास्तम् यथोक्तप्रसङ्गविपर्ययोरपि[९] तत्साधकत्वादिति।

यद्येवमनर्थकः सत्त्वहेतूपन्यास इति चेत्? ब्रूमः। किं हेत्वन्तरसत्तामात्रेण वन्ध्यं साधनान्तरं, [१०]उत पक्षीकृते तस्याप्युपन्यासात्, अथोपन्यसितुं शक्यत्वात्, [१]यदि वावश्योपन्यसनीयत्वात्, यद् वा यदर्थकारि[२] तदवश्यं क्षणिकमिति व्याप्तिसिद्धौ जलधरवत् क्षितिधरादेरप्यर्थकारिणः क्षणभङ्गसिद्धिरिति पक्षाः।

तत्र प्रथमस्तावत् न युक्तः, अनेकसाधनसंभवेऽपि विवक्षोपनीतस्यैव[२] परोपयोगात्[३]। अतएव शक्योपन्यासत्वमपि नानर्थक्यहेतुः, तादृशस्याप्युपन्यासात्[४] प्रागप्रागल्भ्यात्[५]। साध्यधर्मिण्युपन्यासश्चासिद्धौ दृष्टान्तधर्मिमात्रे उपन्यासात्। अतएव पक्षेऽवश्यमुपन्यासापेक्षाप्यसिद्धा, तद्बलाद् व्याप्तिसिद्धौ संश्चायं चपलचामर[६] इत्येतावतैव साध्यसिद्धेः। अन्तिमस्तु दोषः सर्वत्र सर्वोपसंहारवत्यां व्याप्तौ असिद्धायां[७] शङ्कामवकाशयति, न च तत्र विपर्ययबाधकस्यापि[८] विशेषः, केवलं[९] सामान्येन क्रियावति क्षणभङ्गितया[१०] व्याप्तेः सिद्धेऽपि विशेषे प्रवृत्त्यर्थिनः सद्येदमित्यवश्योपन्यसनीयत्वादिति किमत्र निर्बन्धेन? ननु तथापि दृष्टान्तधर्मिणि तावत्तदनुमानमवश्याश्रयणीयं व्याप्तिसाधनाय, [25b] तदेव च[१] क्षणभङ्गसाधनं स्वधर्मिणः, एवं सति साध्यधर्मिण्यपि तदुपन्यस्यैव निर्वृतिरालम्ब्यताम्, किमियता प्रयासेन विभागेन तदनुमानावतारणम्? तेन च व्याप्तं सत्त्वं प्रतीत्य सत्त्वात् [२]पक्षे क्षणभङ्ग इति।

यद्येवं विपर्ययबाधकप्रमाणवादिनोऽपि समानः पर्यनुयोगः, तेनापि यद् यद्‌ यज्जननस्वभावमित्यादिप्रयोगस्य व्याप्तिसिद्धावपेक्षणात्, साध्यधर्मिणि सामर्थ्यानपायाच्च तस्य। तस्मात् प्रतिपत्तुः प्रवृत्तिभेदमाश्रित्य विभागोऽत्र कर्तव्यः, यो हि प्रतिवस्तु यो यज्जननसमर्थः इत्यादिकमवतारयन्[३] क्षणिकतापरीक्षणक्षमः, तस्य तत एव क्षणभङ्गसिद्धिः किमन्यहेतुना? एवं परप्रतिपादनेऽपि प्रत्येकवस्तुषु तथैव साधयतः कृतमन्यहेतूपन्यासेन।—यस्तु तदपेक्षया प्रतिबुद्धबुद्धिः स एकत्र तत्साधनव्यापारेण

९. चपि (? चापि) र १०. °मुभयस्वीकृत तस्या° र १. ‹यदि वा (?) २.—यदर्थकानि र
२. हि पक्षोप° र ३. योगी(? गि)ता र ४. °स्योपन्या° र ५ प्राक् र ६. °वासर° अ
७. असिद्धायामिति नास्ति र ८. विपर्याबाकस्यापि अ; 'विपर्यवा(?य)बाधक° र ९. केवल° अ
१०. °भङ्गतया अ १. चकारो नास्ति अ २. सत्त्वातयाक्षण° र ३. °मनवता° अ

न्यायेन[४] सर्वस्य क्रियावत इयमेव गतिरिति क्षणिकतया तद्व्याप्तिमनवधारयन् प्रत्येकं तन्न्यायावतारणप्रयासमनाविशन्नेव यथा स्वयं[५] यं यमर्थक्रियासमर्थं[६] पश्यति, तं तमस्थिरं स्थापयतीति सत्त्वहेतोरुपयोगः, तथा परप्रतिपादनेऽपि तन्न्यायसिद्धव्याप्तिकं सत्त्वमेव व्यापारयतीति न दोषः। तदत्र प्रतिवस्तु तन्न्यायावतारणप्रयासः असह्य एव। अगतिकतया त्वाद्यः प्रतिपत्ता तमेवाश्रयेत्। द्वितीयस्तु सप्रज्ञतया[७] एकत्र प्रवृत्तेन तन्न्यायेन झटित्येव क्रियामात्रमस्थैर्यपरतन्त्रमवधारयन् सत्त्वेनैव परमपि प्रतिपादयति, न तु तन्न्यायस्य क्वचित् क्रियावति क्षणभङ्गसाधनसामर्थ्य[८]प्रतिघातः, नापि सत्त्वादिसाधनवन्ध्यतैव,[९] साध्यधर्मिण्यप्रवर्तिततन्न्यायप्रत्युपन्यासादित्यलं[१०] बहुना।

तदेवं व्याप्तिर्व्यापकस्य व्याप्यवति भाव एवेति कर्तृधर्मान्वयरूपव्याप्तिसंपादितसामर्थ्यादेव सत्त्वहेतोः क्षणभङ्गसिद्धिरप्रतिहतेति किमत्र विपर्यये [१]बाधकप्रमाणोपन्यासेनेति समर्थितम्? अतएव तदुपन्यासाशक्यतापि न पीड़यति[२], विपर्ययस्यैव बाधकेन साध्यस्य सिद्धत्वात्। शास्त्रेऽपि प्रथमनियमे च व्याप्तिरन्वयरूपा बीजादिवदनेकान्तपरिहारव्याजेन[४] विस्तरतः प्रसाधिता। स्फुटतरमनुद्भेदात्तु व्यतिरेकलक्षणायाः परिकरमात्रमेतदारोपयति लोक इति॥

अत्रापि तीर्थिकवचनविक्रान्तिकृतं कौतुकमस्ति व्यतिरेकरूपायामेव व्याप्तौ। तदापि

नाप्येकैव विधाऽन्यदापि

किं तु[५]

परकृद्[६] वा भवेत्

स्थिराभिमतयान्यदा पूर्वं पश्चाद् वेति क्रमनिर्देशः।

नैव क्रिया वा भवेत्

अन्यदा नैवेत्यवधारणान्न पूर्वं[७] नापि पश्चात् क्रियेत्यक्रमनिर्देशः, यदि तु प्राक्

४. न्यायेनेति नास्ति अ ५. यं यमिति नास्ति र ६. समर्थः र ७ यदाज्ञतया अ
८ °मानर्थ्यं अ ९. पाठोऽस्पष्टः अ १० प्रवर्तित न्याय° र १. बधिक र २. पीडति अ
३. साध्यसिद्ध° र ४. बीजादिनेकान्तरर° र ५. किन र ६. कृत्वा र ७. °णानुपर्वं अ

पश्चाद् वा स्यात् कदाचित् क्रिया, तदा क्रम [26a] एवेत्यसङ्कीर्णमनयोर्लक्षणमाख्यातं भवति। यद्यपि चैकस्या एव समसमयां क्रियामपेक्ष्य यौगपद्यं भिन्नसमयमपेक्ष्य क्रमः, तथाप्यपेक्षणीयभेदादसङ्कर[8] एव पितापुत्रवत्। अक्रियाग्रहणेन च [9]वस्त्वभाव एव वा सर्वथास्तु, क्रियाशून्यं वा स्वरूपमवशिष्यतां मतभेदेन, नात्र निर्बन्धः। तत्र नाप्येकैवेति पूर्वपरयोरेकत्वमात्रविवक्षया जातिनिर्देशः, पूर्वा परा वा पुनरेकानेका वा[10] क्रिया स्यात्। एकदा क्रियापक्षे चोभयमप्यक्रमशब्दवाच्यतां [1]नातिपतति। तत्राप्यनेकक्रियैव तात्त्विकी, पुञ्जात्पुञ्जोत्पत्तेस्तात्त्विकत्वात्। [2]शङ्कामात्रेणानवक्लृप्त्या वा एकक्रियाभिधानम्। अतएव यौगपद्यशब्देन तस्याप्युपलक्षणादक्रमसंगृहीत एवार्थो यौगपद्यपदेऽप्यवगन्तव्यः[3] शास्त्रे। एतस्य च कार्यगतस्य प्रकारद्वयस्य कर्तुः क्षणभङ्ग एव सङ्गतिरित्यत्यन्तीभावावधारणया[4] वृत्त्या नित्याद् व्यावृत्तिरुक्ता। प्राधान्येन क्षणभङ्गसङ्गतिरित्यक्षरं तु नित्यादिव क्षणिकादपि सा व्यावृत्तिः[5] शक्नोति लक्षयितुम्। अथवा व्याप्यस्य वा तत्रैव भाव इत्यनुकरणार्थम्। एतेन नित्यस्य क्रमयौगपद्याभ्याम् अर्थक्रियाविरोधात् तल्लक्षणं सत्त्वमवहीयते, अतः क्षणिकत्व एव विश्राम्यति तेन[6] व्याप्यत इति क्रमयौगपद्यलक्षणव्यापकानुपलम्भात् विपर्यये बाधकात् सत्त्वस्यार्थक्रियाशक्तिलक्षणस्य क्षणिकत्वेन व्याप्तिसिद्धिरित्युक्तं[7] भवति। तत्र कर्तृधर्मो यदार्थक्रिया, तदार्थक्रिया शक्तिरिति वा व्यवहार एकार्थः। केवलं कर्मधर्मस्य[8] क्रमयौगपद्याभ्यां व्याप्तौ कथं कर्तृधर्मस्य व्याप्तिव्यवहार इति स्यादाशङ्का। तत्रापि क्रमाक्रमिककार्यविषयतया व्याप्यमाना कारणशक्तिः क्रमाक्रमव्याप्तेत्युच्यते व्यवहारलाघवार्थमिति ॥

एतेन कृत्वा करणलक्षणं क्रममाश्रित्य क्षणिकादयं क्रमो निवर्तयितुं शक्य[9] इत्यसारप्रबन्धं त्रिलोचनचोद्यं[10] निरस्तम्। अर्थक्रियाविरोधादित्यत्र चार्थक्रिया कर्तृधर्म एव वेदितव्यः, तल्लक्षणं सत्त्वमिति वचनात्[1]।

अथवा लक्षणमुपलक्षणं न स्वभाव इति कर्मधर्मोऽप्यस्तु। तदत्र पक्षे क्रमाक्रमाभ्यामुपलक्षितार्थक्रिया नित्यस्य[2] विरुध्यत इत्यर्थः। प्रथमपक्षे तु क्रमाक्रमेणोपलक्षितार्थकारित्वं नित्यस्य विरोधीत्यर्थः। क्रमयौगपद्याभ्यामिति तु [3]विशेषणान्न

८. °क्ष्य यौगपद्यमित्यतः क्रमस्तथाप्यपे° इति भागः पतितः र ९. वस्तुभाव र १०. °रेका वा र
१. °तार्थीति अ २. °पात्रेण° र ३. तस्या अप्यप° र ४. °न्तन्तीभा° र ५. साध्यावृत्तिः र
६. °भ्यत्तेन र ७. °रितीत्यु° र ८. धर्मधर्मस्य र ९. शक्येति नास्ति अ १०. °चनाद्यं अ
१. तल्लक्षण... वचनादिति नास्ति र २. नित्यस्येति नास्ति र ३, °पणान्नर्थो (?) शे° अ

शेषाभ्यनुज्ञाशङ्का, हेतुत्वार्थमुपादानात्। 'यस्मात् क्रमाक्रमाभ्यामेवार्थक्रिया ततो[४] नित्यस्य विरोधिनी, क्रमाक्रमातिक्रमादित्यर्थात् ॥

कः पुनरत्र विरोधः? न तावत् सहानवस्थानमुभयोवस्तुत्वप्राप्तेर्नित्यं सदेव स्यात्[५]।

नापि द्वितीयः। नित्यं हि तद्विपरीतेनानित्येन[६] विरुध्येत[७]। क्रमाक्रमव्योप्ता [८]चार्थक्रिया अनर्थक्रिययैव[९] विरुध्यत इति चेत्? प्रमाणबलेन नित्येऽत्यन्तं [१०]तस्या बाधसाधनाद् विरोध एव प्रमाणान्तरबाधाद्वेति।वचनात्। वस्तुतस्तु परस्परपरिहार एव निष्ठास्यति[१]। किं [26b] पुनः प्रमाणं [२]अक्षणिकेऽर्थक्रियाबाधकमिति चेत्? यद्यत् क्रमयौगपद्यवत्यामर्थक्रियायां नोपयुज्यते तन्नार्थक्रियाशक्तम्, यथा[३] हरिपदारविन्दम्। नोपयुज्यते च नित्याभिमतो[४] भावः क्रमाक्रमधर्मिणि कर्मणीति व्यापकानुपलम्भः। न हि क्रमाक्रमाभ्यामन्यः प्रकारोऽस्ति, येनार्थक्रियासंभावनायां ताभ्यामव्याप्तिरस्या भवेत्। तस्मादर्थक्रियामात्रानुबद्धतया तयोरन्यतरस्य प्रकारस्य उभयोरभावे चाभावात्ताभ्यामस्या व्याप्तिसिद्धिरिति पक्षीकृते तयोरभावे चार्थक्रियाशक्त्यभावसिद्धौ[५] नानेकान्तस्तावत्[६]।

तत्र यत् शङ्करः क्रमाक्रमाभ्यामर्थक्रियानिषेधे प्रकारान्तरेण संभावयन्नाह– न च तृतीयस्य प्रकारान्तरस्याभावसिद्धिः, विशेषनिषेधस्य शेषाभ्यनुज्ञाविषयत्वादिति, तन्निरस्तम्। [७]हेतुत्वार्थवचनेन यत्तूपलभ्यस्वभावत्वे नात्यन्ताभावसिद्धिरुपलभ्यस्वभावत्वादेव पटादिवत्[८], अनुपलभ्यस्वभावत्वे तु नासत्तानिश्चयो विप्रकर्षिणामिति कथं प्रकारान्तराभावनिश्चयस्तन्निमित्तायोगादिति विप्लवते[९]? तत्र यद्यादरः, हन्त हतः [१०]प्रकारेयत्तापरिच्छेदद्वारेण तत्त्वव्यवस्थाननिबन्धनः स्वर्गापवर्गमार्गानुष्ठानभेदः। यदा हि प्रकारद्वये तृतीयः शङ्क्यते, त्रये चतुर्थश्चतुष्टयादौ पञ्चमादिः, तदा सर्वत्रानन्त[१]प्रकारत्वे [२]प्रकारद्वयत्रयादिनियमकृतं तत्त्वव्यवस्थानं कुतः[३], यथा चत्वारि प्रमाणानि, षट् पदार्थाः? यदा च प्रमाणप्रकारशतमन्यदपि संभाव्यते, तदा चतुर्भिर्यन्न सिद्धं तदन्येन सिद्धं, चतुःसिद्धं चान्येन बाधितमिति कथं तद्द्वारेण तत्त्वव्यवस्थितिः[४]?

---

४. °क्रियातो र ५. न्स्यात् र ६. नित्येना° र ७. विरुध्यत° र ८. घार्थ° र ९. °क्रियैव र १०. तस्या इति नास्ति अ १. निष्ठस्येति र २. क्षणिके° अ ३. यदा र ४. °मते अ ५. °रभावार्थ° र ६ नानेकान्तम्भवेत् र ७. °त्वे च र ८. घटादि° र ९. °ति विप्लवते इति नास्ति र १०. °रेयता° र १. °त्रानिमित्त र २. द्वये र ३. स्यास्थानं र ४. व्यवस्थितिः र

एवं यदार्थसहस्रे द्रव्यादिव्यतिरेकिणि सिध्यति तत्त्वपरिनिष्ठाविप्लवात्[५] किमभ्युदय-निःश्रेयसयोर्वात्माऽनुष्ठेयमस्तु[६] ? कथं चानित्यस्य[७] ज्ञानकारित्वाकारित्वपक्षौ दूषयित्वा[८] निवृत्तमनेन स्वयमेवंप्रकारेण[९] प्रकारशतस्य निषेद्धमशक्यत्वात् ?

किं च पशवोऽपि यदयुक्तं पश्यन्ति न तदेव तदाचरन्तीति कथमनेन साहसमिदं-मनुष्ठितम्[१०] ? अनुपलब्धेर्देश्यविशेषणापेक्षानपेक्षाभ्यां प्रकारद्वैतं नियम्य क्रमाक्रमाभ्यां द्वैतनिराकरणं[१] नाम, प्रकारान्तरस्योपदर्शयितुमशक्यत्वादिति तु क्रमाक्रमेऽपि द्वैत-वादिनां नाशक्यम्। तस्मात् किमप्ययं जल्पमहोदधिनामपरिपुष्टये [३]विचेष्टताम्, एकनिषेधेनापरविधाने तावदशक्याभिधानः प्रकारान्तरसंभवः ?

किं च एककालक्रियानन्तरं क्रियान्तरस्य भावे क्रमव्यवहारोऽभावे चाक्रम इति भावाभावयोरपि तृतीयशङ्केति महत्तार्किकत्वम्, तदलं निर्बन्धेन। स्थितमेतत् क्रमाक्रमाभ्यामर्थक्रियाशक्तेर्व्याप्तिरेवेति।

यदपि त्रिलोचनः, कश्चित् सहकारिप्रत्ययः प्रत्यक्षः। परोक्षश्चेतरः। [27a]ततः प्रत्यक्षपरोक्षसहकारिप्रत्ययसाकल्यमसर्वविदा प्रत्यक्षतो न शक्यं प्रत्येतुम्। तथा च सति तादृशसहकारिप्रत्ययसाकल्यवतः[४] क्रमयौगपद्यस्यात्यन्तपरोक्षत्वात् तेन व्याप्तं सत्त्वमपि परोक्षमेवेति कथं प्रतिबन्धः प्रत्यक्षेण[५] सिध्यतीत्याह, तदपि निरुपयोगम्। कार्यधर्मौ हि क्रमाक्रमौ प्रतिपादितौ। ततः कारणसामग्र्याः साकल्यासाकल्यनिश्चया-भावेऽपि क्रमयौगपद्यनियमः कार्याणामध्यक्षगोचर[६] एव। एकदैव [७]कार्योत्पत्तिरन्य-दापि नेति कथमगोचरः प्रत्यक्षस्य ? तदापि[८] हि कार्यमेकमनेकं वा स्यात्। प्रत्यक्षेण वा तथा गृहीतमनेकसंभवेऽपि चैकं गृहीतमस्तु, सर्वथा[१०] क्रमाक्रमाभ्यामेव व्याप्ता कार्यनिष्पत्तिरिति सिद्धमेतत्।

ननु क्षणभङ्गपक्षे नार्थक्रियाप्रतीतिः, नापि क्रमाक्रमप्रतीतिरिति कथं व्याप्ति-व्यवस्था ? तथा च शङ्करः, क्षणिकत्वे सति सर्वसंवित्तीनां स्वभावनियमेन हेतुफलयोः स्वरूपान्वयव्यतिरेकासिद्धौ सर्वत्र तद्भावस्यावगन्तुमशक्यत्वात्[१], न हि[२] कार्य-संवित्त्या तस्य हेतुभावे भावः प्रतीयते, तदा तस्य हेतोरतीतत्वात्। नापि हेतुसंवित्त्या

---

५. निष्ठाविपूर्वात् अ ६. °सयोर्धर्मोऽनु° र ७. कथच नि° र ८. दूषित्वा र ९. प्रकारेणेति नास्ति अ १०. °ससिद्धमिद° र १. °क्रमार्थित° अ २. °वादिना शक्यं र ३. °तात्मिका° र ४. सहकारिवतः र ५. परोक्षेण अ ६. °मध्यगो° र ७. °त्ति अन्य° अ ८. तदपि र ९. सर्वदा र १. सर्वत्र······अशक्यत्वादिति नास्ति र २. न च अ

कार्यस्य तद्भावे भावोऽवसीयते, तदा तस्यानुपलब्धेरेव, न चातीतानागतयोर्वर्तमानेन सिद्धिरतिप्रसङ्गात्। नापि कार्यसंवित्तिरेव हेतुस्वभावसंवित्तिः, अदृष्टान्वयव्यतिरेकस्यापि धूमेऽग्निजन्यत्वविनिश्चयप्रसङ्गात्। [4]एतेन हेतुमात्रसंवित्त्या कार्यसंवित्तिरपास्ता। हेतुव्यतिरेके तु कार्यव्यतिरेकः [5]स्वसंवित्तिवादिनो मनोरथस्याप्यविषयः, तस्य हेत्वभावे कार्याभावप्रतिपत्तावुपायासंभवात्। नहि तत्र नास्ति तेन [च] प्रतिपत्तिरिति न्याय्यम्। तदयं कार्यस्य हेतुसद्भावे भावं [6]तदभावे चाभावं प्रतिपद्यमानोऽवस्थितं [7]प्रतिसन्धातारं प्रसाधयतीति। एवं च यद्यवस्थितकर्तृसिद्धिः, तदा साधारणानैकान्त एव मौलः[8] सत्त्वहेतुः, किमत्र विपर्ययबाधकप्रमाणोपन्यासः करिष्यति ? तदनिष्टौ[9] तु व्याप्तिग्रहानुपपत्तेः सन्दिग्धविपक्षव्यावृत्तिकत्वमुभयोरपि। यथा च क्रमिणी हेतुफले प्रत्येतुमशक्ये एवं फले अपीति न क्रमप्रतीतिः, नापि यौगपद्यस्य।

यथाह स एव, नापि[1] यौगपद्यस्य, भिन्नाकारेण ज्ञानेन प्रतिनियताकाराणां यौगपद्यस्याशक्यसाधनत्वात्[2]। न तावद्भिरेव ज्ञाने यौगपद्यं प्रत्येतव्यम्, तेषामितरेतरासंवेद्यत्वे सन्तानान्तरवत्[3] युगपद्भावस्यासिद्धेः। न चैकमनेकाकारम्, स्वभावभूताकारभेदे [4]भेदस्यावश्यंभावित्वात्। भेदे तु विज्ञानस्याकारेभ्योऽर्थान्तरत्वप्रसङ्गे न विषयस्य तदाकारत्वं समर्थितं भविष्यतीति।

अत्रोच्यते, प्रतिसन्धातृस्वीकारस्तावदसंबद्धः[6], प्रतिसन्धेयाभिमताभिर्बुद्धिभिर्भेदाभेदविकल्पाक्षमत्वात्। अभेदे [27b] हि स एव वा स्याद् बुद्धय एव वा ? अत्र च प्रथमपक्षे कर्मणः, पक्षान्तरे [7]कर्तुरभावात् कः प्रतिसन्धानार्थः ? भेदेऽपि बुद्धिभ्यो भिद्यमानस्य जडस्य कः प्रतिसन्धानार्थः ? बुद्धियोगाद् द्रष्टृवत् प्रतिसन्धातृत्वमिति चेत् ? बुद्धिरेव तर्हि द्रष्ट्री प्रतिसन्धात्री चेति नियतस्वीकारे तद्योगादन्यस्य तथात्वमिति किमनेन याचितकमण्डनेन[8] ? बुद्धीनां कर्तृत्वाभावादिति चेत् ? तद्द्वारेणापि तर्हि तस्यात्मनो द्रष्टृत्वादिव्यवहारानुपपत्तिः। यदि हि बुद्धिर्हेतोः फलस्य वा द्रष्ट्री स्यात्, तदानन्तर्यप्रतिनियमस्य चानुसन्धात्री कल्पिका, तद्योगात्तस्य द्रष्टृत्वं

३. अवसीयते......वर्तमानेन सिद्धिरिति भागः पतितः र ४. एतेन......हेतुव्यतिरेके इति भागः पतितः र ५. स्वेति नास्ति र ६. तत्र......भावं त° इति नास्ति र ७. प्रतो° अ ८. मौल इति नास्ति र ९. °पन्यासः......निष्टाविति नास्ति १. नास्ति र २. °स्य शक्य° र ३. °न्तरएव र ४. युगपद......मनेका° इति नास्ति र ५. तद् भेदस्या° र ६. अत्र......संबद्धः इति नास्ति र ७. °भावात्......बुद्धि° इति नास्ति र ८. किमनेन......मण्डनेनेति नास्ति र

प्रतिसन्धातृत्वं वाच्यत इति स्यादपि । प्रतिविषयमलब्धविशेषायां च बुद्धौ संबन्धोऽपि न विशेषं व्यवहारयितुमीशः, अधुना निबन्धनाधिगन्ता, अधुना फलस्य, इदानीं प्रतिसन्धातेति । तथाविधबुद्धिगतविशेषस्वीकारे तु किमपरेण[९] कर्तव्यम् तावतैव पर्याप्तत्वाद् व्यवहारस्य । स्थिरात्मानमन्तरेण[१०] सैव बुद्धिर्न स्यादिति चेत् ?

केनैवं प्रतारितोऽसि ? अहो मोहमाहात्म्यं यदीदृशानपि परवशीकरोति । तथाहि नेदमिदमन्तरेणेति[१] यदुच्यते तत् खल्वन्यत्र प्रत्यक्षानुपलम्भाभ्यां सामर्थ्यावधारणे सति युज्यते, वह्नेरिव धूमे । चक्षुरादिवद् वा दृष्टकारणसामग्र्ये[२] कार्यादर्शने पश्चाद् दर्शने च किञ्चिदन्यदपेक्षणीयमस्तीति सामान्याकारेण । आद्यः पक्षस्तावन्नास्तीति व्यक्तम् । द्वितीयोऽपि न संभवी । नहि कारणबुद्धिसमनन्तरं कार्यबुद्धौ सत्यां निश्चयप्रवृत्तस्य इदमस्यानन्तरं दृष्टं मयेति प्रतिसन्धानमदृष्टपूर्वं, कदाचिद् , यतोऽन्यस्य सामर्थ्यपरिकल्पनं स्यात् । एवं स्मरणमप्यनुभवात् कुतश्चित् परम्परया शक्तिपरिणामद्वारेण, कुतश्चित् साक्षात् तत् परिपाकबलादिति ।

[३]अन्यस्यानुभवे तर्हि कथमन्यस्य न स्मृतिः ।
अन्यस्येति न संबन्धी सिद्धश्चोद्यं किमीदृशम् ॥

अनुभवादभ्यो [४]भिन्नसंबन्धिसिद्धयधिकरणविवादप्रक्रमे तमेव सिद्धमास्थाय पर्यनुयोग इत्यसंबद्धमेतत् । तत्सिद्धौ हि विवादपर्यवसानात् का परापेक्षा ? तस्मादन्यस्येति विवादपदत्वादपनीयानुभवे कथं न स्मृतिरिति [५]परिशिष्यमाणं न प्रकृतोपयोगि । एवं तु युज्यते चोद्यार्थः । [६]यद्देहसंबद्धोऽनुभवस्तदन्यत्र देहे कस्मान्न स्मृतेरुदय इति ? एवं च [७]वदता यत्क्षेत्रसम्बन्धि बीजं तदन्यत्र क्षेत्रे किं नाङ्कुरजन्मेत्युक्तं भवति । स च कुतस्त्यो न्यायः ?

ननु कार्यकारणभावमात्रादनुभवस्मरणयोर्न काचिदपरा प्रत्यासत्तिः, न च कार्यकारणभावेऽयं नियमो, यदाधारमेव कारणं तदाधारमेव कार्यमिति, विषयादत्यन्तदूरेऽपि ज्ञानकार्यदर्शनात् । एवं तर्हि नाङ्कुरस्यापि कार्यतामात्रादपरा प्रत्यासत्तिरिति ज्ञानमिवाङ्कुरं दूरेऽपि बीजं जनयेत् । ननु बीजारम्भिणः [28a] एव परमाणवः केचिदङ्कुरे समवायिकारणतां प्रतिपद्यमानाः कथं क्षेत्रान्तरेऽङ्कुरमुत्पादयितुमीशते ?

९. किमपि परेण र १०. °नन्तरेण° र १. °णैवेति र २. सामग्र्यो र ३. अन्यन्या अ, अस्या र ४. °सिद्धाधि° अ ५. परीति नास्ति र ६. सम्बन्धे अ ७. वपता अ

भवतस्तु[8] तथाविधप्रत्यासत्तिविरहात्। विज्ञानादिना साधारणं कार्यत्वमस्त्येति दूरेऽपि जननप्रसङ्गोऽनिवार्य इति चेत्? कस्मात् पुनरङ्कुर एव कार्ये बीजपरमाणव समवायिकारणतां प्रतिपद्यन्ते न ज्ञानादौ, कार्यत्वेन सर्वेषामेकरसत्वात्? ततः सर्वेषामङ्कुरवत् तद्देश एव जननं, ज्ञानादिवद् वाङ्कुरस्यापि दूरे जननं, कार्यत्वेनाविशेषात्[9], तद्वदेवाङ्कुरेऽपि निमित्तकारणत्वाद् बीजस्य।

ननु यत्रैव कार्ये बीजपरमाणवः समवायिकारणतां प्रतिपद्यन्ते स एवाङ्कुरः, तत् कथमङ्कुरादन्यत्र तेषां समवायिकारणता[10] चोद्यते? एवं तर्हि कार्यत्वेनैकरसतया समवायिकारणताया दुष्परिहरत्वादङ्कुरैकरूपत्वं सर्वेषामेकदेशता च[1] [2]प्रसज्यातेति स्थाने फलितं परिहारप्रत्याशया। यदि च कार्यत्वेन [3]सर्वेषामविशेषः कार्याणाम्, कारणानामपि सर्वेषां कारणत्वेनाविशेष इति विश्वस्य वैचित्र्यमत्राणम्[4]। तस्मात्कार्यत्वे सत्यपि न रीतिरेकैव सर्वेषामिति। यथा[5] निसर्गभेदात् कचित् किञ्चित्[6] समवायिकारणत्वेन कचिदसमवायिकारणत्वेन[7] कचिन्निमित्तकारणत्वेनोपयुज्यते भवतः, तथास्माकमपि किञ्चित् कार्यं समानदेशमेव हेतुरुत्पादयति, किञ्चिद् व्यवहितदेशम्, कार्यं च किञ्चिन्नियमेन हेतुदेश एवोत्पत्तिधर्मकं किञ्चिदन्यथा। तत्रैकत्र[8] कार्ये प्रत्यभिज्ञासंभवो नान्यत्र कार्यत्वाविशेषेऽपि दीपान्तरवत् ज्ञानवच्च[9]। तादृक् कार्यापेक्षया च यत्र भवतः समवायिकारणव्यवस्था, तत्रोपादानकारणव्यवहारोऽस्माकमात्मादेरन्यत्र। तथाविधहेतुफलपरम्परायां च एकत्र सन्तानव्यवस्थानमन्यत्र सहकारित्वमात्रमिति प्रक्रियाभेदेऽपि कार्यद्वैतं तादृग् [1]निसर्गसिद्धमस्तीति भवतोऽप्यशक्यमतिक्रमितुमिति स्थितमेतत्। तथाभूतभेदसंभवे च [2]यत्कार्यकरणाधिकरण एवोत्पत्तिधर्मकं तत्कथमितरत्रोत्पद्यते? कारणं वा स्वाधिकरण एव शक्योत्पादनं कार्यं कथमन्यत्र जनयेत्? तदयमनुभवोऽपि स्वाधिकरणजन्यं स्मरणमङ्कुरमिव बीजात्[3] कथमन्यत्रोत्पादयेत्? स्मृतिर्वानुभवाधिकरणनियतोत्पत्तिरङ्कुरवत् कथमन्यत्रोत्पद्येत, यतो देहान्तरे स्मरणप्रसङ्गः चोद्यमवकाशमासादयेत्? आत्मवादे तु दुष्परिहरमेतत्, व्यापिनस्तस्य तेनैव स्मृतिजननरूपेण देहान्तरेऽपि स्थानात्। अदृष्टाश्रयणं च नित्यस्यैवेति। बीजाङ्कुरवदनुभवस्मरणयोर्न्यायो[4] नान्यथदिति कथमवगन्तव्यमिति चेत्?

---

८. त्विति नास्ति अ ९. कार्यत्वे विशे° अ १०. °कारणं र १. देशभाव(?) अ २. प्रसज्या° र ३. सर्वेषां सवि° र ४. मात्राणं अ ५. तथा र ६. किञ्चिदिति नास्ति अ ७. कचिदसमवायिकारणत्वेनेति नास्ति अ ८. तत्रैकत्र र ९. त्वान(ल)वच्च र १०. तथाविधफल° अ १. निसिद्ध° र २. °कार्यं कारणा° र ३. बीजात्मा र ४. स्मरणन्यायो र

बीजाङ्कुरयोरपि स न्यायस्तथादर्शनादेवावसीयते[5], तथा नियमदर्शनं चानुभवस्मरणयो-रप्यस्ति, न ह्यन्यदेहेऽनुभववति[6] [28b] अन्यमूर्तिः स्मृतिमती नाम।

ननु देहः कथमनुभववान्? तदाधारतया तत्कारणतया तेन सह समानकारणतया वा संबन्धविवक्षास्तीति न क्षतिः। किं चात्मनोऽपि कथमनुभववत्त्वम्? समवाय-बलादिति चेत्? ननु समवायोऽपीहेतिबुद्धिहेतुरिष्यमाण इहेतिबुद्धिनिबन्धनकल्पन एव। अस्ति चेह शरीरे बुद्धिरिति बुद्धिः, अतः[7] किं न समवायकल्पनापि? अयुतसिद्ध-त्वाभावात् शरीरबुद्ध्योः पृथगेव प्रतीयमानत्वादिति चेत्? ननु पृथक्प्रतीयमानयोरिहेद-मिति प्रतीतिनियमः, उपर्यधोभावेन हि भावद्वये परिदृश्यमाने परस्परासङ्करेण सप्तमीप्रथमयोर्निर्देश उपपद्येत, यदा तु पृथग्दर्शनमेव नास्ति तदा कथमिहेदमिति भेदेन निर्दिशन् प्रेक्षावत्ताया न हीयते? समवायविषये[8] कचिदपि भेदस्यादृष्टेरिति[9] चेत्? अतएव स्वयमिहेति बुद्धिं विकल्पमात्रत्वेन इच्छया[10] [1]निर्वर्तनयोग्यामुत्पाद्य समवायो नाम कल्प्यते।

इहेति बुद्धेः समवायसिद्धिरिहेतिधीश्च द्वयदर्शने स्यात्।
न च कचित्तद्विषये द्वयेक्षा स्वकल्पनामात्रमतोऽभ्युपायः॥

तेन [2]चासंविद्यमानस्यैवात्मनो बुद्धिमत्ताव्यवहार इति वन्ध्यापुत्रेण तुरगशृङ्गस्य [3]क्षोळिघटनवृत्तान्तमनुहरति। यत् खलु यावतोपयोगेन[4] कल्पितं तावत उपयोगस्य अन्येन सिद्धिरेव तस्याभावः, सिद्धश्चात्मनोऽपि स्मृत्याद्युपयोगोऽन्यथेति। तस्मात् नैक-कायस्थोऽनुभवः कायान्तरे स्मरणकरणाय प्रभवति।

ननु क्षणिकत्वे देहान्तर एव स्मृतेरुदयात् कथमिदं शक्यपरिहारम्, जन्मान्तर-परिग्रहे वा ततः सन्तानान्तरत्वेनाभिमतेऽपि देहे किं न प्रसङ्गोऽन्यत्वस्याविशेषादिति चेत्? ईदृशं देहान्तरे स्मृतिजननमात्मनोऽपि दुष्परिहरम्, ततोऽन्यत्रापि तत्प्र-सङ्गोऽन्यत्वस्याविशेषादिति समानम्। यद्यपि च [5]कायस्य क्षणिकत्वं नेष्टम्, आशु-नाशित्वं पुनस्तैरिष्टमेव, ततः समानो दोषो यद्भयादात्मवादस्वीकारः। अथात्मवादे तस्यात्मनः कर्मणाभिसंस्कृत एव देहे स्मृतिजननमिति न दोषः, नैरात्म्यवादे तु कस्य तत् कर्म? शरीरातिरिक्ता हि बुद्धिरेव क्षणिका संभवति। अतएव च न कर्तृक्षणस्य

५. °दर्शनादवसो° र ६. भवति अ ७. बुद्धिवतः र ८. विषये र ९. °स्यापि दृ° अ १०. इच्छानि° अ १. निवर्तमान° अ २. वा र ३. स्यारवीणि° र ४. °योगिन अ ५. कार्यक्षणि° र

तत्कर्मसुखदुःखादि संवर्तनीयम्, तस्य तदुपभोगाभावात्। यस्य च क्षणस्योपभोगः[६] सोऽकर्तेति कृतनाशाकृताभ्यागमदोषस्त्वतिरिक्तो भवतु, न तु[७] कस्यचित् कर्मसिद्धिर्यतः[८] प्रकृतदोषपरिहारः स्यात्। न च सन्तानोऽपि गीयमानो भिन्नः कश्चिदस्ति। न च कर्मापि भिन्नं भवतामस्तीत्यभित्ति चित्रकर्म॥

अत्रोच्यते। कर्तृक्षणस्य तावत् तत्कर्म तत्फलोपभोगाभावेऽपि नापह्नवसहम्। नहि [९]दाहादिकमकुर्वतो[29a]त्पादितेन वह्निना तद्वान् न भवति नरः। अन्तिमक्षणस्यापि तत्कर्मोपकारकतया संबध्यते परम्परया, तत[१०] एवोपभोगभागित्वात्। एककालता तु कार्यकारणयोरपि न संभवति, संभवति च मेरुमन्दरयोः। तस्मादुपकारद्वारकमेव[१] भेदे तस्येदमिति घटनम्, स चोपकारोऽन्तिमस्य[२] तत्कृतो महानस्ति, तन्मध्यवर्तिनां च तत्सन्तानवर्तिनां क्षणानां तादृगन्तिमक्षणप्रसूतिसामर्थ्यं साक्षात्परंपरया वा, [३]तत एव कर्मण इत्युपकारद्वारक एव तेषामपि तत्सम्बन्धः। एवं च सर्वेषां कर्मसम्बन्धव्यवस्थितौ स्थितायां तत्कर्माधिपत्येनोपनीयमान[४] एव शरीरे तत्कर्माभिसंभूतानां[५] बुद्धिदेहक्षणानामुदयः, नान्यत्र तादृक् प्रत्यासत्तेरभावात्। कर्म च कामं न भिन्नमस्ति व्यतिरेकीव(? च) निर्देशोऽपि व्यवहारानुरोधेन[६]। यस्तु प्राक्तनः कर्मसंबद्ध इत्युच्यते क्षणः, स तादृग् विशेषभूतो[७] जातः, यतः पर्यन्ते तत्फलोपभोक्तृक्षणप्रसवसमर्थसन्तानसंभवः[८], तदनुरूपशरीरसन्ततिसंभवश्च। तत्राद्याद् विशिष्टाद् यौ बुद्धिदेहक्षणौ [९]अल्पतमविशेषयोगिनावुपजातौ[१०] संभूयोत्तरावल्पतरविशेषौ[१] जनयतः, तौ [२]चाल्पविशेषावुत्तरौ जनयत इत्यनया दिशा तावच्छक्तिलक्षणविशेषप्रकर्षस्तरतमादिभावेनोपचीयते यावदन्तिमजननसमर्थोदयस्ततोऽन्तिम इति। एकसामग्र्यधीनतया परस्परानुबद्धयोर्बुद्धिदेहयोरन्यपरम्परां प्रति विशिष्टयोर्नैकव्यतिरेकेण द्वैतीयिकशङ्कावकाशः। जन्मान्तरपरिग्रहेऽपि तदायुःसंस्कारक्षीणे[३] क्षीयमाणमूर्तिक्षणान्तरसहकारिणा मनःक्षणेन [४]जनितं तस्यानुरूपं वपुरन्यत् पूर्ववन्मनसः साहायकमातनोतीति न देहान्तरे स्मृतिभोक्तृत्वचिन्तावकाशः। न चात्र सन्ताननाम्ना भिन्नेन किञ्चित्, क्षणानां कर्मसंबन्धसिद्धिद्वारेणैव सन्तानेऽपि [५]सिद्धेरप्रतिबन्धात्,

---

६. °गाभावात्......स्योपभो° इति नास्ति र ७. नत्विति नास्ति र ८. यतः यतः र ९. °कर्म कुर्व° र १०. परस्परपात° र १. °कारक° र २. चोदकारोन्तिमस्या र ३. तदेव अ ४. नापनोयमानं र ५. संस्कृतानां र ६. °नुरो° इति नास्ति र ७. भूषिता अ ८. सन्तान इति नास्ति र ९. अणुतम° र १०. योगिणा° अ र १. वणुतर र २. चाणुवि° र ३. क्षीणे° इति नास्ति र ४. जनितस्या° अ ५. सिद्धे प्रति° र

तेभ्यस्तस्य व्यतिरेकात्। न च मुख्यतः सन्तानद्वारेण सिद्धान्तोपक्रमः, किं तु क्षणद्वारेणेति सर्वमवदातं मूलपरिशोधनादिति ॥

[6]यदुक्तम्,

यस्मिन्नेव हि सन्ताने आहिता कर्मवासना।
फलं तत्रैव बध्नाति कर्पासे रक्तता यथा ॥
[ ]

इति, तत् स्वाभिमतसन्तानलक्षणप्रसिद्धौ ॥

यत्तु न्यायभूषणकार एतद् दूषयन्नाह– न, साधनदूषणासंभवात्, अन्वयाद्यभावान्न साधनम्। न हि कार्यकारणभावात् स्मृतिः कर्पासे रक्ततादिवदित्यन्वयः संभवति। नापि यत्र न स्मृतिः तत्र न कार्यकारणभाव इति व्यतिरेकोऽस्ति। असिद्धत्वाद्यनुद्भावनान्न दूषणम्। न हि पूर्वबुद्ध्यनुभूतेऽर्थे उत्तरबुद्धिना स्मृतिः संभवति, ततोऽन्यत्वात् सन्तानान्तरबुद्धिवदित्यस्य हेतोः कर्पासे रक्ततादित्यनेन [7]न कश्चिद्दोषः प्रतिपाद्यत [29b] इति। [8]तदसमीक्ष्याभिधानम्, साधनार्थापरिज्ञानात्। न हीह श्लोके कार्यकारणभावः स्मृतौ हेतुत्वेनोपन्यस्तः प्रतीयते। किं तर्हि? कर्मवासना। वासना हि कर्मणाभिसंस्कारः। वासितं ह्यभिसंस्कृतमुच्यते। कर्मकृतो विशेषो यत्र सन्ताने उत्पादितस्तत्रैव भोगादिफलबन्धो, नान्यत्र। यत्र नासौ विशेष इति प्रतिज्ञाय कर्पासे रक्तता यथा इति वदतः[9] संस्कारसन्तानभेदो वा हेतुरभिप्रेतः, साध्यं चान्यत्र[10] भोगादिफलनिषेधः, तत्सन्ताने तत्फलयोग्यता च प्रतीयते। तदयं प्रयोगः, यो यः संस्कारः क्वचित्सन्ताने आहितः स तत्रैव फलदानयोग्यो नान्यत्र। यथा कर्पाससन्ताने बीजावस्थायां रागद्रव्ययोगजनितः पुष्पावस्थायां फलावस्थायां वा [1]रागं फलमुन्मीलयितुं योग्यो नान्यसन्ताने।

संस्कारश्चायं दानादिकर्मजनितश्चित्तसन्तान इति। स्वभावहेतुरेव समुदायसाध्यापेक्षया[2]। संस्कारमात्रानुबन्धिनी हि तत्सन्ताने फलदानयोग्यता अन्यसन्ताने सर्वथा तदयोग्यता चेति[3], निमित्तान्तरानपेक्षणात्। एकैकसाध्यत्वे तु प्रथमे स्वभावहेतुः। द्वितीये तु विरुद्धव्याप्तोपलब्धिः, स्वाधारादन्यसन्ताने फलदानविरुद्धेन स्वाधार-

६. यत्तर्क र ७. नकारस्त्यक्तः र ८. °समीक्षिता° र ९. वदन्तः र १०. श्चान्यज र
१. रागफलयितुं र २. °पेक्षाया अ ३. चेति र

सन्तान एव फलदानेन व्याप्तस्य संस्कारत्वस्योपलब्धेः। तत्र यदि संस्कारेऽपि सति तत्र[४] सन्ताने फलदानयोग्यता निमित्तान्तरमपेक्षेत[५], प्रयत्नेन संस्कारघटनमनर्थकं स्यात्। अन्यसन्तानेऽपि फलदानसामर्थ्ये च[६] द्वितीयप्रयत्नवैयर्थ्यम्। [७]न चैकामलक्यां क्षीरावसेके सर्वामलकी मधुरफला। तस्मात्स्वसन्तान एव फलदानेन व्याप्तिः संस्कारस्येति नानेकान्तः। संस्कारश्च कर्मकृतो विशेषश्चेतस इत्यागमसिद्धमभ्युपगम्यैव चोद्यवत् समाधानमपीति नासिद्धिः। सपक्षे भावान्न विरोधो व्याप्त्यसिद्धेर्वा। अथवा, यो यः सन्तानः स स्वाधिकरण एव संस्कारे फलदानयोग्यो यथा कर्पाससन्तानः, सन्तानश्चायं चित्तसन्तान इति पूर्ववत्॥

स्मृत्यादिफलापेक्षयाऽप्ययमेव न्यायः[८]। यदि सन्तानद्वारेणेयं व्यवस्था, तदा [९]विद्यायोनिसंबन्धप्रसिद्धेऽपि सन्ताने प्रसङ्गः। ततो गुरुणानुभूतादौ शिष्यस्य स्मृत्यादिः स्यात्, एवं पितुरनुभवादौ पुत्रस्य भवेत्। नैतादृशः सन्तानोऽत्र विवक्षितः उपादानोपादेयभूतहेतुफलपरम्परारूपः। किं पुनरुपादानोपादेयलक्षणम्? एकाधारतानियमोऽसति विचारकारणे[१०], विचारेऽपि[१] तद्योग्यतानियमः। विचित्रा हि कार्यकारणपरम्परोपपादिता पूर्वम्, तत्रैवंलक्षणा परम्परा सन्तान उच्यत इत्यपि सूचितमेव। न चैवं गुरुशिष्यचेतसोः पितापुत्रमनसोर्वा अस्तीति नातिप्रसङ्गदोषो न्यायभूषणीयः। सन्तानोपादानव्यवस्थयोर्वान्योन्याश्रयदोषः[२], उपादानव्यवस्थायास्तदनाश्रयत्वप्रतिपादनात्।

अथवा अभ्रान्तः [30a] संमतैकावसायः प्रकृतिविक्रिये उभौ[३] हेतुफलस्योपादानोपादेयलक्षणम्। हेतुफलसन्ततौ इदमुपादानमिदमुपादेयमिति प्रत्यभिज्ञाप्रत्ययेन लक्षितं वेदितव्यम्[४]। विसभागोत्पत्तौ तु प्रकृतिरुपादानस्य विकृतिरुपादेयस्य लक्षणं स्वभाव[५] एव। प्रकृतिविकृतित्वं वा लक्षणमिति भावप्रधानो निर्देशः, काष्ठयूपवत् काष्ठाङ्गारवच्च। अनेकोत्पत्तावपि भिन्ना एव भागा उपादानम्। यथा [६]धूम उष्मादीनामङ्गाराणाम्, बुद्धावप्येकपुरुषप्रज्ञप्तिरेकावसायः। अस्ति च विषयोपरागं विवेच्य[७] चैतन्यमात्रमामृशत एकपुरुषाभिमतायां सन्ततौ सैवेयं बुद्धिरित्यवसायः। [८]ते पुनरत्राशेषस्वरूपाननुकारात्, अनुकारसंभवेऽपि स्तम्भान्तरवदेकावसायो भ्रान्त इति न

४. तत्° र ५. °मपेक्षते र ६. अपि र ७. न त्वेका र ८. °मेव स° अ ९. °सम्बद्ध° अ १०. विचाल ? अ १. विचारेऽपि अ, विचानेऽपि र २. °न्यो स्वाश्रय° र ३, ततो र ४. °त विदितव्य° व ५. लक्षणस्वभाव° र ६. धूम

पितापुत्रादावुपादानादिव्यवस्था। "तदेवमुपादानादिलक्षणमनपेक्ष्य[10] तादृक्सन्तती उपादानादिव्यवस्थायां कृतायां कीदृशे[1] सन्ताने आहिता कर्मवासनेति जिज्ञासायां यत्रोपादानादिव्यवस्थेति भणितौ न दोषः।

यत् पुनरयमेवाह – न, सम्बन्धविशेषाभावे कारणमात्रविशेषादुपादानेतरविभागानुपपत्तेः, यथास्माकं जनकत्वाविशेषेऽपि [2]समवाय्यसमवायिनिमित्तकारणविभागः संबन्धविशेषात्, न तथा तव कारणानामुपादानेतरविभागं पश्याम इति। एतदपि दूषितमेव, कारणत्वसामान्येऽपि कार्यापेक्षया विभागस्य दर्शितत्वात्। कार्यकारणयोरन्योन्यविशेषानपेक्षणे[3] हि संबन्धंद्वारेणापि व्यवस्थादौस्थ्यमापादितम्। न च समवायः क्षम- इत्यपि लेशेन सूचितमेव। तस्मान्न संस्कारसन्तानयोर्दूषणं किञ्चित्।

यद्यपि चात्र श्लोके कर्मवासनाशब्दः प्रयुक्तो न चास्यार्थः कर्मासमन्वेति[4], तथापि वासनार्थोऽभिसंस्कारस्तावदन्वेतीति स एव हेतुः सूचितो माढः। अथवा कर्मशब्देनापि क्रिया। यत्र सन्ताने यया कयाचित् क्रियया कृतोऽभिसंस्कार इत्यर्थः। एतेन व्याप्तिप्रदर्शनम्, पक्षधर्मस्तु प्रस्तावाद् बोद्धव्यः। ततः कार्यकारणभावं साक्षात् स्मृतौ प्रतिपादकमादाय यदुक्तं तत्सर्वं विप्लुतम्, कार्यकारणभावाश्रयविशेषान्वयिनी[5] तु स्मृतिरित्यनवद्यम्।

यत्पुनरस्य साधनं न पूर्वबुद्ध्यानुभूतेऽर्थे[6] उत्तरबुद्धीनां स्मृतिर्भवत्यन्यत्वात्, सन्तानान्तरबुद्धिवदिति, तत्रोत्तरबुद्धीनां धर्मिणीनां भिन्नस्मृतिरूपबुद्धिसम्बन्धो निषिध्यत उत [7]स्मृतिरूपत्वमेव तासां वार्यते, अथ स्मृत्या फलवत्यस्ता न भवन्तीति प्रतिपाद्यते ? प्रथमपक्षस्तावदयुक्तः[8]। न ह्यन्या स्मृतिरन्या च स्मृतिमती मतिरिष्यते अस्माभिर्यन्निषेधः[9] स्यात्, अपि तु स्मृतिरूपैव सा मतिरिति। अथाधाय स्मरतो गवेक्षणकाले तद्दर्शनं[10] स्मृतिमद् भवतीति चेत् ? तत् किं तदवस्थाया एव स्मृतेर्निषेधो [30b] विवक्षितः ? केवला तु यदि स्मृतिर्भवति तदा भवतु। नैवं चेत् ? किमनेन तर्हि उत्तरबुद्धीनामिति सहचारनिर्देशेन ? अथानुमानार्थं धर्मिनिर्देश एष इति चेत्– न, प्रकृताभिमतसाकल्यसिद्धेः[1] सर्वथोत्तरकालं स्मृतिनिषेधस्येष्टत्वात्

९. तदेवस्य अ, °यादा अ १०. °मनपेक्ष र १. व्यवस्थाया कीदृशे अ २. स सम° अ ३. °विशेषणापे° अ ४. कार्यासम्बन्धेति र ५. °भाक्तीयर्वि° र ६. °भूतोर्थ र ७. उत्तमस्मृ° र ८. °दप्रयुक्तः अ ९. अभियन्नि° र १०. °कालतद्° र १. °साकल्या° र

पक्षैकदेशासिद्धिः साधनस्य। [2]अथाशक्तिदशायां केवलस्मृतिकाले निषेधो नेष्ट [3]एव। तर्हि विनात्मानमुत्तरकालं [4]स्मृतिसंभवे बुद्ध्यन्तरसहचारकालेन किमपराद्धं यत् तत्रैव निषेधः? नापि व्याप्तिविषये किञ्चिदस्ति बाधकम्।

द्वितीयपक्षे तु उत्तरबुद्धीनां स्मृतित्वनिषेधे किमनुभवस्यैव स्मृतित्वमथ [5]पूर्वबुद्धीनां? सर्वथा निषेधे तु किं विशेषनिर्देशेनेति पूर्ववत्।

तृतीये तु विकल्पे एवमेव विशेषनिर्देशवैयर्थ्यं समर्थनीयम्। अथ विशेषनिर्देशस्योपलक्षणत्वात् सर्वैवानुभवादन्या बुद्धिर्न स्मृतिरूपा, नापि स्मृतिमुत्पादयति इत्यभिमतम्। अनुभवस्य न हि तथात्वं[6] निषिद्धम्, ततोऽनुभवः स्मृतिरूपः स्मृतिं चोत्पादयतीत्युभयमप्यनिष्टमासक्तम्[7]। अन्यथाऽनुभवादन्यतया विशेषणमनर्थकम्। अनर्थकमेवास्तु, सर्वेषामेव ज्ञानानां धर्मित्वमस्तु। तदाप्यनुभवादन्यत्वं हेतुः पक्षैकदेशासिद्धः[8], अनुभवस्यैव तदन्यथाभावात्। अथोत्तरग्रहणं विवादपदत्वेन न त्वन्यव्यवच्छेदेन, अन्यासां तु बुद्धीनां बौद्धेनापि स्मृतिभावानिष्टेः। तथापि तृतीयपक्षे नेदमुत्तरम्, अनुभवस्यापि विवादपदत्वात्। नैरात्म्यपक्षे ह्यनुभवोऽपि साक्षात् स्मृतिमुत्पादयतीत्यनिष्टमेव भवतः। बौद्धस्य पुनरिष्टम्। तदयमनुभवस्य स्मृतिजनकत्वं न स्वीकर्तुं शक्तोऽप्रियत्वात्, न परिहर्तुम्, हेतोः पक्षैकदेशासिद्धेरिति[9]।

[10]अस्तु चैवमुभयपक्षेऽपि तु व्याप्तिर्न शक्या। तथा हि यस्या उत्तरबुद्धेः स्मृतित्वं स्मृतिजनकत्वं वेष्यते, तस्या यदि तदुभयप्राप्तावनुभवादन्यत्वहानिरुपपादयितुं पार्यते न पर्यवस्यतु[1] व्याप्तिस्तदन्यत्वस्य तदुभयनिषेधेन। न चैवं शक्यम्। अनुभवादन्यत्वहानावनुभवत्वमेव, तच्च कथं स्मृतित्वे वक्तुं शक्यम्? स्मृतिजनकत्वे च तदुच्यमानमनुभवस्य स्मरणहेतुत्वमनपनीय न विश्राम्यति। प्रतिबन्धसिद्धौ हि प्रसङ्गसङ्गतिः। एवमुत्तरकालभावित्वादयोऽपि नाशङ्क्याः, शक्यप्रतीकारत्वात् तद्वदेव। अनेकान्तस्तु हेतुदोषो व्याप्तेरभावात्। तस्माद् यदि चोद्यचुञ्चुतायां [2]भरस्तदेवं ब्रूयाः। अनुभवमात्रात् कर्ममात्राद् वा स्मरणभोगादि जन्यं[3] चेत्- [4]भिन्नसन्तानेऽपि जन्मप्रसङ्गः, न चाभिमतेऽपि। यद् येनाविशिष्टसामर्थ्यासामर्थ्यं तत् तेनाविशिष्टफलाफलत्वम्, यथा बीजोर्वीजलज्वलनपवनादिसामग्रीद्वयम्। अविशिष्टसामर्थ्या-

२. यथा र ३. एव हि विरामो र ४. °सम्भवेत्......द्यन्तर° ५. पूर्वेति नास्ति अ ६. भावात्वं अ ७. °त्युभयस्य निष्प्रमाणत्वं र ८. °सिद्धिः र ९. °सिद्धिः र १०. अवस्त्व चैवं र
१. न पर्यवस्यति र २. °भवतरः र ३. जन्म अ ४. दिन्य° र

सामर्थ्यं च सन्तानद्वयमनुभवादपीति स्वभावहेतुः। अत्र च[5] सिद्धिः यस्मिन्नेव हि इत्यादिना दर्शितैव, कर्मवासना [31a] इत्यादिना कर्पासवत् संस्कारविशेषस्य व्यक्तमुक्तत्वात्[6]। यथा प्रथमं प्रथितमस्माभिः। एवमनुभवात् स्मृतिरिति समानन्यायम्।

अथवा पूर्वोक्तहेतावयं पर्यनुयोगः, किमनुभवस्मरणादेरेव[7] परम्परया हेतुफलसंमतस्यायं न्यायोऽन्यत्वान्न जननमिति, अथान्यस्यापि ? यदि तावत् प्रकृतस्यैवायं 'यौतुकलब्धो[8]' न्यायः, तदा युक्तिः काचिदभिधीयताम्, यतः सामान्यसिद्धं क्रममतिक्रम्यायमत्र विशेषो गम्येत। सन्तानान्तरेऽदर्शनादिति चेत् ? यद्विशेषपरम्परया जननमन्यत्वे ![10]तदभावे तददर्शनं भवेत्, यथारक्तबीजकर्पासे रागादर्शनम्। न च तावता सर्वत्राजननमिति शक्यम्॥

द्वितीयपक्षे त्वसिद्धेरुद्भावनमेतत्। रक्ते बीजेऽन्यस्यापि तत्सन्तानभुवः पुष्पस्य फलस्य वा तत्फलरागदर्शनात्। यत् पुनः कार्यकारणभावेन स्मृतिमाशङ्क्य नानात्वस्यावध्यनादित्युक्तम्, अत्रापि[1] त्र ग तपस्विनी एकतः क्षिप्ता तद्वचनेन, यदि संस्कृतकर्पासे कार्यं वार्येत सर्वं शोभते। तदयं[2] सामान्यसिद्धो न्यायः। पृथक्त्वेऽपि विशेषान्तरापेक्षं फलमेकत्र सन्ताने भवति नान्यत्रेति प्रकृतेऽपि वारयितुमशक्यः। श्लोकेन चानेन साधनं दूषणं वा संपादितमित्यास्तां तावत्। तत् सिद्धमवस्थितैकाभावेऽप्यनुभवभावितसन्तानसंस्कारेण स्मरणम्। न च प्रत्यक्षेणानुभवस्मरणयोः क्वचिदेकाधारत्वं दृष्टम्।

यदप्यत्रोक्तम्, न, दृष्टत्वात्। तथा हि पूर्वं यमर्थमेवानुभूतवानहं तमेतर्हि स्मरामि, योऽहमनुभविता सोऽहं[3] स्मर्तेति अनुभवस्मरणयोरभिन्नाधारत्वं लिङ्गसम्बन्धस्मृत्यनपेक्षमाप्तोपदेशानपेक्षं च निश्चिनोति। न चेयं भ्रान्तिर्विसंवादाभावात्। सुखादेरपि प्रत्यक्षत्वमपह्नुवानो नाक्षेजेन[4] प्रतिबोधयितव्यः। तथा चानुसन्धानेच्छाद्वेषादीनामप्येककारणत्वं प्रत्यक्षतो गृह्यते, यमहमद्राक्षं[5] तमहं पश्यामीति। तं दृष्ट्वाहमिच्छामि द्वेष्मि वा। तमिच्छन् द्विषन् वा प्रयते। यतमानोऽहं तमर्थं प्राप्य सुखी दुःखी वा संवृत्तोऽस्मीति। तदेवमहमित्येतस्मिन् ज्ञाने योऽर्थश्चकास्ति तदधिकरणाः स्मृत्यनु-

५. अत्र या र ६. युक्तमु° र ७. °देव° र ८. पौतक (?) अ ९. लब्धो र १० °भावे तद° नास्ति अ १. अत्रापि इति नास्ति अ २. तदपि अ ३. °त्माहं र ४. नाक्षेजे र ५. °मस्प्राक्षं अ

सन्धानेच्छादयः प्रत्यक्षतः प्रतिभान्तीत्यतः प्रत्यक्षेणात्मा गृह्यते। न ह्यहमिति[६] ज्ञानं सन्दिग्धं भ्रान्तं वा। नापि लैङ्गिकं शाब्दं वेति। तदपि मिथ्यापरितोषमात्रम्। तथा हि विकल्पस्तावदयमस्त्यहमेव द्रष्टा स्मर्ता चेति[७]। न च सर्वो विकल्प आश्वासविषयः। तथा चायं चतुर्धा दर्शितः त्रिलोचनेनापि।

तत्र प्रत्यक्षपृष्ठभावी तावन्न भवति, प्रत्यक्षान्तरस्य तद्ग्राहकस्यस्वयमप्यनङ्गीकारात्[८], यस्यायं पृष्ठभावी वर्ण्येत। लैङ्गिकत्वमपि स्वयमेव निरस्तम्। तद् यदि अवस्तुकः सन्दिग्धवस्तुको वा भवन् भवता प्रमाणीक्रियते, कस्य कियती क्षतिः?

अर्थेभ्यो भिन्नः पञ्चमोऽयं प्रत्यक्ष इष्यते। सर्वस्य तर्हि स्वाभिमते प्रमाणविरहिणि[९] विषये सुलभ एव न्यायः [31b] इति न क्वचित् सिद्धिप्रतिबन्धः। संवादेन[१०] विशेष इति चेत्? स पुनः संवादोऽर्थक्रियाप्राप्तिः[१] प्रमाणान्तरवृत्तिर्वा स्यादिति निरूपितप्रायम्। प्रमाणान्तरभावे च[२] तदेवास्तु किमनेन? अर्थक्रिया च नावस्थितसाध्या काचिन्निश्चिता, सर्वस्या बुद्धिशरीराभ्यां सिद्धेः। नापि तदतिरिक्तगोचरोऽहंप्रत्ययः। यथा हि[३] सोऽयं चैत्र इत्यत्र[४] चैत्रशरीरे एव[५] उपाध्यवस्थाकृतं भेदमविगणय्य पूर्वापरकालयोरेकत्वेन प्रत्यभिज्ञायेते, तथा अहमेव द्रष्टा स्मर्ता चेत्यनेनापि प्रत्ययेन। केवलमयं बुद्धिद्वारकः समुदायव्यपदेशः, यथा योऽहं मूर्ख आसं स पण्डितोऽस्मीति। कश्चित् पुनर्देहद्वारेण व्यपदेशो यथा गौरः पीनो वाऽहमिति, एकदेशेन समुदायव्यपदेशस्य प्रसिद्धत्वात्। कश्चित् पुनरुभयद्वारको यथा मया राज्यं कृतं मम दुर्गतिरित्यादि यथायथमूह्यम्। सुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मद्वारका अपि बुद्धिकारका[६]एव व्यपदेशाः, अहं सुखी यावदहं धार्मिक इति बुद्धिव्यतिरेकाभावात् तेषाम्। मुखं शरीरं वाऽस्यास्तीति भेदनिर्देशोऽपि समुदायैकदेशभेदविवक्षया, यथा वृक्षस्य शाखा। अत एव मुखमहमिति न भवति।

कथं तर्हि मम मतिमूर्ती इति? यथा शिलापुत्रकस्य शरीरम्। तर्हि बुद्धिशरीरे इत्यपि स्यात्, शिलापुत्रकः शरीरं[७] राहोः शिर इत्यपि किं दृष्टम्? यथा च[८] तवैव द्वितीयात्माभावेऽपि ममात्मेति व्यवहारस्तथा समानं[९] प्रथमात्माभावेऽपि [१०]मम बुद्धि-

६. न ह्यमिति र ७. वेति र ८. °व्यङ्गी° अ ९. °विरहिण अ १०. संवादेना र १. °स्वक्रिया° र २. प्रमाणान्तरे च र ३. तथाहि अ ४. इत्यत्रेति नास्ति र ५. एक र ६. अपि अ ७. तर्हि बुद्धि°......°पुत्रकः शरीरमिति पतितम् अ ८. चकारो नास्ति र ९. समानमिति नास्ति अ १०. समबुद्धि° र

देहाविति। यथा च नाहमात्मेति तथा नाहं बुद्धिशरीरे इति। अहमात्मेत्युक्तार्थत्वान्न प्रयोगार्हमिति[1] चेत्? एवमेवाहं बुद्धिशरीरे इत्युक्तार्थम्। न, [A]चेष्टामात्रपराधीनेषु ध्वनिषु निर्बन्धो बुधानामित्यास्तां तावत्।

तदयमस्मच्छब्दो वक्तुः परनिषेधपरः, नतु मतिविग्रहौ विहाय वस्त्वन्तरपरः। तयोश्च 'बुद्धिविग्रहयोर्भूतभविष्यतोरपि वर्तमानेन एकाध्यवसायान्मयैव दृष्टं[2] मयैव स्पृष्टं स्मृतं[3] चेति प्रयुज्यते। तस्मात् सोऽयं चैत्र इतिवदुभयपुञ्जस्य पूर्वापरकालयोरेकतारोपमात्रमेतत्, नार्थान्तरोल्लेखः। चैत्रेप्यात्मैव प्रत्यभिज्ञायत इति चेत्- न, अदृष्टे प्रत्यभिज्ञानाभावात्, बुद्धिविग्रहावेव हि दृष्टौ। यद्यपि च[4] परबुद्धिरनुमेया तथापि अत्यन्ताभ्यासादस्यामध्यक्षवद्[5] व्यवहारदर्शनान्न दोषः। मित्रामित्रयोर्दर्शनमात्रादेव हि तदनुरूपानुष्ठानमुपलब्धम्। न च तत्र लिङ्गरूपानुसरणादिपरिलम्भोऽस्ति। नापि कलेवरमात्रप्रतिपत्तौ तादृगनुष्ठानम्, मृतमूर्तावपि प्रसङ्गात्। सर्वशरीरव्यापारप्रयोजकतया च जन्मनः प्रभृति बुद्धेरात्मनि दर्शनमेव परत्रापि तत्सहचराभ्यासबीजं सततं सन्निहितमस्ति। न चैवमात्मनो दर्शनमभ्यासबीजमस्ति, [32a] सर्वव्यापारस्य [6]शरीरचैतन्याभ्यामेव पर्यवसानात्। तस्माच्चैत्रशब्दगोचरौ चित्तकायावेव सोऽयमिति प्रत्यभिज्ञायेते। तथास्मच्छब्दविषययोस्तयोरेव प्रत्यभिज्ञानमात्रमेतन्मया दृष्टं मया स्मृतमिति। मया कृतं मया मोदयत इत्यपि एकत्वाध्यवसायमात्रं[7] तयोरेव। तदत्र पक्षे प्रत्यक्षपृष्ठभावी विकल्पोऽयमाश्वासविषयः, सत्तामात्रे एकत्वे पूर्वपरक्षणानामवस्तुकः, अतिरिक्तविषयत्वे तु स्फुरत्यप्यर्थे[8] अलीकानलीकशङ्कासंकरात् सन्दिग्धवस्तुकः कथं प्रत्यक्षसिद्धतामात्मनः प्रयोजयेत्?

यच्चानेनाप्युद्घुष्यते[9], अभिन्नसंबन्धिन इच्छादिभेदा ममेत्येकप्रतिसन्धानविषयत्वादेकनर्तकीप्रतिसन्धानविषया इव प्रेक्षका इत्यनुमानम्। तदप्यतितरलहृदयतामेव द्योतयति। नहि नर्तकी तत्त्वत एकरूपा काचित्, चैतन्याधिष्ठितपरमाणुसमूहमात्रत्वात्[10]। व्यवहारसिद्धमेकत्वमुपादाय दृष्टान्तसिद्धौ दार्ष्टान्तिकेऽपि व्यवहारसिद्धमेकत्वं केन वार्यत इति[1]। न च[2] सर्वात्मना दृष्टान्त इति चेत्? सत्यमेतत्। तात्त्विकं पुनरेकत्वं कस्य सामर्थ्येन समर्थ्यताम्, दृष्टान्ते तदन्वयदर्शनात्तेन व्याप्त्य-

१. °र्थप्रत्ययनुप्रयोगार्हि[दह]मिति र A. चेच्छामात्र° र २. दृष्टमिति नास्ति अ ३. स्मृति चेति अ ४. परापि च अ ५. °सात्तस्या° र ६. शरीरेति नास्ति अ ७. °वसान° अ ८. °प्यध्वे र ९. युज्यते र १०. मात्रेति नास्ति अ १. इतीति नास्ति अ २. चकारो नास्ति अ

सिद्धेः[3]। दृष्टान्तदृष्टेनापि हि प्रमाणबलावलम्बिनी व्याप्तिः सिद्ध्यति। अदृष्टेन तु तत्सिद्धिशङ्कापि नास्ति। तस्मान्न सर्वात्मना साधारणो दृष्टान्त इति वार्तायामपि[4] साध्यसाधनाभ्यां साधर्म्यस्तावदवश्यकर्तव्यः। न हि [5]व्याप्तिप्रदर्शनादन्यो दृष्टान्तस्य अर्थः, न चानुपदर्शितेन दृष्टान्ते साध्येन व्याप्तिसाधनमादर्शितं भवति। न चैकावयविसिद्ध्या साध्यशून्यतापरिहारो हारी। शरीरबुद्ध्याद्यविराशितया नर्तक्याऽवयवित्वाभावात्। शरीरापेक्षया त्ववयविदूषणमेव जागर्ति। आत्मापेक्षायां तु सोऽद्यापि न सिध्यति, विपर्ययबाधकाभावाच्च नानेकान्तशान्तिः[6]। ममेति प्रतिसन्धानं हि विकल्पतया अनाद्यविद्यावशादपि प्रत्यभिज्ञानवत् [7]संभवत्कथमेकसंबन्धाधीनतां[8] स्वीकुर्यादिति ?

तदेवं यथास्मृति कर्मफलसंबन्धादिकमशेषमवस्थातारमन्तरेणापि न विपत्तिमासादयति[9] क्षणिकवादिनः, तथा कार्यकारणभावबुद्धिरपीति न साधारणानेकान्तशङ्काकलङ्कः।

शङ्करस्तु वाचाटतया किमपि नाटयति[10]। तथा हि, कदाचिदुपलम्भपूर्विका[1] धूमबुद्धिः तेजःकार्यमिदं कपोतकण्ठधूसरं वस्त्विति निश्चयमुत्पादयति, कदाचित् तदुभयोपलम्भपूर्वकस्तदनुपलम्भः। अनुपलम्भोऽपि प्रतियोगिवस्तूपलम्भस्वभावतया अध्यक्षरूप एव। अन्वयः पुनरनुपलब्धिनिष्ठायां विहित इति तत्रैवावधार्यः। अन्वयव्यतिरेकग्राहकप्रत्यक्षानुपलम्भनीतिरपि[2] त्रिकपञ्चकचिन्तायां दर्शितेत्यास्तां तावत्।

प्रकृतं तु ब्रूमः। उभयथापि क्रमभाविनीषु बुद्धिषु [32b] [3]पूर्वपूर्वया संस्कारविशेषाधानादन्तिमा[4] बुद्धिरेतस्येदं कार्यमिति मतिमुत्पादयितुं पूर्ववन्निर्वहतीति नावस्थितस्यानुरोधः प्रतिसन्धातुः।

यत्पुनरुक्तम्, व्यतिरेको मनोरथस्याप्यविषय इति, तदतिसाहसम्। नहि यदेव[5] प्रत्यक्षं वस्तुग्राहि वस्तुद्वयनिवृत्तौ[6] तदेव तयोर्व्यतिरेकमपि गृह्णातीत्युच्यते, किं तु तद्विविक्तप्रतियोगिवस्तूपलम्भस्वभावं प्रत्यक्षान्तरमेव। ततो यदुक्तं तच्च नास्ति तेन च प्रतिपत्तिरिति न न्याय्यमिति क्वोपयुज्यते ? न चैवं स्वसंवित्तिवादोपलम्भसंगतिः। यदप्युक्तं[7] पूर्वोत्तरयोः[8] क्षणयोः संवित्ती, ताभ्यां वासना, तया हेतुफलाध्यवसायी

३. °नुपदर्श° र ४. °मसि र ५. प्रेति नास्ति र ६. °चानेकान्त° र ७. सम्भवमन्नकथं र ८. °मन्वितताधीन° र ९. विद्यातीतमा° र १०. नटयति र १. वेत्यधिकम् र, धामधूम° अ २. रीति अ ३. पूर्वया र ४. अस्ति सा अ ५. यावदेव र ६. निवृत्तं अ ७. तदप्युक्त° र ८. °वोत्तर° अ

विकल्प इति चेत्? तत् किमिदानीं यत्किञ्चिदाशङ्कितेन वक्तव्यमित्येवं [9]विधिरनुष्ठीयते भवता? विकल्पो हि गृहीतानुसन्धानमतद्रूपसमारोपो वा स्यात्? न तावत् पूर्वः पक्षः, अदृष्टान्वयव्यतिरेकस्य पुरुषस्य हेतुफलभावाग्रहेऽनुसन्धानप्रत्ययहेतोर्वासनाविशेषस्यैवानुपपत्तेः। अगृहीतस्य चानुसन्धानेऽतिप्रसङ्गादिति।

तदेतन्न समीचीनमालोचितम्। यतो हेतुफलभूतपूर्वोत्तरक्षणयोरनुभवेन क्रमिणापि स्वरूपसाक्षात्करणात् हेतुफलत्वे गृहीते एव, केवलं हेतुकाले फलाभावात् तद्विषयसामर्थ्यग्रहणेऽपि फलादर्शनात् तदवसाय[10] एवाप्रवृत्तः कार्यदर्शने प्रवर्तते[1]। तथा फलावलोकनेऽपि तत्कार्यता गृहीतैव विकल्पेनानुसन्धीयत इति गृहीतानुसन्धानरूप एवायं विकल्पः। अन्वयव्यतिरेकग्रहणं च प्रत्यक्षानुपलम्भाभ्यां प्रतिपादितमिति यत्किञ्चिदेतत्।

एतेन तदपि प्रत्युक्तम्, यदुक्तं न चादृष्टान्वयव्यतिरेकस्य हेतुफलभावो वासनायां वासनाहेतौ च[2] सिध्यति। तत्रापि पर्यनुयोगस्याविशेषादनवस्थेति।

अन्वयव्यतिरेकदर्शनं हि प्रस्तुतविषयं तावदुपपादितमेव। वासनाविकल्पयोरन्वयव्यतिरेकसिद्धिरध्यक्षानुपलम्भेष्वन्तिमादेवानुसन्धानविकल्पप्रवृत्तेः[3], एकाकिनः प्रत्यक्षादनुपलम्भाद् वा प्रवृत्त्यभावात्, शक्तिस्वभावत्वाद् वासनायाः कार्यमन्तरेण व्यवस्थानुपपत्तेः। तथा व्यवस्थितायाश्च तस्याः स्वहेतुनानुभवेनापि सहान्वयव्यतिरेकसिद्धिः कार्यान्वयव्यतिरेकद्वारेणैव। न चाद्यं चोद्यम्,- यावन्नानुसन्धानविकल्पः तावन्न वासनायां वासनाहेतौ वान्वयव्यतिरेकसिद्धिः, यावच्च न वासनायां वासनाहेतौ वान्वयव्यतिरेकसिद्धिस्तावन्नानुसन्धानविकल्प इति। न ह्यनुसन्धानविकल्पो वासनायां वासनाहेतौ [4]वान्वयव्यतिरेकनिश्चयमपेक्षते, अपि त्वनुभववासनयोरन्वयव्यतिरेकवत्योः स्वसन्ताने सत्तामात्रम्, तदन्वयव्यतिरेकनिश्चयस्त्वनुसन्धानविकल्पमपेक्षत एव। तत्र यथा दहनेन्धन[33a]विकारान्वयव्यतिरेकनिश्चयानपेक्षस्तदपेक्षणीयो धूम इति नेतरेतराश्रयस्तथा प्रस्तुतेऽपीत्यलं बहुभाषितया।

अतद्रूपसमारोपपक्षे तु[5] दूषणप्रसङ्गागतमप्रस्तुततया तदनङ्गीकारेणावधीरितं तावत्। तस्माद्व्याकुला[7] कार्यकारणभावप्रतीतिरस्थिरत्व[8] इति स्थितम्॥

---

९. विधे अ १०. °दर्शनादव° अ १. प्रवृत्तेः र २. चकारस्तक्ष: ३. °देषानु° र ४. °चान्वय° र ६. त्विति नास्ति अ ७. °दध्य क्ष(ध्यक्षे)णा° र ८. °ररिथरत्वमि° र

तत्स्थितौ च क्रमप्रतीतिरनिवारिता, अस्मिन् सतीदमस्मादुपजातमिति प्रतीतेः क्रमावसायनान्तरीयकत्वात्[६]। अन्यथा सिद्धसाध्यविभक्तिप्रयोगस्य विषयनियमानुपपत्तेः। तस्माद्धेतुफलयोर्वा क्रमप्रतीतिः फलयोर्वेति न कश्चिद्विशेषः क्रमापेक्षया। यौगपद्ये शङ्कापि[१०] नास्ति, ऐककालिकानेकावलोकनानन्तरमेव[१] सकृदिमानि जातानीति[२] विकल्पस्य बीजादिवाङ्कुरस्योत्पत्तेः। न हि तदनेककार्योदयग्रहणकृतः[३] कश्चिदपराधो विरोधी[४] क्षणिकतायाः। क्रमिकदर्शने हि स्थिरापेक्षा स्यादप्यनुसन्धानायापातत्तः, सकृद्दर्शने तु किं स्थिरेण? एवं तु स्यात्- सकृद्दर्शनेऽनन्तरमपि स्मर्तान्यः प्राप्नोतीति, तत्र परिहृतं प्राक्। तदेव वा वाच्यमस्तु, किमग्रणकण्डूयास्थानीयेन साकारवेदनदूषणोद्गीरणेन[६] अप्रस्तुतत्वात्? ग्रहणं चेदस्ति सकृदनेकस्य साकारेण[७] निराकारेण वा ज्ञानेन भविष्यति, किमिदानीमेव सकलतत्त्वनिष्ठाया अनुष्ठानम्? यदि तु सकृज्ज्ञायमानानेकग्रहणमेव[८] नास्तीत्यभिमतम्, तदा यथा साकारनिराकरणं तथा निराकारस्याप्यस्तु। अन्यथा तेनैव ग्रहणमाशङ्क्येत[९]।

किं चानेकग्रहणाभावोऽपि सकृत् कथमभिमतः? किं सकृदनेकसंभवाभावात्? ग्रहणप्रकारासंभवाद् वा?

प्रथमकल्पे तावत् कथं प्रदीपस्य वर्तिविकारान्धकारक्षयादय[:] तदा क्रियन्ते स्वयमपि? अस्माकं पुनरेवं सति प्रयासलाघवमेव न क्षतिः, नित्ये क्रमदूषणेनैव साध्यसिद्धेः।

द्वितीये तु अनेकसंभवव्यवहारः किंकृतोऽस्तु? अनुमानकृतोऽस्तु। किं तदनुमानमिति पृष्टो यदि व्याकरोषि तदानुमानसिद्धमेव यौगपद्यं क्रमसहायमर्थक्रियाव्यापकमस्तु, कथं प्रकृतिविरहदोषः[१०]? अथ न व्याकरोषि, तावतैव हतोऽसि। युगपदनेकग्रहनिग्रहे च वरमन्तःकरणस्य मनसो युगपदनेकत्र[१] प्रवृत्त्यसंभव एव प्रतिपद्यताम्, किमनेन?

अथानेकाकारानेकसंवेदनसंकलयिता एक एषितव्य इति मतिः? ततः किम्? स्थिरस्वीकारो हि क्रमवान् नः संप्रति पीडयति, अन्यथा तु वादान्तरावतार एषः। तद्वत् क्रमेऽपि संकलयिता सिध्यतीति चेत्? तदपि यदि साकारनान्तरीयकं ग्रहणमिति

६. °वसानन्त° र १०. यौगपद्यशङ्का° र १. °नेकत्रैलो° र २. शातानी° अ ३. कार्योदय अ ४. रारोचिरो(?)धी° र ५. परिकृतं र ६. °दीरणेन र ७. कारणेन र ८. मानानेकग्र° अ ९. आशंकेत अ १०. विरहे र १. ग्रहनिग्रहे.... युगपदनेक° इति भागः पतितः र

प्रमाणसिद्धं स्यात् तदा सिध्येत्, अन्यथोपगममात्रस्य [2]सुकरत्यागत्वादनाकारस्वीकारेण निर्वहेत् परः[3]। न [33b] चाकारसाधनयत्नोऽस्ति, विषयस्यैव तदाकारत्वं[4] समर्थितं स्यादिति तन्निरपेक्षमक्षरं वा कथमाचक्षीत ? न चात्र [5]प्रतिसन्धातुरस्थिरत्वाविरोधिनः स्वीकारेऽपि क्रमेऽवश्यं स्वीकारः, यथा भिन्नदेशमभिन्नस्वभावस्य [6]कार्यकरणमिच्छन्नपि न भिन्नकालमिच्छति। तस्मात् क्रमे प्रतिसन्धातृस्वीकारार्थमन्य एव प्रकार आश्रयणीयः। ततः[7] किमनेन ? तस्मात् कथञ्चित् गण्डोल्लासः[8] कर्तव्य इत्येवंविधिमनुष्ठितोऽनेन[9]। न चेदानीमाकारदूषणप्रतिविधेरवसर इति नेदं प्रतिपिध्यत[10] इति ॥

ननु तथापि,

मतिः साकारा चेन्न च भिदि मिथो वेदनमतः
स्फुरत्येकैवासौ तदिह न विरोधः प्रभवति।
अतः शक्ताशक्तोऽप्यभिदिति निरस्ता क्षणिकता
न वाच्यो दोषश्चावयविनि न वा साकृतिनयः[2] ॥

नन्वत एवोक्तं नायं तत्प्रतिविधेरवसर इति। न हि [3]तदसिद्धिरवयविसिद्धिर्वा बाधिकास्माकम्।

नित्यत्रयानुगमनादिगुणेन कान्तः
सौत्रान्तिकस्य समयोऽपि न बाधितोऽंशे[4]।
नोचेन्न पुद्गलनिराकरणेन बौद्ध-
सिद्धान्तबाधकृत एव कृतापराधः ॥

तस्मात्,

धियः साकारत्वं यदि मम य एवैष समयो[5]
भवेद् दुष्टो मानाभ्युपनतहतिः स्यात्कथमिव।
प्रमासिद्धं[6] तच्चेद् भ[व]तु धिय[7] एवैष समयो
[8]बहिश्चित्रेऽप्येकस्थितिरिति विलुप्तं खलु बहिः ॥

---

२. स्वकर° अ ३. हियेरः र ४. °वारः अ ५. प्रतिसन्धान्त(तु)रस्थि° अ ६. °कार(ण)° र ७. तत् र ८. गल्पोल्लासः अ ९. °वं चिरमनु° र १०. प्रतिवध्यत° अ १. साकाचे र २. कृतिर्नयः अ ३. तदा° र ४. °ऽञ्जो अ ५. समय र ६. प्रणे(?)सिद्धं र भवे(?)य र; भतु धिय अ ७. °श्चिते(त्ते)प्ये° र

अर्थक्रियाभेदनान्तरीयको ह्याकारभेदः पदार्थेषु। तत्र यद्याकारभेदेऽपि नार्थक्रियाभेदः, हन्त प्रतिभासमात्रभेदान्नातिरिक्तं किञ्चिदिति बाह्यपदार्थापलाप एव प्रसक्तः[8]। तदवश्यमनेन बाह्यवस्तुन आकारभेदाद्भेद एव[9] स्वीकर्तव्यो, बुद्धिर्भिद्यतां मा वा। नहि समकक्षतापि[10] धियोऽधिगन्तुमलम्। अन्यथा स्वसंवेदनमन्यप्रकाशनं[1] च बाह्यस्यापि प्रसज्यमानं ग्राह्यग्राहकभावमेव विप्लावयेत्। तद् यदि प्रमाणसिद्धं बुद्धेरेकत्वं [2]चित्राकारायास्तस्या एवास्तु, बाह्यं तु भिन्नाकारं भिन्नमेव। बाह्यमपि भिन्नाकारं कथं भिन्नमिति चेत्? भवतु त्रिभुवनमेकमेव वस्तु किमस्माकं क्षीणम्? पृथगर्थकर्मनियोगाद्यभावे तु न [3]गन्धर्वनगरादिवत् प्रतिभासमात्रतामतिशयीतेत्युक्तम्। क्वचिदेकता क्वचिद् भेद इति विभागस्यापि नैष प्रस्तावः।

अथ बुद्धेरप्येकत्वं समयमात्रं[4] न प्रमाणसिद्धम्। तदा[नीं] बाधविरोधी समय इति स एव दुष्यतु[5], प्रमाणोपनीतस्तु प्रस्तुतो वस्तुभेदः[6] परस्परविरोधात् कथं त्याज्यः?

किं च,

हतो हेतुर्वक्तुर्यदि समयमाश्रित्य समये
तवास्त्वेष श्रेयानथ समयचिन्ता प्रवदितुः।
न वै शास्त्रे स्थित्वा वचनमिति वक्तुश्च समयः
प्रमासिद्धै रूपैरनुमितिविधौ नागमगुणः॥

अपि च न विरोधमात्रं भेदमस्माकं, किं तु शक्ताशक्तत्वेन। तच्चावश्यं [34a] स्वीकार्यम्[7], अन्यथा साधनदूषणसमर्थानुसरणविसरणात् पर्यवसितो वाद इति किमपरेण? तस्माच्छक्त्यशक्तिद्वारेण भेदो दुष्परिहरः। ततो विरोधमात्रस्य भेदव्यभिचारेऽपि प्रकृतविशेषस्य न[8] व्यभिचारः, वस्तुमात्रस्य वह्निव्यभिचारेऽपि धूमलक्षणवस्त्वव्यभिचारवत्[9]।

ननु शक्ताशक्तत्वेनापि भेदो विरोधादेव, स च व्यभिचारीति चेत्? धूमोऽपि वस्तुत्वादेव हेतुर्गमको, वस्तुत्वं च व्यभिचारीति समानम्। तस्माद् वस्तुत्वादेव दहनस्य

८. प्रयुक्तः र ९. आकारभेद एव र १०. °क्षाभिर्दं अ १. °दनन्या(!)प्रका° र २. °चित्राक्षरोयास्त° र ३. यथगन्धकर्म र ४. समयमात्रं अ ५. दुष्यते र ६. वर्णभेदः र ७. °वश्यस्वीकार्यः अ ८. नेति त्यक्तः र ९. लक्षणम्व(व्य)भिचारवत् र; व्यभिचारत्वत् अ

गमको धूम इति न[10] वस्तुत्वं परिहृत्येत्यर्थः। न तु यावद् वस्तु तावद्[1] गमकम्। एवं शक्ताशक्तत्व[2]-विरोधादेव भेदसाधनमिति न विरोधं विधूयेत्यर्थः। न तु यावद् विरोधस्तावद् भेदसाधकः।

आह च,

विरोधश्चेद् भेदं व्यभिचरति भेदप्रतिपदे
विशिष्टोऽसाविष्टः प्रभवति च शक्तेतरतया।
अशक्ते सामान्ये यदि च विशेषोऽपि[3] बलवान्
न धूमादग्न्याशा व्यभिचरति यद्वस्तु शिखिनम्॥

विरोधादेवालं बलवदबलत्वं यदि भिदे[4]
न वस्तुत्वं हित्वा हुतभुजि स धूमोऽपि बलवान्।
अथो[5] वह्निं वस्तु व्यभिचरतु भेदोऽस्य तु बली
प्रमासिद्धापत्तिः प्रकृतविषयेऽप्येष समयः॥

अभेदे हि शक्ताशक्तयोः सकलमाकुलम्,[6] त्रैलोक्यमप्रवृत्तिनिवृत्तिकमासक्तमिति शक्तेतरयोर्विरोधोऽवश्यं भेदसाधक एषितव्यः, [7]आकारद्वारेण भवतु मा वा।

[8]नन्वाकारभेदोऽपि शक्तिभेदनान्तरीयक एवेति किंकृतो विभागः? सत्यम्, बाह्येषु तावदेवमेव, जलानलादिषु तथैवोपलब्धेः। अन्यथा च न बाह्यं नाम किञ्चित् प्रतिभासमात्रावशेषात्। बुद्धेस्त्वाकारा न तावद् दाहगाहनादिष्वेवोपयोगिनो, बाह्यकार्यत्वात्तेषाम्। [9]यत्पुनरवसायादिकार्यं तदप्याकारान्तरेण सह भेदाभेदविवादारूढमेवेति कथमेकत्रैकव्यापारो दर्शितः[10]? भवतु वा किञ्चिदेकमपि कार्यम्, तत्रापि किमपोद्धारद्वारेण एकाकारव्यापारकल्पनमथ[1] भेदादेवेति[2] चिन्त्यम्। न चास्माकं चित्रबुद्धेरेकानेकत्वसाधने निर्बन्धः, इच्छापि साकारतामात्रे, क्षणभङ्गसाधने तु तस्यापि न कश्चिदनुरोधः।

अनान्तरीयके चार्थे बाधितेऽन्यस्य का क्षतिः।
[प्र. वा ४. ४७.]

---

१०. नकारो नास्ति र १. न विरोध यावद् र २. शक्ताशक्तं र ३ °विषो(?)पि र ४. भे(भि)दे र ५. अथ अ ६. °निवृत्ति° इति नास्ति अ ७. साकार° र ८. ननु कारणभेदो° र ९. यच्चेतर° र १०. °रोपदर्शितं र १. °कार कल्पन° अ २ भेदाभेदावनि र

इति न्यायात्। तस्मान्नाप्रतीतिकृतोऽर्थसामर्थ्यस्य[3] क्रमाक्रमस्य च व्याप्यव्यापकभाव-निश्चयः।

[4]यत्पुनरुच्यते, यदि क्रमेण व्याप्तम्, तदा कथमक्रमेण? अथाक्रमेण, न तर्हि क्रमेण। [4]क्रमाक्रमाभ्यां व्याप्तमिति ब्रुवता व्याप्तेरेवाभावः[5] प्रदर्शितो भवति। सा हि व्याप्यस्य[6] तत्रैव भावो व्यापकस्य तत्र भाव एवेत्येवंरूपा[7], उभयोर्व्यापकत्वेन स्वरूपं जहाति। न हि भवत्यग्निर्धूमधूमाभावाभ्यां व्याप्त इति। किमेवं वक्तरि वक्तव्यम्? दत्तो हि जलाञ्जलिरमुना क्रमेण[8] सकलतार्किकवर्त्मनि वर्तमानैरात्मना [34b] च अनेन बहुधा[9] दत्तस्य विकल्प्य [10]दूषणराशेः। [1]अपि नामैतत्प्रकाराणां दूषणेनासत्ताप्रतिपादनात् तत्प्रमेयमसत्स्यादिति विकल्प्य दूषणानि प्रतीयन्ते, तत्प्रकारैरव्याप्तौ च दूष्यप्रमेयस्य तेषामभावेऽपि[2] [3]नास्याभावनियम इति दूषणाभिधानेऽपि प्रागिव[4] संशयः, तदलमुपन्यासेन। [5]तत्प्रकाराणामभावेऽभावनियमे वा स एव व्याप्त्यर्थ इति कस्य निषेधः? तथा च सन्तानस्य वस्तुत्वमनिच्छन् भिन्नोऽभिन्नो वेति विकल्प्य दूषणमारभते, तदुभयाभावविभावने[6] च निर्वृणोतीति न भेदाभेदाभ्यां[7] वस्तुव्याप्तिमनङ्गीकुर्वन्निर्वहति। एवं त्र्यादिविकल्पेष्वपीति स्थितम्। तस्मादेकैकेनाव्याप्तिः, समुदायेन तु व्याप्तिरेवेति न्यायः। यथा युधिष्ठिरादिष्वन्यतमोऽभवन् पाण्डव एव न भवति। एकनिवृत्तौ हि तदन्यप्रकारमाश्रित्यासीत् तत्त्वम्। सर्वप्रकाराभावे तु क्वास्ताम्? अतो नियमवती[8] निवृत्तिर्व्याप्तिरेव।

यदप्युक्तम्, न हि भवत्यग्निर्धूमधूमाभावाभ्यां व्याप्त इति, तदपि पापीयः। क्रमाक्रमाभ्यां हि कार्योदयव्याप्तिवादिनो राश्यन्तरविरहवता तद्धर्मद्वयेन व्याप्तिः प्रस्तुता, तत् क्वेदमुपयुज्यते? न हि क्रमाक्रमाविव कार्याणां वह्नेरपि धूमधूमाभावो धर्मः[9]। स्वभाव एव हि धर्मिणो धर्मशब्दवाच्यः प्रकृतः। तद् यदि धूमधूमाभावाभ्यामिति धूमवत्त्वाधूमवत्त्वाभ्यामिति[10] विवक्षितम्, तदा कः प्रतिबन्धः प्रतिबन्धबोधस्य[1]? न हि दहनस्तदवस्थाद्वयविरहितः क्वचिदुपपन्नः।

अथ यथा यथोक्तधर्मो नान्तरीयकत्वमग्नेस्तथापरभूते धूमे[2] धूमाभावशब्द-

---

३. सामर्थ्येति नास्ति र ४. क्रमा° इति नास्ति र ५. °रेका° र ६. सातिशयस्य र ७. भावे वे.(चे)त्येव र ८. धर्मेनि र ९. बहुवा र १०. विकल्प च दूष° अ १. अपि नात्मं अ २. अपीति नास्ति अ ३. न (? त)स्या° र ४. प्रागेव र ५. °त्प्रमाणाभा° र ६. विधाने च र ७. न भेदाभ्यां र ८.. भातानिसमवति(?) र ९. धमतो वो(?)धर्मः र १०. धूमत्वाभ्या° र १. बाधस्य र २. धर्मे र

वाच्ये[3] च निश्चितमिति ताभ्यामपि कथं न व्याप्तिरस्य[4], सामान्यलक्षणस्याक्षीणत्वात् ? अस्ति हि [5]धूमधूमाभावयोर्यत्राभावस्तत्र वह्नेरपि, यत्र च वह्निस्तत्र तयोरन्यतरस्य संभवः, धूमे सति [6]हुताशनप्रकाराणामिवान्यतमस्येति चेत् ? यद्येप निर्बन्धः कस्तावदेवं दोषः, अनिष्टिमात्रस्यानङ्गत्वात्[7] ? व्याप्तिर्हि व्याप्यसंभवे [8]व्यापकप्रभेदान्यतमसंभवाय व्यापकाभावेन[9] नियमेन व्याप्यनिवृत्त्यर्थमर्थ्यमाना तदुभयव्यापारव्यभिचारशङ्कायामेव दुष्यति। तच्च नास्तीति किमनिष्टिमात्रेण भवतः ? केवलं [10]विशेपलक्षणायोगान्न साक्षाद्[1] धूमतदभावाभ्यामनलस्य व्याप्तिरभिधीयते। तथा हि दहनधूमयोर्भेदान्न तादात्म्यम्, धूमादि[भावाभावा]भ्यामस्यानुत्पत्तिश्च न कार्यकारणभाव इति धूमवत्त्वेतराभ्यामेव स्वगतधर्माभ्यामाश्रयभुजोऽञ्जसा[2] व्याप्तिः। तदर्थस्वीकारद्वारा तु धूमतदभावाभ्यामप्यभिधीयमाना न दोषमावहति। तद् यदि भवत ईदृशी व्याप्तिरनभिमता विपर्ययो वाऽभिमतः, अस्तु। अस्माकं तावदयमेव व्याप्तिक्रमो विवक्षितः, स एव च प्रकृतोपयोगी, विपक्षादत्यन्तं हेतोर्व्यावर्तनसमीहया [35a] क्रमाक्रमाभ्यामर्थशक्तेः व्याप्तिवादप्रक्रमात्[3], तच्चैवमेव सिद्धमित्यलमेतावति[4] स्खलिते निर्बन्धेन। तदेवं क्रमाक्रमाभ्यामर्थक्रियाव्याप्तिसिद्धावेवार्थक्रियाभावेन क्रमाक्रमाभावस्यापि व्याप्तिसिद्धिः, न हि व्याप्यव्यापकयोरतद्भावसिद्धिमुद्धूय व्याप्याभावेन व्यापकाभावस्य व्याप्तावुपायान्तरमस्तीति[5] नानैकान्तः। प्रकृतव्यापकानुपलम्भस्य व्याप्तिसिद्धौ च न विरोधगन्धः, सपक्षे भावाच्च ॥

नाप्यसिद्धिः, नित्यस्य साध्यधर्मिणः क्रमयौगपद्याभ्यां विरोधसिद्धेः। अत्र न्यायभूषणः, यदि तावदक्षणिकानामसत्त्वं प्रसाधयितुमभिप्रेतं, तदा कस्यात्र धर्मित्वम् ? तस्यैव[6] धर्मित्वे तस्यैवाभावसाधनमयुक्तम्। न ह्यसति धर्मिणि हेतोः पक्षधर्मत्वम्[7]। न चासति पक्षधर्मत्वे गमकत्वम्[8]। तस्मादसन्तोऽक्षणिका इत्ययुक्ता प्रतिज्ञा। अथ सन्तोऽक्षणिका न भवन्तीति प्रतिज्ञार्थः, तथापि तस्यां क्रमाक्रमविरोधादित्यस्य कथं पक्षधर्मत्वमिति[9] ? किं चार्थक्रियाशक्तेर्नित्येन सह विरोधो व्यापकानुपलम्भादेव मतः, व्यापकस्य तु क्रमाक्रमस्य कथम् ? अपि चैवं सत्त्वमेव[10] नित्यस्य प्रसज्यते। तथा च सर्वः प्रयासो विफलः।

---

३. वाच्येव र ४. व्याप्तारम्य र ५. धूमाद्यभावयो° अ ६. प्रकाराणामिव अ ७. अनष्टि...नङ्गत्वात् अ ८. स्वभावे र ९ व्यापकाभावेनेति नास्ति र १०. विशेपक्षण° र १. योगात् साक्षात् र २. आश्रीयन्तञ्जसा र ३. °वादक्रमात् र ४. तथैव सिद्धमित्यसमेभा(ता)° र ५. °सात्तुपा(पा)या°र ६. धर्मित्वस्यैव साधनत्वम° अ ७. धर्मित्वं र ८. न(?) गमकत्वं अ ९. धर्मित्व° र १०. सत्यमेव अ

यदाह शङ्करः, विरोधसिद्धिमनुसरता विरोध्यपि प्रतिपत्तव्यः, तत्प्रतिपत्तिनान्तरीयकत्वाद्विरोधप्रसिद्धेः[1]। यथा दहनतुहिनयोः, सापेक्षध्रुवभावयोश्च। प्रतियोगी चाक्षणिकः प्रतीयमानः कथं बाधकोपरोधेनार्थक्रियाकारित्वं जहाति, प्रतिपत्तिरूपार्थक्रियाकारित्वात्? अतत्कारित्वे कथं प्रतीयेत, अजनकस्याप्रमेयत्वादिति वाक्येषु[2] यथासारमेतल्लिखितम्।

तथा च न्यायभूषणः, विरोध्यप्रतीतौ विरोधस्य प्रत्येतुमशक्यत्वात्, न हि दहनतुहिनयोरन्यतराप्रतीतौ विरोधप्रतीतिरस्ति। क्रमाक्रमविरोधादक्षणिकं यदि प्रतीयते ततः[3] कथमसत्, प्रतीतिरूपार्थक्रियाकारित्वात्? अतत्कारित्वे कथं प्रतीयते? न हि स्वयार्थान्तरमजनकं प्रतीतिविषयत्वेनेष्टम्। अथाक्षणिकं नैव प्रतीयते, कथं तस्य क्रमाक्रमाभ्यां विरोधोऽवगम्यत इति? तदेवं नित्यस्य सर्वथाऽभावात् प्रतीत्यविषयत्वात् आश्रयासिद्धिर्व्यापकानुपलम्भस्य। तथा स्वरूपासिद्धिश्च॥

यदाह शङ्करः, अथ क्रमयौगपद्यायोगादक्षणिकाभावः सिध्यति, सत्तातः क्षणिकत्वम्, एवं तर्हि तस्य प्रतिपत्तिजनकत्वात् तदवस्थमनैकान्तिकत्वमर्थक्रियाकारित्वस्य, तस्याभावेऽपि भावात्। व्यापकाभावसिद्धौ हि व्याप्याभावोऽन्यः प्रतिपत्तव्यो [4]यथा अग्न्यभावे धूमाभावस्तोयादिः, वृक्षाभावे शिंशपाभावस्तद्रहितो देशादिः। एवं क्रमयौगपद्याभावे सामर्थ्याभावश्चान्यः[5] प्रतिपत्तव्यः, [35b] तदसिद्धावनिश्चितव्यतिरेकेण हेतुना साध्यसिद्धेरयोगात्। प्रतिपत्तौ तु व्याप्यव्यापकभावस्य प्रतीतिरूपार्थक्रियाकारित्वमिति दुर्निवारः प्रसङ्ग इति।

अतएव सपक्षे [6]सत्त्वमप्यस्य वक्तुमशक्यम्। आकाशकुशेशयस्य क्रमाक्रमाभावस्यार्थक्रियाशक्त्यभावस्य च[7] प्रतीत्यभावात्। प्रतीतौ सर्वेषां वस्तुत्वेन मूलहेतोः पक्षसपक्षयोरन्तर्भावप्रसङ्गात्।

यन्न्यायभूषणः, व्यतिरेकबलेनैवास्य गमकत्वमिति चेत्— न, वैधर्म्यदृष्टान्तस्याप्यभावात्। शशविषाणादिर्दृष्टान्त इति चेत्— न, तस्य प्रतिपत्त्यविषयत्वात्। न हि स्वरूपेणापि यन्न प्रतीयते तत् साध्यसाधनधर्मरहितं प्रतिपत्तुं शक्यते, न चाप्रतिपन्नस्य दृष्टान्तत्वं युक्तमिति। किं च[8] नित्यस्यार्थसामर्थ्याभावसाधनमसत्तासाधनमेतत्, तच्च सत्तासाधनवन्न त्रयीं दोषजातिमतिपतति।

---

१. °रीयत्वाद् अ A. २. वाक्येषु अ २. सापेत्य(?) र, सापेक्षव अ ३. तत् अ ४. यथेति नास्ति र
५. °श्चान्यः अ ६. पक्षे र ७. चेति नास्ति अ ८. किंचि(त्) र

न हि कस्यचिद् धर्मस्य विधिनिषेधव्यवहारो नाम संवादवान् [वस्त्वेकनियतः, किं त्ववस्तुन्यपि[५]। अथावस्तुनि नास्त्येवेति मतिः, तत्र कथमेतदिति पर्यनुयुक्तो न राजशासनमाश्रित्यैव स्थेयमिति यदि किञ्चिद्धेतुमुपाददीत कथमाश्रयासिद्धिपरिहारः? [६]मूकीभूयावस्थानं सति वचनसामर्थ्ये नोचित इति यत् किञ्चिल्लपतो न प्रतिमल्लः। नापि परस्तेन प्रतिपादितो भवति।

किं चावस्तुनि [७]नास्त्येव विधिप्रतिषेधव्यवहार इत्येवं वदतैव अवस्तुनि निषेधव्यवहारः स्वीकृतः, हेतौ परं परो वञ्चितः, न हि निषेधमवधूय नञोऽन्यदर्थसंभावना, स च निषेधो यदि न प्रमाणसिद्धः, कथमाद्रियते? किं वास्य वचनेन? प्रमाणसिद्धिस्वीकारे च न तावदध्यक्षमेवावस्तुनिषेधयोः साधनम्, अध्यक्षस्य तद्विषयविरोधादर्थसामर्थ्यापेक्षणात्। अनुमानाश्रये तु[८] [36b][९] आश्रयासिद्धिरशक्यपरिहारेति। अतोऽवस्तुप्रस्तावे मूकतैव प्राप्ता। न च प्रतिज्ञामात्रस्याप्यवकाशः। न चैवं शक्यं यावन्न राजदण्डेनावस्तुप्रस्तावावारणम्। प्रस्तावे त्ववश्यं सता संभविनो वचनमनुपङ्गि पर्यनुयोगसंभवात्[१०]। वचनस्य च[१] विधिनिषेधाभ्यां नापरो व्यापारः[२]। ततो न वचनं नावचनमिति महति कष्टसङ्कटे प्रवेशः।

तथा च संप्रत्येव नित्येऽन्तरालकमलवत् क्रमाक्रमाभावात् नार्थसामर्थ्यमिति[३] प्रस्तावेनावस्तुनि[४] कस्यचिद्धर्मस्य [५]विधिनिषेधाविति विदुषापि भवता न मूकीभूय स्थातुं शक्यम्; किं तु कृत एव निषेधो बौद्धाभिमताया असति क्रमाक्रमाभावेन सामर्थ्यनिवृत्तेः[६]॥

निवृत्त्यभावस्तु विधिर्वस्तुभावोऽसतोऽपि सन्।
तदभावस्तु[७] नास्तीति पश्य [८]धाष्टर्यविजृम्भितम्॥
[प्र. वा. ४. ५५३]

इत्यन्तरश्लोकः।

अथ नित्यस्य [९]कोष्ठशुद्ध्या वस्तुत्वान्न प्रमाणान्निषेधविरोधः कस्यचिद्धर्मस्य, तत् किमिदानीं गगननलिनस्यापि कोष्ठशुद्ध्या वस्तुत्वमेव? वस्तुत्वे वा नावस्तुको

५. किन्त्ववस्त्वन्वयि अ ६. तुल° आ. त. वि. पृ: ४२५ ७. किञ्च वस्तुनि र ८. वा अ, र ९. पत्रक्रमे व्यतिक्रमः अ १०. सम्भवाच्च अ १. चकारो नास्ति र २. नापरो वचनव्यापारः र ३. क्रमभावा° आ ४ प्रस्तावेन। वस्तुनि र ५. विधि° इति नास्ति अ ६. समर्थानिवृ° र ७. 'वस्त्वभावस्तु प्र. वा. ८. वान्ध्य° प्र. वा, वाल्य र ९. कोष्ठ° र

विकल्पः सङ्कल्पयितुं शक्यः। तद्वस्तुनि नभस्तामरसे [1]'क्रमादिविरहादर्थक्रियासामर्थ्य-विरहोऽस्तु न वा ? उभयथापि नावस्तुनि विधिः[1] प्रतिषेधो वेत्यस्याः प्रतिज्ञाया निर्वाहः[2]। कथमेतदिति प्रमाणगवेषणे च प्रत्यक्षाभावेऽनुमानमाश्रीयमाणमाश्रयासिद्धि-ग्रस्तं समस्तम्, अप्रमाणवचनमात्रस्य चानपेक्षितत्वात् प्रश्नकृता प्रेक्षेण[3]। न चोभया-भावोऽभिधातुं शक्यः, विधिनिषेधयोर्भावाभावस्वभावादेकनिषेधेनापरविधानात्। विधिनिषेधो हि निषेधः [4]प्रतिषेधनिषेधश्च विधिस्तत् कीदृशोऽपरः ? [5]अस्तु चोभय-निषेधप्रतिज्ञाहेतोरुपादीयमानस्य नाश्रयासिद्धिपरिहारः।

यच्चेदमुक्तम्, कोष्ठशुद्धया वस्त्वेव नित्यमिति, ततः किम् ? न हि तद्वस्तु-त्वेनैव[6] धर्मि, आश्रयासिद्धिदूषणस्यानवकाशप्रसङ्गात्। परोपगमापेक्षयेदमुच्यत इति चेत् ? प्रसङ्गहेतुस्तर्हि अवस्तुत्वान्नित्याश्रयासिद्धः[7] क्रमादिविरहो न हेतुरित्यर्थः। एवं च सत्यवस्तुनि हेतुराश्रयासिद्धत्वेन व्याप्तो वक्तव्यः, न हि प्रतिबन्धमन्तरेण कश्चिद्धेतुः। पक्षधर्मतामात्रे परोपगमापेक्षया तु प्रसङ्ग उच्यते, न तु व्याप्तावपि तदुप-गम एव। कदाचिदेवमपि स्यादिति चेत् ? तथापि न परेणावस्तुनि हेतुराश्रया-सिद्धत्वेन व्याप्तोऽभ्युपगतः, नित्य एवावस्तुनि हेतुप्रणयनात्[8]। ततश्च यत्रैवावस्तुनि वस्तुत्वात् हेतोराश्रयासिद्धिरुपनीयते, तत्रैव प्रतिज्ञायाः परिभवो नावस्तुन विधि-निषेधावित्यस्याः। यदि च परोपगमादेव[9] व्याप्तिरपि विवक्षिता, अवस्तुन्यवस्तुत्वान्न-पक्षधर्मताप्रयुक्तो [37a] हेतुरिति, तर्हि तव नेदमनुमतमिति, तथापि नावस्तुनि विधि-प्रतिषेधाविति व्याहतम्, प्रतिषेधस्य स्वयं स्वीक्रियमाणत्वात्, नञोऽन्यार्थाभावात्।

किं च सर्वः प्रसङ्गो विपर्ययपर्यवसितव्यापार इति न्यायात् यदवस्तु नित्यं तदाश्रयासिद्धिः[10]। न चाश्रयासिद्धिः, तन्नावस्तु नित्यमिति किं विवक्षितम् ? तदापि यद्याश्रयासिद्धिर्दोषः[1] प्रस्तुतो नास्ति सिद्धमवस्तुत्वं नित्यस्य धर्मिण इति नावस्तु नित्यमिति कथं न विप्लवते[2] ? तस्मात् स्वतन्त्र एवायमवस्तुत्वादाश्रयासिद्धिरवस्तुनि हेतोरिति हेतुदूषणप्रवृत्तस्य प्रकृतः। तथा च नावस्तुनि विधिनिषेधाविति दूरीकृतमेतत्। व्यापकानुपलम्भश्चायं स्वभाषया प्रयुज्यते, आश्रयत्वस्य वस्तुत्वेन व्याप्त्यभिमानात्। स चाभिमानः स्ववचनविरोधा[नव]बोधात्[3]। न हि नावस्तुनि विधिनिषेधाधारत्वमिति स्ववचनविरोधं मन्यमानस्य वस्तुत्वेन धर्मित्वस्य व्याप्त्यभिमानो मानसं स्पृशति,

१०. विरहार्थ° र १. विधेः र २. प्रतिज्ञाया इति नास्ति र ३. प्रक्षेपण श्र ४. प्रतिषेधश्च वि° र ५. अवस्तुको र ६. तद्वस्तुनैव र ७. °सिद्धिः र ८. प्रणयणात् श्र, प्रणयनति र ९. °देव च र १०. आश्रयसि° र १. °सिद्धिदोषः र २. विप्लवेति श्र ३. विरोधात् र

तथा ह्युक्तेन क्रमेण

नासिद्धे भावधर्मोऽस्ति व्यभिचार्युभयाश्रयः ।
धर्मो विरुद्धोऽभावस्य सा सत्ता साध्यते कथम् ॥
[प्र. वा. ३. १९०]

इति शङ्करन्यायभूषणे दर्शयतः । त्रिलोचनोऽपि तदेव प्रमेयजातमुपस्कुर्वन्नाह, क्रमयौगपद्यरहितत्वं बाधकं किमक्षणिकानामसत्तां साधयति, आहोस्विद् व्यतिरेकम् अर्थप्रतिबन्धम् ? न तावत् पूर्वो विकल्पः, आकाशकालदिगात्ममनसां परमाणूनां च रूपासिद्धौ हेतोराश्रयासिद्धेरसिद्धत्वात् । सोऽपि[९] व्यापकानुपलम्भो न त्रयीं दोषजातिमतिपतति । तत्र[१०] क्रमयौगपद्यरहितत्वमभावधर्मो न सिध्यत्याश्रयासिद्धेरित्युक्तम् । न हि क्रमयौगपद्यरहितत्वस्य शशविषाणधर्मत्वं प्रेक्षावन्तः प्रतिपद्यन्ते । किं च यावत्तेषामसत्त्वं प्रमाणान्तरान्नावगम्यते[१] तावदभावधर्मत्वं न सिध्यति, अन्यथा पक्षधर्मत्वसिद्धौ तेषामसत्त्वसिद्धिः, असत्त्वसिद्धौ च सत्यामभावधर्मत्वसिद्धिरिति इतरेतराश्रयत्वं दुर्निवारम् । भावधर्मत्वे चास्य विरुद्धत्वं स्यात्, उभयधर्मत्वे चानैकान्तिकत्वम्, सत्तायामिव सोऽयमसत्तायामपि तुल्यः प्रसङ्गः ।

नापि द्वितीयः कल्पः । तत्रापि हि व्यापकनिवृत्तिसहिता व्याप्यनिवृत्तिः[२] व्यतिरेकशब्दस्यार्थः ।[३] सा च निवृत्तिर्गमकाङ्गत्वादवश्यं प्रतिपत्तव्या भवतीति यदनुभवाद् गम्यते[४] तस्य हेतुः स्यादहेतोरग्राह्यत्वादिति हेतुरनैकान्तिकः स्यात्, व्यतिरेकस्यानुभवकारितया भावरूपत्वे साध्यकोटिनिक्षिप्तत्वात् । अन्वयव्यतिरेकयोरभावादसाधारणो हेतुरगमकः । तस्माद् [५]व्यतिरेकोऽवश्याङ्गीकर्तव्योऽवश्यज्ञातव्यश्च[६] ज्ञातव्यत्वे तज्ज्ञानप्रसङ्गो दर्शितः ।

स्यादेतत् । व्यतिरेको न साक्षात्कारिविज्ञानग्राह्य इष्टो यतः साक्षात्कारिणो विज्ञानस्य जनकः स्यादपि तु विकल्पयितव्यः, न च विकल्प्यमानोऽर्थः [७]स्वकीयसमनन्तरप्रत्ययाधीनोत्पादस्य [36a][८] विकल्पस्य हेतुरुपपद्यते, तत् किमुच्यते हेतुरनैकान्तिक इति ?

९. सोऽयं र १०. °मरतति। तत् र १. °ग्नानु° र २. °निवृत्ति......व्याप्येति नास्ति र ३. सनिवृ° ... भवन्ती यद° र ४. भवाज् जन्यते श्र ५ °रेकोऽस्याङ्गी° र ६. ज्ञातव्यश्चेति नास्ति र ७. ज्ञातव्ये र ८ °समन्तर° श्र ६. अत्र पत्रक्रमो भ्रष्टः श्र

तदप्यसङ्गतम्, यतः सर्व एव विकल्पो न चतुष्टयीं गतिमतिक्रामति। तथा हि कश्चिदनुभवपृष्ठभावी नीलादिविकल्पः, अपरः सन्दिग्धविषयः पिशाचादिविकल्पः, अन्यः पुनरसदर्थः शशविषाणादिविकल्पः, विकल्पः पुनरिह कश्चिल्लिङ्गजः। तत्र लिङ्गजादारभ्य सर्वो विकल्पः अवस्तुनिर्भासाद् इति भवता प्रत्यक्षाभ उक्तः, यतो वस्तुप्रतिभासं प्रत्यक्षं, स्वलक्षणाभावे तत्प्रतिभासप्रच्युतेः। न चैवं विकल्पः, तत्प्रतिभासस्य वस्तुन्यननुरोधात्[१०]। तस्मात् प्रत्यक्षाभो विकल्पः। लिङ्गजस्तु यथाध्यवसेयमर्थं प्रापयतीति प्रमाणम्। न च व्यतिरेको विकल्प्यमानो लिङ्गाभावाल्लिङ्गजेन विकल्पेन विकल्प्यते। अनुभवपूर्वकस्य च[१] विकल्पस्य पारम्पर्येण वस्तुजन्मनोऽपि न[२] वस्तुनि प्रामाण्यम्, अनुभवस्यैव प्रमाणत्वात्। अनुभवश्च व्यतिरेकाश्रयः संप्रत्येव निरस्त इति पारिशेष्यादसदर्थः सन्दिग्धवस्तुको वा विकल्पो निश्चाययतीति सत्त्वमविद्यमानव्यतिरेकं सन्दिग्धव्यतिरेकं वा न क्षणिकत्वसाधनाय पर्याप्तम्।

नापि तृतीयो विकल्पः। यतः क्रमयौगपद्यमक्षणिकात् सत्त्वमुपादाय व्यावर्तमानं स्वेन व्याप्येन सह क्षणिकत्वे व्यवतिष्ठत इति प्रतिबन्धसिद्धिर्व्यतिरेकसिद्धिपूर्विका गम्यते, व्यतिरेकश्च पूर्वोक्तेन क्रमेण निराकृत इति।

तदेवम्,

नित्यं नास्ति न वा प्रतीतिविषयं तेनाश्रयासिद्धता
हेतोः स्वानुभवस्य चाक्षतिरतः क्षिप्तः स्वपक्षोऽपि च।
शून्यं च द्वितयेन सिध्यति न वा सत्तापि सत्ता यथा
नो नित्येन विरोधसिद्धिरसता शक्या क्रमादेरपि[३]॥

इति दूषणसंग्रहः।

तत्रामी एवं पर्यनुयुज्यन्ते,

धर्मस्य कस्यचिदवस्तुनि मानसिद्धा
बाधाविधिव्यवहृतिः किमिहास्ति नो वा।
काप्यस्ति चेत् कथमियन्ति न दूषणानि
नास्त्येव चेत् स्ववचनप्रतिरोधसिद्धिः[४]॥

१०. वस्तुष्वन° अ १. वा र २. नकारो नास्ति र ३. रत्न°निब° ८., ८८ ४. तुल° आ. त. वि ४२३, रत्न°निब° ८., ८८, परिशुद्धि ७१३

किं त्वपरिभावकतयेति सामान्यन्यायः। किं चामी स्वयमवस्तुनि विधिनिषेधव्यवहारमातन्वन्तो व्यापकानुपलम्भं चाप्रमाणयन्तः परं प्रतिक्षिपन्तीति क एष क्रमः ?

न्यायभूषणकारो हि न ह्यसति धर्मिणि हेतोः पक्षधर्मत्वमिति ब्रुवाणोऽवस्तुनि हेतोः पक्षधर्मतानिषेधं व्यक्तमाह[4]। कथमेतदिति युक्तिगवेषणे च धर्मिणोऽसत्त्वादिति हेतुमभिप्रैति। अन्यथा च वचनमात्रे क आदरः ? अथाक्षणिकं नैव प्रतीयते कथं तस्य क्रमाक्रमाभ्यां विरोधोऽवगम्यत इति ब्रुवाणश्च व्यक्तं प्रतीत्यविषयत्वेन विरोधावगमाभावमाह[5]। स चावस्त्वन्तरसाधारणो धर्मो [6]नित्येऽप्यवस्तुसंमते आसज्यते[7], अन्यथा अन्यत्रावस्तुनि यद्ययं न[8] न्यायो नित्येऽपि कथमभिधातुं शक्यः ?

शङ्करोप्येतदेव स्फुटयति, अवस्तुनि प्रतीत्यविषयत्वेन न विरोधासिद्धिरिति। अन्यथा प्रबन्धवैयर्थ्यात्।

नन्वस्य पष्ठीसप्तमीनिर्देशाभावादसता सह सतो न विरोध इत्यभिप्रायात् न दोष इति चेत् ? [9]अत्राप्यसतोऽप्रतीयमानत्वादिति स्वयमभिव्यक्तो हेतुरपेक्षणीय एवेति कथमसतो [10]धर्मिभावव्यापकानुपलम्भयोः[1] परिभवः ? तेन सह विरोधासिद्धौ हि[2] तस्य प्रतीतिविषयत्वाभावो हेतुः। यदि च [3]तृतीयानिर्देशेनाश्रयासिद्धिपरिहारमनुमन्यते भवान्, क्रमाक्रमयोरपि नित्येन सह योगाभावादर्थक्रियाशक्तेरपि नित्येन सह योगाभाव इति न क्षतिः। एवं पक्षेण योग एव [4]सपक्षेणैव योगो विपक्षेणायोग एवेति हेतोस्त्रैरूप्यं वक्ष्यामः। शान्तिरस्त्वाश्रयासिद्धिप्रहारस्य। तस्मात् विवक्षामात्रभेद एव[5] न वस्तुभेद इति किमनेन कायव्रतेन[6] ?

[7]किं च [37b] असता सह तावद् विरोधबाधनमेवमस्तु[8], यदा पुनः सत एव[9] सता सह विरोधः किमस्तु न वेति प्रश्नेऽस्त्विति स्वीकारः, स्थितं बौद्धसिद्धान्तेनेति विफल उपन्यासः। अथ नेति स्वीकारः, तदा स एवाप्रतीयमानत्वादिति हेतुरपेक्षितव्य इत्यवस्तुनि निषेधनं विरोधस्य व्यापकानुपलम्भेनेति पुनर्बौद्धसिद्धान्तसिद्धिः। तथा,

नासिद्धे भावधर्मोऽस्ति

[प्र. वा. ४ १६०]

इत्यत्रापि एष एव न्यायः शरणम्।

---

४. वक्तुमाह र ५. °धवचा(च)साभा° र ६. नित्यप्य° र ७. आसज्येते अ ८. नकारस्त्यक्तः र ९. अन्याप्य° र १०. धर्मभाव° र १. °लम्भोः र २. हीति नास्ति र ३. निर्देना° अ ४. सह पक्षे° र ५. एष र ६. पत्रकेन र ७. किं च सता र ८. साधनमस्तु र ९. पुनरसत एव र

तथा च त्रिलोचनः स्वाक्षरेण स्फुटयति, क्रमयौगपद्यरहितत्वमभावधर्मो न सिध्यति, आश्रयानुपलब्धेरिति । अत्र हि व्यक्तमभावो धर्मी, क्रमादिरहितत्वमस्य धर्मो निषिध्यते, आश्रयानुपलब्धेरिति हेतोरिति । एवमसतो धर्मित्वं प्रतिजानान[10] एवानन्तरं न हि [1]क्रमयौगपद्यरहितशशविषाणधर्मत्वं प्रेक्षावन्तः प्रतिपद्यन्त इति एवं ब्रुवन् महान् साहसिको यदयमात्मानमात्मनैव नोपहसति । अभावादेव हि शशविषाणस्य[2] धर्मित्वं निषेद्धव्यम्, स्वीकृतं चाभावस्यापि धर्मित्वमिति कः प्रतिरोधस्तुरङ्गशृङ्गादेः ? अथाभावस्य धर्मिता क्रमादिरहितत्वनिषेधेन[3] स्वीकृता, कथं क्रमादिरहितत्वेनैवास्तु ? अहो बुद्धिवैभवम् ! अभावस्य शशविषाणस्य क्रमादिरहितत्वनिषेधेन धर्मित्वं मन्यते, न क्रमादिरहितत्वेन । उभयथाप्यवस्तुनि विधिनिषेधव्यवहारस्वीकाराद् दुर्निवारः सौगतकृतान्त इति वरं क्रमादिरहितत्वेनैव धर्मित्वमुभयत्रास्तु, किमुत्तरापथं प्रविश्य तावतैव मूल्येन तुरगत्यागिनो गर्दभक्रयणवृत्तान्त आश्रियते ?

अथवातिसूक्ष्मा बुद्धिः स्थवीयांसमसमञ्जसविशेषमियन्तं न पश्यतीति किमत्र क्रियताम् ? तथाप्यक्षिणी निमील्य चिन्तय तावत् किं शशविषाणं क्रमादियोगि भवति न वा ? यदि भवतीति भणसि, किमत्र वक्तव्यमस्माभिः ? सभ्यादयः प्रमाणम् । अथ नेति पक्षः, तदा क्रमादिरहितं तत्कथं क्रमादिरहितत्वनिषेधेन धर्मीकरोषि ? उभयथा च हेतुं पर्यनुयुज्यावश्यमवस्तुत्वादिति वक्ष्यामीत्यलं[4] विस्तरेण ।

एवं वन्ध्यासुतो वक्ता न वेत्येवंविधेऽपि प्रस्तावे निषेधमप्रतिज्ञाय न स्थातुं शक्यमचेतनत्वादवस्तुत्वादित्यादिसाधनमनुपन्यस्य वा न कश्चिदेवमाशङ्कते । यदीदृशमुत्तरयितव्यमिति चेत् ? कुतः ? तदवस्तुतायाः प्रसिद्धत्वादिति चेत् ? पुनस्तदेवायातम्, वन्ध्यासुतस्य धर्मिणो वक्तृत्वेनाशङ्कनीयतानिषेधः, सुप्रसिद्धावस्तुत्वादिति हेतुरिति । न च सुप्रसिद्धत्वेऽपि सर्वथा शङ्काविरहः । निःसीमो हि मोहमहिमा । दृष्टो हि[5] शास्त्रकाराणामपि[6] [38a] क्रमादिरहितत्वनिषेधः शशविषाणे इत्येवंप्रकारो भ्रमः[7] । ततो यथा शब्दे चाक्षुषत्वादनित्यत्वं संभावयन्नसिद्धत्वेन निषिध्यते, तथेहापि स्यातां शङ्कानिषेधौ, न विरोधः । तस्माद् वस्तुनीवावस्तुन्यपि[8] कस्यचिद्धर्मस्य विधिनिषेधव्यवहारो दुर्वारः, आहत्य[9] विप्रतिपन्नानामपि शास्त्रकाराणां निषेधवाक्येनैव स्वीकारात् ।

---

१०. प्रतिजानन एव र १. °रहितस्य° अ २. °स्येव र ३. क्रमविरहितत्वनित्य(त्वे)न र ४. °वक्ष्यसीत्य° र ५. दृष्टेऽहं र ६. °कारणामपि अ ७. क्रमः अ ८. °वावस्तुन्य° र ९. अहत्य र

तत्रेदानीमवस्तुषु वन्ध्यासुतपर्यन्तेषु कथं धर्मित्वम्? प्रतीत्यभावे कथं व्यवहारः? प्रतीतिजनकत्वे कथं न वस्तुत्वम्? न च वचनमात्रमप्रमाणमुपादेयमिति यः कश्चिद्धेतुरुपादीयते, स सर्वः कथं नाश्रयासिद्धः? तदेतदायातम्,

यश्चोभयोः समो दोष इत्यादि।

[ ]

यदि च [10]निश्चितावस्तुभावेष्वपि नैते दोषाः, तत् किं साधनात्प्रागसन्दिग्धसत्ताके[2] नित्ये भविष्यति[3]? कः पुनरत्र परमार्थः? न ह्यवस्तुनि कस्यचिद्धर्मस्य विधिनिषेधव्यवहारः शक्यपरिहारः प्रामाणिकस्य। न चैते दोषाः [4]सानुषङ्गिण इति चेदुच्यते, न तावदवस्तुनो धर्मित्वाभावः। यत्रैव हि इदमेवमिति परामर्शः तदेवेदमित्यनेनाकारेण[5] धर्मि। एवमिति धर्मविशेषयोगः। यथा घटो नील एवं वन्ध्यासुतो न वक्तेति घटस्य नीलत्वमिव वन्ध्यासुतस्य वक्तृत्वं धर्मः प्रतीयत इति न धर्मित्वाभावोऽभावे[6]। केवलं कश्चिद्धर्मो वस्तुनियतो नीलत्वादिः, कश्चिदवस्तुनियतः सर्वोपाख्याविरहादिः[7], कश्चिदुभयसाधारणोऽनुपलम्भमात्रम्[8]। तत्र [9]वस्तुधर्मिणावस्तुधर्मित्वनिषेध इति युक्तम्। न तु धर्ममात्राणाम्, स्ववचनविरोधस्य बाधकत्वात्। प्रतीत्यभावेन व्यवहार इत्यप्ययुक्तम्[10]। न पुनरुभयोरेकप्रकारैव [1]प्रतीतिरङ्गं व्यवहारस्य। वस्तुनो हि वसामर्थ्यभाविनी प्रतीतिः। विकल्पश्चाध्यक्षलिङ्गाभ्यां पारम्पर्यकार्यः[2]। अवस्तुनस्तु सन्दिग्धवस्तुभावस्य वा विकल्पमात्रम्। सामर्थ्याभावे हि तयोरभावे विकल्पमात्रमपि यदि न [3]तत्प्रतीतिरवस्थाप्यते, सर्वथाव्यवहार्य एव स्यात्। इष्टश्च व्यवहारः, अतो [4]विकल्पनमात्रं तत्र प्रतीतिः, तदुपस्थापितमेव च तयोः स्वरूपं नान्यत्[5]। यथा वस्तुनः प्रत्यक्षानुमानोपनीतमेव स्वरूपम्, एवमवस्तुनः सन्दिग्धवस्तुभावस्य वा विकल्पोपस्थापित एवात्मा नान्य इति। नातः समयादङ्गमाकर्षन्तः सन्तो भवितुमर्हन्ति।

यत्तु,

ग्राह्यतां विदुः

हेतुत्वमेव युक्तिज्ञाः

[प्र. वा. २. २४७]

---

१०. यदि विनिश्चि° र १. प्राङ्मन्दि° र २. सत्ताको अ ३. भविष्यन्ति र ४. नानुषङ्गिण अ ५. तदेवमित्याका° र ६. °ऽभावो र ७. °विरहः र ८. मानं ९. °धर्मेणा...स्ववचन° इति पतितम् र १०. °ह्यपि अ १. °प्रतिपत्तिरङ्ग° र २. °ध्य.. कार्यः इति पतितम् र ३. तत्र र ४. ततो र ५. नान्यतः र

इत्युक्तम्, तन्मानसप्रत्यक्षप्रस्तावे ग्राहकाद् भिन्नमेव ग्राह्यमपेक्ष्य। न हि स्वसंवेदनेऽप्येष एव न्याय इति स्थितमेतत्।

तथा च न्यायभूषण एवाह, न हि त्वयार्थान्तरमजनकं प्रतीतिविषयत्वेनेष्टमिति। न चावस्त्वर्थान्तरम्[६]। अर्थ एव ह्यन्यमर्थमपेक्ष्यार्थान्तरमुच्यते, न त्ववस्तु। [38b] तद्भावनिषेधमात्रं तत्[७]। तस्मादर्थान्तरत्वाभावान्न स्वजन्यज्ञानापेक्षानर्थस्य। ततो विकल्पमात्रमत्र शरणम्[८]। तदाकारोल्लिखितश्चास्य स्वभावो नापर इत्यप्यवश्यं [९]स्वीकर्तव्यम्। अन्यथा शशविषाणादिशब्दानामनुच्चारणमेव प्रसज्येतेति[१०] कथं व्यवहारः? तथा हि खरशृङ्गादिशब्देन शब्दितमर्थमनूद्यावश्यं किञ्चि द्विधेयम्, यथा न क्रमादिरहितत्वं शशविषाणधर्मस्तत्सहितं वा, यथा वा नासता कस्यचिद्विरोधबोधः[१], नावस्तुधर्मीति वा। तत्र शशविषाणासदवस्तुशब्दैर्यदि नाभिमतोऽर्थः प्रत्याय्यते, अभिमतादन्य एवार्थो ध्वनिजनितविकल्पस्य, तदा[२] विधीयमानः क्रमाक्रमनिषेधादिः कस्य प्रतीयताम्? तत्प्रतीत्यभावे च शब्दोच्चारणमनर्थकमायातम्। अस्ति च कूर्मरोमादिशब्दव्यवहारः, तस्मात् स[३] एव तत्यार्थः, अर्थस्यापि स एव निश्चयः। दृष्टेऽपि विकल्प एव निश्चयः। एवं तर्हि विकल्प एवास्तु सर्वत्राश्रयणीयः, किं दर्शनेन? नैवं दर्शननिराकृते विकल्पचेतस्याकारमात्रस्फुरणाद् वस्तुत्वसाधनार्थं[४] बाधनार्थं वा प्रमाणान्तरापेक्षणम्। दर्शनेन तु विषयीकृते वस्तुनि यावति रूपे विकल्पः, तावति स एव निश्चयः, असति सादृश्याद् विप्रलम्भे। तस्मान्न वस्तुन्यपि विकल्पमात्रं शरणम्, अवस्तुनि तु तदेव शरणम्। तदाकारबाह्याध्यवसानमेव हि प्रमाणान्तरसापेक्षं तत्र प्रार्थ्यते। तच्च विकल्पेनैव सिद्धम्। प्रमाणवृत्तौ तु न प्रमाणान्तरापेक्षा। ततस्तेन विकल्पेन यत् स्वरूपमुल्लिखितं तत्परामर्शेन यथा क्रमाक्रमरहितत्वनिषेधादिकमुपस्थापयन्ति सन्तस्तदर्हतया, तथा[५] तद्रूपप्रत्यनीकाकारेण सह विरोधव्यवस्थायां कीदृशो दोषः? यथा वा वन्ध्यासुतस्य [६]सौन्दर्यादिनिषेधोऽनुरूपः, तथा च[७] वस्तुताविरोधस्य को विरोधः? यदि चानुभवाभावाद्विरोधप्रतिरोधोऽनुभवाभावादेव सौन्दर्यनिषेधोऽपि माभूत्, ततो विधेयस्य कस्यचिद्धर्मस्याभावेऽभावाभिधायिनामनुच्चारणप्रसङ्गस्तदवस्थः. न च तच्छक्यमित्यपि निवेदितम्।

६. °वस्थान्तरं र ७. तदभावनिषेधनं तु र ८. मात्रं शरणं अ ९. इत्यस्य स्वी° र १०. °रणं प्रसज्यते इति र १. बोध° इति नास्ति र २. प्रत्याय्यते...तदेति पतितम् र ३. °क्रमायातम्... तस्मात्स इति पतितम् र ४. चेतसि ..साधनार्थमिति पतितम् र ५. यथा र ६. सौन्दर्यनिषेधो र ७. चकारो नास्ति र

अथ वन्ध्यासुतादीनां विकल्पनीयात् रूपाद् रूपान्तरविरहात् तन्मात्रस्य च विकल्पेन विषयीकरणे तदनुरूपव्यवहारस्य न क्षतिः ? एवं सति विरोधव्यवहारस्यापि तदनुरूपस्य का क्षतिः ? यथा च वस्तुतया वन्ध्यासुतस्य विरोधः, एवं नित्यस्यापि यो धर्मः प्रत्यनीक उपपादयितुं शक्यस्तेन कथं न विरोधः ? [८]तत् कथमनुभवाभावमात्रं विरोधबाधने[९] [१०]साधनमनभिधीयमानं साधु स्यात् ? यदि तु [१]विकल्पोऽपि तद्विषयो न स्यात्, तत्प्रत्यनीकाकारपरामर्शो वा न स्यात्, [39a][२] सहानवस्थानाभिधानो वा विरोधः साधयितुमिष्टो भवेत्, भवेद् विरोधसिद्धिः। एकस्य हि भवतोऽन्यभावे अभावात् सहानवस्थानव्यवस्था। भावश्च प्रत्यक्षगोचर इति कथमेकस्यान्यवस्तुत्वे[३] घटेत ? परस्परपरिहारस्थितिलक्षणत्वं[४] तु प्रत्यनीकाकारपरामर्शमात्रसाध्यम्[५] विकल्पमात्रेण विषयीकरणेऽपि सन्निधीयमानव्यवस्थानिमित्तं नावश्यं वस्त्वनुरोधि, कथमन्यथा भावाभावयोरेव[६] विरोधः परस्परपरिहारलक्षणः ? तत्र च[७] विरोधे प्रधानमुदाहरणं तावेव। अभावस्य[८] वस्तुत्वस्वीकारेऽपि न भावस्य भावोऽभावाभिधाने वस्तुनि, नाप्यभावस्य भावोऽभाव इति नाभाववस्तुपरम्परामुपगन्तुं शक्यमिति स्वप्रच्युतिमात्रमवस्तुव्यवहर्तव्यैकस्वभावमिष्यमाणं कथं तद्विरोधि व्यवस्थाप्यताम्[९] ? विरोधाव्यवस्थाने च तत्र स्वात्मा च स्वप्रच्युतिश्चेत्येकमेव वस्तु स्वात्मनैवास्ति च नास्ति चेति स्यात्, न चैवं नियमेनेत्ययमेव विरोधार्थः। क्षणिकाक्षणिकवद् वा। यथा ह्येकस्य[१०] नाक्षणिकं तथा नान्यस्य क्षणिकमिति। तस्माद् वस्त्ववस्तुनोर्न परस्परपरिहारलक्षणविरोधबाधेति[१] स्थितम्॥

नन्वेवं विरोधस्यापारमार्थिकत्वे तद्द्वारेण क्षणभङ्गसिद्धिरप्यवास्तवी स्यात्, न ह्यपारमार्थिकाधारः पारमार्थिको भवितुमर्हति विरोधः। यदाह शङ्करः, एवं तर्हि विरोधकल्पनया बाधकमपि कल्पितविरोधत्वान्न वास्तवव्यतिरेकसाधनमित्यवास्तवव्यतिरेकत्वात् सत्तायाः, तदायत्तं क्षणिकत्वमप्यवास्तवमेवेति।

न्यायभूषणोऽपि तदेवमुपस्कुर्वन्नाह, संवृतिसिद्धेनाक्षणिकेन विरोधासिद्धिरिति चेत् ? संवृतिसिद्धमपि वास्तवं काल्पनिकं वा स्यात्। यदि वास्तवम्, ततः कथं तस्यासत्त्वम्[२] ? कथं [३]वार्थक्रियाविरोधः ? अर्थक्रियां कुर्वद्धि वास्तवमुच्यते। अथ

८. ततः र ९. बोधने अ १०. साधनमभि° अ १. °त्वविकल्पा° र २. अत्र पत्रविन्यासव्यतिक्रमः शोधितः अ ३. °स्यावस्तुत्वे र ४. °स्थिरलक्षण° अ ५. मात्रं साध्यम् र ६. °मन्यथा अ ७. चकारो नास्ति र ८. भावेन। अभावेन। अभावस्य र ९. °स्थाप्यता र १०. यथाप्येकस्य अ १. विरोधाविति र २. तस्य सत्त्वं र ३. °चार्थ° र

काल्पनिकम्, तद्विरोधः किं वास्तवः काल्पनिको वा? न तावद् वास्तवः, कल्पितविरोधिविरोधत्वाद् वन्ध्यापुत्रविरोधवत्। अथ[4] विरोधोऽपि काल्पनिक एव, न तर्हि परमार्थतोऽक्षणिकस्यार्थक्रियायां क्रमाक्रमाभ्यां विरोध इत्यतोऽक्षणिकात् सत्त्वस्य व्यतिरेकसिद्धिरप्यपारमार्थिकीत्यवास्तवव्यतिरेकत्वात् सत्तायाः, तदायत्तं[5] क्षणिकत्वमप्यवास्तवमेवेति।

अबद्धप्रलपितमेतत्। न हि विरोधो नाम वस्त्वन्तरं किञ्चिदुभयकोटिदत्तपादं सम्बन्धाभिधानमिष्यतेऽस्माभिः, उपपद्यते वा, येनैकसंबन्धिनो[6] वस्तुत्वाभावे[7] अपारमार्थिकः स्यात्। यथा त्विष्यते तथा पारमार्थिक एव। विरुद्धाभिमतयोरन्योन्यस्वरूपपरिहारमात्रं विरोधार्थः। तच्च भावाभावयोः [39b] [8]पारमार्थिकमेव। न हि भावोऽभावरूपमाविशति, नाप्यभावो[9] भावरूपमिति योऽयमनयोरसङ्करनियमः स एव विरोधः। स च नियमः स्वात्मानं विरोधमपि पारमार्थिकपदे निवेशयति। एवं न नित्यं क्रमयौगपद्यरूपमाविशति, नापि क्रमयौगपद्यं नित्यरूपमाविशतीति योऽयं नियमः स एव विरोधस्तयोः। न च कदाचिदन्यथेति प्रमाणसिद्धिरेव पारमार्थिकतेति कथमुच्यते, विरोधस्यापारमार्थिकतया सत्त्वहेतोर्व्यतिरेकोऽप्यतात्त्विक इति? नित्यस्य पुनरपारमार्थिकत्वमङ्गीकृत्यैव सर्वमवस्थापितमिति न कश्चिद्दोषः। यच्च कल्पितविरोधिविरोधस्य[10] वास्तवत्वनिषेधाय[1] कल्पितविरोधिविरोधत्वाद् वन्ध्यासुतविरोधवदित्युक्तम्, तत्रैव अनेन तपस्विना कथमाश्रयासिद्धित्वादिदूषणं स्थवीयोऽपि नोपलब्धमित्यास्तां तावदस्य मर्मोद्घाटनम्।

एतच्च[2] चिन्त्यते। कल्पितविरोधिविरोधत्वमेव वास्तवत्वेन विरुद्धं न वा? यदि तावन्न विरुद्धं, तदा कल्पितविरोधिविरुद्धत्वमपि[3] भवति, वास्तवत्वमपि स्यादिति कथं तदुपन्यासस्तन्निराकरणैकान्तिकः स्यात्? नाविरुद्धविधेः कस्यचित् प्रतिषेधसिद्धिः। अथ विरुद्धम्[4], स विरोधो वास्तवोऽवास्तवो वा? तत्रावास्तवो विरोधः "परपराभवेऽतिप्रसङ्गात् असमर्थ[5] इति, वास्तवपक्षे कल्पितविरोधिविरोधोऽपि स्वयं वास्तव इष्टः, न चास्माकमिव स्वविरुद्धनिषेधाभिधायीति पश्य [7]धाष्टर्यविजृम्भितम्। यथा हि नित्यक्रमयौगपद्ययोर्विरोधः कल्पितविरोधिविरोधो नित्यस्य कल्पितत्वात्तथा वास्तवत्व-

---

४. अथवा र ५. तदायातं र ६. येनैकसम्बिनो र ७. वस्तुभावे र ८. अत्र पत्रक्रमः शोधितः अ ९. नान्यभावो-र १०. विरोधे र १ निषेधोप° र २. एवन्तु अ ३. °विरोधविरोधित्व° र ४. अथ विरुद्धमिति नास्ति र ५. परंपरा र ६. अयमर्थ अ ७. वान्ध्य° र

कल्पितविरोधे[८] विरोधयोर्विरोधः कल्पितविरोधिविरोधो[९] वर्तते कल्पितस्य विरोधिनो विरोध इति कृत्वा कल्पितो विरोधी[१०] तस्येति वा[१], कल्पितस्य हि[२] विरोधिनो विरोधोऽपि कल्पित एव न वास्तव इत्येव भवत्पौरुषेण साध्यमानमीक्षामहे। तस्मात्तस्य कल्पितस्य विरोधस्य विरोधिनो वास्तवत्वेन सह यो विरोधः सोऽपि कल्पितविरोधि-विरोधः[३] सिद्धः। तस्य वास्तवत्वे स्ववचनविरोधः। अवास्तवत्वे दूषणमुक्तमेव।

अपि च। विरोधो नामैकत्र द्वयोः [४]संवासनिषेधार्थमर्थ्यते। न तु द्वयोर्वस्तुत्व-सिद्धिर्नाम[५] विरोधफलम्। यत्र तु द्वयोर्वस्तुत्वसिद्धिस्तत्र सामर्थ्यादेकेन वस्तुना वस्त्वन्तरतिरस्कारात् क्वचिद् देशे, यथा सहानवस्थाने यथोक्तं प्राक्। प्रकृतस्तु विरोधो धर्मयोरेकत्र धर्मिणि सद्भावनिषेधफलः।

तत्र[६] यथा द्वावपि धर्मौ सन्तौ निषिध्येते, यत्र नीलत्वं न[७] तत्रानीलत्वम्। अतो न नीलानीलमेकमिति। तथा [८]सदसत्त्वरूपावपि विप्रतिषिद्धौ धर्मावेकत्र धर्मिणि समारोपितौ प्रतिषिद्धावेव। न हि जनन्याः [40a] तनये वन्ध्यातनयत्वमारोपितं तत्त्वतोऽसदिति न निषेध्यम्। वन्ध्यातनये वा[९] विकल्पैकगोचरे जननीतनयत्वमारोपितं न निषेध्यम्। न हि जननीतनयो वन्ध्यातनयो वैकात्मा, तावतैव [१०]विरोधकार्य-पर्यवसानात्, किमपरेण विरोधनाम्ना यो वस्तुधर्मावनपेक्ष्य[१] नात्मलाभमासादयति? एवं यत्र नित्यत्वं न तत्र क्रमयौगपद्यवत्त्वम्, यत्र क्रमयौगपद्यवत्त्वं तत्र न[२] नित्यत्व-मतो न नित्यं क्रमयौगपद्ययोगि परमार्थतः। ततश्च सत्तायुक्तमपि नैव नियमेन पर-मार्थतः। ततः क्षणिक एव विश्राम्यत्[३] तदायत्तसत्ताकमेव सत्त्वमिति सत्त्वात्[४] क्षणभङ्ग-सिद्धेरविरोधः, यदि चैवमपि [५]विरोधव्यतिरेकप्रतिसन्धानेन [६]मातृमोदकक्रमेण गृहीत्वा गिरिकुहरकोणमाविश्य घोषयितुमिच्छसि चेद्, घोषय[७]। न पुनरस्मदारब्धसिद्धि-प्रतिबन्धे किञ्चिदुपयुज्यसे। तदलमभिनिवेशपरवशीभूय वास्तवा एवैते विरोधावय इत्येव साधु। ननु[८] नित्यत्वं क्रमयौगपद्यवत्त्वं च विरुद्धौ धर्मौ विधूय नापरो विरोधो नाम, कस्य वास्तवत्वमिति चेत्? तदपि यत्किञ्चित्। न हि धर्मान्तरसंभवेन विरोधस्य पारमार्थिकत्वं ब्रूमः। किं तु यतो विरुद्धौ धर्मौ[१०] धर्मान्तरसंभवेऽपि हि यदि न विरुद्धौ

८. विरोधि° अ ९. विरोध र १०. कल्पितवि° र १. वेति नास्ति र २. हीति नास्ति अ
३. विरोधे विरोधयोर्विरोधः र ४. सन्धास [न?] अ ५. °न्त्राश(?) र ६. तत् अ
७. नीलत्वं तत्रा° र ८. सदसत्ताव° र, सदसन्ता (?) अ ९. च र १०. विरोध° इति नास्ति अ
१. पेक्षाना° २. यत्र......तत्र नेति नास्ति र ३. श्राम्यतु र ४. सत्त्वादिति नास्ति र ५. °रेकं र
६. °प्रतिबन्धानवास्तवान् ७. पोषय र ८. साधननु(?) र ९. °मानगरो र १०. विरुद्धो धर्मो र
१. न धर्मान्तरेऽपि र

न पारमार्थिकोऽपि[2] विरोधः। विरुद्धौ चेत्? तावतैव तात्त्विको विरोध इति व्यवहारः, किमपरेण धर्मेण? यदपि वन्ध्यापुत्रविरोधवदित्युक्तम्, तत्र किमेकाधार एवायं विरोधो दृष्टान्तीकृतः, अथ द्वितीयापेक्षः? द्वितीयोऽपि प्रतियोगिरूपोऽन्यमात्रं वा? प्रथमपक्षस्तावदयुक्तः[3], न हि कश्चिदेकाधारं विरोधं प्रतिजानीते। ततो यदि वन्ध्यापुत्रविरोधस्याभिन्नधर्मिणोऽपारमार्थिकत्वं तदोभयधर्मिणोऽपि [4]पारमार्थिकेन विरोधेन न[5] भाव्यमिति कोऽयं न्यायः? एवमन्यमात्रेणापि न विरोधः, कृतकानित्यत्ववत्। प्रतियोगिना तु तत्रापीष्यत एव। वन्ध्यापुत्रस्य हि अवन्ध्यापुत्रत्वेन विरोधोऽस्त्येव। एकात्मनिषेधश्चाभिमत एव।

ननु धर्मयोर्विरोधे धर्मिणोरैकात्म्यनिषेध इति युक्तं[6], वन्ध्यापुत्रस्यावन्ध्यापुत्रत्वेन विरोधो [7]धर्मिधर्मयोर्वर्तते। नैष दोषः। धर्मिणोऽपि[8] धर्मद्वारेणैव व्यवह्रियन्ते[9]। एवं धर्मिणोरपि कदाचिद्भावप्रधानो वा[10] निर्देश इति। यश्च वैधर्म्येण दहनतुहिनयोरुपन्यासः, सोऽप्ययुक्तः, परस्परपरिहारस्य विवक्षितत्वात्। यौ च तद्विषयतया[1] सापेक्षध्रुवभावावुक्तौ[2], तत्रापि सापेक्षतया कादाचित्कत्वमनित्यत्वमुक्तम्[3]। ध्रुवभावोऽप्यवश्यम्भाव इति यदि भावनियमत्वम्, तदा नित्यत्वमेव। ततो नित्यानित्ययोरियं[4] विरोधस्थितिः कथमनुभवपूर्वकतयोपदर्शयन्तं नोपहासयति? नित्येन कथं विरोधप्रतीतिरित्येव हि प्रकृतम्। अथावश्यं भविष्यत्ता ध्रुवभावः, [40b] सापि न[5] कयचिदनुभवविषय इति नित्यवदेव दोषः।

स्यादेतत्। यच्च कदाचिदवश्यम्भूतमुपलब्धं तदपेक्षयेदमुच्यत इति। तदपेक्षया तर्हि विरोध एव नास्ति, तद्धि सापेक्षं च ध्रुवभूतं च। अथ तदा सापेक्षत्वं नास्ति सिद्धत्वात्, अन्यदा तदा[6] सुतरां नास्ति, असिद्धत्वादेव। असिद्धधर्म एवापेक्षेति[7] चेत्? अननुभूते तर्हि न विरोधव्यवस्थेति[8] स एव दोषः। असिद्धस्यैव [9]सिद्धिकालापेक्षया अनुभूतेनैव विरोध इति चेत्? सिद्धिकालापेक्षास्वीकारे तर्हि विरोध एव नास्तीत्येव साधु।

एतेनानुभवाभावाद् विरोधव्यवस्थाभावे साध्ये वैधर्म्यदृष्टान्ताभिमतः साध्याव्यतिरेकी, असता विरोधप्रसञ्जने तु साधनाव्यतिरेकी। ध्रुवभावस्य नित्यतार्थपक्षे तु

२. अपीति नास्ति र ३. युक्तं[:] र ४. धर्मिणानि र ५. नकारो नास्ति र ६. इत्युक्तं र ७. धर्मि° इति नास्ति र ८. दोषो धर्मिणो° अ ९. व्याह्रियते अ, व्यवह्रियते र १०. वेति नास्ति र १. तयेति नास्ति अ २. °वुभौ अ ३. °मनित्यमुक्तं र ४. निनित्ययो° र ५. नकारो नास्ति अ ६. तर्हि र ७ पेक्षि(?क्ष्य)ते र ८. व्यवस्थितिः र ९. °सिद्धकाला° र

साध्यकोटिनिक्षेप एवेति । भेदाभेदादिकं तु[10] भवतु वैधर्म्यदृष्टान्तः । न च तावतापि वस्तुनोरेव नाक्षणिको[1] विरोध इति नियमः, अन्यथापि समर्थितत्वादिति । यदपि

नासिद्धे भावधर्मोऽस्तीति

[प्र. वा ३. १९०]

वाच्यम्, तदप्याश्रयासिद्धिचोद्यस्य दूरीकृतत्वान्निराकृतम् । असतोऽपि धर्मित्वसाधनात्, अवस्तुनि विकल्पस्य प्रतीतिव्यवस्थासिद्धेश्च व्योमादिस्वरूपाप्रतीतिरपि परिहृता ।

स्यादेतत्, यदि विकल्परूपां प्रतीतिमाश्रित्याश्रयासिद्धिपरिहारः सत्तासाधनेऽपि समानम्, ततः [2]कथमुच्यते नासिद्धे भावधर्मोऽस्तीत्यादि ? कथं चात्मनो विभुत्वसाधनं सर्वत्रोपलभ्यमानगुणत्वमाश्रयासिद्धावुदाह्रियत इति चेत् ? साधनानुरोधादुभयत्रापि हि भावधर्म[3] एव हेतुरुपात्त आशङ्कितश्च । न च भावधर्मस्यावस्तु धर्मी भवितुमर्हति । न हि धूमशिंशपात्वादयोऽवस्तुनि वसन्ति[4] । तस्माद् यत्र भावधर्मः साधनं तत्र नियमेन वस्त्वेव धर्मी[5] । न च विकल्पमात्रविषयस्य वस्तुताश्वासः, अवस्तुन्यपि विकल्पमात्रानपायात् । ततो वस्तु धर्मी कुर्वता[6] प्रत्यक्षानुमानरूपे च[7] सिद्धिरभिधातव्या । तदनभिधाने तु विकल्पमात्रगोचरितोऽर्थः[8] सन्दिग्धसत्ताको निरस्तसत्ताको वा धर्मीक्रियमाणः कथं वस्तुतया निश्चितः कृतः स्यात् ? तथा च सति यावान् वस्तुधर्मो[9] हेतुः सर्वोऽसौ नाश्रयासिद्धिमतिक्रामति, एकत्र सन्देहादन्यत्र विपर्ययात्[10] । ततः प्रत्यक्षानुमानाभ्यां वस्तुविषयाभ्यामसिद्धे[1] भावधर्मो न हेतुरस्त्याश्रयासिद्धत्वादिति युक्तमेतत् सत्तासाधने । असत्तासाधने त्ववस्तुधर्मो हेतुरवस्तुनि विकल्पमात्रसिद्ध[2] एव नाश्रयासिद्धिदोषेण दूषयितुं शक्यः । न हि तस्य वस्त्वाश्रयापेक्षा, अवस्तुधर्मादेव । न च तदाधारस्य प्रत्यक्षानुमानापेक्षा, अवस्तुत्वादेव । भावधर्मे[3] तु साधने वस्त्वेवाश्रयो [41a] वस्तुधर्मत्वात् । वस्तुनश्च निश्चयः प्रत्यक्षानुमानाभ्यामेव, ततस्तयोरभावे [4]नियमेनाश्रयासिद्धिरिति सदसत्तासाधनयोः कथं समानो दोषः ?

यत्तु त्रिलोचनेन "[5]प्रमाणान्तरं नित्यानामसत्तासिद्धौ क्रमादिविरहस्याभावधर्मता[6] न सिध्यतीत्युक्तम्, तद् बालस्यापि दुरभिधानम् । नित्या हि धर्मिणः । असत्त्वं

१०. किं तु र १. लाक्षणिको अ, २. तत् र ३. धर्मा र ४. सन्ति र ५. धर्मा र ६. कुर्वंतु र ७. कुर्वतैव र ८. अर्थे र ९. यावानवस्तु° र १०. °दन्यविप° र १. °भ्यां सि° र २. मात्रासिद्ध र ३. देवाभाव° र ४. नियमो ना र ५. प्रमाणान्तराप्र° र ६. [ ]त्रयादि° र

साध्यम्। क्रमादिविरहो हेतुः। अस्य चाभावधर्मत्वं नाम स्वसाध्याविनाभावित्व-मुच्यते[7], अभावानां शशशृङ्गादीनां धर्मो न भावानामिति कृत्वा। तदनेन वचसा यावत् प्रमाणान्तरेण पक्षे साध्यं न सिध्यति[8], न तावद्धेतोर्व्याप्तिरित्युक्तं भवति। तच्च कुत्र हेतावुपलब्धमनेनेति न विद्मः। यथा चान्यत्र साध्यनान्तरीयकता अन्यदा[9] प्रवृत्तप्रमाणान्तरसिद्धा दृष्टान्तेन स्मारिता पक्षीकृते साध्यसिद्ध्यर्थमुपयुज्यते, नान्यतः साध्यसिद्धिमपेक्षते, तथा क्रमाद्यभावेऽभावधर्मता व्याप्तिस्वभावान्यदैव क्रमाक्रमेण सिद्धत्वस्य[10] व्याप्तिग्रहणकाले प्रवृत्तप्रमाणसिद्धाकाशकमलदृष्टान्तेन स्मारिता साध्यसिद्धावुपयुज्यते, नान्यतः साध्यसिद्धिमपेक्षते। अन्यथा सर्वानुमानवैयर्थ्यात्। क्रमयौगपद्येन हि सत्त्वस्य व्याप्तिसिद्धौ सत्त्वस्य व्याप्यस्याभावेन[1] क्रमयौगपद्यस्य व्यापकस्य विरहो व्याप्तः सिध्यतीत्यभावधर्मत्वं क्रमयौगपद्यविषयः[2]। यथा च व्याप्तिरूपं तथा [3]पूर्वमेव निश्चितं, [4]सदभावधर्मत्वं न पक्षे प्रमाणान्तरेण साध्यसिद्ध्या व्यवस्थाप्यते, तथा क्रमाक्रमाभावाभावेनापि[5] साध्यं प्रसाध्य व्यवस्थाप्यत इति नः पक्षः, पूर्वमेव व्यवस्थापितत्वात्। तत् कुत इतरेतराश्रयत्वम्?

किं च, इतरेतराश्रयत्वमप्येवं युज्यते। क्रमादिविरहस्याभावधर्मत्वसिद्धौ तेषामसत्त्वसिद्धिः[6] असत्त्वसिद्धौ चाभावधर्मत्वसिद्धिरिति। विपक्षदृष्टिना पुनरभाव-धर्मसिद्धेरसत्त्वासिद्धौ न [7]प्रयोजकत्वमुक्तं, किं तु पक्षधर्मतासिद्धेः। तत् कीदृशमितरे-तराश्रयत्वम्? न च पक्षधर्मतैवाभावधर्मता, साध्याविनाभावरूपत्वादभावधर्मतायाः। अथ यद्यभावधर्मत्वं क्रमाद्यभावस्य स्यात्, तदा पक्षीकृतानामसतां नित्यानां धर्मः स्यादित्यभिप्रायात् [8]पक्षधर्मताव्यापारद्वारेण तदव्यापारो दर्शितः, तथापि चक्रकं वक्तुमुचितम्। तदपि प्राचीनचर्चया चर्चितमेव।

किं च, अभावधर्मत्वे व्याप्तिरूपे सति पक्षधर्मत्वमिति नायं हेत्वन्तरसाधारणो न्यायः। न चास्यापि हेतोरेवम्, अभावधर्मत्वं हि व्याप्तिर्भवतु मा वा, क्रमादिविरहस्तु केन नित्यानां निषिध्यते? न चैतेऽप्यसत्तारूपेण[9] धर्मिणः, किं तु सदसत्त्वसन्देह-वत्त्वेनेति[10] यत्किञ्चिदेतत्। भावधर्मत्वमु[41b]भयधर्मत्वं च नेष्टमस्य क्रमादिविरहस्य हेतोरिति न प्रथमविकल्पे दोषः। नापि द्वितीये, व्यतिरेकस्याभावरूपत्वेऽपि विकल्पेन

७. साध्यसिद्धत्वमुपयुज्यते इति योजित केनचित् अ ८. सिध्यतीति अ ९. कदाऽन्यता र १०. सत्त्वस्य र १. °पद्येन व्याप्तित्यस्याव्याप्यस्या° र २. विपद र ३. रूपतया(?) अ ४. सदा-भाव° र ५. क्रमाक्रमाभावेना° अ ६. °सिद्धौ तेषामसत्त्वमिति नास्ति र ७. प्रयोजकमुक्तम् अ ८. °पेक्ष° र ९. °प्यसत्ता° अ १०. वत्त्वेति र

प्रतीतेः [1]समर्थितत्वात्। न ह्यभावरूपाणां विकल्पादन्या प्रतीतिरप्रतीतिर्वा, [2]उभयथाप्यभावव्यवहारहानिप्रसङ्गात्[3]। ततोऽनुभवापेक्षाविरहान्न तज्जननप्रसङ्गे[4] दोषावकाशः। अनाश्वासस्तु [5]शासितुमुचितः। सोऽपि क्रमयौगपद्यविरहलक्षणव्यापकानुपलम्भसंभवाल्लिङ्गजत्वेन दूरीकृतः।

तथा हि तत्रैव त्रैरूप्यपरिशोधनमेतदारब्धम्, सिद्धं च किमिति विस्मर्यते, यतो लिङ्गाभावादित्युच्यते ? तस्मात् क्रमादिव्याप्यसत्ताव्यतिरेकविकल्पे कथमनाश्वासः ? अव्यतिरेकशङ्का[6] ह्यनाश्वासस्यार्थः। व्याप्यव्यापकभावनिश्चये चास्थानमेतदिति नित्यान्नियमेन व्यतिरिच्यमानं सत्त्वं क्षणिकत्वेन व्याप्तं सिद्धमिति न दोषः।

तृतीयेऽपि विकल्पे व्यतिरेकनिश्चयस्य दृढीकृतत्वात्, सोऽयं व्यापकानुपलम्भो नित्ये स्वाश्रये क्रमाद्यभावं[7] साधयन्नेव सत्तायास्ततो नियमेन व्यतिरेकं, क्षणिकतायां च प्रतिबन्धमस्याः साधयतीति त्रयोऽस्य व्यापाराः[8] एकव्यापारसंगृहीताश्च[9], न च दोषलेशेन लिप्यन्ते। त्रित्वं चार्थशक्तेः सत्तालक्षणत्वे, हेतुमात्रत्वे तु व्यतिरेकमात्रसाधनमसत्तासाधनार्थं इति व्यापारद्वैतमेवेति स्थितम्॥

ननु व्यापकाभावस्याभावरूपत्वेन वस्तुधर्मतया आश्रयासिद्धिपरिहारेऽपि स कथमभावः कस्यचित् प्रतिपत्तिः[10], प्रतिपत्तिहेतुर्वा तस्यापि वा कथं प्रतिपत्तिरिति किं न दृश्यते? तल्लिङ्गजन्मा च संप्रत्येव व्यतिरेकविकल्पो न विसंवादशङ्कामङ्के निधत्त इत्युक्तम्। अवश्यं च साध्यबुद्धिं साधयता[1] साधनेन भावव्यवहारः स्वीकर्तव्यो नान्यथा। तथाभावरूपत्वे सर्वं विरुध्यते। व्यापकानुपलब्धिरित्यपि यद्यप्यनुपलब्धिमात्रं[2] स एव दोषः, न चान्योपलब्धिर्व्यापकानुपलब्धिरभिधातुं शक्या, अन्यस्यापि कस्यचिदनुपलब्धिरिति। तदपि यत्किञ्चित्, धर्म्युपलब्धेरेवान्यत्राप्यनुपलब्धितया व्यवस्थापनात्। यथा हि नेह शिंशपा वृक्षाभावादित्यत्र वृक्षापेक्षया केवलप्रदेशस्य धर्मिण उपलब्धिः वृक्षानुपलब्धिः, शिंशपापेक्षया च केवलप्रतीतिरेव शिंशपाभावप्रतीतिरिति स्वभावहेतुपर्यवसायिव्यापारो[3] व्यापकानुपलम्भः। तथा नित्यस्य धर्मिणो विकल्पबुद्धौ परिस्फुरतः क्रमाद्यपेक्षया केवलस्फुरणमेव क्रमाद्यनुपलम्भः, अर्थक्रियापेक्षया च केवलप्रतीतिरेवार्थक्रियावियोगप्रतीतिरिति विशेषः। अध्यवसायापेक्षया च यथा नेह

---

१. समन्वित° र २. °पि व्यवहार° अ ३. °हारि° र ४. प्रसङ्ग° र ५. शमितु° र ६. अव्यति-रिक्त(श)ङ्का अ ७. नित्यस्याश्रयस्य इवाभावं अ ८. व्यापारः र ९. समिति नास्ति र १०. प्रतिपत्ति-रिति नास्ति र १. साधयत् र २ °त्यपि अनु° र ३. °हेतुरयमापि° र

शिंशपा वृक्षाभावादित्यभावस्य हेतुपञ्चम्या[४] निर्देशः, तथा भावः साधनमित्यपि व्यवहारः, न त्वभावः साधनमेव [42a] क्वचित्। स च व्यवहारः अवसितार्थाविसंवादान्न[५] परिहर्तुं शक्यः। यत् खलु [६]व्यापकेन विरहितं तदवश्यं व्याप्येनापीत्येतावत एवार्थस्य संवादिनः तेनापि प्रकारेण प्रतिपादनात्। अयं च न्यायो यथा सत्ये धर्मिणि तथासत्येऽपीति को विशेषः ?

नन्वयमेव महान् विशेषः। सत्ये हि धर्मिणि व्यापकस्यैकज्ञानसंसर्गी स एव धर्मीति तस्योपलब्धिरनुपलब्धिर्व्यापकस्यास्तु, असत्यस्तु धर्मी नैकज्ञानसंसर्गी केनचिदिति चेत्? तेनैव स्वसंबन्धिना धर्मेण व्यापकसंमतेन। तथा ह्येकज्ञानमत्र विकल्प एव। स हि नित्यग्राही विकल्पः तदाकारान्तरमिव क्रमयौगपद्यधर्मसंबन्धे नित्यस्य क्रमाद्याकारमप्युल्लिखेदिति संभावनया एकज्ञानसंसर्गित्वमुभयोरनिवार्यम् यदि न[७] नित्यमनाधेयातिशयत्वादिना[८] धर्मान्तरेण सह प्रतीतिगोचरीभवेत्, यौगपद्यायौगपद्यं वास्तवधर्मिणा[९] सह न प्रतीतिविषयः स्यादप्येवम्। न चैवम्, न च निषेध्यस्य संभावनां विना क्वचिदेकज्ञानसंसर्गः तदैव[१०] स्याल्लभ्यः। तत्र यथा हरिणशिरसि तेनैकज्ञानसंसर्गि शृङ्गमुपलब्धम्, हरिवराङ्गेऽपि तत्संभावनयैव[१] तत्संसर्गान्निषिध्यते, तथा नीलादावपरिनिष्ठितनित्यानित्यभावे तावत् क्रमाक्रमौ स्वधर्मिणा सार्धमेकज्ञानसंसर्गिणौ दृष्टौ नित्येऽपि यदि भवतो नित्यग्राहिणा ज्ञानेन स्वधर्मिणा नित्येन सहैव गृह्येयातामिति [२]संभावनयैकज्ञानसंसर्गद्वारक एव[३] प्रतिषेधमाविशतः।

कथं पुनरेतन्नित्यज्ञाने क्रमादेरस्फुरणमिति, यावता क्रमाक्रमक्रोडीकृतमेव नित्यं विकल्पयास इति चेत्? अत एव बाधकोपन्यासः, विपरीतरूपावलम्बनं विना[४] तस्य वैयर्थ्यात्। सोऽयं नित्यात्मनि क्रमाक्रमारोपौ भवतस्तद्बाधकोपन्यासं प्रयोजयेताम्[५], न तु नित्ये क्रमाक्रमावन्तर्भावयितुं प्रभवति, विरोधात्। कालान्तरैकरूपतया हि नित्यत्वं, क्रमाक्रमौ च[६] क्षणद्वयेऽपि भिन्नरूपतया, ततो नित्यस्य[७] क्रमाक्रमिकार्थक्रियाशक्तेश्च परस्परप्रत्यनीकरूपतया दुर्निवारो विरोध इति कथं नित्येऽन्तर्भावः क्रमादेः ? अनन्तर्भावाच्च[८] शुद्धनित्यविकल्पेन दूरीकृतसमारोपेण कथमुल्लेखः क्रमाक्रमस्य ? सर्वस्य च विकल्पमात्रगोचरस्य विकल्पारूढरूपापेक्षया विरुद्धनियतानियत-

४. °पञ्चस्या अ ५. °दान° अ ६ यत् खल्वव्या° र ७ °मनाधेया° अ ८. त्वादिति नाम र ९. वास्वधर्मिण र १०. तदेव र १ °यनैव र २ °यनैक° र ३. त्वा[१]रकमेव र ४ रूपारोपणमन्तरेण र ५. प्रयोजकं नास. र ६. न र ७. नित्यव(?त्व)स्य र ८. अन्तभावाच्च र

धर्मव्यवस्थानं, यथा त्रैगुण्यस्यैकत्वं विरुद्धं धर्मः[9] प्रसादतापदैन्यक्रिया नियता, नैरात्म्येतरयोगोऽनियतः, तथेहापि पूर्वापरकालयोरेकात्मतया यद्यकारकमकारकमेव, सर्वदा कारकत्वे च कारकत्वमेव नित्यं, क्रमाक्रमौ तु कदाचित् क्रियाशक्तिस्वभावौ, यौगपद्ये हि व्यक्तमेकदैव करणमिति कादाचित्कक्रियत्वम्, [42b] क्रमेऽपि कृतायाः करिष्यमाणायाश्च करणात्[10] कादाचित्क्येव क्रिया, सहकार्यपेक्षायाः क्षिप्तत्वात्। ततः[1] कादाचित्काकादाचित्कक्रियत्वयोः परस्परपरिहारस्थितलक्षणतया विरोधः सिद्धः[2]। एवं सति प्रतियोगिनि नित्ये विकल्प्यमाने एकज्ञानसंसर्गिलक्षणप्राप्ते विरुद्धस्यानुपलभ्यमानस्य क्रमाक्रमस्य तदुपलब्धिरेवानुपलब्धिः। सैव वार्थक्रियाशक्तेर्व्यापकानुपलब्धिः। तस्माद् व्यापकधर्म्युपलब्धितया न व्यापकानुपलम्भान्तरादस्य विशेषः। यदि च धर्मित्वेऽपि वस्त्ववस्तुतया विभागो भाग्यहीनस्य भवतो मतिमध्यापि दुःस्थयति, वस्तुन्यपि धर्मिणि एकत्र प्रदेशः कठिनो धर्मी द्रवरूपमन्यत्र जलमित्यादयो विभागा भङ्गवन्तस्तदन्विष्यन्तः[3] केन वारणीयाः? तस्माद् वस्त्ववस्तुतयापि भेदचिन्ता कोपयोगिनी?

ननु महानस्या उपयोगः। तथा हि वस्तुनि धर्मिणि परम्परया तत्प्रतिबद्धं व्यापकानुपलम्भलक्षणमनुमानं प्रमाणं प्रमाणभाजनीभवति[4], वस्त्वधिष्ठानत्वात्प्रमाणव्यवस्थायाः। न चैवमवस्तुनि शक्यमिति चेत्? किं तावत्परम्परयापि वस्तुनः सकाशादागतत्वमेव वस्त्वधिष्ठानत्वम्[5] तदा क्रमाक्रमस्यार्थक्रियायाश्च व्याप्तिग्रहणगोचरवस्तुप्रतिबद्धत्वमस्यापि न क्षीणम्, धर्मिविकल्पवस्तुप्रतिबद्धत्वं वा।

अथ वस्तुनि केनचिद् रूपेण व्यवहारकारणत्वं[6] वस्त्वधिष्ठानत्वम्? तदपि क्षणभङ्गिवस्तुसाधनोपायत्वेन प्रतिष्ठितमस्य, तस्यैव वा धर्मिविकल्पस्य वस्तुनोऽवस्तूपादानत्वव्यवहारकारणत्वेन धर्मिवस्तुनैव तु वस्त्वधिष्ठानत्वमिति किमनेन? यदि चैष ग्रहण एव[7] तत् किमनुमान एव वस्त्वधिष्ठानत्वं प्रामाण्यं वा? न प्रत्यक्षे, लिङ्गाश्रयणमेव[8] हि धर्मिचिन्तामवकाशयति। तदनाश्रयं तु प्रत्यक्षं वस्तुन आगतं[9] वस्तुनिमित्तव्यवहारकमित्येव[10] वस्त्वधिष्ठानम्, एवमनुमानमपि तथैव [1]वस्त्वधिष्ठानमिति

९. धर्ममिति नास्ति र १०. °याश्चाकरणात् र १ ततः इति नास्ति र २. सिद्धिः र ३. भङ्गमन्तस्तनिष्यन्तः अ ४. लक्षणप्रामाण्यता(?)जननी भवति अ ५. °धिष्ठानं अ ६. करणत्वं आ, र ७. ग्रह एव अ ८. लिङ्गाश्रयमेव आ, र ९. वस्तुन आगतमिति नास्ति आ १०. वस्तुनि च अ १. तथैवं अ

गृह्यताम्। केवलं परम्परया प्रत्यक्षस्यापि[2] हि जन्मैव साक्षात्, व्यवहरणं तु विकल्पादिव्यवधानेनैव। अनुमानस्य पुनरुभयमपि परम्परया। व्यवहाराणामपि स्मृत्यभिलापादिना व्यवधानात्। एवं वस्त्वधिष्ठानत्वमनुमाने[3] व्यवधानेन [4]दूषणमेव। केवलमनुमानेऽप्यन्यत्र साध्यधर्मापेक्षया यद्व्यवधानं ततोऽतिरिक्तमिदं व्याप्तिग्रहणापेक्षं वर्तत इति धान्ध्यं धियः। तत्रापि "न सर्वोऽनुमानान्तरसाधारणोऽयं धर्मः। स्वसाध्ये हि साक्षात्प्रतिबन्धमवधूय विपर्ययव्याप्त्या गमकत्वं कार्यकारणव्यापकानुपलब्धिषु। तद्वद् वस्त्वधिष्ठानत्वमपि यदि यथोक्तव्यवधानेन विषयविशेषे भवेत् कीदृशो दोषः, कस्यचिद् बाधकस्याभावात्? धर्मिविकल्पापेक्षया तु न तावतोऽपि व्यवधानस्य संभवः, [43a] असाधारणी च प्रत्यासत्तिर्धर्मिणो विकल्पाकारेण सहैकीकरणात्। निराकारपक्षेऽपि हि विकल्पायत्तप्रकाशत्वादलीकनित्याकारस्य धर्मिणः। तस्माद् धर्मिणो वस्त्वधिष्ठानपर्यवसानं प्रत्यासत्तिविशेषाश्रयतया विकल्पवपुषापि कृतार्थीभवेदिति न दोषः कश्चित्। अयमेव न्यायो न वक्ता वन्ध्यासुतश्चैतन्याभावात्, न खरं खरशृङ्गं द्रव्यतावियोगादित्यादौ योज्यः, नावस्तुनि विरोधः प्रतीत्यविषयत्वादित्यादौ[7] च शरणम्।

यदि प्रतीतिमात्रापेक्षया प्रतीत्यविषयत्वं तदा असिद्धिः, अनुभवापेक्षयानेकान्तः। इत्येवंप्रकारदूषणपरिहारशक्तिः, न पुनराश्रयासिद्ध्यादिदूषणगणगणना[8] काचित्। एतेन व्यापकानुपलब्धौ हि व्याप्याभावोऽन्यः प्रतिपत्तव्य इति हेलयापहस्तितम्, धर्मिरूपस्य भिन्नस्य प्रतिपत्तिविषयस्य प्रतिपादनात्, गण्डशैले वृक्षत्वाभावेन शिंशपात्वाभाववत्। तदेवं न प्रकृतव्यापकानुपलम्भस्य स्वरूपासिद्धिः, नित्यक्रमयौगपद्ययोः विरोधप्रतिपादनात्। यदाह, क्रमाक्रमविरोध[9] इति, तद् व्यापकद्वारेण पुनरर्थक्रियाविरोधादित्याह। नाप्याश्रयासिद्धिरवस्तुनोऽपि धर्मित्वप्रतिपादनात्, विकल्पेन प्रतिपत्तिप्रतिपादनाच्च। अतएव शास्त्रे,

तस्य धर्मिणि प्रत्यक्षतोऽनुमानतो वा प्रसिद्धिनिश्चयः

इत्युत्सर्गस्य परैरनुपाद्यापूर्वरूपं[10] नखादिकं सकृत् शब्दाद्यहेतुत्वादिकमवस्तुनि साध्यसाधनप्रतिज्ञानमपवादो वेदितव्य इति व्यक्तमेतत्।

---

२. प्रत्यया इत्यधिकम् र ३. °ष्ठानमनु° र ४. भूषण° र ५. नार्थो र ६. न खरः खरशृङ्गं (?) ७. °दित्या° इति नास्ति र ८. °गण° इति नास्ति र ९. यदा क्रमा° र १०. परैरनुयोग°(?) र

एवं दृष्टान्तधर्मिणोऽपि असिद्धिपरिहारः। व्याप्यव्यापकाभावौ च सिद्धावेव, नित्यवत् तत्र विमतेरभावात्। ततः सपक्षे सत्त्वनिषेधोऽपि ध्वस्तः। अथ मङ्क्षानेकान्तक्रान्तिः[1] कृतेति, तदनेन सिद्धसाध्यप्रतिबन्धात् सत्त्वहेतोः सिद्धः साध्यधर्मिणां क्षणभङ्गाङ्गीकार इति।

॥ व्यतिरेकाधिकारो नाम तृतीयः पादः ॥

१. क्षान्तिः र, अनेन चानेकान्त° (?)

# क्षणभङ्गाध्याये

## चतुर्थः पादः—अहेतुकविनाशाधिकारः ।

अन्वीतिव्यतिरेकमाकलयताध्यक्षेण धूमाग्निवद्
[1]दृश्यादृष्टिप्रभृतहेतुफलता[2] सिद्धा विनाशाङ्गयोः ।
तत्प्राक् कारणसन्निधेः फलमसन्नाशस्तनोति स्थितिं
तावन्तं किल[3] कालमित्यपि मृषा नाशः स्वरूपादृशः ॥

नहीदन्तया नाशस्य स्वरूपमुपलब्धिगोचरं[4] येनान्वयव्यतिरेकनिश्चयात् कारणाभिमतमुद्गरादिसन्निधेः प्राक् नाशाख्यं कार्यमभवत् तावन्तं कालं भावस्य स्थैर्यमापादयेत्, यावता नाशस्य स्वभावानुपलब्धेर्मृषैव कल्पनेयमिति कुतः कारणानुपलब्ध्या स्थैर्यसिद्धिः ?

ननु घटमुद्गरादयो दृश्यन्ते तावत् तेष्वेव कश्चिन्नाशो नामेति नाशस्वरूपानुपलब्धिरसिद्धेति चेत् ?

दृष्टस्तावदयं घटोऽत्र च पतन् दृष्टस्तथा मुद्गरो[5]
दृष्टा कर्परसंहतिः[6] परमतोऽभावो न [7]दृष्टोऽपरः ।
*तेनाभाव इति [43b] श्रुतिः क निहिता किं वात्र तत्कारणं*
स्वाधीना परिघस्य[8] केवलमियं दृष्टा कपालावलिः[9] ॥

सुनिपुणं निरूपयन्तोऽपि मांसचक्षुषा वयं तावन्नापरमत्र वस्तुजातमीक्षामहे, यदभावश्रुत्या विपर्योक्रियते । तद्दर्शनाभावाच्च तत्कारणमपि किमवधारयामो, यदभावेन[10] पूर्वपूर्वमसन्नाश[1] इति स्यात् ? यश्च तत्कारणं कल्पितो दण्डस्तस्याप्यन्वयव्यतिरेकानुविधायिनी कपालपंक्तिरेव दृष्टा, नान्या काचित् । वैधर्म्यदृष्टान्ततयेयमुपन्यस्ता पुनः, यथेयमध्यक्षानुपलम्भाभ्यामन्वयव्यतिरेकावनुविदधती[2] दृश्यतया

१. दृष्टया र २. प्रभृन° (?) अ ३. किलेति नास्ति आ ४. °गोचरो अ ५. मुरो आ ६. दृष्टो अ ७. दृष्टः परः अ ८. पलिधस्य अ ९. तत्त्वचिन्तामणिप्रत्यक्षखण्डे ७१७ पृः, रत्न° निब° १११ पृः १०. नेति नास्ति अ १. पर्वमसन्नास अ २. °कावथ° अ

दण्डस्य कार्यमवस्थाप्यते, तथा यदि नाशाख्यमपि वस्तु दृश्यं स्याद्नात्मरूपविवेकेन तस्यापि तद्वदिवदण्डकार्यता अवार्यैव[3], न चैवम्। तस्मात् कल्पनैवेयम्[4]।

स्यादेतत्,

आस्तां कर्परपंक्तिरेव कलसध्वंसो न चेयं पुरा
तेन स्थैर्यमपि प्रसिध्यतु[5] ततो भिन्नेन नाशेन किम्।

अत्रोत्तरम्,

नाशः सैव यथोच्यते यदि तथाभावोऽपि[6] कुम्भान्तर-
न्यासेऽभावरवः कथं मतमतः सिध्यत्यभावेऽपि नः[A] ॥

अयमर्थः। यथा वेगवन्मुद्गरप्रहारात् पूर्वं घटस्य नाशो नास्तीति प्रतिपादयितुं शक्यं भवतस्तत्स्वभावभूतायाः[7] कपालपंक्तेरदर्शनात्, तथा नाभावपरम्परापरिचयोऽपि नास्तीति शक्यम्। न ह्यभावोऽपि कपालपंक्तिरेवोच्यते, येन स्वभावानुपलब्धिरवलम्बनं तद्वदेव स्यात्। अथ नाशवदभावोऽपि कपालपंक्तिरेवोच्यते, तदा क्वचिद्देशे कुम्भमेकमपनीय कुम्भान्तरन्यासे कथमभावव्यवहारः, कपालावलेरभावात्? अस्ति च कथञ्चिद्भेदमाकलयतः तत्राप्यभावव्यवहारः एकस्यान्यस्य सादृश्यविप्रलब्धस्य प्राचीनावस्थानव्यवसायेऽपि[8], तत् कथं कपालपालिरेवाभावः? तदस्यां ध्वंसशब्दं सङ्केतयतो यदि[9] पूर्वं ध्वंसो नास्तीति शक्यमप्यभिधातुं[10], कपालदशाविरहात्[1], अभावस्तु नास्तीति न[2] शक्यम्, सदृशापरसंभवेन[3] दुरुपलक्षणात्। तस्मात् [4]प्रहारात्प्रागभावेऽपि कुम्भस्य संभाव्यमाने सिद्धमभिमतमस्माकम्। दृश्यानुपलम्भानवतारणं[5] नाम, अतो[6] न कर्पराणां ध्वंससंज्ञयोपयोगः। न चान्यन्मुद्गरान्वयव्यतिरेकानुकारि दृष्टमिति व्यवहारमात्रपरायण एव नाशो न वस्तुतोऽस्ति।

नाशो नास्ति यदि स्वहेतुनियतः[7] किं देशकाले क्वचित्
कुम्भो नष्ट इति प्रतीतिनियमस्तेनास्ति कार्यश्च सः।
नाप्यन्यत् किल कारणं स्थवतो दण्डात् पुराप्यन्यथा[8]
नाशोत्थानकृता[9] विनष्टघटधीः केनोद्धुरा वार्यते[B] ॥

३. °वार्यता आ ४. °दकल्पनै° आ ५. प्रसिध्यति आ ६. अभावेऽपि अ A. रत्न° निब° पृः ११२
७. भवत्स्वभाव° आ ८. अपीति नास्ति आ ९. नदि आ १०. शक्यमभिधातुं अ १. °लदया आ
२. नकारो नास्ति अ ३. सम्भेन आ ४. प्रहारात्प्राभाग° आ ५. °नुपलम्भेति नास्ति आ ६. नाम(?स)तो आ ७. स्वहेतुयमितः आ ८. पुरान्यथा आ ९. नाशोथो आ, नाशोत्थानकृता अ B. रत्न° निब°पृः ११२.

एवं तर्हि कार्यान्तरवत् कारणान्वयव्यतिरेकानुविधानं ध्वंसस्योत्फुल्लगल्ल-मुल्लपितं[10] लुप्तं, कार्यान्तरवदनुभवाभावात्[1]। केवलमुपपत्त्या प्रसाध्य[2] प्रध्वंसमस्याभिमतनिवन्धनाधीनता[3] साध्या। सा चोपपत्तिः क्षीणा, यतः,

दृष्टेऽम्भोभृति मुद्गरादिजनितां दृष्ट्वा कपालावलिं
सङ्केतानुगमाद् [44a] विनष्टघटधीस्तावत्[4] समुत्पाद्यते।
सामग्र्यामिह नाशनाम न[5] किमप्यङ्गं न वास्यामपि
स्यादेषा न कदापि नापि च पुराप्येषा समग्रा स्थितिः॥

पूर्वार्धेन [6]नष्टघटबुद्धेर्जन्मसामग्रीमादर्श्य पश्चार्धेनाधिकस्य नाशनाम्नो नान्वयो न व्यतिरेकस्तद्विवेकसामग्र्यास्तूभयमनुकूलं भवेदिति दर्शितम्। तत्र नाशाख्यं न[7] किञ्चिदिह सामग्र्यां निमित्तमस्तीत्यन्वयो निरस्तः, न चास्यां सत्यामपि सामग्र्यां कदाचिन्न स्यादेषा बुद्धिरिति व्यतिरेकावलम्बनमपास्तम्। पूर्वं तर्हि कस्मान्नेयं बुद्धिरिति व्यतिरेकप्रत्ययाशातनं[8] शेषेण ? यदि पुराप्येषा सामग्री स्यात्, नियतमियं भवन्ती[9] बुद्धिरर्थान्तरसापेक्षतां सूचयेत्। न चेयं सामग्री पुराप्यस्ति, विकलकपालपंक्तेः परिघपातादिकारणाभावेनाभावात्। तत् कुतो व्यतिरेकमात्रमपि ? उक्तसामग्र्यास्तु न वास्यामपि स्यादेषा न कदाचिदिति निषेधद्वयेनान्वयः। शेषेण व्यतिरेकश्च व्यक्तः। तद् बुद्ध्यभावकाले सामग्र्या एवाभावप्रतिपादनादसौ सामग्र्यभावो[10] बुद्ध्यभाव-व्याप्त इत्यर्थः। यस्तु प्रत्यक्षेतरसहकारिसाकल्यरूपतया सर्वैव सामग्री परोक्षेति समर्थयते विषमदृष्टिः ततश्च[1] परोक्षतया तस्या नान्वयव्यतिरेकनिश्चय इत्युच्यते, हन्त हुतवहेन्धनादिसामग्रीप्रतिवन्धोऽपि धूमादेरस्तमित इत्यप्रवृत्तिनिवृत्तिकं जगत् प्रसज्येत। तस्मान्नादृष्टाभ्युपगमो [2]दृष्टसाधनसामर्थ्यप्रतिरोधेनेत्यलं विस्तरेण। तदयं घटामर्शवतः कपालानुभव एव नष्टघटावसायसाधन इति सिद्धम्।

अर्थापत्तिरतो गता क्षयमियं न ध्वंससिद्धौ प्रभुः

न विशेषबुद्धिर्विशेषणमन्तरेणेति[3] चेत्– न, भावे [4]भिन्नकालत्वाद् विशेषणत्वा-सिद्धेर्ध्वंसस्य। यतः,

---

१०. °गन्त° आ १. °दनुभावा° आ २. प्रसाध्यप्रसाध्य आ ३. °न्धनावानता आ ४. विनष्टि° अ ५. नकारो नास्ति अ C. रत्न° निव° पृः ११२ ६. °र्जन्य° आ ७. नकारस्त्यक्तः अ ८. प्रत्याशा° अ ९. °मियमभवन्ती अ १०. सामग्र्याभावो आ १. °तश्च आ २. सामर्थ्ये° आ ३. विशेषमन्तरेणेति आ ४ नाभावे आ

स्वबुद्ध्या रज्यते येन विशेष्यं तद्विशेषणम् ।

कालभेदेन पूर्वापरकालयोर्नाशभावयोरभावात्[५] केन कः स्यात् ? क्वचित्[६] प्रतीतिविषयीक्रियते । न च भावे स्थितिधर्मो ध्वंसः[७], किं तु प्रदेशे[८] । न चान्यत्रस्थितः अन्यस्य विशेषणं, दण्डवत् । भेदादेवमपि[९] स्यादिति चेत् ? भेदे तर्हि सर्वान्यरूपविवेकेन प्रतिभासमानमेव विशेषणं विशेष्यं स्वानुरक्तप्रतीतिविषयीकुर्यात्, न स्वरूपेणाप्रतिभासमानं, दण्डवदेव । अनुमानसिद्धेनापि दण्डेन [१०]दण्डिप्रतीतेरुत्पादादनेकान्त इति चेत्—न, सर्वथा यस्य न स्वरूपावभास इत्यभिप्रायात् । दण्डस्य पुनरनुमानकालेऽप्रतिभासनेऽपि निश्चायकाभिमतलिङ्गेन सह संबन्धग्रहणकालेऽस्त्येव स्वरूपनिर्भासः । ततस्तदनुस्मरणादनुमानकालेऽपि तद्रूपानुरक्तां बुद्धिमादधीत दण्डः । न च सर्वथा अदृष्टदण्डस्य दण्डोऽप्यनुमानभाजनं स्वरूपानुरक्तप्रतीतिहेतुर्वा दृष्टपूर्वः । एवं नाशनामाप्यर्थः कथं तथा स्यात्, सर्वथा अदर्शनादिति ? न च दण्डानुमानाद्भिन्ना दण्डिप्रतीतिः, दण्डोऽत्र दण्डोऽस्य[१] दण्डवानयमिति चानर्थान्तरत्वात् । न चेयं लिङ्गत्यागे [44b] न भवन्ती[२] प्रतिज्ञामात्रतयानुमानं [३]भवितुमर्हति, [४]यन्नष्टप्रतीतिरपि नाशनामार्थसाधकं [५]निश्चयमपेक्षमाणा कथं स्वयमेव साधनत्वेनाभिधीयेत[६] ? न चान्यलिङ्गमस्ति, सर्वथा अदृश्यतया तस्मिन् कस्यचित् प्रतिबन्धासिद्धेः । अतएव हि सैव[७] बुद्धिस्तत्सिद्धये शरणमाश्रीयते । [८]अतोऽनुमानसिद्धेनानेकान्तः । अनुमानस्यापि विशेषणस्वरूपनिर्भासनान्तरीयकत्वादपृथक्सिद्धेश्चानुमानविशेषणप्रतीत्योरिति, यस्य न स्वरूपनिर्भासस्तन्न कस्यचित् स्वानुरक्तप्रतीतिनिमित्तम्, यथा करिकेशरः । नास्ति च स्वरूपप्रतिभासो[९] ध्वंसस्येति व्यापकानुपलब्धिः । स्वानुरक्तप्रतीतिनिमित्तत्वं[१०] निर्भासभङ्गे भवदतिप्रसङ्गबाधितं प्रतिभासवत्तयैव[१] व्याप्तम् । न चासिद्धिः, इदन्तया दर्शयितुमशक्यस्य बाह्यवस्तुनः प्रतिभासव्यवहाराभावात्, इदन्तया निर्देशनीये च विवादाभावात् । न हि दण्डोऽपि दण्डिप्रतीत्या साध्योऽध्यक्षसिद्धत्वात् । मूढं प्रति व्यवहारसाधनेऽपि नेदन्तया[२] निर्देशः, विशेषतो लोचनगोचरे ।

अथ सर्वं वस्तु स्वरूपेण प्रतिभाति, न पररूपेण, यथा भाव एव नाभावरूपेण, एवमभावोऽपि[३] भावरूपेणाप्रतिभासमानोऽपि स्वरूपेण प्रतिभात्येव । इदन्तया प्रवि-

५. नाशाभावयो° इति नास्ति अ ६. क्वचित्° अ ७. धर्माध्वंसः आ ८. प्रदेशो आ ९. भेदादितमपि अ १०. प्रतीतिरुदया° आ १. दण्डेऽत्रेदण्डास्य आ २. न भवन्तीति आ ३. अनुमानभवितु° आ ४. एवं अ ५. लिङ्ग° अ ६. °धीयते अ ७. अतएवैव आ ८. यतो अ ९. निर्भासो आ १०. निमित्तं अ १. °वत्तैव आ २. ऽरिने° इति त्यक्तम् आ ३. अपीति नास्ति अ

भासनं नयनविषयस्यापि[4] भावस्यैव। अतो नेदन्तया प्रतिभासाभावेऽप्यप्रतिभास एवेति चेत्? नवै पररूपेण प्रतिभासो मृग्यते, तस्याभावं प्रति सिद्धत्वात्। स्वरूपं पुनरस्य किं तत्प्रतिभातीति निभालयन्तो न लभामहे, इदन्तया निर्देशस्तु भावेष्वेवेत्यपि न राजकीयो नियमः। तद् यदि भावेष्वपि केषुचिदेव नेत्रपात्रेष्विदन्तया निर्देशो[5] न सर्वेष्विति ब्रुयात्, तदा टङ्कवकादयोऽपि पुरः प्रतिभासिन[6] एवेदन्तया परं निर्देष्टुमशक्या इति किमत्र [7]वक्तव्यम्? तस्माद् यावच्चक्षुर्गोचरचारि वस्तु तावदिदन्तया निर्देशप्रतिभासमेव, यत्पुनरिदन्तया निर्देशविरहितं तदप्रतिभासमेव नयनग्राह्यमिति न्यायः।

अथ विशेषबुद्धयैव[8] प्रतिभासोऽपि साध्यः, यथा हि न दण्डिबुद्धिर्दण्डबुद्धिमन्तरेण तथा दण्डप्रतिभासमन्तरेणापि, एवं नष्टबुद्धिरपि विशेषबुद्धित्वान्न नाशं नाशप्रतिभासमन्तरेणेति कथमप्रतिभासपोषमिति चेत्? भवत्येव विकारो[9] न पुनरेतादृशः। स्वसन्तानवर्तिप्रतिभासोऽस्माभिरप्यनुमानेन[10] प्रतिपत्तव्य इति घटादिप्रतिभासेऽप्येवमिदानीमायातम्[1]। तत् किमहं पश्यामि किञ्चिदित्यनुमानमनाप्तवता आप्तवचनेनापि प्रत्येतव्यमित्यर्थमप्रतिकुर्वाणोऽपि वैद्यः कृतार्थः स्यात्। अन्ततः शपथेनापि निर्वृत्तिरालम्ब्येत। परोक्षे हि विषयेऽमीषां प्रकाराणामवकाशः, [45a] न ज्ञाने। यत्पुनरपश्यन्तमात्मानं वेदयमान एव पश्यसीति ग्राह्यते व्यक्तमियं भण्डविधा परयन्तमपि वाहयति। योऽप्यपश्यन्नपि तद्वचनेन पश्यामीति गृह्णीत[2] स खलु पशोरपि पशुः।

ज्ञानपरोक्षतावादेऽपि हि,

कस्यचित्प्रतिभासेन साध्यतेऽप्रतिभासि यत्।
प्रतिभासोऽस्य नास्तेति साध्यते नोपपत्तिभिः[3]॥

तस्मात् प्रतिभासोऽपि साध्य इत्यसंबद्धमेतत्। नाशस्त्वप्रतिभासमानो यदि साध्यते, साध्यताम्, न तु नष्टघटप्रतीत्येति स्थितमेतत्,

नाशो वाऽस्तु न तु प्रतीतिजनको यद्वद्घटे नष्टधीः।

अभ्युपगम्यापि ब्रूमः। अस्तु वा नाशो नाम, न पुनरस्यावश्यं प्रतीतमेव जनकं मुद्गरादीति शक्यम्, यथा नष्टघटबुद्धेरेव न प्रतीतः कपालानुभवो [4]हेतुरिष्टः, तथा

४. विशेषस्यापि आ ५. °यानिर्दे° इति नास्ति आ ६. °भापिन आ ७. वक्तं आ ८. °बुद्धौ च अ ९. धिकारो अ १०. अस्माभिरनु° अ, अस्याभिरपिरनु आ १ °मायातः आ २. गृह्णाति अ ३. °रत्न° निब° पृ: १११ ४, °भवहेतु° अ

नाशस्यापि मुद्गरादिपरिहारेण कारणमन्यदेवादृष्टं किञ्चित् स्यात्, यतो न पुरा कारणानुपलब्धिसिद्धिः। यथा अदृष्टमेव नाशाख्यं वस्तु स्वीकारसिद्धं नष्टबुद्धेर्निबन्धनम्, तथा नाशस्याप्यदृष्टमेव किञ्चित् कारणं न मुद्गरादीति कथं तदभावेऽपि नियमेन नाशनिवृत्तिः? अयं तु विशेषो यथा मुद्गरस्य कपाले कपालानुभवस्य च नष्टबुद्धावन्वयव्यतिरेकाभ्यां सामर्थ्यसिद्धिस्तथा न मुद्गरस्य नाशे[5] न नाशस्य [6]नष्टबुद्धाविति, यदि परं भवदुपरोधादयमर्थः प्रतिपत्तव्यः।

अथ कपालानुभवात् कपालकल्पनैव स्यात्, न नष्टघटबुद्धिरिति चेत्? तदेतज्जीवतो व्याघ्रस्य दंष्ट्रोत्पाटनम्[7]। कलसामर्शवतः "[8]कपालवलयवीक्षणादेव नष्टघटबुद्धेरुदयः साक्षादनुभूयमानोऽपलप्यते इति, एवं तर्हि सर्वस्यान्वयव्यतिरेकावधारितार्थस्यापलापः प्रसक्तः। यदा पुनरनर्थित्वादिना घटामर्शेन[9] शून्यता पुरुषस्य, तदा कपालावलोकनात् कपालकल्पनैव जायते, सामग्रीभेदस्य भेदकत्वात्। यदि पुनर्भवदभिप्रायानुवर्तिनो[10] भावा भवेयुर्न भवेदप्येवम्, तथापि यदीच्छसि कपालानुभवादेव नष्टघटबुद्धिरस्त्विति, तदा तथैव स्यादिति न नाशः प्रयोजकः। तदलं स्वमनीषिकासंप्रत्ययेन[1] कर्परदर्शनमेव तद्बुद्धिनिबन्धनम्। यदा[2] तु कलसविमर्शमपेक्षते तथा सङ्केतस्मरणमपि, ततो नातिप्रसङ्गः। न च सङ्केतोऽपि नाशमुपदर्श्य कर्तुं शक्यः, तस्यादृश्यत्वादेव[3], किं तु [4]विसभागोत्पत्तिरूपं विकारमुपदर्श्य एतादृशावस्थायां नश्यतः प्रयोग इति।

एतेनाभावदर्शनमेव भावानुपलम्भं संभावयन्तो निरस्ताः, अभावरूपादर्शनादेव। तस्मान्न ध्वंसो नाम कश्चित् पश्चाद्भावी।

किं चान्यप्रकृति प्रतिक्षणमिदं [ 45b ] संसाधितं चेज्जगत्
प्रौढन्यायबलाद् विलम्बि निधनं स्याद् वा नवा किं ततः[5] ॥

स्यादेतत्।

न ध्वंसेन विनान्यतैव[6] हि भवेद् भावेन सार्धं स चेत्
सत्यासत्य किमस्तु[7] वस्तुनियतं भावानुजोऽसौ ततः।

---

५. नाशो अ ६. नष्टबुद्धिरिति अ ७. दंष्ट्रोपोदनं आ ८. °वतः पालवनय आ ९. °मर्शन° अ १०. °वृत्तिनो आ १. स्वननीसिकासं° आ २. यथा अ ३. दृश्यतादेव अ, दृश्यवोदेव आ ४. विलय(?) अ ५. निस्यादा न किंचित् आ ६. °न्यत्रै° आ ७. °मन्ति आ

भावात्तेन[८] विभिन्नकारणतया तत्कारणासंभवे-
भावात्तेन[९] कृतान्यतापि गलिता भङ्गः कुतोऽनुदृणम् ॥

भावहेतोः सकाशादभावोदयवर्णना[१०] भावेन सार्धं स चेदित्युक्तम्। अत्र ध्वंसादन्यतेति कोऽर्थः? किमेको भावस्तेन खण्डखण्डीक्रियते? अथ भावान्तरोत्पादनमात्रमस्मात्? उत प्राचीननिवर्तनं च भावान्तरोत्पादनं च? यद्वा प्राचीननिवर्तनमात्रम्? तत्र,

नैकात्मानमनेकतां गमयति ध्वंसो विरोधात्तयो-
रेकानेकतयोः[१]।

ननु कालभेदेनैकमप्यनेकं भवन्न दुष्यतीति चेत्?

स्वभेदविरहे कालस्य भेदेऽपि किम्।

यदि हि कालभेदको भावभेदको[२] भवेद्, भवेदेतत्। भावस्य तु तादवस्थ्ये कालकुशावलम्बनमुपयुक्तमेवैतादृशामिति[३] प्रथमपक्षनिषेधः।

भिन्नं चेत् कुरुते न तस्य दलनम्

इति द्वितीयो दोषः। अर्थान्तरकरणे हि तत्प्राचीनं न खण्डितमिति कृतेऽपि कर्परादौ कुम्भोपलम्भप्रसङ्गः।

भिन्नेन तद्दालने

किं नाशेन?

अर्थान्तरेण कपालादिना तस्य कलसस्य दर्शनेऽभ्युपगम्यमाने नोपयोगः। नाशाख्यस्य तस्यैवार्थान्तरस्योत्पादने[४] उपयोग इति चेत्?

विभिन्नजन्म तु भवन्नाशस्य हेतोर्न किम् ॥

यत एव मुद्गरादेर्नाशस्तत एव कर्परस्यास्तु जन्म, किं साध्ये ध्वंसमुत्क्षिप्य?

एतेन तृतीयेऽपि विकल्पेऽन्योत्पादनभागः प्रत्युक्त इति चतुर्थोऽवशिष्यते। नाशेन तस्य निवृत्तिः क्रियत इति। तदापि,

---

८. भावातेन आ ९. तावत्तेन आ १०. भावहेशादभावोपय° आ १. एकात्मयोः अ २. °भावाद्देका° आ ३. °द्यनुपयुक्त° आ ४. °कुपलम्भे° आ ५. °स्यैवान्तरस्य आ

प्रध्वंसेन विनाशजन्मनि मते तेनापि नाशान्तरो-
त्पादे [6]नाशपरम्परेति विभवेद्भावः कदाचिन्न सः।
न, ध्वंसादपरा निवृत्तिरिति चेदन्योऽन्यनाशः कथं
तस्मिन् वस्तुविलोकनादिति न सन्नाशादृशः[7] ख्यापनात्॥

ध्वंसो हि वस्तुतां भावतां[8] वा अतिक्रमितुं नार्हति, अनुभवजननसामर्थ्यादन्यत उपपत्तेश्च। स कथमन्योऽर्थोऽन्यस्य नाश इत्युच्यते? यत्त्वेतस्मिन् सति वस्तुनोऽदर्शनादित्युत्तरम्, तन्न सत्, यतो नाशस्य दर्शनं नास्तीति ख्यापितम्, ततस्तस्मिन्नसतीति कथं कथयितुं पार्यते? यदि च 'तस्मिन् सति वस्त्वदर्शनाद् ध्वंसाख्यवस्तुनिवृत्तिरुच्यते[9], तदा-

नाशो मुद्गर एव वास्तु शकलान्येवाथवा,

तदुभयत्र तस्मिन् सतीति विवक्षाघटनात् मुद्गरस्य प्राग्भावात्, खण्डानां समसमयत्वात्, बीजे सत्यङ्कुरो गोषु दुह्यमानासु सतीषु गत इतिवत्। नाश इति निवृत्तिः [46a] ध्वंसाख्यो वा[10], ध्वंसोऽपि मुद्गरादिरेवास्तु। अलं पृथक् ध्वंसकल्पनया, तावतापि तदभावात् पुरा स्थिरो भाव इति सिद्धेः।

अत्रोच्यते,

तद् द्वयं

भावत्वेन न भावरोधि,

न हि भाव एव भावस्य विरोधी भवितुमर्हति। अविरुद्धभावे च कथमन्यस्य निवृत्तिरदर्शनं वा? अत्रोत्तरं,

भवतो भावैव[1] भावान्यता।

नात्र भावानां सामर्थ्यम्, किं तु भवत एव भारत्या भावता अभावता वा[3]। तथा हि भवतीति भावः, भवनं चोत्पत्तिस्तावदस्य स्वीकृता। यद्यप्यस्तीति भावः, तदापि विद्यमानता भावार्थः। सापि स्वरूपसत्त्वलक्षणा स्वीकृतैव नित्यतालंकृता[4] यावत्। यद्यास्तीति न भवति तत् किमुत्पद्यतिना संपाद्यते वन्ध्यासुतवदङ्कुरवत्?

६. °भावः भा ७. भासादृशः भ ८. भावतामिति नास्ति भ ९. °साख्यन्विनिवृ° भ १०. °ख्यस्यो भा १. भावरोधिना हि भा २. भावेव भा ३. °ऽभावभावात् र ४. कृतया° भ

अथ सर्वसामर्थ्योपाख्याविरहेणाभावव्यवहारात् शक्तिरपि सत्त्वमनुमन्यते, सापि स्वज्ञानजननेऽभ्युपगतैव, निःशङ्कामनादिकं च तत्कार्यमेव। स्वाभ्युपगतः सत्त्वसमवायः स्वकारणसमवायो वा[५] परं नास्ति। न च सर्वेण भावधर्मेण सर्वत्र भावे भवितव्यम्, नापि सर्वभावधर्माभावेन[६] भावान्तरस्यापि न भावत्वम्। एवं सति सामान्यविशेषसमवायानामप्यभावप्रसङ्गः। [७]तेभ्योऽप्यधिको ध्वंसस्योत्पत्तिरेवापराधः। वस्तु चावश्यं नाशो वसत्यर्थक्रिया अस्मिन्निति न भाव इति कष्टो बतायं सिद्धान्तविषममहः। तस्माद् भवतोऽत्र स्वातन्त्र्यम्। यदि भणसि ध्वंसोऽपि भावः स्यात्, मुद्गरादिरपि कुम्भस्याभावः स्यात्।

न खलु[८] मुद्गरादिकं भावमभावं वा[९] कश्चिद् व्यवहरतीति चेत्? ननु ध्वंसमपि यदि केनचिद् रूपेण जायमानमुपलभेत[१०] कश्चिद्, विशेषतो नित्यस्थितं किमभावं व्यवहरेत्? दृश्यन्ते हि तनुधूमादयो व्यवधानानवधानादिना[१] अनुपलब्धमूर्तयः पुनरुपलभ्यमाना भावव्यवहारभाजः[२]। तस्माद् भावव्यवहारहानिरस्यादर्शनादेव प्रत्यात्म वेद्यते प्रतियोगिदर्शनस्वभावात्[३]। तच्चादर्शनमनुभवाभ्युपगमे भाव एव, अनुपलभ्यत्वे तु [४]जन्मादिकीर्तनमाकाशचित्रणम्। स्वरूपजन्मनोरुपलम्भे तु भावव्यवहारः प्रसह्यायात इति कथमस्यापि विरोधित्वम्? न च मुद्गरादावप्यभावशब्दाप्रवृत्तिरेव, भावान्तरपर्युदासेन तत्सिद्धेः। न [५]चातिप्रसङ्गो, ध्वंसवत्। यया हि प्रत्यासत्त्या ध्वंसाख्यमेव वस्तु घटस्य निवृत्तिरुच्यते, तस्या न [७]कर्परपरिघयोर्विघातः। विरोधित्वमपि[८] तयोरेव रमणीयम्, अणीयसाप्यंशेन [९]दर्शनाख्येन [१०]तयोरुत्कर्षात्। तयोः सतोः कुम्भाभावव्यवहार इत्यस्यातिप्रसङ्गसङ्गमाद्भङ्गनिमित्तस्य[१] पुष्टत्वात्। न च भावो भावान्तरविरोधी न भवत्येव, कथमन्यथा गोत्वमगोत्वस्य, दहनस्तुहिनस्य वा?

किं च विरोधोऽपि द्विविधः प्रसिद्धः। तत्र,

रोधः सोऽपि सहास्थितिर्यदि तदा भावद्वयस्यैव सा

दहनतुहिनवत्। अविकलकारणस्य भवतोऽन्यभावेऽभावाद्धि सहानवस्थानव्यवस्थानम्। न चेयं [२]गतिर्भावाभावयोः संभवतीति व्यक्तम्।

---

५. वेति नास्ति आ ६. सर्वधर्मा° र ७. °ह्यधि° आ ८. ननु न अ ९. वेति नास्ति आ १०. °लभ्यते अ १. °धादिना आ २. °भानाव्यवहार° अ ३. स्वेति नास्ति आ ४. जन्यादि° आ ५. चकारो नास्ति आ ६. मया आ ७. कर्परस्परिघगो° आ ८. °तुमपि द्या ९. °ध्यंशेन अ १०. °र्शाख्येतयो आ १, °भास्तंगमनि° आ २. यदि भा आ

नैकेनान्यहृतिः परस्परपरीहारस्थिते[3] लक्षणे ॥

न [4]खल्वलाक्षणिकविरोधस्य सद्वस्तुबाधनं[5] व्यापारः, किं तु सहानवस्थानस्यैव, लाक्षणिकस्य तु धर्मयोरेव व्यवस्थानात्। व्यवस्थित एव वस्तुनि [6]वस्तुनाऽवस्तुना वा स्वरूपसंकरव्यतिकरनिषेधः। ततो यथा नीलमनीलं न भवति उभयोरन्योन्यस्वभावत्वात्, तथा कलसनाशयोरपि स्यात्। न च तावतेष्टसिद्धिः मुद्गरसन्निधिमात्र इव तस्य तादवस्थ्यानपायात्[7]।

ननु कलसकुलिशादौ धर्मयोरेव विरोधात् तदध्यासितस्य भेदमात्रम्, कलसनाशौ तु भावाभावरूपतया स्वयं विरुद्धाविति कथं सह स्याताम्? न, भावाभावयोर्हि भवनाभवनरूपतया[8] धर्मयोरेव परस्परपरिहारः, यतो न भावाध्यासितस्याभावोऽभावाधिष्ठितस्य वा भावः, यतो वा कुम्भनभोऽम्भोरुहादेर्नैकत्वम्। कलसनाशरूपस्य पदार्थद्वितयस्य धर्मिरूपस्य क्व परस्परपरिहारः? विरोधमात्रं तु न वार्यते, केवलमेकेन भवता भवतः परिभवे सति[9]। तावता च सहानवस्थानव्यापारः। तस्माद्धर्मयोरेव परस्परपरिहारः। नीलानीलयोः कथमिति चेत्? नीलानीलयोः परस्परपरिहार इति नैकत्वमनयोरित्येवार्थः। ततो धर्मविरोध[10] एवानेनापि प्रकारेण प्रकाश्यते। अन्यथा तुहिनहुतभुजोरिव नीलानीलवाससोरपि मिलितयोरनवस्थितिप्रसङ्गः। तादात्म्यं[1] तु तदापि नास्त्येव[2]।

देशोऽपि नीलानीलयोर्भिन्न एवेति चेत्? कामं भिन्नः, न तु वस्तुनोर्विरोधः तावता देशभेदेन कृतार्थः। अन्यथा जलज्वलनयोरपि तद्वदेव मिलितयोः प्रबन्धस्थितिः[3] प्रसज्येत, सूक्ष्मदेशपरिहारेण विरोधस्य फलवत्त्वात्। अतएव विरुद्धोपलब्धौ [4]कल्पितैकभावः स्थूल एव देशो धर्मी। एवं नीलमनीलत्वेन विरुध्यत[5] इत्यपि नीलमनीलं[6] न भवतीत्येवार्थः।

यदि तु धर्मिधर्मयोरपि साक्षाद्विरोधः स्यात्, तदा यत्र धर्मिण्यनीलत्वं तत्र नीलत्वं[7] न स्यात्। अस्ति च यथा रत्नान्तरं तपनीयमात्रे, तथा नाशस्याभावरूपधर्ममात्रत्वेऽपि भावधर्मा घटो नासन्नभावधर्मा च न सन्नित्येवार्थः, ततः

३. °स्थिति° आ ४. न चात्र आ ५. बधिनं आ ६. वस्तुनो वस्तुना अ ७. °पातात् अ ८. भवनाभावन° आ ९. सतीति नास्ति आ १०. धर्मविध आ १. तादात्म्ये आ २. ०दा नास्त्येव अ ३. प्रबन्धस्थितिरिति नास्ति आ ४. कल्पीति नास्ति आ ५. °द्धेत अ ६. °मनील आ ७. नीलं आ

सिद्धेनाभावेन धर्मेणासन्नेव घटोऽसन्निति व्यवह्रियते, न तु सन्नेव निवर्त्यते[8]। सत्तानिवर्तने तु सर्वत्र [9]सहानवस्थानव्यापारः। कथं पुनर्घटस्याभावो धर्मः ? कस्य पुनरसौ धर्मोऽस्तु ? धर्मत्वेन स्वीकाराद् धर्मिणोऽवश्यमाक्षेपात् क्ष्मातलस्यैवास्त्विति चेत् ? [10]ततः किं भूतलस्यैवा[47a]भावो विवक्षितः ?

ननु घटस्य निवर्त्यनिवर्तकभावसंबद्धोऽभावो भूतलस्य[1] धर्ममात्रमुच्यते[2], न तु भूतलस्य निवर्तक इति चेत् ? भवतु भूतलस्यानिवर्तकस्तद्धर्मो वा केवलम्, यथा[3] नीलविरुद्धानीलत्वयुक्ते भूतले नीलवस्तुस्थितिरविरुद्धा, तथा घटविरुद्धाभिमतेनाभावेन युक्तेऽपि घटस्थितेरविरोधः स्यात्, ततोऽभिमानमात्रव्यवस्थित एवैषां निवर्त्यनिवर्तकभावः। तस्माद् भूतले कलसस्याभाव इति भूतलाधारस्य घटस्य संबन्धित्वेनावभासयन्ती विकल्पबुद्धिरभावं तद्धर्मत्वेन व्यवहारयतीति[4] न्याय्यम्। अध्यवसितापेक्षया तु संवादेतरौ[5], तदेवं परस्परपरिहारविरुद्धो धर्मः स्वविरुद्धस्यासत एवासत्तामात्मधर्मिणि व्यवहारयति। न तु निवर्तयतीति धर्मिणो भेदव्यवहारहेतुरेव। तथा च जलानलादिषु स्पर्शस्योष्णेतरत्वं दूरेऽपि प्रत्यनीकाकारवत्तया[6] अन्योन्यापनयनमनपेक्ष्य [7]स्वरूपविमर्शमात्रेण विरोधव्यवहारगोचरीभवति। सहानवस्थानं पुनरेकेनान्यस्य[8] सत्तानिवर्तनदर्शनादेव[9] व्यवस्थाप्यते। तद् यदि सहानवस्थानमभिमतो विरोधः, तदा सिध्यतु भावस्य सत्तोपलम्भयोर्निवृत्तिः। केवलं भावयोरेवासौ[10] न भावाभावयोः।

ननु तस्मिन् सति तन्निवृत्तिरितीयता सहानवस्थानमभिमतो विरोधः[1], तच्चाभावेनापि भावस्य लभ्यत इति न भावयोरेवेति युक्तो नियम इति चेत् ? उक्तमत्रास्मिन् सतीत्येव दुर्लभमभावे इति। किं चैवमभावत्वसमर्थनमनुपयोगि, भावयोरपि तद्विरोधस्याविरोधात्। मुद्गरादिनैव [2]विरोधसिद्धेश्च ध्वंसस्यानुपयोगात्। अथ लाक्षणिको विरोध इष्टः, तदा स्वरूपासंकरेणैव[3] तस्य कृतार्थत्वाद् भावस्यावस्थानमनिवार्यम्।

किं च, सहानवस्थानलक्षणपक्षे नानुत्पन्नेन विरोधिना परो विरोद्धव्यः, शीतहुताशवत्। प्रथममुत्पत्तिः, ततो व्यापारः, व्यापारपाटवतारतम्यापेक्षया कियतापि

---

८. निवर्त्येत अ ९. निवर्तनत्रसहा° आ १०. तत् अ १. °ऽभावोद् भूतलस्य आ २. मुच्यत अ ३. नीलविरुद्धा इति नास्ति आ ४. °तीत्येव आ ५. °दितरौ अ ६. °कारतया आ ७. °पेक्षास्व° आ ८. °रेकनान्यस्य आ ९. °निर्वर्तिन र १०. °रेवाभासौ अ १. अभि...रोधः इति नास्ति अ २. °दिनेवविरोधि° आ ३. शङ्करेणैव अ, आ

क्षणेन परोपरोध[4] इतीयन्तं कालमुपरोधात् प्रागभावेन [5]सह संवसेत्। अथोत्पत्तिक्षण एव व्यापारस्तथाप्युत्पद्यमानेन ध्वंसेन सहकारिणा भावः स्वोपादेयं बन्धमादधीत[6], ततो निवृत्तिरिति दुर्निवारः[7] सहभावः। बन्धक्षणाधानानपेक्षायामपि स्वसन्तानक्षणानन्तरं[8] नाशनात् क्षणमपि सहभावः सिद्धः। एतच्च कथं चेतनावतः सोढुं शक्यमेकस्मिन्नेव क्षणे भावस्य भावाभावाविति ?

अपि च [9]सहानवस्थानस्वीकारात् कृशानुना शीतमिव ध्वंसमपरमुत्पादयता ध्वंसेनापि[10] निपादि निवर्तनीयमिति, तेनापि ध्वंसमपरमुत्पादयता प्रतियोगी प्रतिहन्तव्य इत्यनवस्थानात् [1]पुरुषायुषशतेनापि न कस्यचिदभावव्यवहारः स्यात्। अथ द्वितीयो [47b] विरोधः, तदायत्र भावस्तत्राभावस्यावकाश[2] एव नास्ति। अयमेव हि लाक्षणिकविरोधस्य स्वभावो यद्विरुद्धयोर्धर्मयोरन्यतराधिष्ठिते धर्मिणि नेतरस्यावकाश इति अनुत्पत्तिरेव ध्वंसस्य। अथ हेतुसामर्थ्यात् कथमभूत्वा आसितुं शक्नोतीत्यवश्यं भाव्यं ध्वंसेनेति चेत्–न, प्रमाणबाधितेऽर्थे हेतुसामर्थ्यकल्पनानुपपत्तेरतिप्रसङ्गात्। यावत् खलु भावस्य श्वासो चलति न तावदभावगन्धः। अन्यथा विरुद्धाभिमतयोः धर्मयोरेकत्र धर्मिणि क्षणमपि संभवे क्व परस्परपरिहारविरोधः ? तथा हि[3] हेतुबलाद्भवतु नाम, सहभावस्तु वस्तुन्येकत्र भावाभावयोर्दुष्परिहरः। स हि भावः पूर्वव्यवस्थितो, न भघनप्रयासखिन्नो यन्निवर्तेत[4]। मुद्गरादेश्च ध्वंस एव व्यापारः। उभयत्र व्यापारेऽपि किमङ्ग ध्वंसेन[5] ? नापि ध्वंसेनैव निवर्तनीयः, तस्योदयात् पूर्वमव्यापारात्। ततो भावस्य स्थितिरभावस्योत्पत्तिरिति[6] सिद्धः सहभावः[7], गिरेरिव केशरिणोत्पद्यमानेन।

पश्चात्तर्हि वह्निरेवेन्धनध्वंसेन[8] निराकरिष्यते तावदिति[9] चेत् ? भावाभावयोः सहभावप्रसङ्गदूषणादबिभ्यदभ्यस्तदुर्नीतिरुत्तरं किल विलपति। पश्चाद् विध्वंसेन भावो निराकरिष्यते न वा, भावाभावयोस्तु सहभावः प्रसक्त इत्येव पक्षक्षतिरायाता। किमपरगवेषणेन[10] ? यदि च व्यवस्थितो[1] भावस्तेन ध्वंसेन ध्वंसनीयः, तदा व्यक्तमयं सहानवस्थानविरोधव्यापार इति प्रकृतक्षतिः। परस्परपरिहारविरोधो हि विचारतुर्यमुपक्रान्तः। ततः प्रकरणविस्मरणाद् व्युत्थापयत्यथापि[2] परस्परपरिहार-

४. परो° नास्ति आ ५. प्राक्। अभावेन आ ६. सम्बध्य आ ७. दुर्वारः आ ८. स्वेति नास्ति अ ६. सहनव° आ १०. निपाति अ १. पुरुषापुरुष° आ २. °स्तत्राभाव इति नास्ति आ ३. तथापि अ ४. निवर्तते अ ५. ध्वंसेन र ६. भावस्य चोत्प° आ ७. सहभावः इति नास्ति अ ८. °ब्वे- बन्धन आ ६. करिष्यतो भाव इति आ १०. °रः वेषणेन आ १. स्थितो अ २. युक्तोपपद्यथापि अ

विरोधाभिमतः[3], तदा न व्यवस्थितापनयनव्यापारः स्रष्टव्य इति द्राघीयानसद्भावः। संप्रति स्वहेतुबलावलम्बिनोः [4]कलसनाशयोरुपनतौ भावाभावौ चैकत्र धर्मिणि धीयेते चिरमिति पर्यवसितं विरोधकथया।

अथ ध्वंसेन स्वोदयात् प्रागेव भावो निर्वध्यमानो निवर्तते प्रवर्तते चानन्तरं[5] ध्वंस इति नोक्तदोषः। न चैष व्यापारः सहानवस्थानस्येति चेत्? न शक्यमेवम्। व्यवस्थिते हि वस्तुनि,

पश्चात्प्रवर्तमानोऽपि ध्वंसात्मा तस्य किंकरः।
अप्रवृत्ते[6] [यत]स्त्वस्मिन् वस्त्वेव बलवत्तरम्॥

व्यापारस्तु यथा नैष सहानवस्थानस्य तथा परस्परपरिहारस्यापीति निवेदितमेतत्। नापि भविष्यतः [7]काचिच्छक्तिः। स्वयमेव तर्हि निवर्तताम्? एवं सति किमत्रान्येन ध्वंसेन मुद्गरेण वा? तत्सन्निधानापेक्षायां च स्वयंशब्दार्थो रिक्तः। यथा बीजमपेक्ष्य स्वयमेव जायतेऽङ्कुर इति न तावता [8]तत्प्रयुक्तत्वपरिहारः। [9]अथ परिहार एव, तदा तदपेक्ष्येति[10] न वक्तव्यम्। तावता च सिद्धं साध्यमित्यनेन किमिह [48a] कर्तव्यम्? ध्वंसमुद्गरादिकमनपेक्ष्य[1] स्वयमेव भावो निवर्तत इति प्रागपि निवृत्तिसिद्धिः। वस्तुमात्रानुबन्धी च ध्वंसो निबन्धनान्तरनिरपेक्ष इति,

सहस्थानाभावो यदि तव[2] विरोधोऽर्थविपदोः[3]
सहस्थानासङ्गं[4] क्षणमपि यथा शीतशिखिनोः[5]।
*सहध्वंसो ध्वंसान्तरमुपनयन् संप्रति भवेद्*
विरोधी सोऽप्यन्यं क्षयमिति न नाशः कथमपि॥

अथान्योन्याभावप्रकृतिकतयाऽर्थे सति तदा
क्षयस्यैवाभावः सह भवतु वा हेतुबलतः[6]।
अनेन ध्वंसेन प्रकृतिहतिरस्य त्वनुदये[7]
बलीयानेवार्थः स्वयमपचयेऽन्येन किमिह[8]॥

इति संग्रहश्लोकौ॥

---

३. °परिहार एवाभि° आ ४. कलसयोरु° आ ५. चान्तरं आ ६. पाठोऽस्पष्टः अ ७. क्वचि° आ ८. स्वप्रयु° अ ९. अथ परिहार इति नास्ति आ १०. °पेक्षेति अ १. °मपेक्ष्य र २. यदतर श्रि, ३ °ऽन्ववि° अ ४. सङ्ग° आ ५. शी........साधिनोः (?) अ ६. नाहेतुवतः र ७. °त्वमुदये अ ८. किमिति आ

एतेन यत् [९]शङ्करस्याभवनोत्पत्तिविधानेन कथं भावस्य निषेध इति चेत् ? अभवनोत्पत्तेरेव सह स्थितिविरोधेन भावप्रतिषेधरूपत्वादित्येवं प्रकारमभिधानम्, तद्विरोधबोधवैधुर्यादियुक्तमिति[१०] दर्शितम्। अत एवाभावोत्पत्तिविधानेन च[१] भावस्य तादवस्थ्यप्रसङ्ग इति प्रमत्तभाषितमित्यभिदधानः स्फुटमयं[२] तपस्वी प्रतिवातक्षिप्तभस्मनात्मानमेव च्छुरयतीति महामोहमग्नतया कृपापात्रं महतामवगन्तव्यः। यद्येवं भवतामप्यभावो व्यवह्रियते स किंस्वभावो यदि न वस्तु भावेन वा सत्यं न[३] विरुध्यत एवायम् ? कथं वा विरोधद्वयव्यवस्था ? को वास्य हेतुः ? कादाचित्कत्वे अकादाचित्कत्वे च भावस्य समकालं कथं न व्यवह्रियते ? कथं वा प्रागिव पश्चादपि न क्षणपरम्पराप्रसवः[४] ? प्रसवे च न सहः सहानवस्थानविरोधः।

परस्परपरिहारोऽपि [५]भावाभावयोरभावस्यावस्तुत्वेनावास्तवः[६] प्राप्त इति चेत् ? यत एवं परमतं [७]विचारक्षमम्,

> तस्मात्प्रच्युतिमात्रकं व्यवहृतेः पात्रं प्रसज्याह्वयं
> भूयोऽर्थस्य विरुध्यते न तु [८]जनिस्तस्येति किं हेतुना।
> रोधादेव सकृन्न तद्व्यवहृतिर्हेतुक्षयान्नोदयो
> रोधस्तात्त्विक एव तात्त्विकमिथः[९] स्वाभाव्यभङ्गस्थितेः[१०] ॥

भावप्रच्युतिमात्रं प्रसज्यप्रतिषेधसंज्ञकमिति स्वरूपनिर्देशः। तत्र [१]प्रतिषेधे प्रतिषेधमेव वस्त्विच्छन्तीति प्रच्युतिमात्रमुक्तम्। प्रच्युतिर्नाम किंस्वित् तृतीयो भावनिषेध इति शङ्कायां प्रसज्याह्वयमित्युक्तम्, तच्च तथा व्यवहारमात्रविषयो न पुनरनुभवविषयः, अन्यथा वस्त्वेव स्यात्।

न च यत् किञ्चिद् व्यवह्रियते विकल्पबुद्ध्या तावद् वस्तु, खरशृङ्गादेरपि वस्तुत्वप्रसङ्गात्, निर्वस्तुकविकल्पव्यवस्थानुपपत्तेश्च। [२]तच्चाभावस्य भूत्या[३] धर्मेण विरुध्यत एवेति द्वितीयप्रश्नविसर्जनम्। भूतिश्च सत्तार्थसामर्थ्यं[४], स्वरूपेणावस्थानं वा ? उभयथाप्यन्योन्यप्रत्यनीकरूपतया प्रच्युतिमात्रेण विरुध्यत इति परस्परपरिहारस्थितिलक्षणविरोधव्यवस्थोक्ता।

---

९. °स्याग्रभ° अ १०. वैधुर्यादिति अ १. चकारो नास्ति आ २. स्फुटमनु° आ ३. न चा° र
४. परम्परप° आ ५. अपीति नास्ति अ ६. °स्यारम्भत्वे(?) अ ७. विचारा° आ ८. जनैः आ
९. तात्त्विकमेन आ १०. क्षितेः र १. प्रसज्यप्रति° र २. तच्चभा° आ ३. भयो आ ४. समर्थ° र

ननु प्रच्युतिमात्रं न किञ्चित्[5], तत्र कथं[6] [48b] केनचिद् विरुध्यते ? यत एव प्रच्युतिमात्रं न किञ्चित्, भावस्तु नञर्थप्रत्यनीकस्तत एव विरुध्यते। विरोधोऽप्येष नान्योन्यप्रतिघातः, [7]सत्तानवस्थानवत्, किं त्वन्योन्यरूपाननुप्रवेशमात्रम्। तत्र विकल्पितानुभूतयोरप्यस्तीति न दोषः। प्रच्युतिमात्रस्य च कदाचिद् [8]भावत्वाभावात् किं हेतुनेति चतुर्थे विसर्जनम्। केनचिद् रूपेणोन्मज्जतो हि[9] जनकः कल्प्येत, अकादाचित्कं च सर्वदास्ति वा नास्ति वा ? तत्रास्तिपक्षक्षेपात् सर्वदा नास्त्येव तत्। व्यवहारस्तु कादाचित्कः, भावकाले तत्प्रवृत्तेः। कथं विरोधादेव ? भावविरोधो ह्यभावः प्रच्युतिस्वभावः कल्पनाविपरिवर्ती कथं भावकाले व्यवह्रियते ? भवनधर्मा हि निर्हेतुको वा, भवनहेतुजनितो वा, हेत्वन्तरकृतो वा भावकालेऽपि भवेन्नाम, भावान्वयं च व्यवहारमस्यासादयेत्। यदा तु नास्य भावो न तदा भावानुयायी व्यवहारः। वासनानुगस्तु विरोधो निश्चयवतो वस्तुदर्शने वासनाप्रबोधवैधुर्यात् कथं प्रवर्तेत ?

अतएव यावत्स एव वस्त्वात्मास्तीति व्यवसायः, तावदनवकाश एवाभावव्यवहारः, क्षणभङ्गभावेऽपि तत्त्वतः। यदा तु प्रमाणबलादेकक्षणस्थितिधर्मैव भावस्वभाव इत्यवधारयति तदा द्वितीये क्षणे[10] तद्वस्तूपादेयक्षणसमकालं[1] तदभावं व्यवहरति। तत्प्रमाणालाभे तु कर्परादिविकारदर्शनमपेक्ष्यैवाभावव्यवहार इति पञ्चमे विसर्जनम्। षष्ठेऽपि[2] हेतुक्षयान्नोदयः सजातीयक्षणधाराया इति।

एतदुक्तं स्वरसनिरोधेषु[3] पूर्वपूर्वक्षणेषु मुद्गरसहकारिणा क्षणेन सामग्रीवैसदृश्याद् [4]बन्ध्यक्षणस्योत्पादनादुपादानं क्षीणमिति नापरस्योत्पत्तिः। यत्कृते च कस्यचिद् बन्ध्यक्षणाधाने सजातीयक्षणान्तराप्रतिसन्धानम्, सोऽपि भावस्तस्य भावस्य विरोधी सिद्ध इति सहानवस्थानविरोधव्यवस्था। तेनैव सप्तमेऽपि चतुर्थपादेन यदि नाम [5]वस्त्ववस्तुनोः परस्परपरिहारो [6]विरोधः, तथापि न तात्त्विकत्वहानिः। न हि तयोः कदाचित् स्वभावसाङ्कर्यमस्ति। एतावानेव धर्मविरोधस्यार्थः। अतएव स्थितिग्रहणं नियमसूचनपरम्। एतेन तृतीयोऽपि विकल्पो निरस्तः[7]। तस्मान्नाशो नाम न प्रसज्यात्मा कर्तव्यरूपो यतो हेतुसापेक्षः स्यात्, नाप्येतावन्ति[8] दूषणानीति स्थितम् ॥

---

५. कश्चित् आ ६. तत् कथं आ ७. सहानव° आ ८. भवत्वा° आ ९. °न्मज्जते किं अ १०. क्षण अ १. वस्तु आ(?)देय अ २. यद्यपि अ ३. °विरोधेषु अ ४. °सदृश्यार्थाक्षण° आ ५. वस्त्व° इति नास्ति आ ६. विरो° इति नास्ति आ ७. एतेन...निरस्त इति नास्ति आ ८. °प्येतावन्तं अ

किं चार्थस्य विनश्वरेतरतयोः किं नाशने कारणैः

स्वयं विनश्वरस्वभावस्योत्पत्तौ [९]वैयर्थ्यमनर्थहेतूनाम्, अविनश्वरस्वभावत्वे त्व-सामर्थ्यम्।

एवं तर्हि भविष्णुतेतरतयोः किं कारणैर्जन्मनि।

शक्यं हि वक्तुमर्थस्य भविष्णुतायां [१०]व्यर्था जन्महेतवः[१], अभविष्णुतायामस-मर्था[२] इति।

तथा च न्यायभूषणकारः– तन्न, हेतुवादोच्छेदप्रसङ्गात्, विकल्पस्य सर्वत्र संभवात्। तथा हि हेतुतः[३] किं भवनस्वभावो भवत्वाहोस्वित् [49a] अभवनस्वभाव इति? यद्याद्यः पक्षस्तदा स्वयमेव भवति, तत्स्वभावत्वादिति व्यर्थो हेतुः। द्वितीयपक्षे त्वसमर्थो न ह्यभवनस्वभावं शशविषाणादि केनचिदुत्पादयितुं शक्यम्। तथा च्छेद-दाहादिहेतवोऽपि तत्स्वभावत्वात् तत्[४][स्वभावत्वा]तत्स्वभावत्वपक्षयोः[५] वैयर्थ्या-सामर्थ्याभ्यामनुपपन्ना द्रष्टव्याः। तथा चैवं हेतुषु[६] सर्वहेतुप्रतिक्षेपसंभवान्मोक्षादौ प्रयासः[७] शास्त्रश्रवणाद् व्यर्थ इति, अत्रायं पर्यनुयुज्यते[८]–किमनेन मूले परशुनिपात-प्रकारेण? सर्वथा क्वचिदपि हेतुतयोपनीतेऽसामर्थ्यवैयर्थ्यलक्षणं दूषणमेव न वाच्य-मित्युच्यते। तत्तावदयुक्तम्, दृश्यते हि नखच्छेद्ये कुठारवैयर्थ्यम्, कुठारच्छेद्ये च[९] नखस्यासामर्थ्यम्। तथा देवदत्तेनैव यत् साध्यं तत्र देवदत्तसहायस्य यज्ञदत्तस्य व्यापारवैयर्थ्यम्। तद्विनाकृतस्य पुनरसामर्थ्यम्[१]। दहनेन्धनसामग्र्यां सत्यां रासभस्य धूमे [२]वैयर्थ्यमसत्यामसामर्थ्यम्। यत्र वा सिद्धसाधनपोषणं तत्र वैयर्थ्यम्। असिद्ध-विरुद्धानैकान्तिकेष्वन्यतमसत्त्वे असामर्थ्यमिति। ये तु सिद्धसाधनस्याप्येतेष्वन्तर्भाव-मिच्छन्ति, तत्प्रयासफलं न किञ्चित्, वैयर्थ्यस्य हेतुदूषणस्य[३] सर्वथाशक्यापह्नव-त्वात्, ज्ञापकहेतोरपि प्रतीतिं प्रति कारकत्वाच्च। यदि चासामर्थ्यवैयर्थ्यमदूषणं हेतोरन्यदूषणाभावात् सर्वस्य सर्वसिद्धिर्यतः कुतश्चित्।

---

९. °मनर्थ्वा° आ, म(न?)र्थं अ १०. व्यर्थो जन्महेतुः र १. भविष्णुतायां......हेतवः इति प्रान्त-योजना अ २. °मर्थ इति आ ३. °ततं र ४. तदिति नास्ति अ ५. पक्ष इति नास्ति आ ६. हेतुषु इति नास्ति अ ७. प्रायसः र ८. प्रयुज्यते र ९. तु र १. पुनसामर्थ्यं आ २. वैयर्थ्या-मसत्या° आ ३. दूषणान्य° अ

अथ तत्स्वभावातत्स्वभावविकल्पद्वारकं दूषणमसदित्युच्यते, तदप्यसत्। प्रदीपे हि यो हेतुः प्रकाशकरणेऽन्धकारकरणे[4] वा उपनीयते, स किं वैयर्थ्यासामर्थ्याभ्यां न निगृह्यते ?

यत् पुनरयमेवाह, प्रकाशादिदृष्टान्तोऽप्ययुक्तः। तथा हि[5] न तावदस्मन्मते प्रदीपप्रकाशादीनामेकत्वं सिद्धम्, नाप्येकहेतुत्वम्। द्रव्योत्पत्त्यनन्तरं हि सामग्यन्तरतः प्रकाशादयो गुणा उत्पद्यन्त इति नः सिद्धान्त[7] इति। [8]तदप्यसम्बद्धम्। यतः यद्यपि द्रव्योत्पत्त्यनन्तरं प्रकाशो गुण उत्पन्नः, तथापि तदेव द्रव्यमुत्पन्नं [9]न तद्रूपनिष्पत्तौ हेत्वन्तरमपेक्षते, पश्चाद् वा प्रकाशो गुणो न प्रकाशगुणरूपत्वे इति न दृष्टान्तक्षतिः।

अथ द्रव्यरूपमपि[10] द्रव्यत्वसामान्यात् तत्समवायात् पूर्वं न द्रव्यं नाद्रव्यमिति चेत् ? तत् तर्हि द्रव्यरूपं द्रव्यत्वसामान्यात् जायते[1], अथ[2] द्रव्यमिति विकल्पवचसोर्वा गोचरोभवतीति[3] पक्षः। प्रथमपक्षे तावन्न दोषः। सामान्यादेव द्रव्यं जायतां[4] यतः कुतश्चिद् येनात्मना जातं न पुनस्तद्भावे हेत्वन्तरमपेक्षत इति हि[5] प्रकृतम्। द्वितीयपक्षेऽपि सुतरां न दोषः, द्रव्यरूपं हि[6] जातमेव प्रागपि द्रव्यधीध्वनिप्रसव एव सामान्यात्, न चैतावता तद्भावे हेत्वन्तरमपेक्षितं भवति। न हि कार्येण कारणस्य स्वविषयसामर्थ्यव्यवहारे प्रागनिष्पन्न[49b]मेव तत्सामर्थ्यं तद्भावे वा कारणम्, तदेव कार्यं हेत्वन्तरमपेक्षितवत्।

किं च, भिन्नेन पश्चात् जायमानेनापि प्रकाशगुणेन यदा तावत् प्रकाशगुणयुक्तः संपन्नो दीपः, तदा किं पुनस्तद्भावे हेत्वन्तरमपेक्षते यतो दृष्टान्तक्षतिः स्यात् ? तत्र प्रक्रियापोषणत्राणमप्रमाणपरायणेन[7]। अनुभवानुरोधेन तु यथाभिमतमेव दृष्टान्तः। न हि प्रथमद्वितीयक्षणयोः सामान्ययोगायोगाभ्यां विशेषप्रतीतिरस्ति। नापि द्रव्यसामान्ययोर्भेदानुभव इति प्रकृतस्य त्वन्यथापि सिद्धेर्नात्र निर्बन्धः। तस्मान्न प्रकाशः[8] स्वहेतोः प्रकाशरूपनिष्पन्नस्तद्भावे हेत्वन्तरमपेक्षते, वैयर्थ्यात्। [9]अन्धकारीकरणेऽप्यसामर्थ्यादिति सिद्धम्।

४. °न्धकरणे र, °र्थकारीकरणे अ ५. वैयर्थ्यसामर्थ्यरताम्न अ ६. तथाह आ ७. सिद्धान्तस्य आ ८. इति तद° नास्ति आ ९. °मुत्पद्यमानं आ १०. °रूपस्यमपि आ १. जायते आ २. अथेति प्रान्तयोजना अ ३. गोचरीकुर्वतीति र ४. जनयतां अ ५. हीति नास्ति आ ६. हीति नास्ति आ ७. घोषणत्राणप्रमाण° आ ८. °स्वकाश आ ९. अर्थकारी(?) अ

ननु शुक्लमम्बरं रागद्रव्ययोगेन[1] रक्तीक्रियमाणमुपलब्धम्, तत्र रक्तस्वभावास्वभावत्वे वस्त्रस्य वैयर्थ्यासामर्थ्ये चोद्यं रागद्रव्यस्य किं नोपक्रम्यत इति चेत्? न खल्वस्य विकल्पस्य सर्वत्रावतारो विवक्षितः, किं तु तत्स्वभावातत्स्वभावविकल्पद्वारकमपि दूषणं हेतोररित [2]तावदित्यत्यन्तायोगनिषेध उपक्रान्तः। ततो यत्रैतद्दूषणमुपपादयितुं शक्यते, तत्र दूषणभावमाविशति। किमन्यचिन्तया यदि युक्तिभेदः? तथा च विनश्वरत्वं नाम क्षणिकत्वं कनीयःकालत्वं वा? अविनश्वरत्वमपि द्राघीयसा[3] कालेन सदास्थायितया वा[4]? सर्वथा यावत्कालावस्थितिको भावः स्वहेतोरुदपादि तदभ्यन्तरे यदि केनचिन्नाश्येत, तदा तावत्कालावस्थितिरेव नोत्पन्नः। न हि संवत्सरस्थायी चासौ दिवसनाशी चेति स्वभावद्वयं परस्परविरुद्धमस्य साधु।

ननु[5] विनाशकारणमन्तरेण संवत्सरस्थायी, अवान्तरं तु विनाशकारणसमवधानेऽवान्तरनाशीति को विरोधः? विरोध एव निश्चये हि यथार्थानुप्रवेशो न स्वभावे, यथा यत्र पत्रपाते[6] धूमः संभवेन्नियतमियमङ्गारा[7], अन्यथा तु गुञ्जापुञ्ज इति न स्वभावभेदः। तथा यदि दिवसे विनश्यति तदवधिकमेव[8] हेतुना [9]जनितम्, संवत्सरनाशे तु तदवधिकमिति भवतु। न तु[10] परस्परविरोधिस्वरूपे[1] द्वितीयस्यैकत्र समुच्चयः। न हि तत्राहनि विनश्यन्नेव संवत्सरस्थायी, अर्धार्धेन वा तदुभयं भवितुमर्हति। विकल्पस्तु संशयात्मा ज्ञानस्यैव, न वस्तुनो धर्मः। तस्माद् वस्त्वेकस्वभावमेव न विरुद्धस्वभावान्तरयोगि। एतच्च दिवसादिस्थायित्वं प्रमाणेन निरूपणमर्हति सत्यं न वेति। अभ्युपगम्य तु[2] चिन्तितमेतत्, प्रमाणव्याहते हेतुसामर्थ्याश्रयणस्य दुर्लभत्वात्। ततो [3]यद्यक्षणिकतापि तथापि यावानस्य कालः स्थितेरवधिस्तदभ्यन्तरे हेत्वन्तरस्यासामर्थ्य[4] तस्य पुरस्ताद्वैयर्थ्यमिति स्थितम्। क्षणिकत्वेऽपि न [5]तत्क्षणे नाशकारणेन किञ्चित् शक्यमिति [6]व्यक्तम्, क्षणान्तरे तु स्वयमेव नास्तीति नार्थोऽनर्थहेतुना। [7]सदातने त्वसमर्थ [8]एवायम्।

तस्माद् विनाशे कर्तव्ये न कश्चित् हेतुरसामर्थ्यवैयर्थ्यदूषणमतिक्रामति। यदार्थान्तरे तु कर्परादौ स एव मुद्गरस्ताभ्यां दूषणाभ्यां न लिप्यते, तद्व्यापारानन्तरमेव जन्मलाभात् [9]कर्परस्य, एवं रागद्रव्यस्यापि तद्व्यापारानन्तरमुदयभाजि

१. योगेण अ, आ २. °स्त्युत्पतो आ ३. °यसा च आ ४. तया च आ ५. नन्व° अ ६. पत्रयात् (?) अ, यन्त्रपाते र ७. °मङ्गार्या आ ८. तदा वाधिमेव आ ९. जनितः अ १०. न च आ

१. °धेस्वरूपं अ २. त्विति नास्ति आ ३. यदि क्ष° अ ४. °स्यसामर्थ्ये र ५. तदिति नास्ति आ ६. वक्तव्यमिति अ ७. °तनत्वसमर्थ° र ८. एवासां आ ९. कपालस्य आ

रक्तवाससि [१०]न सामर्थ्यवैयर्थ्यम्। पाण्डुचण्डातकनिवर्तने पुनः कस्तन्निवर्तयति ? यदापि दशाद्वये एकमेव वस्त्रवस्तु तदापि तद्दोपानतिवृत्तिरेव। न हि रक्तावस्थायामपि शुभ्रमेव तदिति निर्वहति। ततो [१]यदि तदापि शुभ्रमेव तद्वस्तु न रक्तताया अवकाश इत्यसमर्थं रागद्रव्यं, पूर्वरक्ते तु तन्मात्ररागापेक्षायां व्यर्थम्। तस्मात् स्थैर्यापेक्षया दोषावतारात् समयापराध एवंविधो न वस्तुनः। पूर्वस्य स्वरसनिरोधे तदुपादानापेक्षया रागद्रव्येणापूर्वरक्तवस्त्रोत्पादने तद्दोपस्य [३]परिहारसिद्धेः। नैवं वस्तुस्थितिरिति चेत्[४] ? ननु तदेव चिन्त्यते कीदृशी वस्तुस्थितिरिति। किमत्र कोशपानेन परः प्रत्यायनीयः ? तत् किमकाण्डेनैवं वस्तुस्थितिरिति[६] उच्यते, प्रत्यभिज्ञाप्रामाण्यावलम्बनस्य निरस्तत्वात् ?

ननु समयापराधोऽपि कथमभिधीयते, व्यवस्थिते धर्मिणि गुणद्वयस्य तिरोभावाविर्भावस्वीकारात् ? यद्येवं तदा प्राचीनगुणनिराकरणेऽसामर्थ्यवैयर्थ्यप्राप्तावप्यपूर्वरक्ततागुणोत्पादनेनैव चरितार्थो[७] रागद्रव्यव्यापार इति कथमुक्तदूषणस्पर्शः ? [८]पूर्वनिष्पन्नरूपापेक्षया हि वैयर्थ्यासामर्थ्यचिन्ता प्रक्रान्ता, [९]नापूर्वापेक्षया। न ह्यपूर्वेऽपि कर्तव्ये यद्येवं रूपं स्वहेतोर्जातं तदा वैयर्थ्यम्, एवं जाते त्वसामर्थ्यमिति निर्णयावकाशः। नाशनीयश्च सर्वः पूर्वसिद्ध एव भावः। स च विनश्वरेतरयोः, [१०]प्रकारान्तरतिरस्कारादन्यतरस्वरूपमनतिवर्तमानो[१] न विनाशहेतोः कल्पितस्यासामर्थ्यमानर्थक्यं वा स्थातुं[२] प्रभवति। न चैवं [३]हेतुवादोच्छेदप्रसङ्गः सङ्गतः। असिद्धे हि कार्ये हेतोराश्रयणम्, सिद्धे चेयं[४] चिन्ता। तदैव च यदि हेतोरेवंरूपो निष्पन्न इति हेतुपुरस्कारेणैव वादप्रवृत्तेः। न [५]चैवमसिद्धे शक्यमित्युक्तम्। तत्कथं प्रकृतास्मद्विकल्पस्य[६] सर्वत्र संभवः ? विकल्पमात्रस्य सर्वत्र हेतुफलसंमते संभवेऽपि नास्मदीययुक्तेरपराधबोधः कुतो भवति।

यदि तु सिद्धेऽपि वस्तुनि व्यापकस्वभावद्वयेऽसामर्थ्यवैयर्थ्यावतारेऽपि हेत्वन्तरमपेक्षमाणमुपदर्शयितुं शक्यते स्यादपराधः। न चैवम्। तस्माद्विकल्पमात्रस्यापराधेऽपि नापराधः सविशेषणस्य, अनुपलम्भवदिति व्यर्थः तन्मात्रोपन्यासः।

---

१०. नासामर्थ्यं° आ १. यदि त° इति नास्ति आ २. पूर्वं आ ३. सिद्धः अ ४. चेदित्यन्ययोजना अ ६. वस्तुति° आ ७. नैवाचरिता° आ ८. पूर्वं नि° अ ९. नापूर्वांक्षयेति भ्रान्तयोजना अ १०. प्रकारान्तरे अ १. °तिरस्कारस्य अ २. ऽसामर्थस्थातुं अ ३. °दोत्सेद(?) अ, र ४. रेयं आ ५. °मसिद्धेः शक्यामभिधातुम् आ ६. °स्येति नास्ति आ

[50b] अथानुपलम्भमात्रस्य स्वसाध्यसाधनसामर्थ्यशून्यतैवापराधः[7], विकल्पमात्रस्य [8]पुनरसामर्थ्यवैयर्थ्योल्लेखशेखरस्य न हेतुवादापवादशक्तिशून्यतेति विषम उपन्यासः। अहो पुरुषकारो भस्मभूषणस्य ! एवं हि सर्वथा हेतुफलापलापे साधु[9] साधितं ध्वंसस्य हेतुमत्त्वमिति व्यक्तमयमात्मानमात्मनैव विडम्बयति। तदयं भवनस्वभावादिविकल्पः [10]संकल्पनिवेशितशक्तिरपि विषये च[1] परिहार्यः [2]कार्य-कारणभावव्यवस्थितेन, अन्यथा मूलोच्छेदात्[3] प्रकरणाप्रवृत्तेः। सिद्धोपाधिस्तु विकल्पो विनाशकारणमेव कवलयति[4], न कारणमात्रम्। अतिप्रसङ्गभङ्गभीरुणा तु[5] भवता नाद्रियते[6] इति[7] युक्तमेवैतत्। तस्मात्

हन्तुं[8] हेतुफले श्रमोऽयमफलः संस्थाप्य सामान्यत-
स्तत्त्वं क्वापि विमर्श[9] एव विषये प्रारम्भसंभावितः॥

प्रारम्भ उपक्रमः प्रस्तावः[10] तेन संभावित आदृतः। सामान्येन कार्यकारणभावसत्तां व्यवस्थाप्य विनाशादौ विषयविशेषे कचिद्धेतुसत्ता किमस्तु नवेत्यत्र विमर्श[1] एषोऽस्मदीयः प्रस्तावानुरूपः। हेतुफलोन्मूलनाय तु विफलः प्रयासः, सामान्येन व्यवस्थाप्यैव प्रकरणप्रवृत्तेः। न चायं विकल्पः कार्यकारणभावक्षेपाय क्षमः भवनस्वभावोऽभवन-स्वभावो वा हेतुतो भवतीति[2]। तथा हि अभवनधर्मा तावद् वन्ध्या प्रसूतीति भवन-स्वभावश्च, त्वन्मतेन[3] गगनादेरभवनस्य[4] कदाचिदप्यभावात्, तयोस्तावदसामर्थ्य-वैयर्थ्यग्रस्तो भवति[5] हेतुव्यापारः। कादाचित्कं तु[6] भावं भवनधर्माणमभवनधर्मकं[7] वा ब्रूहि, न[8] पुनरयं किञ्चिदनपेक्षमाणः[9] कादाचित्क एव भवितुमर्हति, यश्चापेक्षोऽर्थः कालदेशस्वभावनियमाय स एव हेतुः। अथ भवनस्वभाव इति न सत्ताधर्मा किं तु उत्पत्तिधर्मेति विवक्षितम्, तदाप्युत्पत्तिरित्यसत आत्मलाभो न [10]कादाचित्कत्वादन्य इति तद्वदेवोत्तरम्। विनाशस्य तु कादाचित्कत्वनिषेध उक्तः।

अथ हेतुतो भवनधर्मा यः स किं भवतीतरो वेति विकल्पार्थः? तदा आद्य-विकल्प एव विश्रान्तो वादः। तथा हि हेतुतो भवति, न पूर्वमिति न वैयर्थ्यम्,

७. सामर्थ्ये आ ८. पुनसामर्थ्य° आ ९. साधु इति नास्ति आ १०. °संकल्प इति नास्ति आ
१. °र्थमिव आ २. कार्येति नास्ति आ ३. पूर्णोच्छेदात् आ ४. कलयति आ ५. तु इति नास्ति आ ६. नाद्रियतत् आ ७. इतीति नास्ति आ ८. हतुं आ ९. विमर्ष आ १०. प्रस्ताव इति नास्ति अ १. विमर्ष अ २. भवेद् आ ३. त्वन्मते अ ४. °रभवनस्या° आ ५. भवतु अ ६. °त्के तु अ ७. भवन धर्मानन्यभ° आ ८. नेति नास्ति आ ९. °पेक्षणः आ १. °त्वोदस्य आ; त्वादिष्ट र

भवति हेतुतो नान्यतो[2] भवतीति[1] कुतोऽसामर्थ्यम्? अत्र च निर्बन्धो बन्ध्य इति दिङ्मात्रमभिधीयते, उभयोः सिद्धत्वात् हेतुफलभावस्य अप्रस्तुतत्वाच्च[3]। यतश्चायं सिद्धोपाधिको विकल्पः [4]सन्नाशस्यैव हेतोर्बाधको नासदुत्पादकस्य, असमानत्वात् न्यायस्य यथोक्तं प्राक्। ततश्छेददाहादिहेतवो रक्तदुकूलकारणवदुपपन्ना एव, मोक्षाख्यदशाविशेषहेतुश्चेति सफल एव तत्र[5] प्रयासः। तस्मान्न सतो नाशहेतुः कश्चित्। स्वहेतुत एव तावद्देशाकारवत् कालतयापि निष्पत्तिः॥

[51a] किं च,

ध्वंसो वास्तु विधेर्बलात्परिघवद्[6] यद् वा यथा शर्करा
[7]भावोऽसौ तदवस्थ एव तु न यत्किञ्चित्करास्तस्य ते।
व्यापाराविरतिस्ततः क्षणिनये तत्त्वादवन्ध्यं कथं
[8]देशाकारवदस्य हेतुनियतः कालोऽपि यस्मान्मतः॥

यथा हि मुद्गरः शर्करानिकरो वा यस्तस्मात्स्यान्मतः, नाशहेतोरनुपपत्तेः नोत्पत्तिर्नाशस्येत्युक्तम्। अस्तु वा नाशाभिधानमर्थान्तरं कारणबलात्। दण्डवत् शर्करारक्ततानाशेऽपि कोपान्तरकमधिष्ठाय तिष्ठतु, सन्तु भावास्तदवस्था एव, न हि ते तस्य किञ्चित्कराः। यथा हि मुद्गरः शर्करानिकरो वा तस्याकिञ्चित्करः, अन्यथा नाशाभ्युपगमवैयर्थ्यप्रसङ्गात्, तथा [10]नाशोऽपि स्थितिमति भावे [1]स्वकारणादुत्पद्यमानस्तस्य किमङ्ग [2]कर्तुमसमर्थः? यथा हि तस्य हेतुबलभाविनो न सर्वथा नाशः शक्यो वा सामर्थ्यवैयर्थ्याभ्याम्, तथानुरूपांशे नाशोऽप्यशक्य एव[3]। तत्रापि स्वभावभेदे पूर्ववन्नश्वरेतरविकल्पस्यावतारवारणाभावात्[4], निरंशेऽपि च वस्तुनि कल्पनानुरोधादेतदुच्यते। तत्त्वतस्त्वंशनाशनेऽपि सर्वथा नाश एव, स चाशक्य इति साधितम् अपूर्वनिर्वर्तनम्। वस्तुनस्तु वार्यते। ततः योऽप्यपूर्वः पूर्ववत् [5]कोपान्तरतिरोहितः कल्पमास्तां, तत्कृतो[6] वा पुनरपरो नाशाभिधानोऽर्थस्तद्वदस्तु। न तु भावस्य किञ्चिदिति स्वज्ञानजननजलधारणादिव्यापारानुपरमप्रसङ्गो [7]दुर्निवारः।

---

२. °न्यतो इति भ्रान्तयोजना अ १. हेतुतो न न भवतीति आ ३. चकारो नास्ति आ ४. यन्नाशक° अ ५. तव र ६. निष्पत्तेः आ ७. पलिध अ ८. पृष्ठमस्पष्टम् आ ९. अशाठ्या पंक्तिः अ १०. नाश्येऽपि र १. °दुपेक्षमाणा र २. कर्तुं समर्थः र ३. शक्यत्वात् र ४. स्वभावाभावपूर्वमनस्पन्दतस्यपि° र ५. स्वो पूर्वः पर्वतनकोपान्तर° र ६. तत्र कुतो र ७. दुर्वारः आ

एतेन यदवोचद् वाचस्पतिः, नन्वस्मिन्नुत्पन्नेऽपि भिन्नमूर्तौ किमायातं भावस्य ? न किञ्चिदायातम्, अस्त्ययमायुष्मान् भावः। स्वकारणाधीनजन्मना तदभावेन [8]तत्स्वरूपविरहलक्षणेन [9]स्वलक्षणशालिनार्थानुरूपव्यवहारं प्रवर्तयता निरस्तसमस्तार्थक्रिया किं नश्चिन्नमिति, तदपहस्तितम्, समस्तार्थक्रियानिरसनस्यैव तदवस्थे तस्मिन्नशक्यसाधनत्वात्।

तदभावेनैव तादवस्थ्यखण्डनमिति चेत् ? ननु भावे तावत्[10] तदवस्थ एव स्वकारणप्रभावादभावो जातस्ततो व्यावृत्त्य तत्खण्डनमनेन[1] कर्तव्यमिति समसमयताप्रसङ्गः प्राचीनो दुष्परिहरः। तथा च सति [2]तत्स्वरूपविरहलक्षणेनेत्यनुपपन्नम्, न हि तद्विरहरूपत्वे तत्कालसंभवो नाम। ततो [3]मुद्गरादिपदार्थान्तरसाधारणस्य अभावसंज्ञाकरणे नाभिमतस्वलक्षणशालिताभिव्यक्तिसिद्धिः, यतः [4]तदनुरूपव्यवहारप्रवर्तनमभिधीयमानं शोभेत। तेन च स्वरूपस्यार्थक्रियायां तादवस्थ्यस्य चाखण्डनमिति परस्पराकर्षी नाशान्तरकरणप्रसङ्गः।

स्वयंनिवृत्तिरूपतया न नाशान्तरावकाश इति चेत्– न, समानकालसंभवात् निवृत्तिरूपतायाः प्रतिक्षिप्तत्वात्, पदार्थान्तरवत् पर्युदस्तमेव रूपमवशिष्यते। तेन च विनाशेन[5] नियतं [6]परभूतविनाशाख्यवस्तुकरणं मुद्गरेणेव, को हि विशेषोऽस्य तत्पर्युदस्तरूपत्वेन मुद्गरात्, यदयं परमनपेक्षमाण एव[7] नाशयति ? मुद्गरस्त्वेनमनपेक्षमाणो नाश[8] इति स्यात्। विनाशसंज्ञाकरणप्रतिलम्भस्तु[9] भवेत्। तामन्तरेण तस्यापि मुद्गरादविशेषात्, आकारभेदमात्रस्य मणिमन्त्रादिष्वपि भावात्।

यदि तु [10]प्रत्यक्षानुपलम्भं शक्तिसाधनमेकनियतं भवेद्, भवेद् विशेषः[1]। तच्च नास्तीति प्रतिपादितम्॥

तस्मात्,

प्रसज्यपक्षेऽस्ति न तुल्यकालता[2]
न पर्युदासे परनाशवर्जनम्।

---

८. °रूपपरिवह्नक्ष[?] अ ९. °नाशिना र १०. ननु तावता र १. °स्ततो......खण्डनन° इति त्यक्तम् र २. ततोऽनुरूपादि र ३. °पदार्था .....संज्ञा° इति त्यक्तम् र ४. °हारः र ५. विनाशने आ ६. नियतस्यर° (?) अ ७. °मपेक्षमाणमेव आ ८. °मपेक्षमाण आ ९. विनाशकारणप्रति° अ १०. यदि प्रत्याख्या आ १. विकल्पाशेषः र १. , तुलका° अ

स्थितेऽन्यदन्यत्रभवद् भवेत् सकृ-
न्नियोगतोऽन्यक्षणतानुरोधिनि[3] ॥

इति संग्रहः ।

स्थितेऽपि हेतौ भवदेकदा न चेत्
प्रयोजनं तत्क्षणभङ्गसंभवात् ।
स्थितेन किं व्योम्नि समक्षणं फलं
फलेन नाशोऽपि तथैव लक्षयेत् ॥

[4]इत्यन्तरश्लोकः ।

यदि तु नाशाख्यं कार्यं न तस्य निवर्तकं किं त्वन्यदेव दण्डादि, तदा भावश्च निवर्तते, अभावश्च प्रवर्तत इति भवति कालभेदः, किं तु नोपयोगो नाशस्य । नापि[5] तदभावेन निरस्तसमस्तार्थक्रिय इति वाच्यम् । असामर्थ्यवैयर्थ्यं च प्रस्तुतम् । ततोऽपि रिक्तेयं वाचोयुक्तिः ।

यत्पुनरत्र तेनोत्प्रेक्षितम्[6]– यथोक्तं स्वहेतुतो भावो नश्वरोऽनश्वरो वा[7] जायते इति, [8]तत्रोच्यते– न वयं विनश्वरमविनश्वरं वा जानीमः, किं तु सन्तः [9]स्वहेतुभ्यो जायन्ते, ध्वंसन्ते च हेत्वन्तरेभ्यः स्वप्रत्ययाधीनसन्निधानेभ्यः, ध्वंसश्च ध्वंसमानाद्भिन्नो हेतुभेदतः स्वभावभेदाच्चेति, तत्राप्युच्यते– यदि नश्वरानश्वरस्वरूपमविद्वानेव[10] भवानेवमाह, तदा क नाशो नाम पदार्थः ? कुतो वा व्यावृत्त्या भवति व्यवस्थाप्यो[1] यो ध्वंसमानाद् भिन्नः संप्रत्येव प्रतिज्ञातः, स इदानीं [2]विनश्वराविनश्वरस्वरूपापरिज्ञानेन व्यवस्थाप्यमान आकाशादिष्वपि किं न व्यवस्थाप्यते ? तेषु नाशादर्शनादिति चेत् ? नन्वन्यत्रापि[3] नाशो नाम दृश्यत इति शपथगम्यमेवत् । ततो विनश्वरेतरस्वभावाविष्करणं भवतः प्रसह्यायातं किमत्र श[प]थेन ? तथा च सति स्वहेतोरेव तदतद्रूपजन्मनि नियतावतारमसामर्थ्यवैयर्थ्यदूषणं पश्यतोऽपि तत्र हेत्वन्तरप्रतिज्ञानं कथमिति वयमपि न जानीमः । अथेदमाकूतं वैदग्ध्यगर्भया गिरा प्रत्यक्षत एव[4] कुतश्चिदुत्पादः कुतश्चिन्नाश उपलभ्यमानो विनश्वरेतरविकल्पेन[5] कथमपोहितुं शक्यः ? न हि प्रत्यक्ष-

३. °न्यलक्षणतानु° आ, °न्यक्षणतस्तु अ ४. इत्यर्थान्तर° अ ५. वापि आ ६. लिखितं आ ७. °नश्वराता अ ८. अत्रो आ ९. स्वेति नास्ति आ १०. °स्वरूपम्विद्वा° र १. °तिव्यव° इति नास्ति आ २. °न्विविनश्वरा° अ, °म्विश्वरा° आ ३. नत्वन्यत्रापि अ ४. °पातिप्रत्यक्षमेव आ ५. °तरावि° आ

सिद्धं विकल्पशतेनापि शातयितुं शक्यम्, सर्वप्रमाणव्यापारस्य प्रत्यक्ष एव विश्रामादिति ॥

तत्रापि नाश इति यदि पदार्थान्तरं स्वसमयप्रसिद्धमुच्यते, यो मुद्गरादिजन्मा घटादिपदार्थमर्थः कदर्थयति, तस्य जन्मव्यापारौ प्रत्यक्षगोचराविति [6]महत्साहसमित्युपपादितं [7]प्राक्। तत् कथं न विकल्पावकाशः?

अथ नश्यतः स्वयमेव [8]रूपं भेदान्तरप्रतिक्षेपेण तन्मात्रजिज्ञासायां पृथगिवादर्श्यमानो[9] नाशोऽभिप्रेतः, तथा च ध्वंसन्ते हेत्वन्तरेभ्यः इत्यभीत्यैवोक्तम्। एवं तर्हि दण्डादिभ्यः कुण्डादयो विनश्यन्ति, न स्वयमिति सिद्धान्तनिष्ठायां ध्वंसश्च निरस्तसमस्तार्थक्रिय इत्यपि सुप्तविलपितमेव। तत् किमनया वाचस्पतिः [52a] अभिप्रैतीति न विद्मः। एवं तर्हि यावति प्रत्यक्षव्यापारः तावतोऽपि कथमपह्नवः? कियति चासौ [10]प्रत्यक्षव्यापारः? उत्पद्यमाने च हेत्वन्तराद्धेत्वन्तरान्निरुध्यमाने च भावे[1] [2]तदुत्पत्तिहेतोर्विनाशहेतुरन्य इति [3]सिद्धम्।

न च नाशो नामान्यो यतः [4]प्रत्यक्षगोचरचोद्यावकाश इति। धिगेतत्! विनाशस्य [5]भावादनन्यत्वे तद्धेतुर्भावहेतुरेव, भावहेतुरेव[6], [7]न भावोत्पत्तिहेतुः। तत्कथमुत्पत्तिहेतोरन्यो विनाशहेतुः? कथं च पूर्वनिष्पन्नस्य पश्चात्तनो हेतुः? पूर्वपरभावश्चायमध्यक्षसिद्ध एव।

किं चोत्पद्यमानं[8] निरुध्यमानं च वस्त्वेकमनेकं वा? एकत्वं तावद्विरुद्धधर्माध्यासादयुक्तम्। अथ प्रत्यक्षेण तथा व्यवस्थानात् किं कुर्म इति चेत्? एकप्रत्यक्षेण एकदैकाधारयोरुपलब्धौ साधुरविरोधः, नीलचतुरस्रतावत्। यदा तु भिन्नकालमध्यक्षद्वयमेकैकरूपग्राहि, तदा प्रत्यभिज्ञानमात्रमेव[10] मिश्रयति। तच्चाप्रमाणमित्युक्तम्। ततो[1] विरुद्धधर्माध्यासाद् भेद एव। एकत्र तु क्षणे विभागाभावान्न विरोधो[2] व्यावृत्तिभेदमात्रेणैकत्र भावात्। तथा हि स एव भावक्षणः प्रागभावादुत्पद्यमान उच्यते, पश्चाद्भावान्निरुध्यमान[3] उच्यते। क्षणपरम्पराव्यापिन्यपि वस्तुन्येवमस्तीति चेत्—

६. महत्साहतसाहस° आ ७. प्रागिति नास्ति आ ८. रूपमेदा° अ ९. °मानो° इति नास्ति अ १०. तावतोऽपि ........प्रत्यक्षव्यापार° इति नास्ति आ १. भाव्ये आ २. तत उत्पत्ति आ ३. सिद्धिः अ ४. प्रत्यक्षा अ ५. भावादिन आ ६. मावहेतुरेवेति प्रान्तयोजना अ ७. च अ ८. °त्पद्यमानेनि° अ ९. विरुध्य° आ १०. °मात्र° इति नास्ति आ १. अतो अ २. °द्यविरोधो° अ ३. °भावनिरुध्य° अ

[4]न, व्यापकद्वारेण [5]विरोधस्यैव सिद्धेः। प्रथमक्षणेऽप्युत्पद्यमानो भावो वा[6] भाविक्षणान्तरावस्थानेन व्याप्तो न प्राचीनामवस्थितिं क्षणमपि [7]स्पृशति, निरुध्यमानश्चासौ चरमक्षणे प्राच्यक्षणान्तरावस्थानेन व्याप्तो[8], न च भाविनीमवस्थितिं क्षणमपि स्पृशतीति विरोध एव। क्षणे पुनरेकस्मिन्नेप[9] विभाग इति व्यावृत्तिमात्रभेदो न विरोधः। तस्मात् क्षणद्वयमपि स्थितिविवक्षायामुदयनिधनधर्मयोर्विरोधान्नैकत्वम्। अनेकत्वपक्षे च प्राचीनं वस्तु मुद्गरादिपरिगणितविनाशहेतुव्यतिरेकेणापि[10] निरुध्यमानं स्वहेतोरेव नियतकालस्थितिदानसामर्थ्यमुद्दीपयतीति न विनाशहेतुः कश्चित्। [1]अथापरिगणिता एव विनाशहेतवः, तत्र दुरुपलक्षः कश्चिद्धेतुरनिर्ज्ञायमानः स्वनिबन्धनं निधनमादधीतेति [2]किमयुक्तम्? एवं तर्हि प्रतिक्षणमपि विनाशसंभावनाया [3]न प्रच्युतिरिति व्यर्थं विनाशहेतुव्यवस्थापनम्। परिगणितस्य हि भूयो लक्षणस्य हेतोः [4]प्रसिद्धप्रध्वंसलक्षणात् प्रागभावनिश्चयेन विनाशव्यवस्था माभूदिति सहेतुकत्वं विनाशस्य साधयितुमारब्धम्। सूक्ष्मतया तु दुरुपलक्षणस्यापि हेतोः [5]स्वीकारे प्रयत्नवैयर्थ्यमायातमित्यलं मिथ्याविकल्पेन। तस्मात् स्थितिमति वस्तुनि सर्वस्याकिञ्चित्करत्वप्रतिपादनात् सन्तः स्वहेतुभ्यो जायन्ते ध्वंसन्ते च हेत्वन्तरेभ्य इत्यर्थपदमेतत्। तत् कुतः इदं मणिमन्त्रौषधमिन्द्रजालं भावेन शिक्षितं यदयमविकलान्यदर्शनप्रत्ययस्तदवस्थ एव कदाचिदध्यक्षः [52b] अत्यक्षश्चेति[6]?

ननु क्षणिकनीतावेवायं दोष उक्तो युक्तश्च। यदाह शङ्करः,– न हि भावस्य निवृत्तेरुत्पत्तिमन्तरेण प्रागिव[7] पश्चादपि स्वरूपहानिः, येनायं तदैवानुपलम्भविषयो[8] न पूर्वं हानौ वा पश्चात् सैवास्य निवृत्तेरुत्पत्तिरिति। तदयुक्तम्, क्षणिकपक्षे हि प्रागिव पश्चादपि न[9] स्वरूपहानिरिति साहसमेतत्। निवृत्तेरुत्पत्तिमन्तरेण स्वीक्रियमाणाऽपि स्वरूपहानिरसङ्गतैवेति[10] चेत्? निवृत्त्यादिनाम्नः[1] पदार्थान्तरस्योत्पत्तिः भवतु मा वा भूत्, यत एवासौ क्षणस्थितिनियतोऽर्थः, तत एव क्षणान्तरमव्याप्नुवन् क्षणान्तरे[2] नास्तीत्युच्यते, स एवार्थो भावस्य क्षणान्तरे नाशो जात इत्यनेन वचसोच्यते। नापूर्ववस्तूत्पादो विधीयते। छन्दतो हि वचसां[3] प्रवृत्तिः। अर्थस्तु निरूपणीयः। तत्र[4] यद्येकक्षणाधीनतया क्षणान्तरे [5]नियतसत्तावसायसिद्धिः, तावतैव चरितार्थो

---

४. नेति नास्ति आ ५. द्वारेणैव विरोध° अ ६. वेति नास्ति अ ७. दर्शयति आ ८. व्याप्तौ अ.
९. °न्नेव आ, न्नैप अ १०. °विशाश° अ १. तथा अ २. किमप्रयुक्तं अ ३. नकारो नास्ति र
४. प्रेति नास्ति आ ५. स्वीकारप्र° आ ६, °त्यध्यक्षश्चेति अ ७. प्रागेव आ ८. विनयौ आ
९. नकारस्त्यक्तः अ १०. °रसौगतैवेति अ १. नार्थः अ २. क्षणे(?णि) आ ३. वचसा आ
४. यत्र र ५. शत्ताव° आ

विनाशवादः, किमत्र कस्यचिदुत्पत्तिपर्येषणया ? न हि गृहे एव देवदत्तोऽस्तीति सर्वत्रान्यत्र वस्त्वन्तरमभिधाननिरोधवोधनमिति[६] न्यायः।

तत्रापि प्रदेशान्तरेऽभावविधिरस्तीति चेत् ? अस्तु, तदर्थमेव नियमनिवन्धन-निपातप्रयोगात्। केवलं किञ्चिद् वस्तु विद्यमानमुत्पद्यमानं[७] वा न प्रतीतिपथप्रस्थायि, निषेधमात्रस्यैव प्रतीतेः। तावतैव च[८] देवदत्तमनुसरतः प्रवृत्तिनिवृत्तिपाटवमापनीपद्यते। वस्त्वन्तरप्रतीतावपि हि विहितायां गृहादन्यत्र [९]यावन्न नियमानुसारेण देवदत्तस्य प्रसज्यात्मानं निषेधमवस्थापयति तावन्न सुस्थः। तस्मादस्पृष्टवस्तुरूपमभाव-मात्रमवश्यप्रतिपाद्यम्[१०]।

न चान्यत्र नास्तीत्यनेन वस्तुरूपं किञ्चिद् विधाय तदेव परमस्ति न देवदत्त इति क्रमवती प्रतीतिरनुभवविषयः, यथा गृह एवास्तीत्यनेन नान्यत्रेति। भवतु चैवम्, तथापि पश्चादभावमात्रप्रतीत्यैव[१] विश्रामः। अन्यथा परापरवस्तुरूपप्रति-पत्तावेव पुरुपायुषमुपयुज्येत[२], न प्रकृतनिषेधबोधसिद्धिः। तस्माद् यथात्र निषेधमात्रं मन्दिरादन्यत्र देवदत्तस्य व्यवह्रियते, तन्मात्रमेव च देवदत्तस्यान्यत्राभावः प्रतीति-गोचर इत्यादि व्यवहारस्याप्यर्थः, तथा एकत्रैव क्षणेऽस्ति भावः, क्षणान्तरे नास्ति। क्षणान्तरे तस्याभावः प्रतीयत इति निषेधमात्रमन्यत्र क्षणे ख्याप्यते[३], न वस्तुरूप-संस्पर्शः। नापि तदपेक्षानिषेधसिद्धयेऽपि। एवं स्वरूपहानिरित्यपि निषेधमात्र-व्यवहार एव। तत्र च न कस्यचिदुत्पत्त्या सत्तया वोपयोग इति कथमुच्यते निवृत्तेः उत्पत्तिमन्तरेण स्वरूपहानिरिति ? अतएव हानौ वा पश्चात् सैवास्य निवृत्तेरुत्पत्तिः इत्यपि प्रवाहापातः पातकवत्परिहार्यः। पश्चात् स्वरूपहानिरित्यपि हि पश्चान्निषेध-व्यवहारमात्रम्, न तु [53a] कस्यचिद् वस्तुरूपस्योत्पत्तिरिति[४]। स च निषेध-व्यवहारो देवदत्तस्यैवान्यत्र क्वचित् सत्तानियमप्रतिबन्धादव्यवस्थितसंवादी[५]।

एतेन यत् न्यायभूषणोऽप्याह, को ह्येवं श्रद्दधीत प्रत्युत्पन्नावस्थायामेव सन् भावः [६]पश्चात्त्वसन्, न च पश्चान्नश्यतीति ? तत्रापि कः पुनरेवमाह, न पश्चात् नश्यतीति ? यदि पश्चान्नश्यति तदा पश्चान्नाशोत्पत्तिः स्वीकृतेति चेत् ? यदि त्वमेव वचसामर्थेषु स्वामी।

६. °धाय न निषेध° अ ७. °मुत्पद्यमान° इति नास्ति आ ८. चकारो नास्ति र ९. यावन्नियमा° आ १०. मात्रेति नास्ति अ १. प्रतीतैव अ २. पुरुपापुरुषमुपयुज्येत अ, पुरुपायुषमुद्येत आ ३. व्याप्यते अ ४. स्योत्पत्तिविधेः अ ५. सत्तानिषेध...दध्यवसित° अ ६. °व पश्चात् त्व° आ, °वः पश्चात्वे अ

स्यादेतत्। द्विधा त्वर्थस्थितिः, प्रमाणानुसारिणी समयानुसारिणी च। प्रथमायां पश्चान्नश्यतीति पश्चादसन्निति व्यवह्रियत इत्येवार्थः समर्थितः। अतः प्रमाणपरायणेन कथमभिधातुं शक्यं पश्चादसन्न च पश्चान्नश्यतीति। द्वितीयायां तु न विरोधः। यस्य हि पश्चान्नश्यतीति पश्चान्नाशोत्पत्तिरिष्टा तं प्रति पश्चादसन्। न सन् व्यवहर्तव्यो न च पश्चान्नश्यति। न चास्य पश्चान्नाशवस्तूत्पत्तिरिति[7] कथमश्रद्धाविषयः? [8]तदपरिनिष्ठितार्थतत्त्ववचनविभ्रममात्रेण ग्राम्यजनमनोहरेण समयनिर्वाहमनोरथ इति कष्टम्।

तस्मात् स्वहेतोरेकक्षणनियतस्थितिरुद्भूद्भाव इत्येव नान्यदा सन्, न तु कस्यचिदुत्पत्त्या। हेतोस्तु तादृक् सामर्थ्यं किं संभावनाविषय इति यदि चिन्तयसि[9], तदापि यदि जनने सामर्थ्यं तदावश्यं केनचिद् रूपेण कार्यमुत्पादयन् क्षणमात्रस्थायिनापि रूपेण किं [10]नोत्पादयेत्? सर्वं तु रूपमस्पृशन् कार्यं[1] कुर्याद्धेतुरिति कस्य श्रद्धाविषयः? ततो यथायं भावो नियतदेशो नियतवस्तुसंस्थानाद्याकारः[2] स्वहेतोरेव समुत्पद्यते, तथा नियतकालोऽपीति किमसंभाव्यमत्र? न च देशादिनियमेन स्वरूपसंकोचमभाव एव भावस्य भावयतीति वाच्यम्। न ह्यभावो भावमुत्पन्नं वा सङ्कोचयेत्। कारणेन सह संभूय सङ्कुचितमेव चोत्पादयेत्। अत्र पक्षे पृथक् पौरुषरहितः[3] कारणसामग्र्यन्तर्भूतोऽभावोऽपि[4] नाम यदि भावसाधकः कश्चिदुपपादयितुं[5] शक्यः, किं नश्छिन्नम्? यादृशी तादृशी वा कारणसामग्री कार्यं कुर्यात्। यथा तु नियतदेशाकारं कुरुते तथा [6]नियतकालमपि कर्तुं कस्तस्याः शक्तिविघात इति ब्रूमः, यतस्तदर्थमर्थ्यते[7] परोत्पत्तिः पश्चात्। प्रथमपक्षेऽपि किं तावत् स भावः स्वहेतोर्विश्वरूप उत्पन्नो नियतः क्रियतेऽभावेन? न वा केनापि रूपेण निष्पन्नः केनचिद् वा निष्पन्न एव न तु देशाकारकालैरिति विकल्पाः।

अन्त्यस्तावदयुक्तः। येन हि रूपेण निष्पन्नः स एव तस्याकारः, स च न कचिद् भावमन्तरेण, कचिद् भावोऽपि[8] न कदाचिदभवत इति कथमाकारादिपरिहारः?

माभूत् तथैवं[9] केवलं केनचिद् रूपेणोत्पादयितुं शक्नुवतः स्वहेतोरन्यत्र किमालस्यमीर्ष्या [10]वा, प्रमाणेनैकत्र शक्तिनियमानिर्वाहात्? मध्यमीये तु किंकृतः

---

७. °न्नरसवस्तु° श्रा ८. °निष्ठार्थ° श्रा ९. यदितयसि श्रा १०. नोद्येत् र १. रूपस्पर्शनकार्य
२. °कारेः, श्रा. °कारैः र ३. °वाहितः श्रा ४. °सामग्रामन्तर्भूत्वा श्रा ५. उत्पादयितुं श्र
६. विघात° श्र ७. यत्तदर्थं° श्रा ८. भावेऽपि श्र ९. माभूत्वैव° श्रा १०. °मोर्ष्यया श्रा

कारणभावः, राज[53b]प्रसादो वा ? आद्येऽपि[1] कल्पे सकलत्रिभुवनाकारच्छेदन-सहाभावाकर्षिणः क्षणान्तरावस्थितिच्छेदनमात्रे[2] अणीयसि कार्ये पर्यालोच एव नास्ति। ततो देशादिसङ्कोचकारिणैवाभावनाम्ना पूर्वसिद्धेन सिद्धे कालसङ्कोचेऽपि किमकारणमन्यः कालान्तरभावी कारणान्तरापेक्षः[4] सिद्धो य[:] स्थायी[5] गवेष्यते इत्युक्तप्रायम्।

प्रत्यर्थे[6] भेदोऽभावस्येति चेत्? सर्वथाऽनुपलभ्यस्वभावत्वे साहसमेतत्। अतो व्योमादेः [7]सर्वधर्मनिर्माणवत् सर्वतो व्यावर्तनमपि किं नेष्यते ? न च प्राचीन-मेवं व्यापारभावमनुभवः क्षमते। तस्मात् स्वकारणादेव देशादिनियत इव काल-नियतोऽपि जात इति न स्थिरपक्षवत् क्षणिकपक्षेऽपि वीक्षणादिप्रसङ्गः, भावस्यैवाभावात्। स्थिरपक्षे तु स चास्ति तदवस्थश्चेति न निवर्तते [8]प्रसङ्गः। पदार्थान्तरोत्पत्तावपि तस्य तत्राकिञ्चित्करत्वात्। अप्रस्तुताभिधानं च भावनिवृत्तौ प्रस्तुतायां [9]वस्त्वन्तरोदयवर्जनात्।

[10]न नु भावनिवृत्तौ प्रस्तुतायां निवृत्तेरुदयोऽपदिश्यते[1] इति किमप्रस्तुतमत्र ? न नु तावदेव निवृत्तिः प्रसज्यात्मा [2]यावन्नोदयोपदेशः। उदये तु तत्पर्युदस्तवस्त्वन्तर-विधानात् पुनरर्थापत्त्या निवृत्त्याकृष्टिः, न तु सैव निवृत्तिर्वस्तुत्वादेव, अन्यथाति-प्रसङ्गात्।

यत्तु शङ्करः, भावाद्भावान्तरवदर्थान्तरत्वाविशेषे कथं स एव तस्यैव निवृत्तिरिति चेत्? अत्र वस्तुस्वभावैरुत्तरं वाच्यं येषां स्वहेतुभ्यः सहस्थितिविरोधेनैवोत्पत्तिः, न [3]ह्यर्थान्तरत्वादन्यत्र सहस्थितिविरोधाभावे[4] भावतन्निवृत्त्योरपि तस्याभाव इति न्याय्यम्, तयोरेव सहस्थितिविरोधस्य प्रमाणेन सिद्धत्वात्। न हि यथा कश्चिदर्थान्तर-तया अन्येषामहेतुरेवं स्वकार्यस्यापि माभूत् तादृगेतदपीति।

एतदेव न्यायभूषणेऽपि, तदपि द्विविधस्यापि [6]विरोधस्य घटनादपास्तम्। यदि च विरोधादर्थान्तरस्यापि निवृत्तिभावो वरं मुद्गरस्यैवास्त्वित्यपि दर्शितम्। न च प्रत्यक्षमनुमानं वा निवृत्तौ प्रवृत्तम्। तद्विरोधश्च प्रमाणसिद्धोऽवश्यवक्तव्य इति सुन्दरम्।

---

१. अन्येऽपि आ २. °वस्थिति° आ ३. मात्रेण आ, कारिणैव आ ४. °पेक्ष ए(?व) र ५. सिद्धोप-स्थायी र ६. प्रत्यक्ष° (?) आ ७. °कर्म° अ ८. प्रसङ्गेना° र ९. °वर्तनात् आ १०. नन्वभाव° अ १. °पदेश्यते अ २. °न्नोदयाप° अ ३. सह्यर्थो° अ ४. भावेन र ५. सहस्थिति अ ६. °स्याद्यघटना अ

वह्निधूमादौ तु हेतुफलभावः प्रमाणसिद्ध एवेति नार्थान्तरोदयवर्णनेऽपि तन्निवृत्ति-ख्यातिः। तस्मात्,

अग्नेरर्थान्तरोत्पत्तौ भवेत् काष्ठस्य दर्शनम्।
[[6]प्र. वा. १.२७२]

न तस्य [7]किञ्चिद्भवति न भवत्येव केवलम्।
[प्र. वा. ३. २७७]

इति दुरतिक्रमो न्यायः।

यत्तु न्यायभूषणः, यदि तस्य न किञ्चिद् भवति ततः प्रतिषेधोऽपि न तस्य भवतीत्यप्रतिपिद्धस्वरूपस्तदवस्थत्वात् प्रागिवोपलभ्येतेति, प्रागेव परिहृतमेतत्। तथा हि प्रतिषेधोऽपि न तस्य भवतीति यदि प्रतिषेधाख्योऽपि पदार्थो नोत्पद्यत इत्यर्थः, तदा सत्यमेतत्, न तु तावतैवाप्रतिपिद्धस्वरूपत्वमर्थस्य, [8]स्वहेतुतैव क्षणान्तरे [9]प्रतिपिद्धताप्रतिपादनात्। [54a] अथ वाचनिकप्रतिषेधो विवक्षितस्तदा कस्तमपहस्तयति? केवलमत्र पक्षे प्रागिवोपलभ्येतेत्यसंबद्धम्, न हि यो यदा नास्ति स तदोपलभ्यः। अन्यथा कान्यकुब्जस्थितोऽपि पाटलिपुत्रे दृश्येत। मान्धाताऽपि वाद्योपलभ्येत।

नन्वद्य मान्धातुरभावस्तेन नोपलम्भः। को वै अन्यथा प्राह? केवलषष्ठीनिर्देशाद् भेदावसायेऽपि न ततो भिन्नः पदार्थो विधीयते, यावानेवार्थो मान्धाताद्य नास्ति तत्कालनियतसत्ताकत्वात्, तावानेव मान्धातुरद्याभाव इति। [10]ननु समानमेतदपि यावानेवार्थो मान्धातुरद्याभाव इति तावानेव मान्धाताद्य नास्तीति।

यदप्युच्यते– तत्कालनियतसत्ताकत्वादिति, तत्रापि तत्काल एवास्तीति कालान्तरे अभाव एव प्रतिपाद्यत इति किमत्राधिकमभिहितम्? उक्तमेवैतत्। [1]तथाप्युच्यते, भेदाभेदनिर्देशयोरेक एवार्थस्तत्त्वतः, केवलं यदि भिन्नवस्तुसिद्धिः प्रमाणबलावलम्बिनी, तदाद्य नास्तीत्यस्यापि वाक्यस्याद्याभावोऽस्तीत्ययमेवार्थः।

अथ भिन्नवस्तुबाधैव प्रमाणान्वयिनी, तदाद्याभावोऽस्तीति तावदस्तु। अद्याभावो जात इत्यस्यापि वाक्यस्याद्य नास्तीत्येवार्थो वेदितव्यः। प्रमाणान्वेषणे च दृश्यतया स्वीकृतस्यादर्शनमेव बाधकमुक्तं च साधकं च किञ्चिन्नेत्यपि। अद्यानुपलम्भेऽपि

6. स्वोपज्ञवृत्त्यनुसारी पाठः ७. दर्शनम्। न तस्येति नास्ति आ ८. स्वेति नास्ति अ ९. प्रतिपिद्धतेति नास्ति आ १०. नन्वस° अ १. तत्काप्यु° अ

तत्कालवर्तिनः कालान्तरे वस्त्वन्तररूपमस्पृशता[2] विरहमात्रेण सिद्ध[त्वमि]त्युपपादितम्। न च विरहमात्रेणेति,[5]करणशक्तिनिर्देशाद् वस्तुत्वप्रत्याशा, विवक्षापरतन्त्रत्वात् क्रियाकारकव्यवहारस्य,

याति गन्धर्वनगरादेप वन्ध्यासुतः पदा[3] ।
मृगतृष्णाम्भसि स्नात्वा पित्रे दातुं जलाञ्जलिम् ॥

इति। सकलकारकशक्तियोगेऽपि वस्तुत्वाभावात् सर्वथा मिथ्येदमिति चेत्? विवक्षापरतन्त्रतामात्रेण दृष्टान्तीकृतत्वात्।

क एवं साधुरभिदधीतेति चेत्? न कोऽप्यभिधत्तां प्रकृतसिद्धेरविरोधात्। न च साधोरप्येतत्पाठोऽसंभवी सर्वथा किं तत् साधुर्नाभिदधीतेति तदश्रुतवतः प्रश्ने तत्पाठमात्रेण साधुताक्षतेरभावात्। [4]कूर्मरोम्णां तु मिथ्यात्वं स्वीकृतमित्यपि किमसाधुनैव वक्तव्यम्? नापि सर्वथा मिथ्यैवेदम्। तथा मान्धाता नास्तीति नाद्य स्थीयते मान्धात्रेति वा व्यक्ता कर्तृशक्तिर्न वस्तुतां प्रत्युज्जीवयति।

निषेध एव तस्या वर्तत इति चेत्? अत एव विवक्षापारतन्त्र्यमपेतसन्देहम्। तस्मात् [5]कारकशक्तिनिर्देशेन वस्तुतासिद्धिप्रत्याशा फेनसंघातेन [6]तोयतरणमनोरथमनुहरति।

तदेवं नाभिधानाधीनमर्थतत्त्ववशेनेदं त्वभिधानमिति, भेदनिर्देश [7]एवाद्य अभावोऽस्य जात इति भिन्नवस्तूत्पत्तिमिवासंशन्[8] अद्येदं नास्तीत्यस्य प्रसज्यप्रतिषेधमात्रसूचकस्यार्थे [9]स्थाप्यो, न [10]विपर्यये, प्रमाणाशरणत्वादस्य विभागस्य। तत्कालनियमेन कालान्तरेऽभावाभिधानं च सिद्धसाधनम्, वस्त्वन्तरोत्पत्तिरेव हि निषिध्यते कालान्तरे[1], [54b] न च[2] प्रसज्यप्रतिषेधव्यवहारमात्रं प्रतिषिध्यते। तदस्य [3]बाधविधानप्रतिपादनेऽपि न परमार्थसत् पदार्थान्तरसिद्धिः।

तेन यदुद्धृत्य[3] वार्तिकश्लोकस्य न्यायभूषणश्चकार काव्यम्,

अभावो यदि पश्चान्न भावस्तस्य किमिष्यते।
सोऽपि न[4] प्रतिषेधोऽयमभावस्य किमिष्यते ॥

---

२. °रूपस्पृशता आ ३. सुतो य° अ ४. °रोन्तुमि° अ, रोम्र.मि° र ५ कारण° आ ६. °पदवतरण° आ ७. एवार्था° आ ८. °त्पत्तिनिरा° र ९. °स्यार्थो अ १०. विपर्ययः अ १. °कान्तरे आ, कालान्तर अ २. न तु आ ३. बाधा° आ ३. °दुद्धृत्य आ ४. नेति नास्ति आ

इति, तत् सिद्धसाधनं [5]बाधानिश्चयेन वा पश्चादभावव्यवहारप्रवर्तनमात्रस्येष्टत्वाद् वस्तूत्पत्तेरेव प्रतिषिद्धत्वात्।

ननु केयं वाचोयुक्तिः, अभावव्यवहारमात्रमिष्यते पश्चान्नाभाव इति? एवं हि सति विसंवादिताप्रसङ्गोऽभावव्यवहारस्य, अभावश्च मिथ्येति भाव एव प्रतिषेध्यस्य स्यात्।

प्रतिषेधनिषेधश्च विधानात् कीदृशोऽपरः ।
[प्र. वा. ४. २२१]

इति न्यायस्य स्वयं प्रतिज्ञानात्। स चाभावो भवन्[6] पश्चादेवेति स्फुटतरमस्य कादाचित्कत्वात् सहेतुत्वं वस्तुत्वं चेति। तथा च स एवाह, यस्य भावस्य पश्चादभावः स एव नाश इत्युच्यते। कथं भावस्य विनाशोऽन्यो वा कश्चिन्नोपलभ्यते? अथ भावस्य विनाश उच्यते, किं तु स भवतीति नोच्यते, भवतीत्यभिधाने को दोषः? भाव एव स्यादिति चेत्? तत्किमिदानीमभिधानादेवार्थस्य रूपपरिवर्तो भवति? यदि च भवेत्[7] ततो जायत इत्युच्यताम्। जन्माप्यभावस्य कुत इति चेत्? कादाचित्कत्वात्। अकादाचित्कत्वे तु प्रत्युत्पन्नावस्थायामप्यभावः स्यादिति।

अत्रोच्यते, व्यवहारशब्देन तावदस्माकं निश्चयवचसी अभिमते, वचनं च विकल्पेन [8]सहैकविषयमेव। विकल्पस्य च ग्राह्याध्यवसायभेदेन द्विविधो विषयः। तत्र यत्प्रतिभासं विकल्पज्ञानमाजायते तद् ग्राह्यमुच्यते। यदाश्रये तु प्रवृत्तिनिवृत्ती तदध्यवसेयम्, यथा पश्चादभावो भावस्यैव जात[9] इत्यस्यैव विकल्पस्यार्थान्तरोत्पत्तिः साक्षान्निर्भासमाना[10] ग्राह्या, तद्भावार्थक्रियार्थिनो [1]निवृत्तेराश्रयभूता च तद्विविक्त-तत्कालदेशस्वभाववस्त्ववस्थाध्यवसेया, यतस्तद्विकल्पोदये विनाशाख्यवस्तूत्पत्ति-परामर्शविमुखः प्रतिषेध्यभावार्थक्रियार्थी तद्देशकालात्मनि वस्तुनि न प्रवर्तते, अपि तु निवर्तते। ततस्तद्देशकालवस्त्ववस्थाध्यवसेय उच्यते। तत्र प्रतिभासमानवस्त्वन्तरापेक्षया व्यवहारमात्रमुच्यते, यत्नेन निरूपयता नयनसहस्रेणाप्युदीयमानपदार्थान्तरस्यानुपलब्धेः। ततस्तद्विसंवादेऽपि यत्र प्रवृत्तिनिवृत्तिभ्यां परिनिष्ठितव्यापारो विकल्पः संपद्यते, तमध्यवसेयं विषयमपेक्ष्य न [2]विसंवादसंवादः। अध्यवसेये च संवादेतरचिन्ता, न

---

५. बाधानि अ, बाधनि आ ६. चाभवन् अ ७. भावात् र ८. सदैक° आ ९. पश्चाद्भावोऽस्य जात अ १०. निर्भासं मनो न १ निवृत्ति° अ २. °सम्वासः आ

प्रतिभासिनि[3]। तदयमव्यापकोऽपि यदि न्यायः प्रकृते तावदवसेयसंवादेनैव संवादमनुशिष्मः। प्रतिभासिनि तु[4] विसंवादः साध्य एव यदि सिध्यति प्रसन्नाः देवताः, [5]किमत्रभव[त]ः [55a] कोपेन ?

तस्मादभावविकल्पप्रतिभासिनः कार्यरूपस्य मिथ्यात्वेऽपि नाभावव्यवहारस्य विसंवादिता, अध्यवसितार्थयाथात्म्यस्य सत्त्वात्। तस्य च कल्पितरूपस्य मिथ्यात्वेऽपि भावविरोधिनः प्रच्युतिमात्रस्य व्यवहर्तव्यैकरूपस्य मिथ्यात्वमिति न वस्तुनिषेधे भावप्रसङ्गः। तस्य तु प्रच्युतिमात्रस्य निषेधे स्यात्। न च सा तेन[6] रूपेण प्रच्युतिमात्रात्मना प्रतिषिध्यते। किं तु वस्तुरूपतया कल्पितया।

ननु वस्तु न भवतीत्ययमेव प्रतिषेधः। तथा च सा प्रच्युतिरस्ति न वेति प्रश्ने यद्यस्ति कथं न वस्तु ? नास्ति चेत् कथमप्रतिषेधः ? उच्यते, वस्तुविरहमात्रस्य[7] वस्तुत्वारोप एव निषेधः। न वस्तुत्वनिषेधस्तन्निषेधः। ततः प्रच्युतिरस्तीति न प्रच्युतिरूपात्प्रच्यवत[8] इत्ययमेवार्थः। घटोऽस्तीत्यपि हि घटरूपाप्रच्युतिमात्रमापद्यते[9]। न त्वस्ति प्रयोगमात्रेण कल्पितस्यापि [10]त्रैगुण्यमयत्वादेर्विधिः। यथा च प्रतिषिद्धघटरूपादतिरिक्तरूपापेक्षैव नास्ति घटो नित्यतया क्षणिकतया वेति साधु, तथा नास्ति प्रच्युतिरित्यपि वस्तुत्वेनेत्यपेक्षैव साधु। निरुपाधिस्त्वस्ति प्रच्युतिरिति तत्स्वरूपाप्रच्युतौ न दुष्यति। यावच्च न [1]प्रतिषेध्यभावस्तावत्प्रच्युतेः स्वरूपाप्रच्युतिः, परस्पराभावरूपत्वादनयोः। अतएव,

निवृत्तिर्यदि तस्मिन्न हेतोर्वृत्तिः किमिष्यते।
सापि न प्रतिषेधोऽयं निवृत्तिः किं निषिध्यते॥
[प्र. वा. ४. २२४]

इति दुर्लङ्घ्योऽयं न्यायः। एवम्,

अभावो यदि पश्चान्न

इत्यनेन पश्चादभावाख्यविरहमाशङ्क्य[2],

भावस्तस्य किमिष्यते

३. °सितिनि[?] आ ४. त्विति नास्ति ५. °मत्रभवः अ, आ ६. स्यात्तेन र ७. मात्रेति नास्ति आ ८. °प्रच्यव इ° आ ९. °मापाद्यते आ १०. विधेः अ १. °षिद्ध[?]° आ २. °दभाववि° अ

इत्युच्यते यदि तदा न दोषः[3]। यस्य हि यदास्तीत्यस्य प्रत्यनीकं नास्तीति विरहमात्रमवस्तुरूपं कल्पनाविपरिवर्ति प्रतिपिध्यते, तस्य तदा नियमेनास्तीत्येवं रूपमन्तर्मात्राया-मुपस्थानमासादयति। यदा तु पश्चाद्विरहमात्रमप्रतिक्षिप्य पश्चाद् भवति जायते चेति[4]विकल्पविवर्तवशाद् वासनावशागाद्वस्तुरूपस्य कल्पितस्य निपेधः, तदा कथं विरहमात्रप्रतिक्षेपप्रभवो भावप्रसङ्गः, यतो

भावस्तस्य किमिष्यते

इत्युच्यते ? न हि घटः कल्पितरूपनिपेधे स्वरूपात् प्रच्यवमासादयति, उदकधारणाद्यर्थ-क्रियाविरहप्रसङ्गात्। न च प्रच्युतेः[5] स्वरूपोल्लेखो[6] वस्तुत्वप्रत्याशायाः पूरकः, असत्स्वभावो वन्ध्यासुत इत्यादिवत्, [7]स्वभावावस्थाननिवेशनेऽपि तदयोगात्। असिद्धो हेतुरित्यादिवद् वा।

तस्मात् नाशः पश्चाद् भवति जायते मुद्गरादिभ्य इति वालव्यवहारमात्रमप-लप्यते। तत्[8] प्रतिभाषितं तु कादाचित्कत्वादि वस्तुरूपं नास्तीति ब्रूमः।

न च वस्तु[9] यावद् व्यवहारोपस्थापितं तत्सर्वं वस्तुतत्त्वमिति शक्यम्, शास्त्रप्रणयनानर्थक्यप्रसङ्गात्। व्यवहारं तु[10] वितथमुपदर्शयन्नपि मूलवलावलाभ्यां कश्चिदुपादेयो हेयश्च कश्चिदिति विभागः सुभगः। मूलं चाध्यवसेयमिति [ 55b ] दर्शितम्। तस्मात् तत्त्वचिन्तायाम्,

न भावो[1] भवतीत्युक्तमभावो भवतीत्यपि।
पश्चादभावो भवति भावस्यैवानपायि वा[2]॥
[तुल॰ प्र. वा. ३. २७८]

[त]था च[3] पश्चान्न भवति[4] भावः स्वकालमात्रनियत[5] इत्येव[6] कथ्यते। अतो[7] नार्थान्तरोत्पत्तिरिति न क्षणभङ्गपक्षे तादवस्थ्यादुपलम्भादिसंभवः। किं तु स्थिरपक्ष एवेति स्थितम्॥

[7]नार्थस्तावत्स्वयमुपरतो[8] नाशहेतोर्मुधात्व-
[9]प्राप्तेर्दण्डादपि न निधने व्यापृतेस्तस्य गीतेः।

२. तदा न दोप इति नास्ति आ ४. जायते चेति नास्ति आ ५. प्रच्युतिः आ ६. °ल्लेखा° अ ७. स्वभावस्थाने अ ८. ततः अ ९. वस्तु इति नास्ति आ १०. °हारोप° इति भ्रान्तयोजना अ
१. भावा आ २. °स्यैवेत्यनपायिको आ ३. तथा चेति नास्ति अ ४. भवतीति अ ५. स्वकारण° आ ६. नियत एव आ ६, अर्थो आ ७. °र्नाश° अ ८. मुध° आ ९. °प्राप्तदण्डा° आ

प्रतिभासिनि[3]। तदयमव्यापकोऽपि यदि न्यायः प्रकृते तावदवसेयसंवादेनैव संवादमनुशिष्मः। प्रतिभासिनि तु[4] विसंवादः साध्य एव यदि सिध्यति प्रसन्नाः देवताः, [5]किमत्रभव[त]ः [55a] कोपेन ?

तस्मादभावविकल्पप्रतिभासिनः कार्यरूपस्य मिथ्यात्वेऽपि नाभावव्यवहारस्य विसंवादिता, अध्यवसितार्थयाथात्म्यस्य सत्त्वात्। तस्य च कल्पितरूपस्य मिथ्यात्वेऽपि भावविरोधिनः प्रच्युतिमात्रस्य व्यवहर्तव्यैकरूपस्य मिथ्यात्वमिति न वस्तुनिषेधे भावप्रसङ्गः। तस्य तु प्रच्युतिमात्रस्य निषेधे स्यात्। न च सा तेन[6] रूपेण प्रच्युतिमात्रात्मना प्रतिषिध्यते। किं तु वस्तुरूपतया कल्पितया।

ननु वस्तु न भवतीत्ययमेव प्रतिषेधः। तथा च सा प्रच्युतिरस्ति न वेति प्रश्ने यद्यस्ति कथं न वस्तु ? नास्ति चेत् कथमप्रतिषेधः ? उच्यते, वस्तुविरहमात्रस्य[7] वस्तुत्वारोप एव निषेधः। न वस्तुत्वनिषेधस्तन्निषेधः। ततः प्रच्युतिरस्तीति न प्रच्युतिरूपात्प्रच्यवत[8] इत्ययमेवार्थः। घटोऽस्तीत्यपि हि घटरूपाप्रच्युतिमात्रमापद्यते[9]। न त्वस्ति प्रयोगमात्रेण कल्पितस्यापि [10]त्रैगुण्यमयत्वादेर्विधिः। यथा च प्रतिषिद्धघटरूपादतिरिक्तरूपापेक्षैव नास्ति घटो नित्यतया क्षणिकतया वेति साधु, तथा नास्ति प्रच्युतिरित्यपि वस्तुत्वेनेत्यपेक्षैव साधु। निरुपाधिस्त्वस्ति प्रच्युतिरिति तत्स्वरूपाप्रच्युतौ न दुष्यति। यावच्च न [1]प्रतिषेध्यभावस्तावत्प्रच्युतेः स्वरूपाप्रच्युतिः, परस्पराभावरूपत्वादनयोः। अतएव,

> निवृत्तिर्यदि तस्मिन्न हेतोर्वृत्तिः किमिष्यते।
> सापि न प्रतिषेधोऽयं निवृत्तिः किं निषिध्यते॥
>
> [प्र. वा. ४. २२४]

इति दुर्लङ्घोऽयं न्यायः। एवम्,

> अभावो यदि पश्चान्न

इत्यनेन पश्चादभावाख्यविरहमाशङ्क्य[2],

> भावस्तस्य किमिष्यते

---

३. °सितिनि[?] आ ४. त्विति नास्ति ५. °मत्रभवः अ, आ ६. स्यात्तेन र ७. मात्रेति नास्ति आ ८. °प्रच्यव इ° आ ९. °मापाद्यते आ १०. विधेः अ १. °षिद्ध[?]° आ २. °दभाववि° अ

इत्युच्यते यदि तदा न दोषः[3]। यस्य हि यदास्तीत्यस्य प्रत्यनीकं नास्तीति विरहमात्रमवस्तुरूपं कल्पनाविपरिवर्ति प्रतिषिध्यते, तस्य तदा नियमेनास्तीत्येवं रूपमन्तर्मात्रायामुपस्थानमासादयति। यदा तु पश्चाद्विरहमात्रमप्रतिक्षिप्य पश्चाद् भवति जायते चेति [4]विकल्पविवर्तवशाद् वासनावशागाद्वस्तुरूपस्य कल्पितस्य निषेधः, तदा कथं विरहमात्रप्रतिक्षेपप्रभवो भावप्रसङ्गः, यतो

भावस्तस्य किमिष्यते

इत्युच्यते ? न हि घटः कल्पितरूपनिषेधे स्वरूपात् प्रच्यवमासादयति, उदकधारणाद्यर्थक्रियाविरहप्रसङ्गात्। न च प्रच्युतेः[5] स्वरूपोल्लेखो[6] वस्तुत्वप्रत्याशायाः पूरकः, असत्स्वभावो बन्ध्यासुत इत्यादिवत्, [7]स्वभावावस्थाननिवेशनेऽपि तद्योगात्। असिद्धो हेतुरित्यादिवद् वा।

तस्मात् नाशः पश्चाद् भवति जायते मुद्गरादिभ्य इति बालव्यवहारमात्रमपलप्यते। तत्[8] प्रतिभापितं तु कादाचित्कत्वादि वस्तुरूपं नास्तीति ब्रूमः।

न च वस्तु[9] यावद् व्यवहारोपस्थापितं तत्सर्वं वस्तुतत्त्वमिति शक्यम्, शास्त्रप्रणयनानर्थक्यप्रसङ्गात्। व्यवहारं तु[10] वितथमुपदर्शयन्नपि मूलबलाबलाभ्यां कश्चिदुपादेयो हेयश्च कश्चिदिति विभागः सुभगः। मूलं चाध्यवसेयमिति [ 55b ] दर्शितम्। तस्मात् तत्त्वचिन्तायाम्,

न भावो[1] भवतीत्युक्तमभावो भवतीत्यपि।
पश्चादभावो भवति भावस्यैवानपायि वा[2]॥
[तुल° प्र. वा. ३. २७८]

[त]था च[3] पश्चान्न भवति[4] भावः स्वकालमात्रनियत[5] इत्येव[6] कथ्यते। अतो[7] नार्थान्तरोत्पत्तिरिति न क्षणभङ्गपक्षे तादवस्थ्यादुपलम्भादिसंभवः। किं तु स्थिरपक्ष एवेति स्थितम्॥

[7]नार्थस्तावत्स्वयमुपरतो[8] नाशहेतोर्मुधात्व-
[9]प्राप्तेर्दण्डादपि न निधने व्यापृतेस्तस्य गीतेः।

---

२. तदा न दोष इति नास्ति आ ४. जायते चेति नास्ति आ ५. प्रच्युतिः आ ६. °ल्लेखा° अ ७. स्वभावस्थाने अ ८. ततः अ ९. वस्तु इति नास्ति आ १०. °हारोप° इति प्रान्तयोजना अ
१. भावा आ २. °स्यैवेत्यनपायिको आ ३. तथा चेति नास्ति अ ४. भवतीति अ ५. स्वकारण° आ ६. नियत एव आ ६. अर्थो आ ७. °नाश° अ ८. मुध° आ ९. °प्राप्तदण्डा° आ

नापि ध्वंसात् [१०]परिघवदतो भिन्ननाशप्रसक्तेः
कस्मान्नैष[१] स्फुरति [२]चटकालोपवृत्तं किमेतत् ॥

इत्यन्तरश्लोकः। क्षणिकत्वे तु,

स्वकारणादेव यथान्यरूप-
विच्छिन्नरूपः[३] समुदेति भावः।
विच्छिन्नभिन्नक्षणवृत्तिरेवं
स्वकारणादेव न जायते किम् ॥

इत्युक्तम्।

अभावतोऽर्थान्तररूपबाधे
तत्राप्यभावान्तरमीक्षणीयम्।

तत्र यदयमाह, प्रदीपप्रकाशवन्नानवस्थेत्येके[४] इति। तत्रोच्यते,

प्रदीपदृष्टान्तमतं न कान्तं[५]
स्वरूपसन्दर्शनविप्रयोगात् ॥

दृष्टो हि प्रदीपः परप्रकाशनशक्तियुक्तः कथमपह्नोतुं शक्यः? अभावस्य पुनः स्वरूपवेदनं स्वप्नेऽपि दुर्लभम्। तत्र[६] क एवं धृष्ट आकाशचित्रमाचरतु[७] एतद्भावेऽयमस्य भेदः, तदभावे चात्र नास्ति, स्वयं चानेन रूपेण भिद्यमानो नान्यमपेक्षत इति? तत् कथं प्रदीपेन साम्यम्? किं च,

प्रदीपवच्चेदयमप्यभावो
भिनत्ति[८] भावं च विभिद्यते च।
स एव भावोऽप्युदितः स्वहेतो-
र्भिनत्तु भावं च विभिद्यतां च ॥

न ह्येवमभिधीयमानं वदनं वक्रयति। अदर्शनादन्यपौरुषाभावस्य। न च दृष्टान्तमात्रात् साध्यसिद्धिः, हेतुस्तद्भावसाधनायाभावे उपादीयमानः कोऽसावस्ति यो नाश्रयासिद्ध[९] इति?

---

१०. पलिध° अ १. कर्मान्नैष आ २. चकालोप° आ ३. रूपः विच्छिन्न° आ ४. °वस्थात्येके आ ५. काष्ठान्तं आ ६. तत्रेति नास्ति आ ७. °माचरन्त आ ८. भावो भिनत्ति इति नास्ति आ ९. °सिद्धि आ

यत् पुनराह, वयं तु पश्यामः। तत्रानवस्था नाभ्युपगम्यते यत्रानवस्थायां किञ्चिद् दृष्टं विरुध्येत, न चात्र दृष्टं किञ्चिद् विरुध्यते। या तावद्[10] घटस्य पटादिभ्यो व्यावृत्तिः, तयैव घटादिभ्यो व्यावृत्तः सिद्धः। तत्र व्यावृत्त्यन्तरानवस्थायां न किञ्चिद् विघटितम्। व्यावृत्तिव्यावृत्तिपरम्पराग्रहणोपक्षीणशक्तित्वाद् वस्तु व्यावृत्तं न सिध्यतीति चेत्- न, [1]विशेषणविपर्यस्तानामपि[2] ग्रहणानभ्युपगमादिति। तत्राप्युच्यते,

स ह्यस्तु[3] नाभ्युपगमोऽत्र परम्पराया
भावस्य तद्ग्रहपरम्परयास्तमाप्तेः[4]।
नेष्टं विशेषणविशेषणवेदनं चेत्
न्यायः समान इति नैष ततो विभागः॥

अगृहीतमपि किल विलोचनं ग्राहयति रूपमिति तद्विशेषणविशेषणमगृहीतमपि विशेषणं ग्राहयतीति[5] मन्यमानस्य प्रथममपि विशेषणमगृहीतमेव ग्राहयिष्यति विशेष्यमिति कृतं[7] तद्ग्रहणेनापि। न चायं विशेषणक्रमः। ततो यथा प्रथममेव विशेषणग्रहणमनपेक्ष्य लक्षयितुं विशेष्यमशक्तं तथा द्वितीयाद्यपीति[8] कथमयं विभागः [56a] शोभामभ्येति? यथा ह्यभावोपाधिग्रहणमन्तरेण सङ्कीर्णग्रहणभीतिः, तथा[10] सोऽप्युपाधिरसङ्कीर्णोऽगृह्यमाणः कथं परभेदको नाम, स्वयं विष्टम्भिद्रव्यवत्? एवं परम्परापेक्षायां व्यावृत्तवस्तुनः कल्पैरपि ग्रहणाभावादस्तमयो दुर्वारः।

यदि च विशेषणमभावः तदा[1] स्वहेतोरेव भिन्नभावसंभवे भिन्नदर्शनविकल्पनयोरर्थापत्त्या सिद्धेः, किमभावेन? न हि भिन्नमभिन्नमनुभवितव्यमभ्रान्तप्रत्ययेन[2]। [3]नापि भिन्नमनुभूतं भिन्नसङ्कल्पविरोधि[4]। अथाभावमन्तरेण न भिन्नं नाभिन्नं[5], क्व तर्हि कारकव्यापार इत्यभावः कारक एव स्वीकृतो भवति। तथापि स्वहेतोरेव भिन्नोत्पत्तौ सर्वमविरुद्धमिति[6] नोपाधिवादः संवादविषयः।

यच्चाह- अथवा निर्विकल्पकज्ञानेन व्यावृत्तिव्यावृत्त्यानन्त्यमपि[7] गृहीतमिति, तत्रापि,

---

१०. यत्तावद् अ १. विशेषण° इति नास्ति आ २. विणानामपि अ ३. सत्यन्तु अ ४. °स्तनाप्तेः अ ५. विशेषण° इति नास्ति आ ६. विशेषं ग्राहमिष्यतीति आ ७. कुतः आ ८. द्वितीयाद्यापीति आ ९. शोभासम° अ १०. ग्रहक्षीतितया आ १. तद आ २. °मात्रान्त° आ ३. नान्वेपि आ ४. विरोधे अ ५. °मन्तरेऽभिन्नमभिन्नः अ ६. सर्वविरुद्ध° अ ७. °नन्त्या° र

निर्भासमाह यदयं हृदि निर्विकल्पे
सत् [८]कौपिकावरणमप्यजहादलज्जः ।
यत्रैकमप्यनुपलभ्यमभावनाम्ना[९]
स्वव्यापिनो स्फुरति तत्र परम्परेति ॥

मृषावादश्चेदारब्धः किमत्र नैभृत्येनेत्यनुरूपमेव न्यायभूषणस्य[१०], यदप्ययं लिखति, ननु स्वरूपेण बुद्धं व्यावृत्तमव्यावृत्तं वा? यदि व्यावृत्तं, तदाऽनर्थिका [१]व्यावृत्तिः। न चेद् व्यावृत्तं, वस्तुसङ्करप्रसङ्गः।

स्वरूपेणेति कोऽर्थः? किं व्यावृत्तिं विना, किं वा व्यावृत्तिव्यतिरिक्तेन[२] रूपेण? व्यावृत्तिं विनेति न युक्तम्, व्यावृत्तेर्नित्यधर्मत्वात्। यो हि धर्मः कदाचिद् भवति तेन धर्मेण विनाऽपि धर्मी व्यपदिश्यते[३], यथा कुण्डलेन विना पुरुषोऽकुण्डली, नाशात् प्रागनष्ट इति। न च वस्त्वन्तराद् व्यावृत्तिविहीनं वस्तु कदाचित्, यथा न गोत्वविहीनोऽस्ति गौः, नौष्ण्यविहीनोऽग्निः।

अथ व्यावृत्तिव्यतिरिक्तेन रूपेण[४] व्यावृत्तमित्यभिप्रेतम्? तदिष्टमेवास्माकम्, भेदाभ्युपगमात्। न चैवं व्यावृत्तिरनर्थिका। यदि व्यतिरिक्तेन धनेन धनी पुरुषः, किमेतावता धनं व्यर्थं भवेत्? तस्मादितरेतराभावोऽपि भावादर्थान्तरमेवेति, तदपि विधूतम्[५]। यस्मात् न खलु वस्तुसतीं व्यावृत्तिमनुमत्यान्यदर्थं चोद्यमेतत्। किं तु व्यावृत्तप्रत्ययेऽसामर्थ्यवैयर्थ्याभ्यामनुपयोगान्न तद्धनेन[६] व्यावृत्तिसिद्धिरिति चोद्यार्थः। तत्र[७] प्रथमपक्षे वैयर्थ्यमुक्तम्। द्वितीये [८]त्वसामर्थ्यमभिप्रेतम्।

अयं चार्थः, यदि व्यावृत्तस्वभावो भावः स्वहेतोरुदयवान्, तदा तदुपजनितया प्रतीत्या व्यावृत्त[९] एव प्रत्येतव्यः। [१०]व्यावृत्तिलक्षणमर्थान्तरं विनापि न हि व्यसनमेवैतदर्थस्य प्रमाणेन वा केनचिदवधारितम्, यत्[१] मया प्रत्ययान्तरसाकल्येऽपि तामन्तरेण न स्वज्ञानमुत्पादनीयमिति। नापि ज्ञानस्य तदुत्पादितस्य तया विना तदग्रहणग्रहो[२] नाम। तदियमनर्थिका व्यावृत्तिः[३] व्यावृत्तप्रत्ययस्यान्यथापि संभवान्न कल्पनीया।

---

८. कोपिका आ ९. नाम्ना° आ १०. दूषणस्य आ १. °नधिकारव्या° अ २. व्यावृत्तिरिक्तेन अ ३. °दीश्यते आ ४. रूपेण स्वरूपेण आ ५. विधुत° अ, विप्लुत° ६. तद्बलेन अ ७. तत् अ ८. द्वितीये तु अ ९. प्रवृत्त्यावृद्धया आ १०. न क्षण° र १. यदिति नास्ति अ २. चिरादग्रहो अग्रहण° अ ३. व्यावृत्तिरिति नास्ति आ, तदेव योजितम् अ

अथ न [56b] स्वहेतोर्व्यावृत्त उत्पन्नो भाव उत्पन्नश्च। ततः सङ्कीर्णस्वभावस्योत्पन्नस्य व्यावृत्तिरेवासती कथं [४]व्यावृत्तप्रत्ययमुत्पादयेदित्यसमर्था[५]। एवं च चोद्यक्रमे सिद्धामेव व्यावृत्तिमवस्थाप्य व्यावृत्तेर्नित्यधर्मत्वादि कुत्रोपयोगि ? न ह्यनेन प्रथमपक्षोक्तवैयर्थ्यपरिहारवार्ता। तथा हि व्यावृत्तप्रत्ययसामर्थ्याद् व्यावृत्तिः कल्प्यते[६], स च व्यावृत्तप्रत्ययोऽन्यथासिद्ध इति किमस्याः कल्पनयेति चोद्ये व्यावृत्तिर्नाम नित्यो धर्मः, अतस्तेन विनेति न शक्यमित्युत्तरवादिनः किं केन सङ्गतम्[७] ? यावता व्यावृत्तिव्यतिरेके स्थित्यैव व्यावृत्तप्रत्ययस्यान्यथानुपपत्तिवादस्यायं नावसरः[८], तद्विधूय सिद्धान्तमात्रकथया किमत्र ?

न च विनाशात् प्रागनष्ट इत्युदाहर्तुं युक्तम्, विनाशस्य भेदासिद्धेः। न व्यावृत्तिविहीनं वस्त्वित्यपि व्यावृत्तेस्तात्त्विकाभेदे[९] सिद्धसाधनम्[१०], [१]भेदासिद्धिः दृष्टान्तेऽपि अतद्व्यावृत्तिरूपयोर्गोत्वौष्ण्यत्वयोर्गवाग्निभेदेन दर्शयितुमशक्यत्वात्।

यच्चात्रैव पक्षे द्वितीयं विकल्पितमनेन, किं वा व्यावृत्तिरिति व्यतिरिक्तेन व्यापारेणेति, तदनभ्युपगमेनैव गतम्, स्वरूपेण[२] व्यावृत्तं बुद्धमिति विश्वस्माद् व्यावृत्तरूपं बुद्धमित्येतस्यार्थस्य विवक्षितत्वात्। न चाद्यवैफल्यपरिहार इत्युक्तम्। नापि धनिदृष्टान्तेन भिन्नव्यावृत्तिसिद्धिर्नियमहेतोरभावात् धनवद्वा[३] संयोगसमवायानपेक्षो, विशेषणान्तरस्य दण्डपाण्डरत्वादेरपि संबन्धव्यवहारः स्यात्। तस्मान्नेतरेतराभावो नाम कश्चित्, स्वहेतोरेव परस्परव्यवच्छिन्नस्योत्पत्तेः।

एवं कालान्तरव्यवच्छिन्नस्यापीति। न विनाशहेतुना किञ्चित्। तदयम्[४],

अपेक्षेत[५] परः कार्यं यदि विद्येत किञ्चन[६]।

[प्र. वा. ३. ५७६]

इति सिद्धो न्यायः। किमत्र पिष्टपेषणेन ?

नाशोऽस्य[७], जात इति नान्यपदार्थभावो[८]

भावः स्वकालनियतस्तु स नान्यदाऽस्ति।

---

४. व्यावृत्तमुप्र° अ ५. °त्यसमर्थाः र ६. कथ्यते आ ७. किह्वोनसंहृतं आ ८. °स्यानवसरः आ ९. व्यावृत्ते ता° आ १०. °सिद्धं साधनं अ १. भेदे असि° आ २. स्वरूपेणे आ ३. ध्वनिवद् आ, आ ४. तदन्य° आ ५. अपेक्षितः अ ६. किञ्चनेह अ ७. अन्य अ ८. °भावा आ

नास्त्यन्यदेत्यपि [9]परोदय एव यस्य
तस्य [10]प्रसज्यविपयास्तमये प्रसङ्गः ॥

यत्पुनरयं प्रसज्यपर्युदासयोर्भेदसाधनार्थमभावभावव्यवहारविषयत्वेन विभागं प्रत्यपीपदत्, तद् भवतो भापैव भावान्यतेत्यत्रान्तरे तिरस्कृतम्। न हि न्यायसिद्धस्य समयमात्रेण बाधनं साधु। तथा हि,

यज्जायमानमुपलक्षितमर्थकारि
भावात्मना व्यवहरन्ति तदेव सन्तः।
सोऽयं न यः समयतो यदि भङ्गभागी[1]
भावानवस्थितिरियं न च पर्युदासः ॥

यदा हि [2]मूर्तामूर्तसप्रतिघाप्रतिघसनिदर्शनानिदर्शनदूरासन्नस्थूलसूक्ष्मादिप्रकारेषु कश्चिद्[3] भावमभावं वा कश्चित्[4] स्वेच्छावशादभिदधीत। विन्ध्यवन्ध्यासुतादिकम् अभावभावं वा[5], तदायातमव्यवस्थानं भावस्य। न चैवं क्षतिः। स्वसमयानुरोधात् अभिधानभेदसंभवात्। [57b] केवलं किमिदानीं पर्युदस्तं वस्तु व्यवह्रियताम्? तस्मात् समयानुरोधादभावशब्दाप्रवृत्तावपि एकस्य कारणापेक्षसंभवस्योपालम्भभाजो वा, अन्यस्तादृगेव पदार्थः पर्युदस्तो वक्तव्यः[6]। तत्कथमभावशब्दसङ्केतमात्रेण पर्युदासव्युदासः? यदि पुनरुपलम्भसंभवावप्यभावाभिमतस्य समयमात्रतन्त्रावित्युच्यते, तदा वास्तवः प्रसज्यप्रतिषेध एवायं न पर्युदास इति न दोषः। अनेन तु न्यायविन्मानिना न्यायागतं तमेव प्रकारमुल्लङ्घ्य [7]संभवोपलम्भार्थक्रियाशक्तयश्चाभावस्य भाविक्यः अभ्युपगन्तव्याः। पर्युदासप्रत्यनीकप्रसज्यप्रतिषेधता चेति किमतोऽपि व्यसनमनवसानमन्यत्?

यच्चायमाह, न ह्युत्पत्तिर्भावस्य लक्षणं येन निवृत्तिर्भवन्ती भावः स्यादनुत्पत्तिमतामप्याकाशादीनां[8] भावत्वादिति। तत्रापि,

पाणिनेर्न[9] नदी गङ्गा यमुना च स्थली नदी।
अभवन्नपि भावोऽस्य न भावोऽस्य भवन्नपि ॥

९. °दित्यपि अ १०. प्रज्य आ १. भङ्गभङ्गे अ २. °सप्रतिष्ठाप्रतिघ° आ ३. कश्चित्कश्चित अ ४. कश्चित्कश्चित् अ ५. °मभावमभावम्वा अ ६. पर्युदस्तो वक्तव्यः इति नास्ति र ७. °पालम्भ° अ ८. °मत्ता° र ९. प्राणि अ, र

नरः स्वातन्त्र्यमापन्नो यदिच्छति करोति तत् ।
उभयत्र समानोऽयं न्यायो न्यायविदां मतः ॥

नञीसंज्ञानिषेधेऽपि नावगाहस्य बाधनम् ।
[10]भावसंज्ञानिषेधेऽपि पर्युदासो न बाध्यते ॥

उपलम्भार्थशक्तस्य कारणापेक्षजन्मनः ।
सर्वस्य पर्युदस्तत्वं वस्त्वन्तरमपेक्ष्य हि ॥

अभावसंज्ञाविरहे पर्युदासव्यवस्थितिः ।
न क्वापि सिध्येत् सर्वत्र संज्ञायाः[1] सुलभत्वतः ॥

यचेदं स्वरूपनिवृत्तिलक्षणा[2] चोत्पत्तिः प्रध्वंसस्येष्यते, न तु प्रागसतः सत्तासंबन्धलक्षणा कारणसमवायलक्षणा वेति, तत्रापि,

स्वरूपस्यैव निवृत्तिः सर्वत्रोत्पत्तिरुच्यते ।
प्रक्षिप्य[3] समवायं तु विमूढैः सापि हारिता ॥

समवायस्यैवाभावात् क्व सत्तासंबन्धादिः । अस्तु वा सोऽपि, तथाप्यपूर्वात्मलाभ एवोत्पत्तिः [4]धर्माधर्मान्तराणां तु भावाभावौ न [5]साधकबाधकौ । किं च कार्यस्याप्यभावस्य न प्रागसतः सत्तासंबन्ध इति कोऽर्थः ? किं प्रागसन्नेव न[6] भवति ? अथ पश्चादपि न सत्त्वमस्य ? उभयथापि कुतः कार्यत्वमाकाशाकाशकुशेयवत्[7] ? प्रागसतः सत्त्वमस्तु पश्चान्न तु सत्तायोगः ।

ननु सत्त्वं सत्तेत्यनर्थान्तरमेतत् । योगश्च सम्बन्धः । तत्र सत्त्वयोगोऽस्ति न सत्तायोग इति कोऽप्ययं न्यायः ? अथ सत्ता महासामान्यमुच्यते, तदभावेऽपि स्वरूपसत्त्वमात्रेण पश्चात् सन्नित्युच्यत इति चेत् ? तत्तर्हि स्वरूपसत्त्वं यदि तात्त्विकम्; तावतैव कार्यत्वं किमपरेण कर्तव्यमन्यस्यापि कार्यस्य ? अथौपचारिकम्, तदा नाशस्यापि कुतः कार्यता ? न हि बन्ध्यातनयस्य पश्चाद्भावोपचारे कार्यता वास्तवी नाम ।

१०. अभाव आ १. संशयाः आ २. निवृत्तिर्लक्षणा आ ३. प्रक्षेप्य अ ४. धर्मा॰ इति नास्ति अ ५. साधकासा॰ अ ६. नकारो नास्ति आ ७. ॰माकाशाकुशे॰ आ

यच्चेदं निवृत्तेरप्यादिमत्त्वमित्युच्यत[8] इति, तदापि नाधिकं किञ्चित्। सा च [9]निवृत्तिरभावरूपेणैव [57b] आदिमतीति पुनर्न[10] सहामहे, कार्यान्तरसाधारणतायाः प्रतिपादनात्। आदेशमात्रमेतत् भूभुजामेव शोभते। भावोपलम्भकाले[1] तद्रूपानुपलम्भादित्यपि पश्चाद्रूपोपलम्भे शोभामाभजति। स च नास्ति, कुम्भासंभवविकल्पमात्रं तु सङ्केतानुरोधेनेति दर्शितम्।

अर्थी पटार्थक्रियया घटस्यानुपलम्भने।
न प्रावर्तत इत्यस्ति नान्यद्दक प्रतियोगिनः॥

[ ]

तदलमस्य प्रक्रियामात्रमवकरं निरूप्य, स्वयमूह्यदोषत्वात्।

यच्चाह, नाप्यर्थक्रियाहेतुत्वमात्रेण भावत्वप्रसक्तिः, त्वदुक्तभावलक्षणानभ्युपगमादिति, तत्रापि पर्युदासत्वानतिक्रमादित्युक्तम्। तस्मान्न भावादर्थान्तरमभावः।

यत्पुनराह, त्वयापि भावाभावयोर्लक्षणभेदोऽभिहितः। तत् कथमेकत्वम्? सर्वार्थानां लक्षणभेदादेव भेदव्यावस्था, ततोऽपि चेन्न भेदव्यवस्थितिर्न कस्यचित् कुतश्चिद् भेदसिद्धिरित्यद्वैतप्रसङ्ग इति। तदप्यपर्यालोचनफलम्। यो हि नश्वरस्वभाव एव नाशो नश्यतीति बहुलाधिकारात्[2] कर्तरि घञ्, तद्धर्मताकल्पनया वा [3]तद्वाचकेनाभिधानात्। तन्नाशं भावस्वभावमिच्छामः[4], तमेवाश्रित्य,

सत्तामात्रानुबन्धित्वान्नाशस्यानित्यताध्वनेः[5]
[प्र. वा. ३. ५६५]

इत्युक्तम्।

तथा चानेनैवोत्थापितम् भाव एव क्षणस्थितिधर्मा नाश इति तस्याभेदमेव ब्रूमः। नशनं नाश इति प्रसज्यात्मा द्विधा व्याकर्तव्यः, तत्त्वतस्तावद् वस्तुत्वविरहात् तत्त्वान्यत्वशून्य एवासौ भावो न भवतीति तद्भावनिषेधमात्रपात्रं तु [6]खरशृङ्गादिवत्। [7]संवृत्तौ तु यथा कालभेदेन विकल्प्यमानः कादाचित्क इति प्रतिभाति[8], तथा [9]सर्वोपाख्याविरहरूपतया भावाद्भिन्न इव प्रतिभातीति नावस्तुत्वेपि [10]लक्षण-

---

८. °मित्युक्त° आ ९. °भावरूपे अ १०. °मतीभिर्नपुन आ १. काले आ २. पा. सू. ३. ३. १२२ ३. तद्वाचके° आ ४. स्वरूप अ ५. °नाशस्या° ६. खरशृङ्गा° आ ७. संवृतो यथा आ ८. इवाभाति आ ९. सर्वोपाख्यो° र १०. क्षणभेदे आ

भेदाख्यानविरोधः। एवं च सति संवृत्त्या लक्षणभेदे भावाभावयोर्भेदस्येष्टत्वात्। तत्त्वेन च लक्षणैकताविरहे भावस्य तेनैक्यनिषेधात् कथमद्वैतप्रसङ्गोपालम्भः? नश्यतीति तु[1] नाशो [2]नश्वरस्वभावः कथं भावात्मतां परिहरेत्? स च सहेतुको भावहेतुनैव, न तु परस्तस्य हेतुर्भावस्वभावत्वात्। तदयं यत्,

भावे ह्येष विकल्पः स्याद् विधेर्वस्त्वनुरोधतः।
[प्र. वा. ३. ५७४]

इत्यत आह, तदपि स्ववचनविरोधादयुक्तम्। त्वया हि भावाभावयोस्तादात्म्यमुक्तम्[3], तच्च तत्त्वानभ्युपगमे विरुध्यते। तत्त्वाभ्युपगमेऽपि लक्षणभेदो विरुध्यते। यस्य हि लक्षणभेदेन भेद उच्यते तस्य कथं तत्त्वातत्त्वनिर्वचनीयत्वमिति? तत्सुखैधितः[4], क्रीडनशीलतया कृतं कृतं पुनः कारयति। न खलु [5]भावप्रच्युतिस्वभावेनाभावेन[6] भावस्य तादात्म्यं ब्रूमः। यस्तु न भवतीत्यभाव [7]उत्तरक्षणापेक्षया तेन कस्तादात्म्यविरोध इति नाशविमर्शेन गतमेतत्। [58a] एवमन्यदप्यनधिकमवधीरितमस्य वेदितव्यम्।

यदप्याह, [8]नन्वभावस्य सर्वधर्मविवेकलक्षणत्वादुत्पत्तिर्न [9]युक्ता। सा हि[10] भावधर्म एवेति- न, ज्ञेयत्वादेर्भावधर्मस्याभावेऽपि सद्भावादित्यादि, तदप्यसारम्। न हि साधारणधर्मयोगमात्रेण विरोधप्रतिनियतानामपि धर्माणामवकाशः, हुताशनस्यापि शैत्यप्रसङ्गात्, अभावस्यैव वा सर्वत्र सद्भावप्रसङ्गात् ज्ञेयत्वादीनामपि[1] निषेधात्। उत्पत्तिश्चाभूत्वा भवनरूपतया भावधर्म एवेत्यापादितमेव।

यत्तु स्वयं न भवतीति, कोऽर्थः? किं स्वयमेवायमभावः? किं वा स्वयमभवनं करोति? उत भवनं[2] न करोति? अथ किञ्चिन्न करोति? स्वयं वा न किञ्चित्? किं वा स्वयमभावोभवतीति [3]विकल्प्य दूषणमारब्धम्, तदपि मर्मच्छेदिकाजनितार्तरवप्रायम्।

तत्र हि स्वयमिति हेत्वन्तरमनपेक्ष्य स्वहेतुना क्षणनियतस्थितिर्जनित इति क्षणान्तरेण न[4] किञ्चिदिति प्रकटित एवार्थः। ततोऽतत्स्वभावः पश्चादसौ कुतो

---

१. °श्यती तु आ २. नश्वरः अ, ३. त्वया...तादात्म्यमुक्तमिति प्रान्तयोजना अ ४. सुखोदितः र ५. भाव° इति नास्ति आ ६. स्वभावो° आ ७. उतम° आ ८. ननु अ ९. युक्तं आ १०. स हि आ १. अपीति नास्ति आ २. उद्भवनं आ ३. विकल्पदूषण° आ ४. °न्तरे आ

जातः ? स्वहेतोर्हि तत्स्वभावोऽतत्स्वभावाद् व्यावृत्त उत्पन्नः। स कथं पश्चादप्यतत्स्वभावः स्यात् ? न हि लघुस्वभावाद् व्यावृत्तः पाषाणः कदाचिल्लघु स्यादिति। तदपि प्लवत[5] एव। यथा हि देशान्तरस्थितिव्यावृत्त उत्पन्नः, तथा क्षणान्तरस्थितिव्यावृत्तोऽपि कथं क्षणान्तरस्थितेरवकाश इत्युक्तप्रायम्।

नन्वसदिति न तदेव वस्त्वभिधीयते, विधिविषयत्वात्। [6]अन्यथाभावशब्दाभिधेयं प्रतीतिगोचरापन्नं त्वया नेष्टम्, ततो निर्विषयः प्रतिषेधो विसंवादीत्यप्रतिषिद्धं वस्तु स्यात्। नैवम्, प्रच्युतेरपि[7] प्रतिपाद्यत्वात् कुतो निर्विषयत्वम् ? नापि विसंवादः, भावस्थितौ हि प्रतिषेधस्य विसंवादः स्यात्। स च नास्ति, प्रच्युतेः प्रतिपादितत्वात्। न चावस्तुनः सङ्कल्पविषयताया अप्यनुपपत्तिरित्युक्तमेव।

यत्पुनरर्थान्तरविषयोऽपि[8] प्रतिषेधः कथं वस्तुप्रतिषेधक इति चेत् ? तदभावाभिधायी[9] कथं न प्रतिषेधक इत्युक्तम्, तदपि प्रत्युक्तप्रायम्। तदभावो हि न प्रसज्यात्मकोऽर्थान्तरस्वीकारात्, पर्युदासमात्रत्वे तु नार्थान्तरनिवृत्तिरवश्यमर्थान्तरभावेन विभाविता भवति। विरोधस्तु नास्तीति प्रतिपादितम्। सत्यपि वा विरोधे[10] किं विरुद्धद्वाराश्रयणेन ? साक्षादेवाभावप्रतिपादनमस्तु।

स्यादेतत्, वचसाभावप्रतिपादने कृते संशयावकाशः, विरुद्धद्वारेण तु निश्चय इत्यसत्। विरुद्धप्रतिपादनमपि हि वचसैव वर्तते। तद् यथा वचनमात्रप्रतिपाद्ये हुतभुजि नेह शीतमित्येव साधु, न तु नात्र शीतं वह्नेरिति तद्वदेतदपि ॥

अथान्यश्चिन्त्यते,

> नालं निषेधविषये [58b] यदि पर्युदस्त-
> मन्योपलब्धिरितरस्य[2] कथं निषेद्धी।
> नष्टो घटः स इति वा भवतो विकल्पा-
> कारः कथं घटनिषेधनमादधाति ॥

अत्रोत्तरं,

> नेहास्त्यसाविति विकल्पमभिप्रसूते-
> रन्यो निषेधविधिरन्यधियो न तावत्[4]।

५. प्लवत् आ ६. अन्यथा आ ७. प्रस्तुतेरपि आ ८. °विषयेऽपि भ ९. °दभावोभि° आ
१०. विरुद्धद्वारा° आ २. °रितस्य भ ३. °विति इति नास्ति भ ४. न भवेत् आ

"नाभावकल्पनधियोऽप्यविशङ्कितायाः
मानाङ्गभावमवधूय निषेधकत्वम् ॥

सतो[७] विनाशनं नाम नोपपन्नमितीरितम् ।
नासतः[८] करणे शक्तिरनिष्टा वस्तुनः सतः ॥

ततः[९] प्रतियोग्यनुभवः प्रतियोग्यन्तरविरहविकल्पमुत्पादयेदिति नेहानुपपत्तिः । न च तन्मात्रादन्योऽप्यनुभवस्य परनिषेधनव्यापारः । तस्यापि विकल्पस्य नष्टो घट इत्येवमाकारस्य[१०] वा निःशङ्कमनादौ तदर्थक्रियान्वितया[१] प्रवृत्तिव्यावृत्त्यवस्थायां[२] वा [३]निमित्तभावान्नान्यनिषेधकारित्वम् । एवं वचनस्यापि[४] तद्विकल्पोत्पादनद्वारकमेव निषेधसाधनत्वं द्रष्टव्यम् ।

एतेन अथ नास्तीति ज्ञानमेवानुपलम्भः, तदपि वस्तुसत् कथं वस्त्वन्तरप्रतिषेधस्य विषयः स्यादित्याद्यवकरपरिहारः सिद्धः ।

न च नास्तीति ज्ञानमनुपलम्भोऽस्माकं, किं तु प्रतियोग्युपलम्भो निर्विकल्प एव, नास्तीति ज्ञानं तु [५]मनोव्यवहाररूपं तत् फलमेव । किं चैवंविध-निर्बन्धेन वस्तुचिन्तायामनुपयोगात् ? [६]यदप्यस्य नास्तीति ज्ञानविषयनिरूपणम्, तदप्यसदिति निरूपणेन गतार्थम् । यत्तु [७]तद्विविक्तभूतलादेर्विषयत्वमाशङ्क्योक्तम् न भूतलादेर्वस्त्वन्तरत्वात्, न च वस्त्वन्तरे प्रतिपादिते[८] प्रतीते [९]वाद्यघटादिवस्त्वन्तरम-भूतमिति[१०] प्रतिपादितं प्रतीतं वा भवति । एवं हि वस्त्वन्तरं हि नाश इत्येतस्मिन् मते यद्दूषणमुक्तं तत्तु स्वयमेव परिहृतं स्यादिति । तदप्यसंबद्धम्, केवलं हि भूतलमस्य विषय इति कथं न घटादेरभूतत्वबोधः, येव हि घटाद्यपेक्षया[१] कैवल्यावस्था[२] प्रदेशस्य स एव घटविरहः । वचनादिनाप्येवं केवलं[३] प्रदेशप्रतिपादने कथमिव न प्रकृत-घटाद्यपेक्ष्य [४]भावप्रतिपादनम् ? एवं यदि कर्परादिवत्[५] केवलस्य नाशस्याप्युपलम्भः स्यात्, भवतु घटो निषेधप्रतीतिः घटनिषेधस्तु केन [६]कृतः ? पूर्वं सन्नेव हि घटाभावः तद्द्वारेण प्रतिपत्तव्यः, न हि प्रदेशेन घटाभावो जन्यते, किं तु सन्नेव घटाभावः तद्द्वारेण निश्चेतव्यः यदि हि घटोऽपि न[७] स्यान्न प्रदेशैकरूपनियता प्रतीतिरिति । एवं

५. °कल्पा° आ ६. °शङ्कययाना° अ. नाद्धृतभाव° आ ७. सत्ता° अ ८. नाशतः अ ९. तत् आ १०. °साकारस्य आ १. °र्थितया आ २. °व्यावृत्ता° आ ३. °भावान्य° अ ४. वचनमपि आ ५. माना° आ ६. यद्य° आ ७. °विभक्त° आ ८. वस्त्वन्तरप्र° अ ९. प्रतीते वाद्य° नास्ति आ १०. °न्तर इति नास्ति आ १. °द्युपेक्षया अ २. °कैवस्था° आ ३. केवलमिति योजितम् अ ४. पटाद्यभाव° आ ५. कर्परादिवत् अ, कर्परवत् आ ६. हृतः अ ७. नकारो नास्ति अ

यथा यदि घटोऽप्यापि[८] स्यान्न कर्परैकरूपनियता प्रतिपत्तिस्तथा न नाशैकरूपनियता प्रतिपत्तिरिति बलाद् घटाभावनिश्चयो भवतु यदि पूर्वं घटाभावः स्यात्, स च नास्ति। तद्भावेऽपि किं नाशेन, कपालेनैव प्रतियोगिना गतार्थत्वात्? न च [९]नाशप्रतीतिरप्यस्तीत्युक्तम्, तस्मात् सतः [ 59a ] प्रध्वंसने सद्रूपेणासद्रूपेण वा दूषणमुक्तं कथं सद्रूपेण सतोऽसतो वा निश्चये[१०] कर्तव्ये स्यादिति न समानः परिहारः।

यस्त्वाह, न च तद्विवेकाप्रतीतौ[१] तद्विविक्तग्रहणं भवति। तद्विवेकश्च न भूतलादिस्वरूपमेव, विशेषणत्वादिति, तत् न्यायबहिष्कृतम्। विशेषणविशेष्यभावोऽपि सङ्कल्पारूढे रूपे। स च,

भिन्नं भावमभिन्नमाकलयति व्यक्तं तदन्यात्मना
जिष्णु स्फारकदम्बडम्बरमिव स्वांशैरनंशं [२]जगत्।
किं च स्वाकृतिमात्र एव [३]विषयव्यामोहदोहक्षमः
सङ्कल्पः परमैन्द्रजालिक इव [४]व्याधूतभूतस्थितिः॥

यथा हि भिन्नं भावमेकीकुर्वन्नुत्पद्यते, तथाभिन्नं भावं [५]भिन्नमाकलयतीत्यप्यर्थः, यथा शिलापुत्रकस्य शरीरम्, [६]शरीरे करचरणादयः, लम्बकर्णो देवदत्त इत्यादि। तस्मात् कल्पनाधीनो विशेष्यविशेषणभावोऽभिन्नोऽपि भावे भेदविवक्षापेक्षव्यवहारः कथं [८]भेदनियतमात्मानमातनोति? स्वलक्षतिरयं राहोः शिर इत्यादिनिर्देश इति चेत्? यदि सत्यमेतत्तदा भिन्नस्य साक्षादनुपलम्भादेव। इयं च गतिर्घटविवेकाख्यपदार्थान्तरापेक्षयाप्यस्ति, तथापि नेति कोपपानं प्रमाणम्। तस्मात् स [९]घटाभप्रदेश एव ध्ययमन्यो घटविविक्तो न तु घटविवेकेन भिन्नेन विशेषित इति।

तस्माद् यद्यपि किञ्चिद् विशेषणं भिन्नमेव दृष्टं वाह्यादि, तथापि नायं नियमः, विपर्ययस्यापि दर्शनात्, संभावनाच्च बाधकादर्शनात्। विवक्षापरतन्त्रता तु [१०]दृष्टान्तसंभावनाबीजम्। तदेवं न वाच्यं विशेषणविशेष्यादर्थान्तरत्वाद् वाह्यादिवदिति। किं च,

व्याप्तं भिदा यदि विशेष्यविशेषणत्वं
[१]भेदात्ययान्ननु तदा तदभाव एव।

---

८. घटोऽप्यपि अ ९. नाशयतीति आ १०. निश्चयाय आ १. °प्रतीतो आ २. शरीरं आ ३. दाद° र ४. भूत° इति नास्ति आ ५. °माकमति आ ६. शरीरकर° अ ७. °पेक्ष्य आ ८. °नियमा° आ ९. घटात् अ १०. दृष्टान्त इति नास्ति आ १. °त्यया° आ

देशो विशिष्ट इति नास्ति यथा तथेद-
मप्यस्ति [2]दृश्यमतभेददृगस्ति नेति ॥

न च दृश्यानुपलब्धेः प्रमाणात्मनो विशिष्टव्यवहारमात्रेण स घटादन्य इत्यर्थनिष्टेन[3] बाधः, किं तु तथैवास्येति[4]।

यच्चाह, अभेदेऽपि न प्रमाणं किञ्चिदस्तीति, तदनुन्मीलिताक्षस्यैव[5] साम्प्रतम्, अन्यथा प्रत्यक्षोदयस्य निवारयितुमशक्यत्वात्।

यच्चेदम् यदि च घटो नास्तीत्यस्य [6]संज्ञानस्याभिधानस्य च भूतलमेव विषयो न च ततोऽन्यो घटाभावः, तदात्र घटोऽस्तीत्यस्यापि भूतलमेव विषयः स्यात्। घटोऽपि न[7] ततोऽन्यः कल्पनीयः, तथोत्पादेन विशिष्टं भूतलमेवोभयत्राप्यस्तु। न चैतद्युक्तम्। यस्माद् [8]घटसद्भाववद्घटासद्भावेऽपि भूतलतोऽन्यः प्रतिभाति, एवं हि विधिप्रतिषेधयोः प्रयोगोऽप्यर्थवानेव भवेदिति तद्वरं जनुषान्धो, न पुनरयं [10]दुर्नीतिदग्धबुद्धिः। अभाववत् किल कलसोऽपि कल्पनामात्रविषयो न लोचनगोचर इति किमत्र भ्रमः? सकुम्भमुद्भूतं भूतलम् [59b] इत्यपि सहितोत्पत्तिरापद्यते, न[9] रूपसङ्करः, भेदोपलम्भस्य भिन्नार्थक्रियानियोगस्य[2] च[3] दुरपह्नवत्वात्। तद्वन्नाभावोऽपि भूतलकपालादिभ्यो भिन्नः प्रतिभातीति चिन्तितमेव। किं च,

किमिह कलसध्वंसो दृश्यो न वेत्युदितो जनो
वदतु समयस्मृत्या दृष्टिं [4]विमर्शपराङ्मुखः।
कलयसि पुनः कांस्कानर्थानिहेति परं[5] यदि
प्रदिशति धरादिभ्यः सभ्यस्त्वमेव वयं न तु ॥

ततो विधिप्रतिषेधप्रयोगयोरपि कानुपपत्तिः, अवस्थाद्वयप्रतिपादनात्? तथा च[6] जालान्तरेण प्रविष्टालोकस्याभावो भिन्नदेशो भासमानः किमपह्नोतुं शक्यः? केवलम्,

विच्छिन्नः स्फुटनीलकान्तिकलितः तावत्प्रदेशस्थिति-
भिन्नार्थत्वविनिश्चयात्तु स इति [7]प्रख्यातिनामान्तरः।

---

२. दृश्यसत् र ३. °मिष्टेन आ ४. किन्त्वनयेवा आ ५. °तार्थस्यै° अ ६. ज्ञान°.आ ७. नेति नास्ति आ ८. °सद्भाववद् घटा° इति योजितम् अ ९. °व भ° नास्ति आ १०. दुर्णीति° आ
१. शङ्करः आ २. क्रियादि° आ ३. चकारो नास्ति आ ४. विमर्श° अ ५. °निहेपरं आ
६. तथात आ ७. प्रख्यात° आ

आलोकस्य यथा तथान्यविरहोऽप्यात्मस्वरूपस्फुटी-
कारे किं कलसः [8]किमातपभिदाध्यक्षेति[9] चित्रं महत् ॥

न हि [10]सूक्ष्ममीक्षमाणेऽप्यत्यन्तविचित्रस्य[1] भावराशेरभावानां संबन्धि-भेदाद्भेदोपचारमन्तरेण सूक्ष्मोऽपि स्वभावभेदस्तम इवोपलम्भगोचरः। तद्वरमालोक-विवेकोऽपि सकलान्यविवेकवदनालोक्य एवास्तु[2], तमस्तु वस्त्वेवेति गृहाण। किमङ्ग कष्टसंकटे सुखिनमात्मानमावेशयसि[3] ?

ननु निमीलिताक्षस्यापि [4]तादृङ्नीलप्रतिभासः संभवी, न च नीलमर्थमुप-स्थापयतीति। तदयुक्तम्, कृष्णवर्णान्तरस्य सर्वस्याप्यभावप्रसङ्गात्। अन्यादृशमेतत् कृष्णान्तरं कलयापि[5] निमीलिताक्षप्रतिभासादिति चेत्? अन्धकारोऽपि तर्हि [6]पुनः परिमितदेशो विचित्रसंस्थानः प्रतिभासमानः स्फुटतरं निमीलिताक्षप्रतिभासाद्भिन्नरूप एवानुभूयते, एकरसश्च निमीलिताक्षप्रतिभासः, अन्धकारस्तु कदाचित् किरणपरमाणु-निकरसङ्करकाले विरलरूपः, अन्यदा घनो घनतरो वेति कथं साम्यम्? कृष्णतामात्रं पुनरन्यत्रापि साधारणम्।

अन्यत्र [7]नीलवर्णे वस्तुनि स्पर्शान्तरसहचारः [8]अवश्यम्भावीति चेत्– न, इन्द्रनीलादिमणिकिरणजालके[9] तदभावात्। [10]अनुपलक्ष्यस्तत्र स्पर्श इति कल्पनं नान्धकाराद्भिनत्ति[1]। तस्माद्रूपमात्रमुभयमस्तु। न हि दृष्टेऽनुपपन्नं नाम। यदि चाश्रयोऽवश्यमृग्यः[2], मणिकुड्यादिकमस्त्येव। न च वस्तुव्यवस्थायां प्रत्यक्षप्रतिभास-माश्रयतः[3] प्रतिभासविप्लवेन व्यभिचाराभिधानं धीमतो धिनोति[4]। अन्यथा वात-पित्तक्षोभादिना ज्वलितस्तम्भादिसंदर्शनात्[5] सत्यमपि ज्वलितस्तम्भादिकमसत्यं स्यात्। प्रकृतिप्रत्यापत्तौ तु यथा तत्प्रतिभासाभावः, तथा नयनोन्मीलनकाले नीलाभावविप्लव-स्यापि। अन्धकारादर्शनं[6] तु स्वस्थावस्थापेक्षमेव यथोपवर्णितविशेषम्। तत्प्रति-भासस्य च प्रत्यक्षसंभवसामग्रीविघ[ट]ने विघटनं[7] गुण एव नापराधः, प्रत्यक्षस्व-भावताया इष्टत्वात्।

---

८. मातपे° आ ९. विपदक्षेति अ १०. स(सु?)सूक्ष्म° अ १. °माणोप्यन्ते° अ २. °लोकवास्तु आ ३. °शयति अ ४. °दृशोल° आ ५. कलयापि आ ६. तर्हीति नास्ति अ ७. °वर्णे° आ ८. °वरो आ ९. °जालके अ १०. °लभ्य (?) अ १. नार्थकरोतपितेति आ २. च अयो-ऽवश्यमृग्यः आ चाश्रयो अ ३. °भासता° अ ४. धीनोति अ ५. °दर्शनात् आ ६. °कार° अ ७. विघने विघटनं आ

[60a]यत्पुनरुक्तम्, कृष्णरूपस्यालोकेन विना [8]ग्रहीतुमशक्यत्वादिति। ननु पीतावदातादयोऽपि नालोकनिरपेक्षवीक्षणा[9] इति प्रदीपचन्द्रातपादयोऽपि[10] प्रकाशान्तरमपेक्षेरन्। विचित्रास्तु भावप्रकृतयः प्रमाणसमधिगता न पर्यनुयोगमर्हन्ति।

यच्चालोकवत् तदभावस्यापि ग्रहणे चक्षुरालोकान्तरनिरपेक्षमाचक्षाते[1] शङ्कर-न्यायभूषणौ, तदपि न किञ्चित्। निश्चायकं हि चक्षुर्विज्ञानमभावस्य न ग्राहकमवस्तुत्वात्, आलोकान्तरानपेक्षमिति[2] तु सिद्धमेव। न चैतत् वाच्यम्। यो हि भावो यावत्या सामग्र्या गृह्यते तदभावोऽपि तावत्यैवेत्यालोकग्रहणसामग्र्या गृह्यमाणं तमस्तदभाव एवेति, तमोग्रहणसामग्र्या गृह्यमाणस्यालोकस्यैव[3] तदभावता-प्रसङ्गेनानैकान्तिकत्वात्। घटपटयोर्वा समानग्रहणसामग्रीकतया [4]परम्पराभावत्व-प्रसङ्गः।

तस्मात् पदार्थान्तरे "रूपविवेकेन प्रतिभासमानमध्यक्षे[5] अन्धकारमालोक-विरोधि वस्त्वेव। विरोधित्वे[6] तर्हि कदाचिदालोकमप्यन्धकारः परिभवेदिति न चोद्यम्, अद्यापि प्रकृतिवादस्योपस्थापनात्, तूलानलादिवत्।

एतेन तमस एव[7] प्रतियोगिवस्तुन उपलब्धिरभावं सहसा व्यवहारयितुं प्रभवति। तमस्यालोकनिवृत्तावपीति[10] सिद्धे यथेहालोकस्याभावोपलब्धिस्तथा सर्वत्रेति शङ्करादीनां प्रत्याशाप्रत्यादेशो वेदितव्यः। अनुपलब्धिनिष्ठायां तु ज्ञानाकारेऽपि[1] प्रतियोगि-न्यभावसिद्धिर्दर्शिता। न च कश्चिद् दोष इत्यास्तां तावत्। तस्मान्नाभावो नाम किञ्चिद् यत्र कारणव्यापार इति स्थितम्।

एतेन त्रिलोचनोऽपि निरस्तः, यदाह- भावस्य व्यतिरिक्तां[3] निवृत्तिमनिच्छद्भिर-शक्या[4] स्वरूपनिवृत्तिरवस्थापयितुम्, या हि तस्य प्राक्तनी काचिदवस्था भवद्भिरर्थ-क्रियानिर्वर्तनयोग्या[5] दृष्टा सैव यद्युत्तरकालमप्यनुवर्तेत[6] तर्हि स्वरूपेणैव निवृत्तौ भावः[7] कथमवस्थाप्येत[8]? तदानीमयं नष्टो भावो, न सपदि[9] स्वहेतुप्रतिलब्ध-स्वरूपातिरेकिणी तस्य काचिदवस्थोत्पद्येत॥

८. गृहीतु आ ९. वीक्षणात् अ १०. °चन्द्रोपादयोपि आ १. °चक्षते आ २. °पेक्ष्य° अ ३. माणस्यैवालो° अ ४. परस्परत्वा° अ ५. पदार्थान्तररूप° अ ६. °मित्यध्यक्षे र ७. विरोधे अ ८. स्थानात् अ ९. महत्साध्य(?) अ १०. विवृत्ताव° आ १. °ष्ठायज्ञाना° आ ३. °काव्यनि° आ ४. °रशक्यस्व° आ ५. °निवर्तन° आ ६. वर्तते आ ७. निवृत्तो भाव अ ८. सुपस्थाप्यते र नष्टो नाम यदि अ

उत्पत्तौ सैव तस्यात्मान्तरं जातमित्यतादवस्थ्यम्[10]। अतादवस्थ्यमेवास्य विनाशं ब्रूमः। तादवस्थ्ये तादात्म्यमेव[1] स्वरूपेण निवृत्तौ भाव इत्यस्य शब्दस्य सत्यमर्थं न विद्मः। स्वरूपनिवृत्तिः खल्वियं भवन्ती भाव एव स्यात्, भावादन्या वा[2] ? तत्त्वे स्वकारणेभ्यो[3] निष्पन्नस्यान्यथानुत्पत्तावुत्पत्तेरारभ्य सत्त्वान्नित्यत्वं प्रसज्यते, अन्यथात्वे च तदेव निवृत्तेरन्यत्वमिति[4] प्रियमनुष्ठितं प्रियेण। तस्मादुत्सृज्य विभ्रमं नाशोत्पत्तिरेव नष्टत्वमभ्युपगन्तव्यम्।

तत् किमुच्यते नष्टस्यादर्शनम्, न च तस्य किञ्चिद् भवतीति ? अदर्शनं नष्टस्य पुनरभावदर्शनमेव। [5]आत्महानमभावोत्पत्तिमेव वयमङ्गीकुर्म इति सर्वमनवद्यम्।

अक्षणिकाः सन्तः, कारणवत्त्वात्। यत्कारणवत्तदक्षणिकम्, यथा भावविनाशः। कारणवन्तश्चेमे सन्तः। तस्मादक्षणिका इति। कारणवत्त्वस्य [60b] साध्यविपर्यये वृत्तिशङ्का[6] विनाशहेतुमत्त्वमेव[7] निवर्तयतीति [8]प्रसिद्धव्याप्तिकात्कारणवत्त्वादक्षणिकत्वसिद्धिरिति, व्यतिरिक्तनिवृत्तिमन्तरेणापि स्वरूपनिवृत्तेरुपपादितत्वात्। ततश्च क्षणादूर्ध्वं कुतः प्राक्तनशक्तावस्थास्थितिः ? व्यतिरिक्तोत्पादेऽपि[9] कथं नष्टो नाम ? अतादवस्थ्यमतादात्म्यं च जातमित्यस्याप्यक्षरस्य स्वहेतोरेवावस्थास्वभावान्तरविरहितोऽयं जात इत्येवार्थ उक्तः। तन्मूलकः अतादवस्थ्यादिव्यवहार[10] एव पश्चाद्भावी न तद्विकल्पप्रतिभासि [1]भावान्तरमिति न तत्त्वान्यत्वविकल्पावकाशः। तस्मादुत्सृज्य विभ्रमं [2]नष्टव्यवहारोऽस्तु, न तु तस्यान्यत् किञ्चित् जायत इति[3]। अदर्शनं चाभावदर्शनमेवेति संप्रत्येव प्रत्याख्यातमिति सर्वमनवद्यम्।

तस्मात् प्रसज्यात्मनोऽभावस्य नाशाख्यस्य हेतुरेव, न [4]कश्चित्। विनश्वरस्वभावे तु हेत्वन्तरशक्तिमपाकृत्य स्वहेतोरेव सामर्थ्यसमर्थनाद् जातमात्रमेव विनश्यतीति न क्षणान्तरमन्वेतीति सिद्धेः[5]। कारणवत्त्वस्याक्षणिकत्वेन व्याप्त्यसिद्धेरनैकान्तः। कृतकानामवश्यमन्तेऽपि[6] नाशाभ्युपगमे च विरोधः। प्रमाणगोचरस्य पक्षीकरणे प्रतिज्ञाया अनुमानबाधा। अगोचरे चाश्रयस्वरूपयोरसिद्धिरिति स्थितम्।

यत् पुनरयं भगवतो भाष्यकारस्य प्रत्यक्षतः क्षणभङ्गसिद्धिमनवगाहमानः अनुरूपविकल्पाभावोद्भावनमात्रसारेण विस्तरेण दूषणमभिलपन्नपभाषणप्रमादमाचरति,

१०. तावद्व° आ १. तादात्म्ये वा अ २. भावद्वादन्य वा आ ३. तत्त्वेभ्यलक्षणेभ्यो आ, तथेत्यलक्षणेभ्यो र ४. °रन्यथं° आ ५. °हानिम° अ ६. वृत्ति शङ्का आ ७. °सत्त्व° आ ८. प्रतिसिद्ध° आ ९. °त्पादे तु अ १०. °हारंय अ १. तावा° अ २. सृष्ट° अ ३. जायतेति आ ४. किंचित् आ ५. सिद्धेः इति नास्ति अ ६. मन्तेवि° अ

तदस्य चटुलचटुभावसुलभमनागमङ्गताविष्करणमात्रमिति[7] मन्तव्यम्। तथा हि प्रत्यक्षसिद्धं क्षणिकत्वमिति न प्रत्यक्षव्यवहृतम्[8], अनुरूपविकल्पानुदयात्। किं तु प्रत्यक्षगृहीतम्, व्यवहारस्त्वनुमानात्। तच्चानुमानं यदि स्वयं कुतश्चिल्लिङ्गात् प्रसाध्य प्रत्यक्षेण क्षणभङ्गग्रहणव्यवहारमादधीत सामर्थ्यात्[9], तदा न विशेषः[10] सत्त्वाद्यनुमानवत्। अर्थतो हि तदा प्रत्यक्षेण [1]क्षणभङ्गग्रहणमवस्थाप्यमानं स्वपौरुषपरामर्शाभावात् न प्रत्यक्षतः[2] क्षणभङ्गसिद्धिप्रसिद्धिं पुष्णाति। यदा तु प्रमाणान्तरसिद्धः मध्यक्षस्य [3]क्षणमात्रस्थितिग्रहणमाश्रित्य व्यवहारमात्रसाधनमनुमानं पृष्ठजविकल्पनिर्विशेषं तत्पौरुषमेव दीपयदुत्पद्यते, तदा प्रत्यक्षतः क्षणभङ्गसिद्धिरिति मुख्यमाख्यायते। तदयमर्थः,

क्षणित्वमध्यक्षधियाधिपातं[4]
पातं पुनर्न व्यवहारमेतत्।
अतः समक्षग्रहसाधनेन
प्रसाध्यते तद्व्यवहार एव॥

क्षणभङ्गेऽन्यदासिद्धे प्रत्यक्षेण ग्रहस्थितिः।
प्रत्यक्षेण ग्रहादस्य क्षणभङ्गव्यवस्थितिः॥

तथा हि,

यन्निर्भाति यथा तथा तदखिलं गङ्गाम्बु गौरं यथा
नोचेन्न[5] प्रतिवस्तु शक्तिनियमः सङ्कीर्णभावे भवेत्।
संस्काराः[6] प्रतिभान्ति चेन्द्रियमतिष्वेकक्षणस्थायिनः
स्यादेकक्षणवीक्षणादितरथा [61a] दृष्टस्त्रिकाली कलः॥

लिङ्गरूपोपपत्तिव्यवकीर्णोऽयं स्वभावहेतुप्रयोगः। अत्र च सपक्षे सद्भावान्न विरोधदोषः। द्वितीयपादेन [7]चानेकान्तपरिहारः। तथा हि, निर्भानं प्रत्यक्षे प्रतिभानमुक्तम्, ततो यावता[8] विशेषेण पदार्थः प्रत्यक्षे प्रतिभासमासादयति तन्नियमपरिहारेण यदि स्वरूपस्थितिमाभजेत तदा सर्वसङ्कीर्णमस्य रूपमिति सर्वत्र सर्वोपयोगादिप्रसङ्गः। अतः स्वरूपनियमे प्रमाणापेक्षायां[9] प्रवृत्तिनिवृत्तिकामस्य यद् यथा प्रत्यक्षे

७. °नास्य° अ ८. हृतम् आ ९. सामर्थ्यते र १०. तत्त्वाद्य° अ १. °भङ्गि° र २. प्रत्यक्षमतः अ ३. °स्थित° र ४. ऽविपातं आ ५. नोचेत्न° र ६. स्वकाराः? ७. नाने° अ ८. यावतो आ ९. °पेक्षय। आ

उत्पत्तौ सैव तस्यात्मान्तरं जातमित्यतादवस्थ्यम्[10]। अतादवस्थ्यमेवास्य विनाशं ब्रूमः। तादवस्थ्ये तादात्म्यमेव[1] स्वरूपेण निवृत्तो भाव इत्यस्य शब्दस्य सत्यमर्थं न विद्मः। स्वरूपनिवृत्तिः खल्वियं भवन्ती भाव एव स्यात्, भावादन्या वा[2] ? तत्त्वे स्वकारणेभ्यो[3] निष्पन्नस्यान्यथानुत्पत्तावुत्पत्तेरारभ्य सत्त्वान्नित्यत्वं प्रसज्यते, अन्यथात्वे च तदेव निवृत्तेरन्यत्वमिति[4] प्रियमनुष्ठितं प्रियेण। तस्मादुत्सृज्य विभ्रमं नाशोत्पत्तिरेव नष्टत्वमभ्युपगन्तव्यम्।

तत् किमुच्यते नष्टस्यादर्शनम्, न च तस्य किञ्चिद् भवतीति ? अदर्शनं नष्टस्य पुनरभावदर्शनमेव। [5]आत्महानमभावोत्पत्तिमेव वयमङ्गीकुर्म इति सर्वमनवद्यम्।

अक्षणिकाः सन्तः, कारणवत्त्वात्। यत्कारणवत्तदक्षणिकम्, यथा भावविनाशः। कारणवन्तश्चेमे सन्तः। तस्मादक्षणिका इति। कारणवत्त्वस्य [60b] साध्यविपर्यये वृत्तिशङ्का[6] विनाशहेतुमत्त्वमेव[7] निवर्तयतीति [8]प्रसिद्धव्याप्तिकात्कारणवत्त्वादक्षणिकत्वसिद्धिरिति, व्यतिरिक्तनिवृत्तिमन्तरेणापि स्वरूपनिवृत्तेरुपपादितत्वात्। ततश्च क्षणादूर्ध्वं कुतः प्राक्तनशक्तावस्थास्थितिः ? व्यतिरिक्तोत्पादेऽपि[9] कथं नष्टो नाम ? अतादवस्थ्यमतादात्म्यं च जातमित्यस्याप्यक्षरस्य स्वहेतोरेवावस्थास्वभावान्तरविरहितोऽयं जात इत्येवार्थ उक्तः। तन्मूलकः अतादवस्थ्यादिव्यवहार[10] एव पश्चाद्भावी न सद्विकल्पप्रतिभासि [1]भावान्तरमिति न तत्त्वान्यत्वविकल्पावकाशः। तस्मादुत्सृज्य विभ्रमं [2]नष्टव्यवहारोऽस्तु, न तु तस्यान्यत् किञ्चित् जायत इति[3]। अदर्शनं चाभावदर्शनमेवेति संप्रत्येव प्रत्याख्यातमिति सर्वमनवद्यम्।

तस्मात् प्रसज्यात्मनोऽभावस्य नाशाख्यस्य हेतुरेव, न [4]कश्चित्। विनश्वरस्वभावे तु हेत्वन्तरशक्तिमपाकृत्य स्वहेतोरेव सामर्थ्यसमर्थनाद् जातमात्रमेव विनश्यतीति न क्षणान्तरमन्वेतीति सिद्धेः[5]। कारणवत्त्वायाक्षणिकत्वेन व्याप्त्यसिद्धेरनैकान्तः। कृतकानामवश्यमन्तेऽपि[6] नाशाभ्युपगमे च विरोधः। प्रमाणगोचरस्य पक्षीकरणे प्रतिज्ञाया अनुमानबाधा। अगोचरे चाश्रयस्वरूपयोरसिद्धिरिति स्थितम्।

यत् पुनरयं भगवतो भाष्यकारस्य प्रत्यक्षतः क्षणभङ्गसिद्धिमनवगाहमानः अनुरूपविकल्पाभावोद्भावनमात्रसारेण विस्तरेण दूषणमभिलपन्नपभापणप्रमादमाचरति,

१०. तावदव° आ १. तादात्म्ये वा अ २. भावद्वादन्य वा आ ३. तत्वेन्यलक्षणेभ्यो आ, तथेत्यलक्षणेभ्यो र ४. °रन्यर्थ° आ ५. °हानिम° अ ६. वृत्ति शङ्का आ ७. °सत्त्व° आ ८. प्रतिसिद्ध° आ ९. °त्वादे तु अ १०. °हारय अ १. तावा° अ २. सृष्ट° अ ३. जायतेति आ ४. किश्चित् आ ५. सिद्धेः इति नास्ति अ ६. मन्तेपि° अ

तदस्य चटुलवटुभावसुलभमनात्मज्ञताविष्करणमात्रमिति[7] मन्तव्यम् । तथा हि प्रत्यक्षसिद्धं क्षणिकत्वमिति न प्रत्यक्षव्यवहृतम्[8], अनुरूपविकल्पानुदयात् । किं तु प्रत्यक्षगृहीतम्, व्यवहारस्त्वनुमानात् । तच्चानुमानं यदि स्वयं कुतश्चिल्लिङ्गात् प्रसाध्य प्रत्यक्षेण क्षणभङ्गग्रहणव्यवहारमादधीत सामर्थ्यात्[9], तदा न विशेषः [10]सत्त्वाद्यनुमानवत् । अर्थतो हि तदा प्रत्यक्षेण [1]क्षणभङ्गग्रहणमवस्थाप्यमानं स्वपौरुषस्पर्शाभावात् न प्रत्यक्षतः[2] क्षणभङ्गसिद्धिप्रसिद्धिं पुष्णाति । यदा तु प्रमाणान्तरसिद्धः मध्यक्षस्य [3]क्षणमात्रस्थितिग्रहणमाश्रित्य व्यवहारमात्रसाधनमनुमानं पृष्ठजविकल्पः निर्विशेषं तत्पौरुषमेव द्दीपयदुत्पद्यते, तदा प्रत्यक्षतः क्षणभङ्गसिद्धिरिति मुख्यमाख्यायते । तदयमर्थः,

क्षणित्वमध्यक्षधियाधिपातं[4]
पातं पुनर्न व्यवहारमेतत् ।
अतः समक्षग्रहसाधनेन
प्रसाध्यते तद्व्यवहार एव ॥

क्षणभङ्गेऽन्यदासिद्धे प्रत्यक्षेण ग्रहस्थितिः ।
प्रत्यक्षेण ग्रहादस्य क्षणभङ्गव्यवस्थितिः ॥

तथा हि,

यन्निर्भाति यथा तथा तदखिलं गङ्गाम्बु गौरं यथा
नोचेन्न[5] प्रतिवस्तु शक्तिनियमः सङ्कीर्णभावे भवेत् ।
संस्काराः[6] प्रतिभान्ति चेन्द्रियमतिष्वेकक्षणस्थायिनः
स्यादेकक्षणवीक्षणादितरथा [61a] दृष्टस्त्रिकाली कलः ॥

लिङ्गरूपोपपत्तिव्यवकीर्णोऽयं स्वभावहेतुप्रयोगः । अत्र च सपक्षे सद्भावान्न विरोधदोषः । द्वितीयपादेन [7]चानेकान्तपरिहारः । तथा हि, निर्भानं प्रत्यक्षे प्रतिभानमुक्तम्, ततो यावता[8] विशेषेण पदार्थः प्रत्यक्षे प्रतिभासमासादयति तन्नियमपरिहारेण यदि स्वरूपस्थितिमाभजेत तदा सर्वसङ्कीर्णमस्य रूपमिति सर्वत्र सर्वोपयोगादिप्रसङ्गः । अतः स्वरूपनियमे प्रमाणापेक्षायां[9] प्रवृत्तिनिवृत्तिकामस्य यद् यथा प्रत्यक्षे

७. °नात्म्य° अ ८. हृतम् आ ९. सामर्थ्यते र १०. तत्त्वाद्य° अ १. °भङ्गि° र २. प्रत्यक्षमतः अ ३. °स्थित° र ४. ऽविग्रातं आ ५. नोचेत्प्र° र ६. स्वकाराः ? ७. नाने° अ ८. यावतो आ ९. °पेक्ष्य। आ

प्रतिभातं[१०] तत्तथैव सन्, नान्यथेति। तदनेन अवैतथ्यव्याप्तो हि प्रत्यक्षप्रतिभासोऽर्थस्यान्यथावस्थाने[१] विपक्षे व्यापकाभावादभवंस्तथावस्थानेन[२] व्याप्यत इति दर्शितम्। तृतीयपादेन पक्षधर्मोपसंहारः। तदसिद्धिपरिहारश्चतुर्थेन। पूर्वापरकालयोरेकत्वे हि पदार्थस्य दृष्टाद्रूपाद्रूपान्तरविरहात् [३]सकलकालकलाकलितस्य देशान्तरयुजोऽपि रूपस्यावश्यं प्रतिभास इति न देशकालान्तरावस्थाप्रतिपत्तये प्रमाणान्तरपर्येषणावकाशः। अस्ति च पर्येषणा इदानीमन्यदेशे काले[४] वा तद्वस्तु कथमस्ति [५]किंस्विन्नोपनिपातिना रागरसेन [६]सिक्तमिति तदुपनिपातसंभविन्यवसरे विमर्शदर्शनात्। न च दर्शनविषयीकृते तथा संभवः। न च दृष्टेऽप्यनवसायः शक्योऽभिधातुम्, तादृशि जिज्ञासिते रक्तादौ रूपे क्षणिकतावदनभ्यासाभावात्। अन्यथा पश्चाद् दर्शनेऽपि नावसायोदयः स्यात्। तस्मात्तदनवसायस्तु [७]तदप्रतिभासादेव।

ननु वस्तुनस्त्रैकाल्यव्याप्तिप्रतिभासेऽपि स्वसंबन्धिविशेषाणां[८] कालदेशदशान्तराणामप्रतिभासो न बाधकः, क्षणिकग्रहणेऽपि तत्संबन्धिहेतुफलसंयोग्यादिवस्त्वन्तराणाम्[१०] [९]अप्रतिभासस्य समानत्वात्, अतः संबन्ध्यन्तरापेक्षया प्रमाणान्तरपर्येषणमपि युक्तमेवेति चेत्? नैवम्, देशकालक्रियागुणादीनां भावाद् भेदासिद्धेः। भिन्नस्य तु संबन्धिनोऽपि प्रतिभासस्तत्प्रतिभासे माभूत्। तस्मात् क्षणान्तरदशाः सर्वा निर्वास्य क्षणपरिगतेनैव रूपेण प्रतिभासनं समस्तवस्तुनः सिद्धम्।

यावत्तर्हि रक्तादिरूपा विसदृशी[५] दशा न सन्निधीयते, तावत्कालमेकीकृतौ च ग्रहणमस्तु। तदपि नास्ति, दर्शनक्षणानन्तरं झटिति विचलने विलोचनस्य सदृशेष्वपि तत्त्वतः क्षणान्तरेषु विपर्ययशङ्कावतारात्, साक्षात्कृतेषु च तदयोगात्। यदनन्तरं तर्हि लोचनचलनं[६] तद्दर्शनं [७]नैकक्षणिकमवसायविपर्ययशङ्के पृथग्जनस्य [८]संबन्धमुत्थापयितुम्, अवश्यं हि द्वित्रानपि क्षणानुदीयमानमेव तद्दर्शनं तदुपयोगि। ततो द्वित्रिक्षणस्थायिनो[९] रूपस्य[१०] कथं [१]प्रथमक्षणे प्रतिभासभ्रंशः[२], येन द्वितीयादिक्षणस्य भेदसिद्धिरिति चेत्? यस्य तावत्प्रथमक्षण[61b]वीक्षणक्षणान्तरमेव[३] चलति चक्षुषि विषयविकल्पोदयः, तस्य[४] दुर्वारः सर्वापरक्षणविपर्ययविमर्शावकाशः।

---

१०. °भानं आ १. °न्यस्या° अ २. °थावस्था° आ ३. °काल° इति नास्ति आ ४. काले इति नास्ति आ ५. किंचिन्नो° अ ६. °वासनासक्त° आ ७. °यस्तद° आ ८. स्वेति नास्ति अ ९. °दाद° इति नास्ति आ १०. हेतुफलं आ ४. योगादि अ ५. °दिसदृशी अ ६. वचनं अ ७. °क्षणमव° आ ८. °समर्थ° अ ९. व्यापिनो आ १०. भावस्य आ १. प्रथ° इति नास्ति २. संसः आ ३. क्षण इति नास्ति आ ४. तस्माद् आ

नैवं कस्यचित् संभवतीति चेत्? किमत्र बाधकम्? साधकमपि किमत्रेति चेत्? उच्यते[५], यदि तावदीक्षणक्षणमात्रानन्तरमवसायोदये साधकान्वेषणम्, तदा द्विविधः प्रत्यक्षपृष्ठजो विकल्पः, दृष्टमात्रविकल्पश्च। दृष्टमिदं वस्त्रं वेत्येष[६] [७]स्वरूपविशेषविकल्पश्च कृत्रिमेतरमणिमुक्तादौ। तत्रास्य विषये सादृश्यापहार्यमन्दधियः पृथग्जनस्य [८]भ्रान्तिरुत्सर्गसिद्धाभ्यासप्रकर्षसंभविनापोह्यते। अतः प्रकर्षतारतम्येनोदयस्य कालस्य लाघवतारतम्यनिष्ठायां दर्शनक्षणानन्तरमप्ययमुदयमासादयन्नशक्यसंभावननिषेधः। दृष्टमात्रस्य विकल्पस्य तु दर्शनानन्तरमेव जन्मोत्सवसिद्धं सामग्रीभेदेनापोह्यते। तथा हि, प्रकृत्या अनादिसंसारसन्ततिसात्मीभूतविकल्पास्त्वनुभूतप्रत्यक्षेऽपि च वस्तुनि विकल्पापेक्षप्रवृत्तिनिवृत्तयो विशेषतः सुखदुःखप्राप्तिपरिहारार्थिनः सर्वे सर्वदा तत्साधनविमर्शाभ्यासवासितसन्ततयः कथं तद्विषयानुभवेऽपि समर्थहेतौ समुपस्थिते विलम्बितविकल्पभावाननुभवितुमर्हन्ति? केवलं कदाचित् संहृताः, यतो न विकल्पसंहाराभ्यासः, कदाचिदन्यासक्तिः, कदाचिदात्यन्तिकमोहादामुखीभाव इत्येवंप्रकारसामग्र्या विलम्बसंवाहितविकल्पजन्मानो भवेयुः। तदभावे तु सिद्ध एव प्रत्यक्षक्षणानन्तरमुदयो विकल्पस्य। ततस्तद्दर्शनविनाकृतेषु सर्वेष्वेव विषयक्षणेषु रक्ततादिसन्देहदोलान्दोलनं मनसो विप्रकृष्टक्षणपरम्परास्विव द्वितीयक्षणेऽपि विमर्शविषयीकृते कथमनवकाशः? न च प्रत्यक्षप्रतिभासेऽप्येवम्। तस्मात् क्षणपरिगतेनेव पदार्थराशिरध्यक्षप्रतिभासमाविशति।

स्यादेतत्। प्रत्यक्षस्य क्षणिकत्वे सत्युपपन्नमेतत्, यावता प्रत्यक्षमनेकक्षणव्यापि। ततोऽनेकक्षणव्यापिनि प्रतिभासिते विकल्पावकाशः (?सायः)[९]। तत् कथमेकक्षणग्रहणसिद्धिः? उच्यते, *किं तावत् स्वरूपनिष्पत्तावुपयोगादनेकक्षणस्य व्यापक*मध्यक्षम्, अथ क्षणनिष्पन्नस्यैव स्थैर्यात्? तत्राद्यकल्पस्तावदसंभवी, ज्ञानस्यावयविरूपतावियोगेन खण्डश उत्पत्तेरयोगात्। क्षणभेदिनश्च तेऽवयवा[:] प्रत्यक्षस्य यदि परिच्छित्तिस्वभावाः, तदा तावन्त्येव प्रत्यक्षाणीति प्रथमप्रत्यक्षापेक्षया सैव चिन्ता। अपरिच्छित्तिस्वभावे तु समुदितमपि न प्रत्यक्षम्। अखण्डशः परिच्छित्तिः समुदायेन सकलात्मवस्तुपरिच्छेदः। तदाप्याद्यक्षणपरिच्छिन्नः खण्ड एव सकलात्मवस्तु, तदप्रविष्टस्य ततो भिन्नत्वात्। अन्यथा क्रमेण प्रतीयमानं विश्वमेकमेव वस्तु स्यात्, सकलं च प्रत्यक्षमेकमेव प्रत्यक्षमिति।

---

५. उच्यत इति नास्ति आ ६. वेत्येवं अ ७. °विशेष° इति नास्ति आ ८. अत्र १३७ पत्रं भ्रष्टम् आ ९. °सायः अ

द्वितीये पक्षेऽपि निष्पन्नव्यापारस्य वा ? [62a] क्षणान्तरव्याप्तिनिष्पन्नव्यापारस्यैव वा ? प्रथमपक्षे विषयग्रहणमेवास्य व्यापार इति तावतैव विकल्पजन्मावकाशः, स्वयं क्षणान्तरमस्तु मा वा ? तथा च सति चलति चक्षुषि विषये वा तद्विषयग्रहणप्रवणमध्यक्षमवतिष्ठत इति अपूर्वोऽयं नयः। [10]अग्रहणावक्षणावस्थाने तु न तावतैव विकल्पजन्मावकाशान्मुक्तिः। न च पूर्वग्राहिणः पश्चादग्रहणे स्थैर्यपक्षस्थितिरि[ति][1] इन्द्रियविषयविधाने[2] वाग्गृह्णतोऽपि तस्य स्थितिरिति श्रद्धावधेयमेव[3]। एवमनिष्पन्नव्यापारस्थितिरित्यपि दुःश्रद्धानम्। न हि कार्यान्तरवज्जन्मातिरेकेण ज्ञानस्यापि व्यापारः। अस्तु चैवम्[4], तथापीन्द्रियविषयोपनिधौ लब्धोदयमध्यक्षमनधिगतगोचरमुभयविचालकाले कलयत् किलास्तीति सुभाषितं[5] पूर्ववत्।

[6]तदलमतिप्रतिष्ठैर्मिथ्याविकल्पैरिति चतुर्थपादेन प्राक् पश्चाद् वा चित्ररक्तादिरूपस्य तदैव निर्भासे [7]सूचितप्रमाणान्तरावृत्तिविपर्ययेण।

यद् यद् रूपं व्यवसितिसहं क्वापि निर्भासमाने
मानं भिन्नं स्पृहयति न तत् तत्र निर्भासयोगि[8]।
रूपाभासे रस इव तथा तत्क्षणे भासमाने
पूर्वावस्था व्यवसितिसहापेक्ष्यते मानमन्यत्॥

इति [10]विरुद्धव्याप्तोपलब्धेः स्थितमेतत् एकक्षणस्थायिनमेव[1] [2]भावस्वभावमामुखयति प्रत्यक्षप्रतिभास इति। न च तत्प्रतिभासबहिर्भूतोऽपि स्वभावस्तस्येति निवेदितप्रायं व्याप्तिसमर्थनप्रस्तावे।

तस्मात् सिद्धमध्यक्षेण भङ्गुरत्वम्, व्यवहृतं चानुमानेन मानान्तरोपपादितं तत्सिद्धिसिद्धेनेति।

प्रत्यक्षेण क्षणिककलने न्यायदिक्सूचनातः
[3]सामर्थ्याप्तव्यवहृतिविधौ धीमतो[4] न प्रबन्धः।
सोऽप्याचार्यप्रवररविणाकारि किं त्वल्पमेधा[5]–
[6]स्तत्त्वाबोधात् [7]प्रकृतिमुखरोऽसत्यमभ्युज्जगार॥

१०. वक्षणा आ १. स्थितिः आ २. वधि अ ३. °मेतत् अ ४. कैवं आ ५. शुभाषितं आ ६. °दलमप्रति° आ ७. सेऽनुचित अ ८. तत्तन्नि° अ ९. ऊर्ध्वा आ १०. रुद्ध° आ १. स्वभावनामु° र ३. सामर्थ्यन्त अ ४. विरोधी आ ५. किं तुन्यमेधा° आ ६. स्तत्स्वा° आ ७. स्तत्त्वाभावात् अ

नो मार्गमाचार्यरवेरपेक्ष्य च
क्षणिमहेऽस्माकमयं क्रमो यतः ।
यथा च भाष्योक्तिसमन्वयस्तथा
न गीतमप्रस्तुतविस्तराद् भिया ॥

तदलमानुपङ्गिककथानिर्बन्धेन । स्थितमेतन्न विनाशो नाम परिघादिभ्यो भिन्नः कश्चिन्मुद्गरादिसाध्यो यस्तदनुपनिपातदशायामभवन्[८] भावस्य स्थैर्यसिद्धिमनोरथं परिपूरयेदिति ।

[९]दुर्नीताश्रमवेदिकादृढतरस्तम्भानमून् शङ्कर-
[१०]न्यायालङ्करणत्रिलोचनवचस्पत्याह्वयान्[१] हेलया ।
उन्मूल्य क्षणभङ्ग एष विहितो यत्पुण्यमाप्तं मया
तेन[२] स्तात् परपारगस्त्रिभुवने[३] ज्ञानश्रियोऽयं जनः ॥

॥ अहेतुकविनाशाधिकारो नाम चतुर्थः पादः समाप्तः[४] ॥
॥ समाप्तश्चायं क्षणभङ्गाध्यायः ॥

---

८. °स्तमुप° अ ९. उन्नीता° अ १०. °लङ्कारण आ १. प्रत्याह्व° अ २. मत्यमाधत्तमेतेन अ ३. °भुने अ ४. समाप्तः इति नास्ति आ

२

# ॥ व्याप्तिचर्चा ॥

[1b] नमो भगवते वीतरागाय ।

इह दहनादिना धूमादेर्व्याप्तिरध्यक्षानुपलब्धिसाधनतदुत्पत्तिलक्षणेति व्युत्पाद्यते। परे हि पुरस्तनास्तावदग्निमति धूमस्य दर्शनमदर्शनं च तद्विरहिणीत्येवान्वयव्यतिरेकित्वं कल्पयाम्बभूवुः। तत्र दर्शनादर्शनं यादृच्छिकमपि सकृद् भवेदिति च भूयः प्रवृत्तिमपेक्षते। ननु भूयसापि प्रवृत्ते दर्शनादर्शने घटकुलटादावुपलब्धो व्यभिचार इति चेत्? किमेतावता, तत्राप्यनुमानमस्त्वित्युच्यते, अथ तद्वद् धूमादावपि मा भूदिति? प्रथमपक्षस्तावद् व्यभिचारादेव निरस्तः। द्वितीयोऽप्यव्यभिचारादेव। न ह्यन्यस्य व्यभिचारे धूमस्य किञ्चित्। न खलु विषान्नमनिष्टमिति भक्ष्यान्तरमपि हेयमस्तु। तावता च सर्वा निवृत्तिर्लब्धेति किमुत्पत्तिप्रार्थनया, तन्नि[श्च]योपयोगिना वा प्रत्यक्षानुपलम्भेन? तदुत्पत्तिरपि यदि दर्शनादर्शनादेव गृह्येत कीदृशो दोषः? अनुमानमेव च विभागेन भवत्विति तदन्वेषणम्। स च विभागो व्यभिचाराव्यभिचारद्वारेण सिद्धः। असति च व्यभिचारे तावतैव गमकत्वम्, अनर्थिका तदुत्पत्तिः। व्यभिचारे च शतमपि तदुत्पत्तयो न समर्थाः। तस्मात् सन्निकर्षेण पर्येषणं संयोगेनैव कृतार्थम्। अतएव संयोगी हेतुरुच्यते वह्नेर्धूमो न कार्यमिति।

त्रिलोचनस्त्वाह, प्रत्यक्षानुपलम्भयोर्विशेषविषयत्वात् कथं ताभ्यां सामान्ययोः सम्बन्धप्रतीतिः? अथानग्निव्यावृत्तेनाधूमव्यावृत्तस्य सम्बन्धः प्रतीयत एवेति, ननु सोऽपि कस्य प्रमाणस्य विषयः? न तावत् प्रत्यक्षस्य, [तस्य] स्वलक्षणविषयत्वात्। नाप्यनुमानस्य, तस्यापि तत्पूर्वकत्वात्। न च व्यावृत्तः कश्चित् सम्बन्धः। अथ प्रत्यक्षपृष्ठभावी विकल्पो दृष्टे भेदेऽभेदमध्यवस्यति, तदेव सामान्यम्। एवमपि विकल्पानां न वस्त्वेव विषयः, अपि तु ग्राह्याकारः। स च न वस्तु। वस्तु तु तेषां परोक्षमेवेति कथं तेनापि सम्बन्धग्रहः? अस्माकं तु भूयोदर्शनसहायेन मनसा तज्जातीयानां सम्बन्धो गृहीतो भवति, अतो धूमो नाग्निं व्यभिचरति। तद्व्यभिचारे धूम उपाधिरहितं सम्बन्धमतिक्रामेदिति हेतोर्विपक्षशङ्कानिवर्तकं प्रमाणमुपलब्धिलक्षणप्राप्तोपाधिविरहहेतुरनुपलम्भाख्यं प्रत्यक्षमेव। ततः सिद्धः स्वाभाविकः सम्बन्धः।

वाचस्पतेस्तु[1] प्रपञ्चः, तथा हि धूमादीनां वह्न्यादिभिः स्वाभाविकः सम्बन्धः, न तु वह्न्यादीनां धूमादिभिः। ते हि विनापि धूमादिभिरुपलभ्यन्ते। यदा तु आर्द्रेन्धनसम्बन्धमनुभवन्ति तदा धूमादिभिः सम्बध्यन्ते। तस्माद् वह्न्यादीनामार्द्रेन्धनाद्युपाधिकृतः सम्बन्धः, न तु स्वाभाविकः। ततो न नियतः। स्वाभाविकस्तु धूमादीनां वह्न्यादिभिः सम्बन्धः, तदुपाधेरनुपलभ्यमानत्वात्। [2a] क्वचिद् व्यभिचारस्यादर्शनात्। अनुपलभ्यमानस्यापि कल्पनानुपपत्तेः। न चादृश्यमानोऽपि दर्शनानर्हतया साधकबाधकप्रमाणाभावेन सन्दिह्यमान उपाधिः सम्बन्धस्य स्वाभाविकत्वं प्रतिबध्नातीति युक्तम्,

अवश्यं शङ्कया भाव्यं नियामकमपश्यताम्
[प्र. वा., ३. ३२४]

इति च दत्तावकाशा लौकिकप्रमाणमर्यादातिक्रमेण संशयपिशाची लब्धप्रसरा न कचिन्नास्तीति नायं क्वचित् प्रवर्तेत, सर्वत्रैव कस्यचिदनर्थस्य कथञ्चित् शङ्कास्पदत्वात्। अनर्थशङ्कायाश्च प्रेक्षावतां निवृत्त्यङ्गत्वात्। अन्ततः स्निग्धान्नपानोपयोगेऽपि मरणदर्शनात्। तस्मात् प्रामाणिकलोकयात्रामनुपालयता यथादर्शनमाशङ्कनीयम्, न तु अदृष्टपूर्वमपि। विशेषस्मृत्यपेक्ष एव हि संशयो नास्मृतेर्भवति। न च स्मृतिरननुभूतचरे भवितुमर्हति। तदुक्तं मीमांसाश्लोकवार्तिककृता,

नाशङ्का निष्प्रमाणिका
[ श्लो. वा., सू. २.६० ]

इति। तथा तेनैव बृहट्टीकायाम्,

उत्प्रेक्षेत हि यो मोहादजातमपि बाधकम्।
स सर्वव्यवहारेषु संशयात्मा क्षयं व्रजेत्॥

इति। तस्मादुपाधिं प्रयत्नेनान्विष्यन्तोऽनुपलभमाना नास्तीत्यवगम्य स्वाभाविकत्वं सम्बन्धस्य निश्चिनुमः।

स्यादेतदन्यस्यान्येन सहाकारणेन चेत् स्वाभाविकः सम्बन्धो भवेत्, सर्वं सर्वेण स्वभावतः सम्बध्येत, सर्वं सर्वस्माद् गम्येत। अथान्यस्य चेदन्यत् कार्यम्,

१. ता. टी. पृ: १३८

कस्मात् सर्वं सर्वस्मान्न भवति, अन्यत्वाविशेषात् ? ततश्च स एवातिप्रसङ्गः । यत्तूच्येत न भावस्वभावाः पर्यनुयोज्याः, तस्मादन्यत्वाविशेषेऽपि किञ्चिदेव कारणं किञ्चिच कार्यमिति, नन्वेष स्वभावाननुयोगोऽकार्यकारणभूतानामपि स्वभावप्रतिबन्धे तुल्य एव । तस्मात् यत्किञ्चिदेतदपि ।

केन पुनः प्रमाणेनैष स्वाभाविकः सम्बन्धो गृह्यते ? प्रत्यक्षसम्बन्धेषु प्रत्यक्षेण । तथा हि यदा तावत् प्रथमं वह्निधूमयोः सहार्द्रेन्धनयोः सम्बन्धं पश्यति, तदा किं द्वयोरपि स्वाभाविकः सम्बन्धः औपाधिको वा; अथ धूमस्यौपाधिकः, वह्नेः स्वाभाविकः, वह्नेरौपाधिको धूमस्य स्वाभाविक इति च न शक्यं निर्धारयितुम् । तत्र वह्नेरनार्द्रेन्धनस्य विना धूमम् अयोगोलकादौ दर्शनादार्द्रेन्धनोपाधिरस्य धूमेन सम्बन्धो, न तु स्वाभाविक इति निश्चीयते । धूमविशेषस्य तु विना वह्निमनु[प]लम्भादुपाधिभेदस्य चानुपलभ्यमानस्य कल्पनायां प्रमाणाभावात् विशेषस्मृत्यपेक्षस्य संशयस्यानुपलब्धपूर्वेऽनुत्पादात् । उत्पादे वातिप्रसङ्गात् । प्रेक्षावतां प्रवृत्त्युच्छेदात् स्वाभाविकः सम्बन्धोऽवधार्यते ।

तदिदमवधारणं न मानसम्, अनपेक्षस्य मनसो बाह्येषु प्रवृत्तावन्धबधिराभावप्रसङ्गात् । भूयोदर्शनसापेक्षस्य च प्रवृत्तौ प्रमाणान्तरापातात् । न हि मनो निमित्तमित्येव मानसम् । तथा सति न किञ्चिन्न मानसम्, प्रत्ययमात्रस्य [2b] मनोनिमित्तत्वात् । तत्तदसाधारणकारणापेक्षया च तत्तत्प्रमाणव्यपदेशोऽत्रापि भूयोदर्शनम् असाधारणं कारणमस्तीति प्रमाणान्तरं जातम् । तस्मादभिजातमणिभेदतत्त्ववद् भूयोदर्शनजनितसंस्कारसहायमिन्द्रियमेव धूमादीनां वह्न्यादिभिः स्वाभाविकसम्बन्धग्राहीति युक्तम् ।

एवं मानान्तरविदितसम्बन्धेषु मानान्तराण्येव यथास्वं भूयोदर्शनसहायानि स्वाभाविकसम्बन्धग्रहणे प्रमाणमुन्नेतव्यानि । स्वभावतश्च प्रतिबद्धा हेतवः स्वसाध्येन यदि साध्यमन्तरेण भवेयुः, स्वभावादेव प्रच्यवेरन्निति तर्कसहाया निरस्तसाध्यव्यतिरेकसन्देहा यत्र दृष्टास्तत्र स्वसाध्यमुपस्थापयन्त्येव । न च श्यामतादिषु मैत्रतनयत्वादीनां स्वाभाविकप्रतिबन्धसंभवः, अन्नपानपरिणतिभेदस्योपाधेः श्यामताया मैत्रतनयत्वसम्बन्धं प्रति विद्यमानत्वेन मैत्रतनयत्वस्यागमकत्वात् । एतेन पक्वान्यस्य वृक्षस्याप्रवर्तीनि फलानि, एतद्वृक्षप्रभवत्वात्, आस्वादितफलवदित्यादयोऽप्यौपाधिकसम्बन्धा व्याख्याताः । तस्माद् यस्य स्वाभाविकः सम्बन्धो नियतः सोऽनुमानाङ्गम्,

यथा धूमकृतकत्वादिः। यस्य त्वौपाधिकः, सोऽनुमानाङ्गं न भवति, यथा तत्पुत्रत्वादिरिति स्थितम् ॥

अत्रोच्यते, व्याप्तिर्नाम व्यापकस्य तत्र भाव एव, व्याप्यस्य वा तत्रैव भाव इत्येवं कर्तृकर्मधर्मतया प्रतीतेरन्वयव्यतिरेकरूपतया द्विधानुमानसमीहया समीहिता, अन्यथानुमानेऽनुपयोगात्। यदि हि साधने सत्यवश्यं साध्यं भवत्येवेति सामान्येन सिद्धं भवति, साध्याभावे वा साधनमवश्यं न भवतीति, तदा विशेषोद्देशेन साधनवति साध्यप्रत्याशा भवति, साध्याभावे तदभावस्य। यदा तु न यथोक्तनियमः, तदा साधनं च भवति न च साध्यमित्याशङ्कायां कथमनुमानावकाशः? तस्मादनुमानमिच्छता नियतं यथोक्तैव व्याप्तिरपेक्षितव्या। न च भूयोदर्शनमात्रेण तस्याः सिद्धिः। यथा हि यदृच्छयापि सकृत् संवादसंभावना, तथा कतिपयवारानपि यदृच्छयैव भवतः संवादस्य निषेधः, यथा च सकृत् सहचारदर्शने व्यभिचार उपलब्ध इति न सर्वत्र सर्वदा च तत्सहचारनियम इति शङ्का, तथा भूयोदर्शनेऽपि व्यभिचारदर्शनादेव भवन्ती न शक्यनिषेधा।

यत् तु व्यभिचारदर्शनादननुमानमुक्तम्, तन्न युक्तम्। तथा हि कस्य पुनरिह व्यभिचारदर्शनमनुमानविघ्नाय प्रयोजकम्? किं प्रतिपत्तुरेव, अथ शास्त्रकारस्य, यस्य कस्यचिद् वा? अन्त्यपक्षे प्रतिपत्तुः किमायातम्, यतो नानुमानमयं कुर्यात्? अन्यथान्यस्य तत्तद्विषयप्रत्यक्षीकारेणैव सोऽपि कृतार्थ इति किमनुमानमवश्यमन्वेषते? शास्त्रकारं च पृष्ट्वा अदृष्टसम्बन्धोऽपि धूमादग्निमनुमास्यते इत्यलौकिकम्। [3a]प्रतिपत्तुस्तु नावश्यं सन्नपि व्यभिचारो गोचरीभवति। न हि यत्र व्यभिचारस्तत्रैव तावति काले देशे वावश्यं प्रतीतिमवतरति। अप्रतीयमानश्च नास्त्येवेति [न] शक्यमवसातुम्, आत्यन्तिककालव्यवधानेऽपि वा दर्शनात्, अनुपजातबाधबुद्धीनामपि निधनसन्निधेरवरोधाच्च। ततश्च सत्यपि व्यभिचारे प्रतिपत्तुरदर्शनं संभाव्यते। भवति चाव्यभिचारेऽनुमानमन्यथा नेत्युपदिष्टस्य स्मरन् किमसावव्यभिचारनिश्चयादनुमाने प्रवर्तताम्, निवर्ततां वाऽदर्शनमात्रेण निश्चयायोगादव्यभिचारासिद्धेः, सन्दिग्धासिद्धहेतुवत्। तत्राद्यपक्षे करभादप्यनुमानं कुर्यात्। द्वितीये तु न धूमादपि। न हि विद्यमानस्याविद्यमानस्य वा व्यभिचारस्यानवलोकनकाले कश्चिद् विशेषः। ततो यदि भूयांसमपि सहोपलम्भं करभगर्दभयोर्यादृच्छिकमाशङ्कते, तथा धूमदहनयोरपि कस्मान्नेति समानम्। अथ प्रत्यासन्नयोरपि करभगर्दभयोः स्वातन्त्र्येणोपलक्ष्यमाणयोः परयाग्नि

तावत् किमेकमपसार्यमाणमन्योऽनुधावति धेनुमिव वत्स इति जिज्ञासया तथानुतिष्ठन्न तथा प्रतिपद्यते । वह्नौ त्वपसारिते धूमापगममेव प्रत्येति, वह्निसन्निधाने वा धूमसंभवम् ।

अतः संभाव्यते व्यभिचारः करभस्यान्यदापि न धूमस्येति चेत् ? विशिष्टमेव तर्हि दर्शनादर्शनं धूमे उत्पत्तिग्राहकं च यादृशं तादृशं न करभे । तथाहि यदाग्न्यभावे धूमाभावं प्रत्येति, तदा सहोपलम्भपूर्वकमग्निमात्राभावे धूमादर्श[न]मुपयुक्तं प्रतिबन्धसिद्धौ । अन्यथा सहदर्शनाभावे तावदङ्गा[रा]वशेषचित्रभानुमात्रापसारणं च धूमश्च नास्त्येव, करभवद् गर्दभाभाव इति क्व सम्बन्धबोधः ? सहदर्शनेऽपि यदि वस्त्वन्तरसहितहुताशापसारः, तदा पूर्वमस्य सत्ता किं हुताशस्य वस्त्वन्तरस्य वा सत्तया प्रयुक्तेति न निश्चयः, हुताशमात्राभावे तु तद्भावप्रयुक्त एव प्रागस्य भाव इति सुलभम् । यदापि पावकमात्रसन्निधौ धूमसत्ता, तदापि पूर्वमुभयादर्शनपूर्वकमग्निमात्रोपदर्शने दर्शनं धूमस्योपयुक्तम्, अन्यथाग्निमात्रमानीतं धूमश्चास्त्येवेति करभवत् कुत्र प्रतिबन्धसिद्धिः वस्त्वन्तरसहितहुताशनानयनेऽपि कस्याभावेन प्रयुक्तः प्रागभावो धूमस्येति न निश्चयः । हुताशमात्रोपलम्भे तु तदभावप्रयुक्तो युक्तः ।

तदेवं पूर्वदर्शनापेक्षनियतैकादर्शनपूर्वं चान्यादर्शनं विशिष्टमुच्यते । तदपि प्राचीनदर्शनमौत्तरकालिकयथोक्तादर्शनद्वयापेक्षया विशिष्टम् । एवमदर्शनपूर्वकेऽपि दर्शने विशेष ऊहितव्यः, यदभावात् करभादौ नाश्वासः । तमेव दर्शनादर्शनयोर्विशेषमाश्रित्य [3b] प्रत्यक्षानुपलम्भव्यापारव्यवहारः तद्विषयश्च भावद्वयस्वभावः कार्यकारणभाव इत्युच्यते ।

यच्चायत्तमनायत्ते परत्र तत् तत्र तदुत्पत्त्या प्रतिबद्धमित्यपि । तथा हि तन्मात्रापनयने द्वितीयसाहित्यस्यापि निषेधाद् व्यक्तं तदायत्तं तत् । एवं तन्मात्रापसारणेऽपि बोद्धव्यम्, अन्यथा द्वितीयापसारणापेक्षणात् कुतस्तन्मात्रापसारणमिति तदुत्पत्त्यैव प्रत्यक्षानुपलम्भसाधनया व्याप्तिरुक्ता भवति, न तद्विशेषविरहिणा दर्शनादर्शनमात्रेण ? तद्विशेषापेक्षणे च सकृदेव प्रवृत्तौ निर्वृत्तिलाभान्न भूयः प्रवृत्त्यपेक्षा । यथा हि सकृद् दर्शनादर्शनेन प्रतीतसहचारमात्रादनाश्वासकरान्नापरमपरेण प्रत्ययम्, तथा सकृत् प्रत्यक्षानुपलम्भाभ्यां प्रतीतविशिष्टजातिद्वयहेतुफलभावसम्बन्धान्नापरमपराभ्यां प्रत्येयमिति तावतैव निर्वृत्तिः । यदि न सादृश्यादिना जात्यन्तरे तदध्यवसायः पुरुषस्येति निपुणेन प्रतिपत्त्रा भवितव्यम् । सहचारमात्रे तु तज्जातावेव संशयः । अन्यत्र

सहचारमात्रे व्यभिचारदर्शनं च पुष्टं बीजमस्य। न चात्र विपान्नदृष्टान्तः शान्तये, विपान्नाद् भोज्यान्तरस्य भिन्नजातीयत्वात्। अत्र तु यः प्रयोजको भागो भूयः सहचारलक्षणस्तेनैकजातीयत्वमेव धूमस्य, न तु विपदिग्धत्वं दधिभक्तादेः साधारण-मिति वैधर्म्यम्। तदुत्पत्तिमन्तरेण चाव्यभिचारस्यैवाभावाद् भेदे अव्यभिचारस्यैव तदुत्पत्तिरूपत्वात्। अव्यभिचारापेक्षया क्षेपस्तदुत्पत्तेरयुक्त एव। तस्मात् कार्यमेव हेतुर्धूमो धूमध्वजस्य, तदुत्पत्त्याव्यभिचाराक्षेपात्; न संयोगी, सहचारमात्रोल्लेखात्। कथं तर्हि करभगर्दभोदाहरणमसंयोगात्? दासीकलससंयोगदर्शनभूम्ना सन्तोषोऽस्तु। करभगर्दभयोरपि वा जलबलाकयोरिव तावति काले देशेऽवस्थितिनियमस्तथा दर्शनादस्त्विति न किञ्चिदेतत्। तस्मादर्थान्तरे गम्ये कार्यहेतुः, तद्भावसिद्धिश्च प्रत्यक्षानुपलम्भादिति स्थितम्।

त्रिलोचनचोद्ये तु ब्रूमः, विशेषविषयं प्रत्यक्षमिति किं विशेषोऽपि विषयोऽस्य, अथ विशेष एव? अयोगव्यवच्छेदपक्षे न सामान्यविषयताप्रतिहतिरिति कथं न प्रत्यक्षानुपलम्भावकाशः सामान्यद्वये? अन्ययोगव्यवच्छेदस्तु किमस्मत्सिद्धान्ताश्रयेण उच्यते, वस्तुवृत्त्या वा? अस्माकं तावदुभयमुभयमपि प्रमाणमुभयविषयम्, ग्राह्याध्य-वसायभेदेन। यद्धि यत्र ज्ञाने प्रतिभासते तद् ग्राह्यम्, यत्र तु तत्प्रवर्तते तदध्यवसेयम्। तत्र प्रत्यक्षस्य स्वलक्षणं ग्राह्यमध्यवसेयं च सामान्यम्। अनुमानस्य तु विपर्ययः। तत्र साधनप्रत्यक्षं तदैवार्थक्रियार्थिनः क्षणवीक्षणेऽपि सन्तानापेक्षया सामान्यविषयम्। व्याप्तिग्रहणप्रकरणे [4a] पुनरेकव्यक्तिदर्शनेऽपि सर्वसजातीयव्यक्तिविषयत्वेन सामान्य-विषयम्। प्रत्यक्षेण मया अग्निजन्मा धूमः परिच्छिन्न इति सकलतदन्यापोढव्यक्ति-जातमन्तर्भाव्यैव तद्बलोत्पन्नस्याध्यवसायस्य संवेदनात्। यथा रूपमात्रदर्शने रूपरस-गन्धस्पर्शसमुदायविशेषात्मनि घटे दृष्टाध्यवसायात् तद्विषयत्वं प्रत्यक्षस्य।

न च सामान्यं नाम किञ्चिदन्यदेव, किंतु स्वलक्षणान्येव परस्परमविवेचितभेदानि सामान्यमुच्यन्ते। भेदविवेचने तु प्रत्येकं स्वलक्षणमिति स्वशब्देनैव व्यवहारः। ततो यद्यपि परविलक्षणाशेषस्वलक्षणानामप्रतिभासान्न ग्राह्यत्वेन विषयत्वम्, तथाप्यध्य-वसेयत्वेन दुर्निवारमिति कथमन्ययोगव्यवच्छेदः? विकल्पानामवस्त्वेव विषय इत्यपि परकृतान्तानभिज्ञतयैवोच्यते, अनुसन्धानानुमानयोरध्यवसायापेक्षयावस्तुविषयत्वात्। शेषं सिद्धसाधनम्। अथ वस्तुवृत्त्येति पक्षः? सोऽप्ययुक्तः, सर्वज्ञानानां ग्राह्याध्य-वसेयभेदेन विषयद्वैविध्यस्य दुरतिक्रमात्। प्रमाणस्य हि प्रामाण्यमेवातिरिच्यते,

विपयद्वैतं तु सर्वत्र सिद्धम् । तत्रानुमाने तावद्वस्तुनोऽप्रतिभासादध्यवसेयमेव स्वलक्षणम्, ग्राह्यस्तु स्वाकारः । एवंविधं निर्लोठितमस्माभिरपोहप्रकरणे इति न प्रस्तूयते । यद्यपि च बुद्धेराकारो नेष्टस्तथापि वस्तुवलादायातः कथमपोहितुं शक्यः ? न ह्यप्रतिभासे ज्ञानं नाम, प्रतिभासि चानुमायां न वस्त्विति स्थिते नियतं स्वाकारः । अलीकमस्त्विति चेत् ? तथापि तत्प्रतिभासे ग्राह्यमवसेयं च बाह्यमिति विपयद्वैतसिद्धौ किं निर्बन्धेन ? एवं प्रत्यक्षेऽपि काचिदेव व्यक्तिः प्रतिभासिनी ग्राह्या । सर्वा तु सजातीयाध्यवसेया प्रतिबन्धबोधकाले, अस्फुरणे हि यद्यवसायोऽपि स्यात् प्रत्यक्षेण सम्बन्धबोधप्रसिद्धिगन्धोऽपि निर्धूतः स्यात् ।

यत्तु मानसेन भूयोदर्शनजनितसंस्कारसहायेनेन्द्रियेण वा ग्रहणमुक्तम्, तत्रेदं विचार्यते । अस्ति तावदग्निधूमव्यक्त्योः पुनः पुनरुपलब्धिरैन्द्रियी । अस्ति च तत्कृत-संस्कारजन्मा विमर्शः अयमेतत्सहित एवोपलभ्यते, तत् किमनयोः सदातनोऽयं सहचारः, अथ सुहृद्द्वयस्येव सात्यय इति ? परामर्शदुर्बलस्य हेतुनान्तरीयकप्रतीतिरपि भवति । तदनुरूपं चानुष्ठानम । न पुनरत्रापरो ज्ञानविवर्तः संवेद्यते । ततो भूयोदर्शनं तावत् संस्कारद्वारेण सहायमेव कृतम्, न तत्प्रस्तुतमभिधातुं शक्यम्, तदन्तिममेकजातिकाशेषव्यक्तिविपयक इत्यपि मनोरथमात्रम, तद्व्यक्तीनां निर्भासा-भावात् । संशयोऽपि तदनन्तरः संशयत्वादेव न निश्चायकः सम्बन्धस्य । पश्चिमश्च निश्चयाकारत्वेऽपि परामर्शशून्यस्यैवेति प्रत्यक्षाभिख्ययापि तदुपस्थापिते प्रमेये क आश्वासः ? अलिङ्गजस्य हि विकल्पस्य पूर्वप्रवृत्तदर्शनव्यापारानुसारादेवार्थतथा-भावसम्भवो, न स्वातन्त्र्यात्, [4b]अतिप्रसङ्गात्, पूर्वप्रवृत्तानि च दर्शनानि सहचार-मात्रसाक्षीणि वातातपादिसहचारवत् कञ्चिद् विशेपमनाविशन्ति कथमस्य यथार्थतां समर्थयितुमीशते ? तथाभावेऽपि तान्येव तत्र प्रमाणम्, इदं तु स्मरणं प्रमाणत्वेन निर्दिश्यत इति साधु। वातातपयोः पश्चात् सहचारविघटनादस्ति विशेप इति न वाच्यम्, व्यभिचारादर्शनकालापेक्षयाभेदस्य विवक्षितत्वात्, अत्रापि अविघटननिश्चयानुप-पत्तेश्चोक्तत्वात् । यावदेव वह्निव्यापारात् पूर्वं धूमानुदयो हृदयसंवासी, तावदेव हि सहचारान्तराद् भेदविमर्शः, तत एव तद्व्यभिचारे धूम उपाधिरहितं सम्बन्धमति-क्रामेदिति शोभते । अन्यथा पूर्वं सहचारमात्रोपलब्धौ यथा धूममन्तरेणानलविलोकने अनलस्य धूमेन सम्बन्धे उपाधिकल्पनं सामान्येन, तथा धूमस्यापि वह्निमन्तरेण भावसंभावनायामुपाध्यन्तरकल्पनं भविष्यति, अतः कस्य केनौपाधिकः स्वाभाविको

वा सम्बन्धः स्यात् ? न हि सुहृदोरेकव्यतिरेकेणान्यदर्शनेऽन्यव्यतिरेकेणापि तद्दर्शन-संभावना न भवति। केवलं चैत्रमन्तरेणापि मैत्रस्य भावाविरोधाद् भूधरविवर-प्रविष्टस्यापि न दर्शनयोग्यता विगलति, धूमस्य तु नियतं विना वह्निमुदय एव नास्तीति न संभावना, तावता च तदुत्पत्तिरेव शरणीकृता भवति। सा च न भूयोदर्शनादर्शना-दित्युक्तमेव ।

अत एव गोगोत्वयोरपि न स्वाभाविकः सम्बन्धोऽभिधातुं शक्यः, तदुत्पत्तिप्रतीतिविरहेऽन्यस्मात् सहचारिणो विशेषाभावात्। न च सहचारदर्शन-मप्यस्ति, प्रत्यक्षेणोभयभागानुल्लेखात्। तत् किमत्र स्वाभाविकौपाधिकवादप्रक्षेपेण विभागेन? गमकत्वं च सामग्र्याः कारणत्वादेकं कारणमन्यापेक्षमेव जनकमित्यनियमः। कार्यं तु सामग्रीनियतत्वेन प्रत्येकं नियतमिति तदेव लिङ्गं न कारणमिति सिद्धम्। अथाग्नेरिन्धनसन्निधौ धूमदर्शनाद् विशेषोद्देशेनैव सिद्ध उपाधिरिन्धनम्। धूमस्य पुनरग्निना सम्बन्धे तदुपाधिर्भवन् दृश्य एव भवेत्, अनुपलब्धस्तु नास्तीत्युच्यते। तत् किमिन्धनमेव परमुपाधिर्येन दृश्यतानियमः सम्बन्धे हि विवक्ष्यते, अपेक्षणीय-मर्थान्तरं स्वभावविशेष एव चोपाधिरभिधेयः। न चार्थान्तरं दृश्यतानियतम्। ततश्च धूमस्यापि हुताशेन सह सम्बन्धे स्यादुपाधिः, न चोपलक्ष्यत इति कथमदर्शनान्नास्त्येव, यतः स्वाभाविकसम्बन्धसिद्धिः ?

अथ यद्यपेक्षणीयमर्थान्तरं स्यात्, कथं धूम इत्येव पावकस्य सत्तानियम इति चेत् ? नन्विदमेव चिन्त्यते, किं धूमे सति अवश्यमग्निः सम्भवी, न वेति ? कदाचिदर्थान्तरमुपाधिमपेक्ष्य धूमोऽपि स्यात्, नाग्निरिति किमत्र निष्टङ्ककारणम् ? तस्मात् पावकपराधीनोदयो धूमः परिनिष्ठितः कथं तदभावेऽपि भावं स्वीकुर्यादित्येव साधु। असिद्धा [5a] चेयमुपाध्यनुपलब्धिः। यथा हि दहनो नेन्धनेन विना धूमेन संबध्यते, तथा धूमोऽपि न तेन विनाऽग्निना संबध्यत इति समानमुपाधित्व-मिन्धनस्योभयत्र। अथ सिद्धस्याग्नेरिन्धनसाहित्येन धूमलाभ इत्युपाधिव्यवस्था, असिद्धस्य तु धूमस्य तन्निमित्तात्मलाभतया तदव्यभिचारात् स्वाभाविकः स्थाप्यत इति चेत्? एवमपि सैव तदुत्पत्तिरायाता, सैव च स्वाभाविकः सम्बन्धः। न च यथोक्त-मानसादिग्राह्यः। न चोपाधिर्दृश्यानुपलब्धिबाध्य इत्यौपाधिकशङ्कायां न विपक्षाग्नि-वृत्तिर्धूमस्येति स्थितम् ॥

वाचस्पत्ये तु प्रबन्धेऽग्नेर्धूमेन संबन्धे इन्धनमुपाधिर्दृश्य उक्त एव। धूमस्य तु वह्निना सम्बन्धे स्वाभाविकत्वमुपाधेरनुपलब्धिमात्रेण च बाधः। तत्र च क्वचिद् व्यभिचारस्यादर्शनादिति हेतुः। तत्रेदमालोच्यते, किमयं हेतुरुपाध्यनुपलब्धिसाधकः, अथ सैवास्य साधिकायं स्वाभाविकत्वस्य भूतानुपलब्धेरदार्ढ्यशङ्कयोपाधेरेव बाधकः? प्रथमे निरुपयोगः, न हि बुद्धेर्भावाभावौ हेत्वन्तरसाध्यौ, स्वसंवेद्यवेदनान्तरस्वभावत्वात्। नास्ति चोपाधेरुपलब्धिरिति सिद्धैवानुपलब्धिः। एवं व्यभिचारादर्शनेऽपि हेत्वनुपयोगो वाच्यः। व्यवहारसाधनमुपयोग इति चेत्– न, विमतेरभावात्, अप्रतीतिमात्रस्य सिद्धत्वात्। तृतीयोऽपि न युक्तः। एकस्या दृश्यविशेषणरहिताया निषेधसाधनाशक्तौ द्वितीयस्याः कीदृशी शक्तिः? व्यभिचारो दृश्य एव विवक्षित इति चेत्? तर्हि न सर्वत्र सर्वदा वा। ततश्च [न] क्वचिद् व्यभिचार इत्यतः स्वाभाविकत्वमयुक्तम्। क्वचित् तु न दृष्टो व्यभिचार इत्येवं तत्कल्पनमनलस्यापि धूमेन प्रसज्येत। चैत्रमैत्रादिनां वा परस्परम्। सति चैवं स्वाभाविकसम्बन्धेऽप्यनाश्वास इत्यायातम्।

तस्मात् सर्वत्रैवाव्यभिचारः पर्येषणीयः। ततोऽनुमानविषयेऽपि यावन्न साध्यं प्रत्यक्षेणोपस्थापयति, तावन्नाव्यभिचारं प्रतीयादिति कृतमनुमानेन। किं च तदुत्पत्तिवादेर्ष्यया धूमस्यानेकान्तपरिहाराय स्वाभाविकवाद आश्रितः, अनेकान्तश्च व्यभिचाराशङ्कया। ततः स्वाभाविकत्वादव्यभिचारः सर्वत्र। सर्वत्राव्यभिचाराच्च स्वाभाविकत्वमितीतरेतराश्रयः। यस्य तु सकृदेकजातेरन्यजात्यधीनोत्पत्तिप्रतीतिरेव सर्वत्राव्यभिचारप्रतीतिः, तस्य नायं प्रसङ्गः, भूयोदर्शनापेक्षायामेव तदवतारस्य न्यायप्राप्तत्वात्। यथा ह्येकदा दर्शने शङ्कायामन्यापेक्षा, तथान्यदापि शङ्कापेक्षा। परस्पराकृष्ट एव सर्वत्र दर्शनाक्षेपः। यदि तु तत्रापि वारसंख्यानियमं दर्शयेत्, यथास्माकम्–

प्रागदृष्टौ क्रमात् पश्यन् वेत्ति हेतुफलस्थितिम्।
[5b] दृष्टौ वा क्रमशोऽपश्यन्नन्यथात्वेन च स्थितिः॥

इति प्रत्यक्षानुपलम्भयोर्वारत्रयनियमोऽवयवे, समुदाये त्वेकवारस्य, तदा तावतैव सुस्थो भवेत्। भूय इति त्वपरिनिष्ठितसंख्यः कियता निर्वृत्तिमासादयेत् लक्ष्यानुसारी? तदशक्यत्वे च न क्वचिदनुमानमयं कुर्यादिति लक्षणशास्त्रमनर्थकम्। स्मरणे तु चित्तपाटवाधानाय कियदपि दर्शनं प्रवर्त्स्यति। न तत्र परिमाणनियममन्तरेण किञ्चित् क्षीयते, बीजेऽङ्कुरजननाय कालपरिमाणनियमवत्। एवमभिजातमणितत्त्वस्फुटीभावेऽपि न दर्शनानां परिमाणनियमः। सूक्ष्मरूपभेदोद्भेदमात्रस्य विवक्षितत्वात्,

प्रभास्वरादिवावरकप्रविष्टस्य । यमलकवद् वा । धूमादौ तु न रूपस्य भेदो विवक्षितः, किं तु स्वरूपस्य । यथा हि नीलेतररूपयोः प्राक् पटीयसोऽपि कोटिरपि दर्शनानि न भेदावधारणपटूनि, तथा व्यभिचारदर्शनात् प्राक् व्यभिचाराव्यभिचारवतोरर्थान्तरे सन्निधीयमानयोर्न किञ्चिद् रूपभेदावधारणम् । धूमे तु न रूपाद्विशेषोल्लेखि हृदयमपि तु पावकाधीनसंभवतयेत्युक्तम् । अत एव च सकृत्प्रवृत्तप्रत्यक्षानुपलम्भाभ्यां निर्वृत्तिः। रूपापेक्षया तु धूमेऽपि यादृगेव दर्शनमाद्यं तादृगेव कोटितममपि न मणिवद्विशेषभाक् । तादृगेव दर्शने यदि व्यभिचारशङ्कारहितः प्रतिपत्ता, तदा न द्वितीयस्यापि दर्शनस्य अपेक्षा । शङ्कमानस्तु शतेनापि दर्शनैरप्रत्यय एवेति भूय इति भवदीयमन्त्राक्षरजापिनः का गतिः ? अतश्च शतधाप्यव्यभिचारदर्शी पुरस्तात् सन्देहवानेव ।

यत् त्वनुपलभ्यमानस्यापि कल्पनानुपपत्तेरिति सुप्तेनेव विलपितम्, तद् बालस्याप्यसाम्प्रतम् । अनुपलभ्यमानस्यैव हि कल्पना भवति, प्रकृतीश्वरादिवत् । कल्पितं तु किञ्चित् प्रमाणमन्वेति किञ्चिन्नेति विशेषः । न हि दृश्यमानो घटः कल्पित उच्यते । तस्मादनुपलभ्यमानेष्वेव कल्पनाव्यवहारः, केवलं क्वचिदाप्तवचनादिना बाधकादर्शना[द्] दृढः सत्तावसायः, विमर्शकस्य तु पाक्षिकः । ततो धूमस्यापि यदि व्यभिचारो दृष्टो, दृष्ट एव । कस्तत्र संशयः ? यदा तु न दृष्टस्तदा सत्त्वैकांशावसायो मा भूत् प्रामाणिकाधिकारात्, पाक्षिकस्तु सत्त्वोल्लेखः कथं वार्यः ? अथैवमभिप्रायः, न तत्रैवानुपलब्धिर्विवक्षिता, किं त्वन्यत्रापि यन्नोपलभ्यं तस्य न शङ्केति चेत् ? नन्वग्निव्यभिचारश्चामीकरादौ दृष्ट एवेत्यस्तु सन्तोषः । अथ धूमे न दृष्टः, तत् किं स्थाणौ पुरुषत्वं दृष्टं येन स्थाणौ शङ्क्यते ? ऊर्ध्वतालिङ्गिते दृष्टमिति चेत् ? इहापि भूयः सहचारिणि दृष्ट एवान्यत्र । अत एव न चादृश्यमानोऽपीत्यादि विप्लुतम् । यत्रैव तु यत् संशय्यते, तत्रैव तस्य दर्शनमपेक्ष्यत इत्यलौकिकम् । अतो धूमजातावदृश्यमानोऽपि व्यभिचार उपाधिर्वा दर्शनायोग्यतया निषेद्धुमशक्यः । स [6a] इदानीं संशयः स्वाभाविकत्वसंशयस्वभावः स्वाभाविकत्वनिश्चयं तावदवश्यं प्रतिबध्नाति । स्वाभाविकसंबन्धबलेन च धूमो गमकः कथं तदनिश्चये गमकत्वेन गृह्येत ? न हि धर्मिणि सत्त्वेन हेतुर्गमकः सत्त्वसन्देहेऽपि गमको भवितुमर्हति । यश्च यत्सन्देहे प्रवर्तते स तदसम्भवेऽपि प्रवर्तत एवेति स्वाभाविकसंबन्धं विधूयापि धूमस्येवान्यस्यापि गमकत्वप्रसङ्गः । तस्मान्निश्चयप्रतिबन्धः स्वाभाविकत्वप्रतिबन्ध एवार्थतः, निश्चयमन्तरेण गमकाङ्गस्य स्वयमकिञ्चित्करत्वात् । तस्मान्निरमी धूमस्य,

अवश्यं शङ्क्या भाव्यं नियामकमपश्यताम्
[प्र. वा., ३. ३२४]

इति दुर्लङ्घ्यमेतत्तदुत्पत्त्यनाश्रयणे। नचैवं प्रामाणिकलोकमर्यादातिक्रमोपालम्भः। न हि प्रमाणगोचरे कश्चिदनिश्चयमाचष्टे, प्रमाणाभावे वा निश्चयम्, यथा भवानुपाधेर्बाधकप्रमाणाभावेऽप्यभावनिश्चयम्। अत एव न संशयपिशाचस्य सर्वत्रावकाशः प्रमाणाभाव एवानुमतत्वात्। प्रमाणविषयेऽपि किञ्चिद्वक्तं शक्यत इति चेत्? यदि मुखमस्तीति वक्तव्यमुच्यताम्। केवलं यदि स्वीकृतप्रमाणधर्मो वक्ति तदा सुदानमुत्तरम्। अथेतरः, तदेतरेणैव वक्तव्यम्, नास्माकमवसरः। स्वीकृतप्रमाणस्य हि निश्चयफलत्वात् प्रमाणस्याविप्रतिपन्नप्रमाणविषये निश्चयस्वीकारनान्तरीयक एव तत्स्वीकारः कथं सर्वत्र शङ्कापिशाची लब्धावकाशा भवेत्? केवलं त्वत्प्रणीतलक्षणं न प्रमाणमिति ब्रूहि। तच्च विचार्यमाणमेव वर्तते। अथादृश्यमानोऽप्युपाधिर्धूमे शङ्क्यत इति प्रामाणिकलोकयात्रातिक्रम इति चेत्–न, प्रामाणिकै रेवायोग्यानुपलब्धेर्बाधाधिकारप्रतिषेधात्। अन्यथेश्वरस्वर्गसाधनादेर्दत्तो जलाञ्जलिः। अनुमानागमप्रमाणसिद्धेर्नायं दोष इति चेत्– न, पूर्वमनुपलब्ध्या बाधितेऽनुमानादेः साधकस्याप्रवृत्तेः सर्वज्ञासिद्धौ प्रसाधितत्वात्।

तस्मात् पूर्वापरपरामर्शविवेकफलमेतदनुपलब्धिमात्रं निश्चयसाधनमिति। ततः प्रमाणविषये संशयानवकाशान्नायं कचित्प्रवर्तेतेत्यसंबद्धम्। न च शङ्क्येव न प्रवृत्तिः, अर्थसंशयेन प्रवृत्तेरनिवार्यत्वात्, स्निग्धान्नपानवत्। एतत् त्वनर्थकसंशयेनोदाहरतोऽर्थानर्थसंशयविषयोऽप्यज्ञात इति किमतः परं वाच्यम्? न चैतत् प्रकृतम्, प्रमाणवृत्तौ संशयोऽस्तु न वेत्यस्य प्रकृतत्वात्, तत्र चोक्तमेव। अथेदमाकूतमनेकधा धूमस्य धामन्यव्यभिचारदर्शनात् कदाचित् तदन्तरेण धूमो भवेदितीयमनर्थशङ्का। सा च निवृत्त्यङ्गमिति तामवधूय स्वाभाविकसम्बन्धबोध एव विधीयतामित्यर्थः। यथान्नपाने मरणशङ्कां निरस्य प्रवृत्तिरेवेति। यद्येवमर्थसंशयोऽपि प्रवृत्त्यङ्गमिति युक्तम्। भूयः साहित्यदर्शनादव्यभिचार एव [6b] हि प्रायिकः, अन्नपाने जीवनवत्। अथेदृशमनर्थसंशयमेव ब्रूम इति चेत्? स तर्हि प्रवर्तक एव। तत् कथं नायं कचित् प्रवर्तेत इत्युच्यते? कथं वानर्थकसंशयोऽपि निवृत्त्यङ्गम्? एतच्च कदाचिद् व्यभिचारेऽपि समानम्, कादाचित्कादानमानवयाचनवदिति साध्वी धूमस्य स्वाभाविकसम्बन्धसिद्धिः। यथादृष्टाशङ्कनं च प्रागेव प्रतिपादितम्। अतएव विशेषेत्यादि सिद्धसाधनम्।

तदुक्तमित्यादिना त्वातुरमादाय दहनप्रवेश एषः। तथा हि,

बाधाज्ञाने त्वनुत्पन्ने नाशंका निष्प्रमाणिका
[ तुल° श्लो. वा., २. ६० ]

इति। यद्युल्लिख्यमानस्यार्थस्य बाधज्ञानमुत्पन्नं साधकं वा प्रमाणम्, तदा शङ्कायाः क्वावकाशः, तस्याः संशयरूपत्वात्, साधकबाधकस्य चैकान्तावसायसाधनत्वात्? अथेन्द्रियेषु तिमिरादिबाधज्ञानानुत्पत्तिर्विवक्षिता, तदप्रस्तुतम्। न हि धूमादौ स्वरूपस्यासिद्धिराशङ्किता, किं तु व्याप्तेरिति।

को वाऽर्थो निष्प्रमाणिका इति यदि साधकप्रमाणविरह इष्टः, तत् किं शङ्कायाः? यद् वा शङ्कयोल्लिख्यमानस्यार्थस्य, तस्यापि तत्रैवान्यत्र वा? अन्यत्रापि सजातीये, अन्यमात्रे वा? प्रथमपक्षस्तावन्न प्रस्तावानुरूपः। भवतु वा, तथापि तदन्यज्ञाने साधनमेकार्थसमवेतं मानसमर्थापत्तिः स्वसंवेदनं वा, तन्न क्षीणमस्याः। शङ्कितस्य प्रस्तुते साधकप्रमाणाभावस्तु शङ्कासाधक एवेत्युक्तम्। अन्यत्र सजातीये प्रमाणाभावस्य त्वयमर्थः यद् धूमे वह्न्यनायत्तत्वं शङ्क्यते, तत् तज्जातीयेन प्रमाणेन नावगतम्, तत्र व्यक्त्यपेक्षया तज्जातीयत्वम्, जात्यपेक्षया वा? व्यक्त्यपेक्षया तावद् धूमान्तरमेव तज्जातीयम्। यदि च तत्र चित्रभानुनानायत्तिः प्रमिता, तदा व्यभिचारादेव व्याप्तिबहिष्कृतो धूमः साधारणानैकान्तो जात इति किमत्र सन्दिग्धविपक्षव्यावृत्तिकत्वार्थं शङ्कावतारणेन? अप्रमितायामपि वह्न्यनायत्तत्वव्यभिचारादेव किं शङ्क्येति चेत्? अदर्शनमात्रेण व्यभिचारस्याभावासिद्धेः, योग्यानुपलब्धेरेवाभावसाधनेऽधिकारात्। ततो बहुलं सहचारमात्रे व्यभिचारी नाव्यभिचारी निश्चित इति शङ्कावकाशः। जात्यपेक्षया तु धूमजातेरन्यैव जातिः कयाचिद् द्रव्यादिप्रत्यासत्त्या सजातीया, ततोऽभिमतपक्षोपनिपाते जलादौ व्यभिचारदर्श[न]मुक्तमेव। युक्तश्चायमेव पक्षः। धूमे व्याप्तिचिन्तायां देशकालान्तरविप्रकृष्टं धूममेकीकृत्यैव निर्णयप्रक्रमात् जात्यन्तर एव शङ्क्यमानदर्शनमनुरूपम्, तावतापि स्मृतेरनुभवपूर्वत्वाप्रच्युतेरिति। प्रथमपक्षादन्यत्रावाचकं चेदमक्षरं तत्र चानुपयुक्तमिति यत्किञ्चिदेतत्।

अजातबाधकोत्प्रेक्षिणः संशयात्मत्वमपि बालविलपितमेव। बाधकोत्प्रेक्षणं हि निश्चयात्मतया संशयविरुद्धमित्युक्तम्, न ह्यनिश्चयफलं बाधकं वा। ततो यत्र तदभावः, [7a] तत्र नः संशय इति कथं सर्वव्यवहारेषु तदात्मकत्वम्? अथ

नोपबृंधाधीनत्वस्य धूमे बाधकमुत्प्रेक्षते य इति विवक्षितम्, किं तु यद्दृश्यप्रतिबद्धत्वसंशय एव व्याप्तिनिश्चयस्य विरोधाद् बाधक उक्त इत्येवं नेयम्। तथाप्युत्प्रेक्षतेति विरुद्धम्। विकल्पनं ह्युत्प्रेक्षार्थः, न च संशयस्यैव विकल्पात्मनो विकल्पनं नाम प्रस्तुतम्। जननं तु युक्तम्। तदाप्यजातविशेषणमपार्थकम्, जातस्योत्पादनार्थासङ्गतेः। अथाजातमभूतमसत्यमपि शङ्क्यमानमनग्न्यधीनतादिकं प्रमेयं स्वविरुद्धबाधकमुत्प्रेक्षेत स्वकल्पनामात्रेणोद्भावयेदित्यर्थः, तदापि तदसत्यत्वं केनचित् प्रमाणेन प्रसाध्य यद्येवं ब्रूयात्, सर्वं शोभेत। न चाक्रोशादन्यदस्ति साधनमस्य साहसिकस्य। यदि च यथाप्रसिद्धातिरिक्तमभ्यूहत एवाक्रोशपात्रत्वम्, तदा दर्शनादर्शनमात्रप्रसिद्धे व्याप्तिवादे विपक्षवृत्तिशङ्कामपाकर्तुं स्वाभाविकसम्बन्धादिकमभ्यूहमानस्यापि किं न तत्त्वम्? तस्यापि वा सम्बन्धस्य मानसप्राह्यत्वबाधकमिन्द्रियग्राह्यत्वं वदतः, सर्वज्ञबाधकानि वा ज्ञेयत्वादीनि। यथा प्रसिद्धोर्वस्यादिशब्दार्थबाधकं वा पा[?]त्र्याद्यर्थं ब्रुवतः, किं वा भूयो बौद्धीयशङ्कासन्निपातशातनमीदृशमाक्रोशसाधनमनन्यशक्यमूहितवतोऽस्यैव प्रथमं स्वयगमनमुचितम्।

संशयोत्थापकस्य तदिष्टमिति चेत्? ननु संशयस्यापि पूर्वमजातस्यैवोत्थापनाद् भ्रष्टः, ततः साधकबाधकोपनीतनिश्चयस्याप्यजातस्योत्थापनात् किं न दुष्टः? प्रमाणबलान्निश्चयो दुर्लङ्घ्य इति चेत्? तदभावे तर्हि संशयोऽपि दुर्लङ्घ्य इत्यलमतिविसारिण्या कथया। ततः पूर्वापरपरामर्शेन प्रमाणविषयादन्यत्र संशयोद्भावनं कथं मोहादित्युन्मत्तो भाषते? प्रमाणप्रतिबद्धो हि निश्चयो यदि तदभावेऽपि भवेत्, किमर्थं यत्नेन प्रमाणान्वेषणं प्रेक्षस्य, तद्विप्रतिपत्तिनिराकरणाय वा श्रमः शास्त्रकाराणाम्? तस्मात् प्रमाणापाये नियतमायातः संशयः कथमनिष्टिमात्रेण निराकर्तुं शक्यः? यद्यप्येवं तथापि गत्यन्तरविरहात् संव्यवहारे प्रायः सहचारदर्शनात्, अदर्शनाच्च सकृदपि व्यभिचारस्य, विकल्पोल्लेखितमपरिपुष्टसंश[य]मसन्तमिव कृत्वा निश्चय एव व्यवहर्तव्यो न संशयः।

अत्रोच्यते। तत्त्वतः कार्यकारणभावः प्रमाणसिद्धोऽस्ति न वा? संश्च नियतविषयोऽन्यथा वा? नेति पक्षे सर्वमयत्नशीर्णम्, साधनदूषणयोरप्यनवकाशादिति विभक्तं क्षणभङ्गे। सन्नपि यद्यनियतविषयः, तदापि सन्नेवेति विरुद्धं शास्त्रे। न च स्वर्गाद्यर्थिनो वेदेश्वराद्यनुवर्तनं नियमेन वाच्यम्, ब्रह्मवधादेरपि तल्लाभप्रसङ्गात्। ततोऽस्ति चासौ नियतविषयश्च यथोक्तप्रत्यक्षानुपलम्भसाधनश्चेत्यवश्याभ्युपगन्तव्ये

आयाते निश्चयस्य सिद्धत्वाद् गत्यन्तराभावोऽसिद्धः, [7b] तमन्तरेण स्वाभाविकसम्बन्धसिद्धेरप्यनाश्रयत्वात्। यत्तु यत्नेनान्विष्यन्त इत्यादि, तत्रापि व्यभिचारान्वेषणमेवोपाध्यन्वेषणं विद्मः। व्यभिचारमन्तरेणोपाधिव्यवस्थाया अशक्यत्वात्। ततो यावद् धूमदर्शनम्, तावद् व्यभिचारशङ्कयोपमृद्य निरुपणापर्यवसाने गतमनुमानेनेत्युक्तप्रायम्। अन्यथा यत्नेनान्विष्यमाणा इत्यस्य कोऽर्थः? कतिपयवाराव्यभिचारगोचरीकरणे हि परत्र कीदृशी निर्वृतिः?

यदपि स्यादेतदिति वल्गितं तदपि निःसारम्। प्रमाणसिद्धे हि रूपे स्वभावावलम्बनम्। न तु स्वभाववादबलेनैव वस्तुरूपव्यवस्था। तद् यदि नियतविषयान्वयव्यतिरेकग्राहकप्रत्यक्षानुपलम्भप्रमाणसिद्धे हेतुफलभावे स्वभाववादः, तत् किमायातं स्वाभाविकसम्बन्धे? यत्र तदुत्पत्तिप्रतीतिसामग्रीं हृदयेन दूरीकृत्यान्यतः सहचरितद्वयाविशेषप्रतीतौ प्रतीत्युपाय एव दवीयान्, तत्सामग्र्यपेक्षणे च तदुत्पत्तिरेव सा। किमाहोपुरुषिकया नामान्तरकरणेन? अत्रान्तरे भूयोदर्शनजनितसंस्कारसहायेन्द्रियेण ग्रहणपर्यन्तं पूर्वदूषणेनैव निरस्तम्।

यच्चायं संशयस्य विशेषदर्शनापेक्षया,

सामान्यदर्शनाद्विशेषादर्शनाद्विशेषस्मृतेश्च संशयः।

[वै. सू. २. २. १७.]

इति लक्षणक्षतिं संशयमनिच्छन् उत्कलयति, तत्र किं लक्षणक्षतिभयात् प्रमाणाविषये द्वयाकारबुद्ध्यैव न भाव्यम्, उतस्वित् द्वयाकारत्वेऽपि नासौ संशय इत्यभिमतम्, अथ तत्त्वतः संशयो भवतु मा वा वयं तु संशयत्वेन व्यवहरामोऽस्मल्लक्षणक्षयादिति पक्षाः। प्रथमस्तावदसम्भवी, विकल्पोल्लेखितस्य रूपस्य साधकबाधकयोरेकान्तसाधनयोरभावे श्वः प्रियागमनवार्तादिवत् किं सत्यमेतन्न वेत्युभयाङ्गोल्लेखिविकल्पजन्मनो राजाज्ञयापि निषेद्धुमशक्तेः। शक्यन्ते हि कायवाग्व्यवहारा अन्यादृशेऽपि चेतसि बलादेव भयादिनान्यथा कर्तुम्, न तु चित्तविवर्तः प्रमाणाप्रमाणद्वारायातः। एतत् तु स्यात्। भूयसैकभागस्योपलम्भात् परिपुष्ट इव सोऽङ्गः परिस्फुरति, एकान्ताशक्तेस्त्वन्यो भागः क्षीण इव, तादृक्सामग्रीविरहे पुनरुभयोऽपि साधारणः। यथा तत्र वेश्मनि काकः किमस्ति नास्ति वेति द्वयाकारतापि क्वापि नापैति। स एव संशयार्थ इति द्वितीयोऽप्ययुक्तः। अन्यथानिश्चयनिश्चयाकाराभ्यां भ्रान्तिसम्यग्ज्ञानाभ्यां भिद्यमानो

यदि न संशयस्तत् किं तुरीयो राशिरेषः, ततस्तमगृह्णतो लक्षणस्यैवायमस्तु दोषः, न लक्ष्यमन्यथाकर्तुं शक्यम्। अत एवान्तिमोऽपि नोपयोगी। उभयभागावलम्बि संवेदनं चेदेकान्तक्रियामपेक्षमाणं सिद्धम्, तावतैव स्वाभाविकसम्बन्धासिद्धेः किमत्रभवतः सन्देहव्यवहारापेक्षया इत्यलं बालवादितया।

मानसदूषणे तु सिद्धसाधनमेवास्तु किमत्रापि परिश्रमेण? स्वभावप्रतिबन्धे तु गमकत्वं [8a] सिद्धसाधनमेव। स तु तदुत्पत्तिलक्षण एवेति स्थापितम्। एवं च भूयोदर्शनसामर्थ्यकदर्थनात् तत्सहायानि मानान्तराणि प्रत्यक्षविषयस्वभावप्रतिबन्धसिद्धये वन्ध्यानि बोद्धव्यानि। विपर्ययबाधकमेव तु प्रमाणमनुमानमुन्नेयम्, तदभावे विपक्षवृत्तिनिषेधस्याशक्यत्वात्, तत्पुत्रताया इव श्यामत्वे। यत् पुनरत्र अन्नपानपरिणतिभेदस्योपाधेर्भावात् स्वाभाविकसम्बन्धवैधुर्यमुक्तम्, तन्न युक्तम्, आहारपरिणतिभेदस्योपाधित्वनिश्चयाभावात्। यथा हि दहनमात्रादनिन्धनान्न धूम इति धूमेन वह्नेः सम्बन्धि इन्धनमुपाधिरुच्यते, तथा यदि मैत्रजनितस्यापि कस्यचिद् विवक्षिताहारपरिणामविरहेण श्यामतोपालप्स्यते स उपाधिर्निरचेष्यत, तदा किमुपाधिवादेन, व्यभिचारादेव न मैत्रपुत्रत्वं गमकमितीयतैव पर्याप्तत्वात्? न चैवं शक्यम्। तत् कथमसावुपाधिर्निश्चितः? किंश्विन्मैत्रस्यैव जन्मान्तरप्रणिधानात् सप्ताष्टापि दृश्यमानाः श्यामतनवः सूनवो न जाताः किमत्र प्रमाणम्? तद्वत् तर्हि भातुरपि सुतानामपि वा प्रणिधानमाशङ्क्येत। तत्पुण्यप्रणिधानयोरदृढत्वे चाहारभेदस्यापि शक्तिः संभाव्यते। तत्र किंप्रयुक्तमेषां श्यामत्वमिति शङ्कैव उपाधिशंकानुमानमनवकाशयति। किं तन्निश्चयेन? पर्यवसितमिदानीमन्तिमेन श्यामतासाधनेन। यद्विपक्षनिवृत्तं पक्षसपक्षविश्रान्तमबाधितविषयमप्रतिहेतुम्, तत्पुत्रताहेतुमहेतूकर्तुमुदरं मृदित्वा संशयपिशाचमुत्थापयता कथं न भीतं भवता? तस्मात् तत्पुत्रतायाः श्यामत्वे प्रतिबन्धसाधकप्रमाणाभावादश्यामतायामदर्शनमात्रेणासम्भवानुपपत्तेरहेतुत्वमित्येव साधु, किमन्तर्गडुनोपाधिवादेन?

सन्दिग्धविपक्षव्यावृत्तिकत्वं च हेतुदूषणं तात्त्विकमेवाभ्युपगन्तव्यम्, न ह्यन्यथा सर्वाङ्गसुन्दरस्यास्य हेतुत्वापसारः शक्यः। अपि चैवमनभ्युपगमे वज्रे लोहलेख्यत्वसाधनाय प्रार्थितस्य पार्थिवत्वहेतोः कमुपाधिमीक्षमाणो नानुमानमनुमन्यते भवान्? अथ प्रशिथिलावयवेषु काष्ठादिष्वयःकोटिमज्जनं दृष्टं दृढं च वज्रमिति स एवोपाधिरिति चेन्नैवम्। न खलु घनावयवत्वेन शतकोटिस्फटिकयोर्विशेषमुपलभामहे, यतस्तरणिमणावप्रतिहन्यमानमयःपर्वो प्रतिहन्येतेति स्यात्।

स्यादेतत् । वज्रे व्यापार्यमानमयः प्रतिहन्यमानमुपलब्धं तावत् । ननु यस्य साध्यविपर्ययबाधकं साधकं वा प्रवृत्तम्, न तं प्रत्यनुमानप्रसञ्जनमारब्धम् । यस्य तु शतशिखरपक्षीकरणमात्रं वर्तते, तेन कथमनुमानमुपाधेरबोधात् स्वाभाविसम्बन्धा-वधारणेऽपि परिहार्यमित्युक्तप्रायम् । अथ पार्थिवे उपाध्यन्तरानवधारणेऽपि स्वगतः कश्चिद् विशेषो भविष्यत्युपाधिर्यतो न लोहलेख्यत्वमिति चेत् ? अत्र तर्हि [8b] लब्धावकाशा शङ्कापिशाची धूममप्यनुधावेत्, धूमस्यापि स्वगतः कश्चिद् विशेषो भविष्यति, येनाग्निं विना भविष्यति । ननु यत्नेनानुसरन्तो नोपलभामहे धूमे स्वगतविशेषलक्षणमुपाधिम् । वज्रे तु पार्थिवेऽवगच्छामो लोहव्यापारणात् ।

तत् तर्हि लोहव्यापारणं प्रवृत्तेऽनुमाने प्रयोजनेन, उत यदृच्छया, आहोस्वित् जिज्ञासया ? आद्यपक्षे महती प्रयोजनसिद्धिरनुमानादित्यनुमानान्तरमपीदृशमेव भवतः । यदृच्छया तु न तावान् श्रमः, यावता लेख्यनिश्चयः । भवतु वा तस्यानु-मानम्, अन्यस्य कथम् ? जिज्ञासा तु निरवकाशैव । तथा हि मृत्काष्ठपाषाण-तीक्ष्णभेदेषु पार्थिवेषु कोटिशोऽयःकोटिमज्जनदर्शिनो व्यभिचारस्याप्यदर्शनात् स्वा-भाविकसम्बन्धनिश्चयाल्लेख्यतानुमानेन निरस्तव्यभिचारसंशयस्य क्व तत्पूर्वकजिज्ञासा-वकाशः ? अन्यथा सौधशिखरात् पर्वतनितम्बसंवाहितं धूममप्युपलभ्य भूयोदर्शनेन स्वाभाविकसम्बन्धबोधवतस्तत्रापि जिज्ञासैव स्यात्, नानुमानम् । ततः सर्वथा-नुमानापसार एव । कतिपयवारसंवादे चान्यदा जाते स्वाभाविकसम्बन्धनिश्चयात् कालान्तरे धूमादनुमानमन्वेति न यावज्जीवं संवादे पार्थिवतादिवदिति श्लाघनीयप्रज्ञः ।

अथ पार्थिवत्वेऽपि काठिन्यतारतम्यदर्शनात् क्वचिल्लेख्यतानिवृत्तिरपि संभाव्यत इति भूयस्यपि संवादे पार्थिवत्वाद्यनुमानम्, धूमे तु नाग्निनिरपेक्षतातारतम्योपलम्भ इति चेत् ? नन्वग्निनिरपेक्षतेत्यग्निविच्छेद एव वक्तव्यः । न च यत्रात्यन्तिकविच्छेदो भावी तत्रावश्यं प्राग्विच्छेदतारम्यदर्शनं निगडपुरुषवत् । अन्ते तु कतिपयक्षणे धूमेऽपि भविष्यति, केवलं न पुरुषनिगडवत् पृथक्सिद्धयोर्धूमानलयोः संयोगमात्रम्, किं तु धूमस्य धूमध्वजादेव जन्मेति नान्तेऽपि विच्छेदशङ्का । तावद्विशेषास्पर्शे तु शङ्कैव । तस्माद् वह्निविच्छेदिनः स्वरूपस्य धूमे पार्थिवे वा लोहलेख्यताया आहत्या-दर्शनमात्रं भूयो विपर्ययदर्शनं च साधारणमिति नैकनियता स्वाभाविकसंबन्धसिद्धिः, साध्ये नौपाधिकव्यवस्था चेति समानमनुमानमननुमानं वा ।

यदा तु धूमे तदुत्पत्तिरेव व्याप्तिसाधनी, भेदाभावात्, न तु पार्थिवे लोहलेख्यत्वेन, नापि तादात्म्यम्, स एव लोहलेख्यत्वमेवात्मा अस्येत्यसिद्धेः। विपर्ययबाधकस्यानुमानस्य दर्शयितुमशक्यत्वात्, कृतकत्ववत्। प्रत्यक्षस्य च जातिविशेषाधिकारेणैव प्रवृत्तेः, यावतीषु पार्थिवजातिषु लोहलेख्यत्वमुपलब्धम्, तत्रैव व्याप्तिसिद्धिर्नान्यत्र। तदा धूमकृतकत्वादिर्हेतुः, पार्थिवतत्पुत्रत्वादिस्तु सन्दिग्धविपक्षव्यावृत्तिको हेत्वाभासः। एवं तच्छाखाप्रभवत्वादि, प्रथमप्रसवोद्रिक्तवातातपस्पर्शाद्यपेक्षया पाकस्य [9a] क्वचिदेकशाखाप्रभवेऽप्यभावशङ्कनात्। तदेवं कस्यचिदर्थान्तरेण व्याप्तिप्रक्रमे यदि भूयोदर्शनमुपायः, तदा विपक्षादनीक्षामात्रेण निवृत्त्यसिद्धेः, तादृशां व्यभिचारदर्शनाच्च सन्दिग्धविपक्षव्यावृत्तिकतया नैकान्तिकेन साध्यसाधनं धूमादिः। स्वाभाविकादिवादेन तु हृदयलेपनमशुचिनेव परिहार्यम्। डिण्डिकरागमात्रादापाततः परस्वीकरणमात्रोपयोगिनोऽतिरिक्तस्यार्थस्य प्रतिपादनादिति प्रतिपादितम्।

तस्माद् भेदे तदुत्पत्तिप्रतीतिरेव व्याप्तिप्रतीतिः। सा च प्रत्यक्षानुपलम्भाभ्यामेव। भवतु भेदे तदुत्पत्तिप्रतीतिरेव व्याप्तिप्रतीतिः, न तु प्रत्यक्षानुपलम्भाभ्याम्, वर्तमानक्षणग्रहणनियमात् प्रत्यक्षस्य, अनुपलम्भस्य च तत्स्वभावत्वात्। यच्चाध्यवसायापेक्षयाशेषसजातीयविशेषत्वमाख्यातमक्षधियः, तत्राप्यध्यवसायो नामानन्तरो विकल्प एव। ततस्तद्वशेन प्रत्यक्षं सर्वविषयमिति याचितकमण्डनमेतत्। तद्वरमग्नेर्धूम इति सकलोभयव्यक्तिलक्षणसामान्यद्वयालम्बनो विकल्प एव तद्भावग्राहकः स्वीक्रियताम्, प्रमाणान्तरं प्रत्यक्षान्तरं वा, अनधिगताधिगमादध्यक्षव्यापारकाले भावाच्चेति चेत्? तदप्यसारम्, विकल्पेऽपि हि सर्वविषयत्वमध्यवसायसरणमेव, स्वलक्षणस्फूर्तेरभावात्। एकव्यावृत्तच्छायानुकारमात्रेण स्वाकारस्यैव प्रतिभासनात्। तत् कीदृशोऽस्य विशेषः प्रत्यक्षात्? केवलं स्वानुरूपानुव्यवसायाद्युत्तरप्रबन्धापेक्षया विकल्पे विषयाध्यवसायव्यवस्था। प्रत्यक्षे तु तमपि विकल्पमादायेति भेदः। समस्तवस्तुस्पर्शस्तु नैकत्रापि। न चान्योऽस्ति ग्राहकप्रकार इति चर्चितम्।

तस्मात् संव्यवहारे सिद्धमध्यवसायेनापि विषयव्यवस्थानमपरिहार्यमनु-

पक्षः स्वकीयं गुणमात्रमर्पयन् दूषणस्पर्शरहितो भविष्यति। न चैनं दूषणमुपनेष्यत इति किमात्मप्रमाणानभिज्ञेन द्वैतपरिग्रहः कृतः? चैतन्यशून्यत्वाच्च भावानां नाभिप्रायानुविधानम्।

अतएव न द्वितीयोऽपि विकल्पः। अस्तु वैपम्येऽनुनयादिः स पुनरात्मोपकारापकारिणि स्यात्, न चै वाचकवाच्यतया किञ्चिदेषामपकृतं प्रतिभासभेदेन वोपकृतं वा तदितरेण। भवदनुरोधात् तु गुणदोषशब्दप्रयोगः। ततस्तदनुवृत्तिविधुरस्य तथात्वेऽपि न किञ्चित्। अननुवृत्तौ वा चैतन्यमुक्तमेव।

स्यादेतत्। शब्दोदयकारणकरणकलापव्यापारवदभिप्रायानुवृत्तिः स्वभावादेवेति। तथापि [2a] द्वैतपरिग्रहोऽग्रह एव। एकस्यैव स्वभावस्य तथा व्यापारकल्पनं किं नास्थीयत इत्युक्तप्रायम्।

नापि तृतीयपक्षोपक्षेपः क्षमः। स्वभावयोस्तावत् कालभेदे यदा भेदो न तदा अभेदः। अभेदकाले च न भेद इति न कदाचित् परदोषपरिहारः। तत्र यथा भिन्नेऽभिन्ने वा वस्तुन्येकान्तभेदाभेदभावीनि पर्यायत्वादीनि कार्याणि न विहन्यन्ते, तथैव स्वभावयोः कालभेदे न प्राप्नुवन्ति, प्रतिद्वन्द्विनोऽभावात्। न च भाविनैवं निषेधोऽवस्तुत्वात्। अतस्तत्कालकार्यकालभेदः शरणीकरणीयः। तत्र भेदः शब्दान्तरवृत्तिमाधाय यावत् प्रतिभासभेदमाधातुमुपक्रमते, तावदेवाभेदेनोपनियतता प्रतिबध्यत इति क एवं न्यायविहस्तो हस्तसमारचितं वस्तु प्रस्तोतुमर्हति साहसैकभुवं भवन्तमन्तरेण? स्वभावयोरेव हि कालभेदः[स च] कस्य वस्तुनस्तावद् दुर्लभः? न हि स पश्चाद् भवन् तस्यैव युक्तः, कारणचिन्ताविधुरत्वाच्च तत्रापि प्रत्येकं कालभेदः। न ह्येकस्वभावप्रतिबद्धत्वे युक्तमेवम्। तत्रापि नियतो गुणदोषाभिमतकार्यकरणक्रमः। अनियमेन पुनः प्रपातपतनप्रसङ्गादिति व्यक्तमिष्टकामतामात्रापहृतहृदयो न किञ्चित् चेतयत इत्युपेक्षामर्हति। न हि तदिच्छातिरिक्तमत्रकारणमाकलयामः। अपि च, यदा भेदस्य पश्चाद् भेदाभ्युपगमः, तदा पृथगुपलब्धिं बाधमानस्याभेदस्य द्वितीयं कार्यं केन निवार्यताम्? भेदेनेति चेत्– न, यद्यन्येनोत्तरकालभाविना, तदास्यापि दोषाङ्गनिराकरणायापरो मृग्यत इत्यनवस्था। अथ प्राक्तनेन, तस्य यद्येतावती शक्तिः पश्चादभेदेनोपनीयमानमपृथक्प्रतिभासमेव कथं न बध्नीयात्? तद् यदि पूर्वापेक्षया उत्तरस्यापवादकत्वं, पूर्वतरापेक्षया कथं नेति चिन्त्यम्। तस्मात् प्रत्येकमुभयकार्य-

त्वाद् भेदाभेदयोरेकप्रतिनियतः परिहारः स्वीकारो वेत्यनिबन्धनमेतत्। ततः पृथक् प्रतिभासाप्रतिभासौ सहोत्पत्त्यनुत्पत्ती शब्दान्तरवृत्त्यवृत्त्यादयश्चैकस्यैकदा प्रसज्येरन्। न चोपाधेरुपाधिमतो भेदेनानुभवगन्धोऽपि समस्ति। व्यक्तिविनाशे वा विनाशलेशोऽपि न सामान्यस्याभ्युपेयते परैः।

व्यक्तिरूपेणेप्यत एवेति चेत्? ननु व्यक्तिरूपेणेति न निजेन रूपेणेति विवक्षितम्, अन्यथा विशेषणानर्थक्यात्। निजस्यैव रूपस्य भेदाभेदचिन्तायामयं प्रसङ्ग इति किमनेन परिहृतम्? अथ निजमस्य न रूपान्तरं संभवत्येव, कस्य तर्हि भेदाभेदचिन्तेति सिद्धा निरुपाधयो धर्माः। ननु भिन्नस्याभेदसंभवेऽपि न शब्दान्तरवैयर्थ्यं विघ्न इति किमत्र कुर्मः? एवं तर्हि भिन्नस्याप्युपाधेर्न भिन्नः प्रकाश इति किमत्र कुर्म इति ब्रुवतो नैकान्तवादेऽपि दोष इति तथापि व्यर्थो द्वैतमताश्रयः, पर्यन्ते पादप्रसारिकाया [2b] अपरिहारात्। परिश्रमातिशयस्त्वतिरिच्यते, आहोपुरुषिका वा? अथापि स्यात् तादात्म्यमभ्युपगच्छतो यदा शब्दान्तरावृत्त्यादिदोषः परैः प्रसज्यते, तदा भेदस्यापि संभवः परिहारः। भेदे च प्रतिभासभेदापादनेऽभेदोपनय इति न शक्यमेकान्तवादे। न च पादप्रसारिकेति नाप्युभयदोषप्रसङ्गः। यदा हि पूर्वं भेद उपनीतः, तदा तदासङ्गिदोषोत्खाते चाभेदस्योपनयात्।

एवं पुनः पुनस्तदावर्तनपरम्परया पर्यवसानाभावेऽपि न क्षतिरिति चेत्? भवतोपनीयमानस्तर्हि बाधको धर्मः साधको वा न स्वसामर्थ्येनैवेत्यापन्नम्। उपनयश्च वचनात्मन्यनभिधीयमानो भवत उपर्बुधोऽपि न बाधकः स्यात्। एतेन मया प्रसङ्गार्थमनङ्गीकारादित्यपि निरस्तम्। न हि जीवनाय भक्ष्यमाणं विषं न हिनस्तीति शक्यम्। तस्माद् भीतार्गलयुगलसमानमेतदुभयदोषपरिजिहीर्षयोभयपक्षालम्बनं मन्दमेधसामिति।

प्रयोगः, यद् यन्मात्रनिमित्तं तत् तस्मिन् सति भवत्येव, यथा चक्षुरादिसामग्रीमात्रनिमित्तं ज्ञानजन्म, भेदाभेदमात्रापेक्षं च यथोक्तदोषजातमिति स्वभावहेतुः। तन्मात्रनिमित्तत्वमन्यानपेक्षत्वेन व्याप्तम्, तत्संभवेऽपि च तदभावे तद्विरुद्धमन्यापेक्षत्वं स्यादिति व्यापकविरुद्धोपलब्ध्या विपर्ययान्निवर्तमानं तन्मात्रनिमित्तत्वं तस्मिन् सति भावे नियम्यत इति व्याप्तिसिद्धिः। नाप्यसिद्धिस्तन्मात्रापेक्षायाः। न ह्यभेदमात्रातिरिक्तं सहोत्पादनिमित्तमुपपद्यते। भेदमात्रातिरिक्तं वा पृथक्प्रकाशस्य दृश्यते।

भवविकल्पयोश्च साधारणमिति प्रत्यक्षविषयीकृते हेतुफलभावे मानसव्यवहार-स्वभावोऽपि विकल्पः स्मृतिरेव, न प्रमाणम्। उचिता चैकदेशद्वारेणापि समुदाय-स्पर्शादशेषसजातीयग्रहणव्यवस्थाध्यक्षस्य, न विकल्पस्य प्रकृत्या बहिरर्थस्य। तस्मात् प्रत्यक्षानुपलम्भसंभवैव हेतुफलभावस्वभावव्याप्तिसिद्धिरिति स्थितम् ॥

॥ व्याप्तिचर्चा नाम प्रकरणं समाप्तम् ॥

॥ कृतिरियं महापण्डितज्ञानश्रीमित्रपादानाम् ॥



# ॥ भेदाभेदपरीक्षा ॥

[1b] ॥ नमो बुद्धाय ॥

प्रत्येकपक्षोपनिपातिदूषणपरिजिहीर्षया कैश्चिदाश्रियमाणो भेदाभेदपक्षः परीक्ष्यते। तत्र किमयमुभयसमुच्चयस्वभावः, तदभावरूपो वा? अभावोऽपि प्रसज्यमात्रम्, पर्युदासवृत्त्या वा भावान्तरम्? तदपि प्रकृतप्रत्यनीकं तृतीयं रूपम्, उत अप्रकृतमेव किञ्चित्?

तत्र प्रथमपक्षे यावेव भेदाभेदौ पृथग्दोषजालकवलितौ, तावेवामू एकवस्तुवर्तिनाविष्येते, तदन्यावेव वा? तत्त्वे तद्दूषणस्यावश्यमनुवृत्तेर्विफलोऽभ्युपगमः। अन्यत्वेऽपि तद्दूषणवद् गुणस्याप्यननुवृत्तेः। अपि नाम भेदपक्षभावि पृथक्प्रतीतिप्रसङ्गदूषणमभेदमुपगच्छन् परिहरिष्यामीति भेदेऽप्यभेदस्वीकारस्तत्र भवतः। यदि च स एवाभेदः पृथगुपलब्धिबाधनोऽधुनाप्युपनीतः, स्यादेवं तत्परिहारः, केवलमेकयोगक्षेमसमावेशात् प्रमाणान्तरावृत्तिमप्याकर्षेत्। ततो यद्यन्यतयैनां नाकर्षेत्, तत एव पृथगुपलब्धिनिषेधनमपि न साधयेत्। अथाभेदस्य पृथगुपलब्धिबाधैव फलं न शब्दान्तरावृत्तिस्वाभाव्यात्, तथापि द्वैताभ्युपगमो विफलः। एवं भेदपक्षेऽपि वाच्यम्। अथ पृथगुपलब्धिबाधैव फलमभेदस्य, शब्दान्तरावृत्तिनिवृत्तिस्तु भेदस्यैव, तेनापि हि संभविना स्वकार्यमर्जनीयमेव। एवं भेदस्यापि प्रमाणान्तरापेक्षैव फलं, पृथगुपलब्धिबाधा त्वभेदस्येति।

उच्यते। उभयमुभयस्य कार्यं दृष्टं, भेदस्यापि पृथक्प्रकाशप्रसङ्गदोषः, शब्दान्तरापेक्षा च गुणः। अभेदस्यापि शब्दान्तरापेक्षाप्रसङ्गदोषः, अपृथक्प्रतिभासश्च गुणः। तत्रेदानीं भेदेन शब्दान्तरवृत्तिमात्रमातन्वता स्थातव्यम्। द्वितीये तु कार्ये परप्रहारोऽपेक्षितव्यः। अभेदेनापि सह प्रतिभासं सृजता कार्यान्तरे प्रत्यनीकप्रहार इति किंकृतो विभागः? भवदभिप्रायानुविधायितया वा भावानाम्, स्वयमेव वा गुणदोषयोरनुनयप्रतिघसंभवात्, कालभेदसंभवाद् वा स्वभावयोः कार्याणां च। तत्रापि नियतो गुणदोषक्रमोऽनियतो वा? तत्र प्रथमविकल्पे भेदाभेदयोरन्यतर एव

अयोगुडदहनयोः क्षीरोदकयोर्वा भेदेऽप्यभवन् प्रकाशभेद इतरसापेक्षः सिद्ध इति चेत्– न, अभ्रान्तेन्द्रियज्ञानस्य प्रकृतत्वात्। तत्र भिन्ने एव वस्तुनी एकीकृत्य प्रतिपद्यमानं ज्ञानं कथमभ्रान्तं नाम ?

एतेन चन्द्रद्वयप्रतिभासो व्याख्यातः। अथोभयकारणारब्धमेकमेव तद् वस्तु संजातमिति मतिः, तदा व्यभिचार एव नास्तीति सिद्धं तन्मात्रापेक्षत्वम्। स्यादेतत्। तन्मात्रापेक्षस्यापि तद्भावेनावश्यम्भावः, यथा कटुकमधुरद्रव्यभाविनोरपि पित्तश्लेष्मणोः। तदयुक्तम्, वीर्यविपाकापेक्षयापि तद्तत्कार्यकरणसंभवाद् द्रव्याणाम्; रसमात्रापेक्षातिपातात् पित्तादेरिति ॥

॥ भेदाभेदपरीक्षा समाप्ता ॥



४

# ॥ अनुपलब्धिरहस्यम् ॥

सिद्धान्ते विप्रकीर्णस्यानुपलम्भस्य यादृशी ।
रूपनिष्ठेह तादृश्याः संग्रहः क्रियते स्फुटः ॥

प्रतिषेधे साध्येऽनुपलब्धिस्तृतीयं लिङ्गम् । तच्च यद्युपलब्धिविरहमात्रं तत् कथं कस्यचित् प्रतिपत्तिः, प्रतिपत्तिहेतुर्वा ? तस्यापि वा कथं प्रतिपत्तिः ? तस्मादभक्ष्यादिवत् पर्युदासवृत्त्या अन्योपलब्धिरेवानुपलब्धिः । तत्रापि यद्यन्यमात्रस्य, तदैकस्य कस्यचिदुपलब्धौ सर्वस्य निषेधप्रसङ्गः । ईष्यत एव तादात्म्यनिषेधः सर्वस्येति चेत् ? तद्देशनिषेधोऽप्यनिवार्यः । तदयं विशेषः,

वेद्ये यत्र हि यन्मतिर्नियमतः [3a] स्याद्वा न वा तस्य धी·
रिष्टा नोऽनुपलब्धिरन्यविरहज्ञानस्थितेराश्रयः ॥

[यत्र] वेद्यमाने यस्य मतिः स्यादिति देशकालस्वभावविप्रकर्षाणां निषेधः। नियमेनेति, उपलम्भकार[का]न्तरवैकल्यस्य । एतेन दृश्यविशेषणप्राप्तस्य भावज्ञानस्थितिरिति दर्शितम् । अतो न सर्वस्य निषेधप्रसङ्गः । यत्र च वेद्यमाने यन्मतिर्नियमेन स्यात्, तस्यैव धीरिष्टाऽन्यस्य द्वितीयस्याभावनिश्चयप्रबन्धाक्षेपाय क्षमेति । एतेन न विरहमात्रम्, पर्युदासवृत्त्या त्वन्यविशेषबुद्धिरित्युक्तम्, अत्र च तस्यैवैकाकिन इति सामर्थ्यात्, अन्यथेतरस्यानिषिद्धोपलब्धेरभावासिद्धेः ।

तद्यथा, नेह घट उपलभ्यस्यानुपलब्धेः । यथा क्वचित् किञ्चिदिति । तत्र दृश्यस्येति स्वभावविशेष उपलम्भप्रत्ययान्तरसाकल्यं चोक्तं द्रष्टव्यम् । अनुपलब्धेरिति प्रतियोगिन उपलब्धेरित्यर्थः । तच्च प्रतियोगी हेत्वाधारप्राप्तं भूतलमन्यद् वैकेन्द्रियज्ञानसंसर्गि, तदन्यो वा ? यस्मिन् वेद्यमाने निषेध्य उपलभ्यमेवेति सामान्योक्तेः । तत्र यदि भूभाग उपलभ्य एव कुम्भसंभवः साध्यः, तदा स एव प्रतियोगी किमन्यापेक्षया ? यदा तु नभसि तदापि तदेवालोकसंज्ञितम्, अन्यो वा घटादिरनियतस्थितिः शून्यनिषेधे त्वयमेव ।

एतेनैकज्ञानसंसर्गी प्रतियोगी व्याख्यातः। क्वचित् पुनरन्यथापि, यथा प्रदीपं कवलयतुर्नेह रसो दृश्यानुपलब्धेरिति स्पर्श एव प्रतियोगी। तयोर्हि सतोर्नैकरूपनियता प्रत्यासत्तिः पानकवत्। दूराद् रूपदर्शनेऽपि तर्हि कथं रसनिषेधो न भवति, देशविप्रकर्षिणउपलम्भयोग्यताया अभावात्, प्राप्यकारित्वाद् घ्राणरसनस्पर्शनानाम्। उक्तं च, यस्मिन् वेद्यमाने यदवश्यं वेद्यत एवेति। नापि रसानुभवे रूपनिषेधः, तदापि तल्लक्षणायोगात्। एवं शब्दोपलब्धावपि न रूपनिषेधः। समन्धकारे हि सतोऽपि रूपस्य ज्ञानाव्यभिचारिणी न शब्दवित्तिः।

आलोके तु न तावद् दृश्यमानस्यैव निषेधः। अदृष्टस्य तु योग्यस्य निषेधेऽपि न दोषः, तल्लक्षणात्यागात्। एतेन देवकुलादौ परिदृश्यमाने तद्देशभेर्यादेरेवाभावसिद्धिर्नावश्यं शब्दान्तरप्रतीतिसापेक्षेति दर्शितम्। न तयोः सहप्रतीतिनियम इति चेति। भूभागकुम्भयोरपि नैवम्, उभयोस्तु सतोरेकरूपप्रतीतिनियमविरहः प्रत्यक्षस्य तत्रापि समानः। एकज्ञानमन्यग्रहाविनाभूतं वान्यग्राहिज्ञानान्तराविनाभूतं वेति न विशेषः। एवमेकेन्द्रियजमन्यद् वा? सन्तमसेऽववरकेऽपि दीपाभावस्तदाकारविरहिणो ज्ञानान्तरादन्ततो विकल्पादपि यदि परम[स्तु समा]नम्। वस्तुतस्तु वस्तुसन्नेवान्धकार एकज्ञानसंसर्गी प्रदीपस्य संभवतीति किमन्येन?

ननु स्वभावविशेषेऽपि प्रत्ययान्तरसन्निधिरुपलब्धियोग्यता। स च भिन्नेन्द्रियज्ञाननिमित्तं भवन्नपि भिन्नेन्द्रियज्ञानप्रत्ययनिश्चयेऽनुपयुक्तः। ततश्चान्यस्य प्रत्ययान्तरसन्निधिसंशये निषेधः क्रियमाणोऽन्ततो विकल्पादपि नियताकारात् कथं दृश्यस्य...? [न हि भवति][1] प्रत्ययान्तरसन्निधिसिद्धिनिबन्धनं समानेन्द्रियज्ञानमेव, किं तु [3b] पञ्चस्कन्धलक्षणस्यात्मभावस्यावस्थाविशेषसंवेदनमपि। यदा नेन्द्रियस्वभावविशेषाभ्यामपरः प्रकाशकोऽपेक्ष्यते, यथा शब्दप्रदीपादौ, तत्र हि किञ्चित् श्रुतदृष्टपूर्विणः तदवस्थेन्द्रियप्रणिधी विदुषो यतः कुतश्चित् तु तदाकारविरहिणो ज्ञानात् तदभावसिद्धिः केन वार्यते?

कस्तर्हि ज्ञानान्तरपरिग्रहस्योपयोगः, तद्दशासंविदो ज्ञानानुत्पादादेव तदभावसिद्धेः? कथं वा भिन्नविषयेन्द्रियज्ञानादन्यनिषेध इति? उक्तमत्र नाभावस्य क्वचित् सामर्थ्यमित्यादि। ततो न ज्ञानान्तरमिन्द्रियसाद्गुण्यनिश्चयाय समाश्रीयते, किंतु

१. अत्र पाठो लुप्तः।

प्रतियोगिविरहविकल्पजननाय। तत्र यथा समानेन्द्रियसंसर्गिज्ञानमन्याभावनिश्चय-समर्थम्, तथान्यदपि सति सत्त्वेऽव्यभिचरितव्योऽर्थान्तरज्ञानाकारविरहीति न कश्चिद् विशेषः।

कथमिति चेत्? नात्रेच्छानिच्छयोः सामर्थ्यम्। यस्य तु यदन्वयव्यतिरेकानुकारस्तयोर्हेतुफलभावाद्युपगमः। यथा भूतलैकाकारनियमात् तु ज्ञानमन्यनिषेध-विकल्पेनानुकृतान्वयव्यतिरेकं, तथा प्रदीपमानने क्षिपतः स्पर्शाकारमात्रनियमाद् रसाभावज्ञानेन त[ज]ज्ञानम्। न ह्यनयोरुत्पत्तौ व्यवधानाव्यवधानविभागः। तथानुपाधिके पयसि प्रणिहितघ्राणस्यास्पर्शनदर्शनस्यापि विकल्प एव गन्धान्तरम् अननुभवतोऽपि गन्धाकारज्ञानेन तदाकारशून्यः।

लैङ्गिकं तदिति चेत्– न, व्यवधानाभावादभ्यासदशावतः। यत्प्रतिपत्तावेव हि यन्निश्चयो न स लैङ्गिकः प्रत्यक्षसिद्धो वा, यथा नीलं न पीतमिति। अस्ति च सन्निहिते पयसि घ्राणप्रणिधानमात्राकारविकल्पवतो नास्ति गन्ध इति निश्चयः। तत्र गन्धज्ञानाभावमात्रस्यासाधनत्वे यदि नियताकारविकल्पानुभवो न हेतुः, पीताभावज्ञानस्यापि मा भून्नीलानुभवः। अत्र वा प्रत्यक्षपौरुषमामनतो दुष्परिहरं परत्रापि। तदेव च प्रत्यक्षमेकस्य निषेध्यापेक्षयानुपलब्धिरुच्यते यथा तथोक्तम्। तच मूढं प्रतिपत्तारमधिकृत्य पूर्वसमयानुसारेण धर्मिविशेषेऽभावं निश्चाययल्लिङ्गम्। अमूढस्य पुनरभाववतोऽनन्तरसंशयविनाकृतः स्थिर एवासौ निश्चय इति प्रत्यक्षप्रवर्तित उच्यते।

ननु न प्रत्यक्षकृतः कश्चिदभावव्यवहारः, नापि प्रत्यक्षमर्थाभावनिश्चयेन फलवदुक्तम्, किं तु ज्ञानाभावनिश्चयेनैव। तद्द्वारेणैव त्वर्थाभावनिश्चयमन्तर्भावयति इति प्रत्यक्षकृतः स उच्यते। स च तत्सामर्थ्यजन्माप्यनन्तरं संशयेन भवता परिभूयमानो मूढं प्रति लैङ्गिकः। न हि ज्ञानस्येव प्रकाशरूपनियमोऽर्थस्येत्यदृष्टस्यापि स्थितेरविरोधात् दृश्यानुपलब्धिः शरणम्। अमूढस्य तु व्यापकानुपलब्धिः दृश्यसत्तायां दर्शनविषयत्वेन व्याप्तेः। एतद्विवेचनासामर्थ्यात् तु प्राच्यो मूढ इत्येके।

तदयुक्तम्। यथा हि ज्ञानमप्रकाशमनवस्थायि, तथा दृश्यं बहिरपीति तद्वदेव [4a] प्रत्यक्षेणानिवार्यविरहव्यवहारम्, केवलं जात्यैव ज्ञानं दृश्यम्। बहिस्तु किञ्चित् कथञ्चित् कदाचित्। तत्राभ्यासविशेषवतः प्रतिपत्तुर्ज्ञानान्तरसामान्य इव बाह्यविशेषेऽपि प्रत्यक्षमात्रादेव झगिति निषेधसिद्धिरसकृदनुभूयमाना कथमपह्नोतुं शक्या?

तत्त्वतोऽनुमानसंभवादिति चेत् ? अभिमतयोग्यतानिश्चयोऽपि प्रत्यक्षकृतः स्यादिति यत्किञ्चिदेतत्। न च यथोक्तः संशयो बहिरधिकारेणैव तदयमसंसृष्टविकल्पो वा दर्शनात्मा दृश्यात्मनो वा विकल्पस्य दर्शनेऽदृष्टिर्विकल्पकल्पनामिन्द्रियज्ञाने प्रतिहन्तीत्यादेरवाच्यताप्रसङ्गात्। तस्मात् ज्ञानेऽपि कदाचिदन्यज्ञानस्य विमर्शः, अर्थेऽप्यनुल्लिखितान्तरासंशयो निश्चय इति दशाविभागेन प्रत्यक्षस्येतरस्य वा सामर्थ्यस्थिति र्न तु जातिविभागेन।

ननु

एकोपलम्भानुभवादित्यादिना
[ प्र. वा. ४. २७० ]

ज्ञानान्तरनिषेध एव सामर्थ्यमुक्तमनुभवश्चैवमेवेति चेत्- न; यथा हीदं नोपलभ इति प्रत्यक्षादनुभूयते, तथेदं नास्तीत्यपि झगित्येवाभ्यासवतः। अनभ्यासवतस्तु ज्ञानाभाव एव निश्चयः। तद्द्वारेण त्वर्थाभाव इति तदपेक्षया शास्त्रे तथाभिधानम्। एवमेकज्ञानसंसर्गियत्नादयोऽपि वाच्याः। अतएव,

व्यवस्यन्तीक्षणादेव सर्वाकारान्महाधियः।
[ प्र. वा. २. १०७ ]

इत्युक्तम्। मृदुप्रज्ञाधिकारेण च स्थानस्थानेषु यत्नः। तस्मात् पटुधियः प्रत्यक्षादेव मणिरूप्यादिविवेकवत् तन्निषेधव्यवहारोऽपि दुर्निवारः। न चाभावो नाम विग्रहवान् येनान्यव्यतिरेकिणा रूपेण साक्षात्कर्तव्यः, किं तु व्यवहर्तव्यः। स चैकाकारनियमात् पटुना व्यवहर्तुमध्यक्षेण शक्य एव। यः पुनरपटुरापाततः प्रवृत्तेऽप्यभावनिश्चये संशेते, सादृश्यमस्यानुपलम्भमात्रमनुसृत्य तद्व्यवहारं प्रवर्तयति, यस्तु ततोऽप्यपटुः स दृश्यानुपलम्भेऽपि सन्दिहानो व्यापकानुपलम्भेन प्रवर्तते। न पुनरव्यामूढस्यानेन प्रवृत्तिः। प्रत्यक्षापाटव एव ह्यनुमानं प्रार्थ्यते। तत्पाटवं च विकल्पजननेनावस्थाप्यते, पटुतरत्वं च तत्र विमर्शाभावात्।

चार्वाकेण तु पृथगभावमनुमन्यमानेन प्रति [?] प्रत्यक्षनिषेधेऽव्यापारो दर्शितः, अर्थसामर्थ्यापेक्षायुक्तेः। न चानुमानस्येव प्रत्यक्षस्यापि निश्चयवशाद् ग्रहणव्यवस्था, किं तु प्रतिभासवशात्। नियताकारतैव च तस्य तदन्याभावभासनम्। तस्माद्

दुष्परिहरः प्रत्यक्षस्याभावव्यवहारशक्तिसंभवः, प्रतिषेधस्तु सर्वत्रानुपलम्भादिति तु न प्रत्यक्षप्रतिक्षेपः, किं तु लिङ्गान्तरस्य, द्वावेव विधिसाधनाविति यथा। तदयमम्भसि गन्धनिषेधः प्रत्यक्षकृत एवाव्यवधेन लैङ्गिकः। किं चात्र लिङ्गं गन्धाभावाव्यभिचारि? ज्ञानकार्यानुपलब्धिरिति चेत्? यदा स्वग्राहिज्ञानं कार्यहेतुस्तदेदं युक्तमपि, यदा तु प्रत्यक्षमेव तत्, तदा प्रत्यक्षयोग्यस्य तन्निवृत्तिर्यदि न दृश्यानुपलब्धिर्घटस्यापि मा भूत्।

तदिदं प्रतियोगिज्ञानरूपतालोचनवञ्चनाफलमेव। [4b] अयं च वादी यदीन्द्रियसाद्गुण्यमनिश्चिन्वन्नेतदाह, तदा सन्नपि गन्धादिर्नोपलभ्यत इत्यायातम्। अथ निश्चिन्वन्नलंकार्यानुपलब्ध्येति द्रष्टव्यम्। परोक्षसंभाविते च कारणादौ कार्यानुपलब्धिं यत्नेन योजयति, संप्रति च दोषलेशभयात् प्रत्यक्षसंभाविलेऽपि संशेत इतीत्यसंबद्धम्। तस्मात् स्थितमेतत्, यस्मिन् वेद्यमाने यदवश्यं वेद्यत एव तस्याभिन्नेन्द्रियग्राह्यस्यान्यस्य वानिन्द्रियग्राह्यस्य वा बुद्धिरनुपलब्धिः। सा च व्यवहारमेव साधयति, अन्यथा प्रत्यक्षसिद्धेः। तदर्थं च विरहज्ञानस्य स्थितेः स्थैर्यस्याश्रय इत्युक्तम्। न तु विरहनिश्चयस्येति। यथा च नियतसहोपलम्भयोरेकज्ञानमन्यनिषेधाय, तथा नियतासहोपलम्भयोरित्याह न वेति। वेद्ये यत्र हि यन्मतिर्नियमतो न स्यादित्यर्थः। यथा नीलमिदमनीलं न भवतीति। अत्रापि व्यवहार एव साध्यः। एतेन परस्परपरिहारस्थितिलक्षणो विरोधो व्याख्यातः।

ननु यस्मिन्नवेद्यमाने यन्मतिर्नियमेन भवितुं संभाव्यत इत्यनेनैव गतमेतत्। अदृश्योऽपि हि तादात्म्येन निषेध्यमानो दृश्यतया संभावित एव निषिध्यते। अन्यथा दृश्यादृश्यतया स्वयमेव भेदाभ्युपगमादिति किमनेन पृथग्वचनेनेति चेत्? एवं तर्हि न वा स्यादित्ययमभावः प्रध्वंसलक्षणो व्याख्यायते। प्रवृत्तापि यन्मतिर्यत्र वेद्ये सति नियमेन निवर्तत इत्यर्थः। नियमश्च सत्ताबाधनेऽभाव एव युक्तः। यथा नेह शीतमग्नेरिति। एतेन सहानवस्थानलक्षणो विरोधो व्याख्यातः।

नन्वन्धकारे नियमेनानुपलम्भ इति नावश्यं विरुद्धपरिग्रह इति चेत्? नैकप्रतिपत्त्रपेक्षं लक्षणमेतत्, किं तु सामान्येन। अस्ति च निरालोकस्यापि रूपस्य दर्शनं कैश्चित्, तेनापि वा संभाव्यमञ्जनविशेषादिनेति। सत्तोच्छेदे तु नियम एवेत्यदोषः। नन्वत्रापि शीतं यदि स्यात्, नाग्नेरेकरूपनियता प्रतिपत्तिरिति कथं पूर्वतो विशेषः? नैवं; स्पर्शनागम्ये निषेधस्याभिमतत्वात्। तर्हि प्रवृत्तावपि शीतस्य बुद्धिरग्नौ वेद्ये सति नियमान्निवृत्तेति प्रत्येतुमशक्यं न [विरुद्धम्], अन्यदैतत्प्रतीतेः

विवक्षितत्वात् । तर्हि प्रागगृहीतविरोधस्मरणव्यवहितव्यापारत्वान्न प्रत्यक्षस्य प्रवृत्तितोऽभावनिश्चयः स्यात् । मा भूत्, केवलं व्यवधानेऽपि तथा वि[रुद्ध]बुद्धिरेवाभावनिश्चयाङ्गं नान्यमात्रस्येत्यनुपलब्धिव्यवस्थानिबन्धनस्य न क्षतिः ।

न च व्यवहारमात्रसाधनमत्रापि संमतमित्याह, सापेक्षा तु परा स्मृतौ [ ] अत इहाभावोऽपि साध्यः । तत्सिद्धौ च तन्निश्चयस्थितिलक्षणो व्यवहारोऽपि न पुनस्तन्मात्रमित्यर्थः । तथा हेतुव्यापकनिह्नवे, अभावोऽपि साध्य इति वर्तते । यथा नेह धूमोऽग्नेरभावात्, नेह शिंशपा वृक्षाभावात् । न ह्यत्राग्निवृक्षयोः प्रतियोगिप्रत्यक्षमात्रं पूर्वप्रवृत्ततादात्म्यतदुत्पत्तिसम्बन्धबोधस्मरणनिरपेक्षं धूमशिंशपयोरभावनिश्चयं प्रसवति । तत्राप्यभावसाधनव्यवहारसिद्धिः ।

[5a] त एतर्हि निषेधहेतवः, स्वभावानुपलब्धिः, कारणानुपलब्धिः, व्यापकानुपलब्धिश्चेति । तथा विधिसाधनौ द्वाविति पञ्चहेतवः प्रसक्ताः । न, अनुपलब्धिसामान्याश्रयादेकत्वात् । अपि च अनुपलब्धिः स्वस्यापरस्यापरा, कारणव्यापकयोः स्वभावानुपलब्धिरेव । अपरस्य कार्यस्य व्याप्यस्य वापरा कारणानुपलब्धिर्व्यापकानुपलब्धिश्चोच्यते । यथा ह्यन्यप्रत्यक्षमेवान्यस्यानुपलब्धिः, तथा कस्यचित् स्वभावानुपलब्धिरेव कार्यव्याप्यापेक्षया कारणव्यापकानुपलब्धिरुच्यत इति न व्यपदेशभेदात् वस्तुभेदः । तस्मात् स्वभावानुपलब्धेरेव निषेधः सर्वस्येति त्रयमेव लिङ्गम् ।

एतेन कार्यस्य स्वभावानुपलब्धिरेव समर्थकारणस्य कार्यानुपलब्धिरुपलक्षिता द्रष्टव्या, हेतुशब्दस्य च लिङ्गार्थस्य व्याख्यानात् । यथा नेहाप्रतिबद्धसामर्थ्यानि धूमकारणानि सन्ति धूमाभावादिति । कथं तर्हि नात्र तुषारस्पर्शोऽग्नेरिति व्यापकविरुद्धोपलब्धिसंग्रहः ? अत्रापि व्यापकस्य हि शीतस्य विरुद्धदहनोपलब्धिरूपा या स्वभावानुपलब्धिः सा व्याप्यस्य तुषारस्पर्शस्य व्यापकविरुद्धोपलब्धिरुच्यत इति न दोषः । यद्यपि च व्यापकानुपलब्धिरपि सा वक्तुं शक्या, तथापि विरुद्धप्रतियोगिप्रतीतिरूपताप्रतिपादनार्थं तथा व्यपदेशः । एवं कारणविरुद्धोपलब्ध्यादयो व्याख्येयाः । सर्वत्राभाव एव साध्योऽध्यक्षेणासिद्धेः । तद्द्वारकस्तु व्यवहार इति ।

ननु विरुद्धोपलब्ध्यादौ कथमनुपलब्धिव्यवहारः । उक्तमत्र प्रतियोग्युपलब्धिरेवान्यानुपलब्धिः । प्रतियोगी च द्विविध एव । तत्र यदा विरुद्धः प्रतियोगी, तदा विरुद्धशब्दप्रयोग उपलब्धिशब्दमेव प्रयोज्यमुपपादयति । शेषे तु प्रतियोगिनि

गम्यमाने स्वभावशब्दो दृश्यशब्दो वा प्रयुज्यमानः प्रतिषेध्यापेक्षया अनुपलब्धिशब्देन व्यपदेशयति। तदेकत्रोपलब्धित्वं गम्यमन्यत्रानुपलब्धित्वम्। तत्त्वं त्वेकमेवेति न दोषः।

यदा च विरुद्धः प्रतियोगी द्वितीयस्य च परोक्षस्यैव निषेधः, तदा तस्यापि नावश्यं प्रत्यक्षमेवानुपलब्धिः। किं त्वनुमानमपि। विरुद्धो हि स्वसत्तया परसत्ताम् अपनयन् प्रतियोगी मतः। न च परोक्षोऽपि तथा भवन् केन वार्यते? नियतसहोपलम्भे तु प्रतियोगिनि प्रत्यक्षयोग्यस्यैव निषेध इति तस्यावश्यं प्रत्यक्षापेक्षा। न ह्यनुमीयमाने प्रदेशे घटो यदि भवेदुपलभ्येतैवेति सामर्थ्यं प्रत्यक्षायोगादनुमानस्य चारम्भनियमाभावादिति कथं निषेधः?

यद्येवं विकल्पमात्रादप्रतिषेध इति चेत्-न, तत्रापि विकल्पाकारे वेद्यमाने बहिरप्यभिमतदेशमिन्द्रियसामर्थ्यानपायेऽनुभूयेतेत्युच्यते। न तु विकल्पनीये बाह्ये विकल्प्यमाने द्वितीयमपि वेद्येतेति शक्यम्। विकल्पनीयेऽपि बाह्ये विकल्प्यमाने तद्देशमपरमुपलभ्येतैवेति किं न स्यात्? न हि प्रतियोगिज्ञानमन्यस्य [5b] दृश्यतारोपनिबन्धनम्, अपि त्वभावनिश्चयोत्पादनिमित्तं सत्त्ववस्तुत्वात्। तच्च विकल्पस्यापीति को विशेषः?

अथ प्रतिपत्त्रनुरोधः, एकज्ञानसंसर्गिणोऽप्यनुरोधः साधुरिति- नैवम्, जले गन्धस्यानले रसस्यापि वायौ रूपस्यापि शेषमात्रोपलब्धौ वा अभावव्यवहारमात्रदर्शनात्। तत्र वा ज्ञानकार्यानुपलम्भवदन्यत्रापि स एवेति किमेकज्ञानसंसर्गिणा? कार्यानुपलब्ध्या समर्थस्यैव निषेध इति चेत्? गन्धादिस्तर्हि सन्नपि नीरादाविन्द्रियवैगुण्यान्नोपलभ्य इति महदेव शास्त्रपरिश्रमफलम्। स हि वैगुण्यस्य कारणानुपलम्भेऽपि योग्यादिभिरभिभवं संभावयन् संशेते, भूतले तु तत्कृताभूतदर्शनमिन्द्रियपाटवेऽपि संभावयन् किं न संशेते? तस्मादभ्यासदशायां तादवस्थ्यस्थित्यैव व्यवहारः।

न्यायनाथस्य तु न व्यवहारमनुवृत्त्य पर्यनुयोगो विसर्गो वा, किं त्वेतावत्यामपि गतौ नास्मल्लक्षणक्षतिरिति दर्शयितुं प्रौढिवशात्। यथा सर्वचिता सर्वबोधनिश्चये स एव सर्वज्ञ इति। व्यवहारे च यथैकज्ञानसंसर्गिणं पश्यतस्तथान्यमपि प्रतियोगिनम् अभावनिश्चयो दृष्टः साधारणोऽविसंवादी चेति नैकज्ञानसंसर्गिमहः, विकल्पशरणावस्थायां च तदाकारसंवेदनमेवान्यनिषेधसाधनं युक्तम्, यथैवाभ्यासेन

प्रत्यक्षसामर्थ्यदर्शनात् तदेवं विरुद्धस्य परोक्षस्याप्युपलब्धिरनुमानात्मिकाभावमितरस्य साधयति। यथा नेह शीतं धूमादित्येवं व्यापकविरुद्धकार्योपलब्धिर्द्रष्टव्या। यथा नेह तुषारं धूमात्। एतच्च संकलय्य प्रयोगकाले व्याख्यानम्।

वस्तुतस्तु न शीतमग्नेरित्येकः प्रयोगः, तथा न तुषारमग्नेः। व्यापकस्य हि विरुद्धो विरुद्ध एव। अग्निश्च धूमादिति। शेषमप्येवमूह्यम्।

यदि कारणादेः स्वभावानुपलब्धिरन्यस्य कारणाद्यनुपलब्धिः पर्युदासरूपा, कथं तर्हि निरुपाख्येषु, तथा न वक्ता वन्ध्यासुतश्चैतन्याभावादिति? तत्रापि बुद्धिप्रतिभासस्यैव चैतन्यवियुक्तत्वेन संवेदनं व्यापकानुपलब्धिपर्युदासः। वक्तृत्वव्यवच्छेदेन च संवेदनम्, व्याप्याभावः। स्वभावहेतुपर्यवसिताश्च सर्वानुपलब्धयो निषेधसाधनाध्यवसायाच्च भेदेन निर्देश इति न दोषः। तथाप्युक्तेन क्रमेण साक्षादेव स्वभावानुपलब्धेर्निषेध इति कथमाचार्यपादैः परम्परयाभिधानादौपचारिकः कृत इति चेत्? निषेध्यस्यैव यदि दृश्यानुपलब्धिर्निषेद्धा विवक्षिता तदौपचारिकः। यदि तु परस्यापि तदा मुख्य इति को विरोध इति केवलमौपचारिककथने किं प्रयोजनमिति स्यात्। तत्रापि दृश्यस्यैव निषेधो यथा शक्यः स्यात्, नान्यस्य सर्वज्ञवीतरागादेः प्रधानपुरुषार्थस्येति कार्यतस्तत्रान्तर्भावः। तत्त्वतस्तु तस्य [6a] तदन्यस्य वा यथोक्तस्यानुपलब्धिः साधिकेति॥

॥ अनुपलब्धिरहस्यं समाप्तम्॥

## ॥ सर्वशब्दाभावचर्चा ॥

इह सर्वशब्दाभावसाधने ज्ञानकार्यानुपलब्धिमेके प्रमाणयन्ति । एकज्ञान-संसर्गिविरहात् किल नेह स्वभावानुपलब्धेरवसरः। तथा हि त्रयमवश्यमस्यामभिधेयम्। घटादिमत्प्रतिक्षेपेण विशेषणं, स्वभावः, फलं चेति । तत्र दृश्यविषयविशेषणवशात् पिशाचादेरप्रतिषेधः । एकज्ञानसंसर्गिवेदनस्वभावत्वेन रूपज्ञानाद् रसस्य । नाप्यभाव-पक्षदोषानषङ्गः, व्यवहारफलतया च प्रत्यक्षसिद्धिरुपसंहिता । सा च प्रतियोगिज्ञानाश्रये सत्युपपद्यते । तदेव हि प्रतियोग्यन्तराभावनान्तरीयकतया तदभावविकल्पजनन-सामर्थ्यात् साधनं भवेत् । ततो मूढं प्रति तदात्मिकानुपलब्धिरभावव्यवहार[6'a]-साधनीति युक्तम् । न च सर्वशब्दाभावे साध्ये कश्चिदेकज्ञानसंसर्गी लभ्यत इति नात्रा-वकाशस्तस्याः । स तु शब्दराशिरभिमतप्रदेशे विद्यमानस्तदा ज्ञानकार्यमनारभ्यासितुं न समर्थ इति कार्यप्रतिषेधेऽपि निर्विशेषणैव सत्ता प्रतिषिद्धा भवतीति भावः ।

अत्र चिन्त्यते। न तावत् ध्वनिरित्येव श्रवणम्, बधिरस्यापि [श्रवण]प्रसङ्गात् । तस्मादिन्द्रियपाटवसहकृतस्यैव शब्दस्य श्रवणज्ञानजनकत्वम् । तच्च श्रवणपाटव-मेकज्ञानसंसर्गिविरहे दुरवधारम् । अतएव प्रदेशप्रत्यक्षापेक्षया घटनिषेधः । ततो हीन्द्रियगुणं गणयन् घटापराधमेवानुपलब्धेरवधारयति । न च मनस्कारवत् स्वसंवेदनसिद्धिरिन्द्रियस्य, जडत्वात् । नापीन्द्रियान्तरगम्यत्वम्, अतीन्द्रियत्वात् । कार्यं पुनरुपलब्धिरेवास्य । तदसिद्धौ च कार्यानुपलब्धेरेवासिद्धिः । असिद्धौ सिद्धमनै-कान्तिकत्वम् । न हि विषये सत्यपीन्द्रियदोषात् संभाव्यमानोऽनुपलम्भस्तदभावनियतो नाम ।

नाभाव एव शब्दस्य । तज्ज्ञानजननयोग्यस्तु नास्तीति ब्रूम इति चेत् ? सेयं कुवैद्यवृत्तिरायाता. प्रथमं प्रागल्भ्यगर्भमभिमतप्रतिकरणमभ्युपगम्योपायबुद्ध्योप-न्यस्तस्यानुपायस्य परेण तत्त्वप्रतिपादने कृते पश्चादसाध्यत्वघोषणात् । सर्वथा अभाव एव हि जिज्ञासिते कार्यानुपलब्धिरियं साधनमुक्ता । न तु ज्ञानजननयोग्यताविरह-जिज्ञासायाम् । तद् यदि प्रमाणभ्रंश एव कथञ्चिज् ज्ञातः प्रमेयभ्रंशस्तु किमङ्गाङ्गो-

क्रियते ? वरं च प्रमाणान्तरमेव मृग्यताम्। असाध्यतैव तु कस्मादवघुष्यते ? न हि शक्यमबधिरस्याशृण्वतः सन्निहितभेरीरवाद्यभावः प्रतिक्षेप्तुम्, बधिराबधिरयोरविशेषप्रसङ्गात्।

सति श्रुतिकृतोऽस्ति विशेषः प्राक् पश्चादिति चेत्– नैवम्, यदि हि प्रागवस्थातः श्रवणशक्त्यानिर्विशेष एषः, कथमश्रुतिः सति शब्दे ? अन्यथा प्रागपि न स्यात्। अथ विसदृशावस्थोऽपि संभाव्यते, श्रुतावपि न श्रद्धातव्यम्, अस्य विप्लवस्य संभाव्यमानत्वात्। तत्राश्रवणमभूतश्रवणं वेति न विशेषः। अन्ते कुतः शक्तिविपर्यय इति चेत् ? मध्ये कुतस्तदभाव इति समानम्। तस्मादपत्त एवायं सन्नपि शब्दस्तदा न श्रुत इति। केवलं किमत्र प्रमाणमस्त्विति चिन्तायां कार्यानुपलब्धिरनैकान्तिकी इत्युक्तमेव, श्रवणपाटवस्य दुरवधारत्वादिति।

ननु कथमेतद् दुरवधारणं दृष्टश्रवणपाटवस्मरणबलवतः श्रोतुं प्रवृत्तस्य। क्षणिकत्वेऽपि हि विसदृशसहकारिप्रत्ययान्तरविरहे विसदृशदशासंभवाभावात्। इन्द्रियविकारकारिणो हि प्रत्यया धातुक्षोभप्रहारादयो निर्णीतशक्तयः स्वसन्ताने सन्तानव्याकुलीभावहेतवः सूपलक्षा एव। अनुपलक्षितास्तु स्वप्रभवभेदशङ्कां कथमिव क्षमन्ते ? सूक्ष्मं तु प्रभाववतोऽधिष्ठानादिविकारकारणं शङ्कमानस्य श्रवणेऽपि क आश्वासः ? तस्मादनुपलक्ष्यकारणारब्धदिङ्मोहलक्षणेन्द्रियभ्रान्तिदर्शनेऽपि प्रसिद्धकारणानुपलक्षणान्नेन्द्रियाणामतादवस्थ्यव्यवस्था यथा, अन्यथा तत्प्रत्ययानां भ्रमत्वप्रसङ्गात्, तथात्रापि किं न गण्यते ? माभूत् सर्वसंवृतिविलोपः।

अभ्यासदशासक्तिसमाश्रयस्तु समानः। न हि बधिरस्वरस्याभिरोपारूढश्रवणबलस्याप्यश्रवणेऽभावनिश्चयं ब्रूमः, बलनिश्चयस्यैवाभावात्। तद्वदन्यस्याप्यकलितबलस्य। अत्यन्ताभ्यासे हि सकलरजनीसुप्तप्रबुद्धानामदर्शनेऽपि तदवस्थासंवेदिनाम् अविपरीतव्यवहारप्रवृत्तिदर्शनात् कः प्रस्तावो जाग्रतः स्वात्मन्यन्यथात्वशङ्कायाः ?

तस्मादतादवस्थ्यस्य तदव्यवस्थाया वा निषेधः, प्रसिद्धकारणाभावात् तदुपलक्षणाभावाद् वा ? यदि दर्शनश्रवणादावभ्यासदशापेक्षयाध्यक्षत्वनिबन्धनं तादवस्थ्यमिच्छता संवृतिव्यवस्थिते नेन्द्रियतादवस्थ्यं सामग्रीप्रतिबद्धबुद्धितादवस्थ्यं वा, साधारणशक्त्यपेक्षया संवेदनमेव वा शरणमास्थीयते, तदेवाश्रवणदशायामपीति। कथमनेकान्तः शब्दाभावे ? ननु ज्ञानात्मन्येव स्वसंवेदनमिति चेत्–न,

एकाधिमोक्षविषयेष्वेककार्योपयोगिषु ।
एकधीः सर्वविषया स्थिता निर्भागवर्तिषु ॥

[ ]

पञ्चस्कन्धेष्वप्यहमित्येकोऽधिमोक्षः, भाषणादावेकस्मिन्नर्थे परस्परोपादेये चोपयोगः । घटादिसंज्ञके तु रूपरसादौ प्रसिद्धोऽयं न्यायः, अन्यथा व्यवहारायोगात् ।

ननु न शरीरप्रत्यक्षं बुद्धिमन्वेति । एवमेतत्, प्रातिस्विकरूपापेक्षया रूपरसादिवदेव । सामान्येन तु गृहीतैकधीविषयत्वमुच्यते, यावन्न निर्बन्धो विवेचने । विवेचने तु पृथक् प्रमाणमुक्तम् । तेन प्रत्यक्षश्चैत्रो न च बुद्धिरध्यक्षेति द्वितयमविरुद्धम् । अतएव तदवस्थोऽहमिति विकल्पोऽपि संवेदनानुसारी सर्वविषय एव ।

भ्रान्तिरियमिति चेत्—न, बाधकाभावाद् भ्रान्त्यसिद्धेः । तस्मात् पूर्वप्रतीतश्रोत्रशक्तेस्तदवस्थानिश्चयसंभवादश्रुतिः शब्दस्यैवापराधादिति ज्ञानाभावेनापि तदभावसिद्धिरैकान्तिकीति न प्रकृतव्याघातः । इयत्येव तर्हि स्वभावानुपलब्धेर्लक्षणसामग्रीति कार्यानुपलब्धिसंज्ञाकरणे कोऽर्थः ? प्रत्ययान्तरसाकल्यं स्वभावविशेषं चापन्नस्यैव शब्दस्यानुपलब्ध्या निषेधात् ।

तथाप्यन्यसंज्ञायां घटनिषेधेऽपि को निषेद्धा ? केवलं घटवत् शब्दस्यापि दृश्यानुपलब्ध्यापि निषेधः साध्यो जात इत्युच्यते । तत्रैकज्ञानसंसर्गिसंभवाद् युक्तः तया निषेध इति चेत् ? तत्रैव तावदेकज्ञानसंसर्गिणः किमपेक्षया ? रूपदर्शने हि रसस्य विप्रकृष्टदेशतया अनुपलब्धिलक्षणप्राप्तत्वादेवाप्रतिषेधः, प्राप्यकारित्वाद् घ्राणरसनस्पर्शनानाम् ।

उक्तेन च क्रमेणेन्द्रियतादवस्थ्यं सिद्धमिति किमेकज्ञानसंसर्ग्यपेक्षया ? नैवम्, इन्द्रियातिरिक्तस्यालोकस्य तत्रापेक्ष्यत्वात् । स हि बहिःसुलभकारणाधीनोपजनापजनधर्मको न स्वात्मतादवस्थ्यसाध्य इति तदर्थमेकज्ञानसंसर्गोऽपेक्ष्यमाण इन्द्रियसाद्गुण्यज्ञानेऽपि सहायीभविष्यति । एवं यत्रालोकनिरपेक्षैव ग्रहणशक्तिस्तत्र न किञ्चिद् एकज्ञानसंसर्ग्यपेक्षयेति सिद्धम् । तच्च नाम क्वचित् साधनेऽपेक्ष्यते यदन्तरेण विरोधासिद्धिसन्देहेष्वन्यतमदोषासक्तिः । न च द्विविधोपलब्धियोग्यतापन्नस्य क्वचिदनुपलब्ध्या निषेधे साऽस्ति, येन संसर्गी नियतमपेक्ष्येत । यत्राप्ययमपेक्ष्यते, तत्रापि आलोकापेक्षप्रतिपत्तिनो वस्तुनः प्रतिषेधे विशेषणासिद्धिपरिहारार्थमेव । न चैतावता

सर्वत्र तदपेक्षा। न हि विनाशं प्रत्यनपेक्षा व्याप्तिसाधनी सर्वत्र क्षणभङ्गसाधनेऽपि स्वभावहेतावपेक्ष्यते।

यदि चायमपेक्ष्य एव किमङ्ग दृश्यविशेषणेन, केनचिदेकज्ञानसंसर्गिणो दृश्यत्वाव्यभिचारात्? न हि पिशाचस्य केनचिदेकज्ञानसंसर्गः। एक एवार्थ उभयथापीति नैकप्रयोगेऽन्यप्रयोजनचर्चेति चेत्—न, सामान्यविशेषभावेन भेदस्याव्यक्तत्वात्। संसर्गो हि न विशेषणं व्यभिचरति। विशेषणमात्रं तु तं व्यभिचरत्येव। अतएव विशेषणसिद्धये संसर्ग उपनीयते। न तु विशेषणं संसर्गाक्षिप्तये प्रभवति, शब्देऽपि प्रसङ्गात्। तथा च पक्षक्षय इति कः श्रमस्यार्थः? तस्मादेकज्ञानसंसर्गो नाम प्रकृतोदाहरणापेक्षयैवोद्घुष्यते, न स्वभावानुपलब्धौ सर्वत्रापेक्ष्यत्वेन॥

प्रस्तुते हि फलसप्रतिषेधे सा दिगस्तु सविशेषणसिद्ध्यर्थं, नोपलब्धमुपलभ्यमितीयल्लक्षणं खलु निजानुपलब्धेः। तथा च लक्षणे प्रयोगे चोपलब्धिलक्षण[6b]प्राप्तानुपलब्धिमात्रोपन्यासः, शास्त्रे विपर्ययबाधोपदर्शने च प्रत्ययान्तरसन्निधौ स्वभावविशेषवतः सत्त्वेऽनुपलब्धेरसंभवः ख्याप्यते, अन्यथा प्रयोजकांशं संसर्गमेव सर्वत्र दर्शयेत्, विशेषणवत्। तादात्म्यं तु दृश्यत्वमभ्युपगम्यैव निषिध्यत इति विशेषणस्यानुक्तिमात्रम्, न पुनरप्रयोजकत्वं व्याप्तेरिव विदुषि। अन्वयोक्तिविशेषे वा व्यतिरेकस्य। तस्मात् न्यायनाथस्यापि नावश्यमेकज्ञानसंसर्गिव्यपेक्षाभिप्रायः स्वभावानुपलब्धौ। अपि चैवं कार्यानुपलब्धावेव सर्वसंग्रहमाचक्षीत, स्वभावानुपलब्धेरपि तदेकदेशत्वात्। सर्वप्रमाणव्यवस्थां च कार्यानुमाने कुर्यात्, स्वसंवेदनादन्यत्र।

तस्मादिन्द्रियज्ञानविषये न कार्यानुमानव्यवस्था यथा, तथा तदगृहीत इत्येव कुतः कार्यानुपलब्धिव्यवस्थापि शास्त्रकारस्य? यथा हि प्रत्यक्षव्यवस्थाविलोपभयम् एकत्र, तथान्यत्र स्वभावानुपलम्भस्य। यथा वाऽप्रत्यक्षे कार्यं लिङ्गम्, तथाऽप्रत्यक्षयोग्य एव तदनुपलब्धिरिति समानम्। यथा चायमेव भगवानज्ञाने ज्ञानान्तराभावम् अपि दृश्यानुपलब्ध्या व्यवहारयति। यदाह,

दृश्यात्मनो वा विकल्पस्य दर्शनेऽदृष्टेर्विकल्पकल्पनामिन्द्रियज्ञाने प्रतिहन्तीति। तदा क एकज्ञानसंसर्गो? किं चैवमभ्युपगमे कार्यानुपलब्धेरप्यसिद्धिरिति प्रकृतमतहानिरेव। न हि ज्ञानकार्यस्याभावः कार्यानुपलब्धेरेव बोद्धव्योऽनवस्थाप्रसङ्गात्। स्वसंवेदनं चैकाकारनियतमन्याभावनिश्चयमाक्षिपत्येव, केवलं विमतं प्रति यदि स्याज्

ज्ञानान्तरमनुभूयेतेति दृश्यानुपलब्धिरेव शरणं व्यवहारे बाह्यवत्। विशेषणानुस्मरणं तु स्यात्। न त्वन्या गतिः। संसर्गापेक्षायां च सापि नास्तीति सन्दिग्धासिद्धो हेतुः। तस्मादनुपलब्धेरेकज्ञानसंसर्गापेक्षानियममनुल्लङ्घ्य वर्तितुमशक्यम्।

बहिरपेक्षया नियम इति चेत्—न, तत्रापि निबन्धनाभावात्। यद्धि सामर्थ्यमन्तस्तदतिक्रमे तस्य बहिरपि लाभसंभवे किं न सदृशी स्थितिः? विचित्रो हि विषयस्वभावः। तत्र स्वात्मा तावत् प्रत्यक्षीभावे योग्यतामात्रमपेक्षते। शब्दगन्धरसस्पर्शास्तमिस्रालोकास्तु मनस्कारातिरिक्तमात्रम्। घटादिसन्निवेशिनस्तु रूपविशेषाः प्रकाशम् अपि प्रायशः। तथैषां विधावुपलब्धिरिव स्वभावस्यानुपलब्धिरपि निषेधे किं न भिन्नामेव सामग्रीमपेक्षेत?

तत्राद्ये यथा नेन्द्रियतादवस्थ्येनोपयोगः, तथा मध्यमीयेष्वपि नैकज्ञानसंसर्गिणा। अन्यातिरिक्तापेक्षिणस्तदपेक्षा युज्यतेऽपि। ततो यथा यदि बुद्धिः स्यादुपलभ्येतैव, किमिन्द्रियतादवस्थ्यापेक्षयेति सामर्थ्यम्, तथा यदि स्याद्रसादिस्तदवस्थेन्द्रियेण मयोपलभ्येतैव, किमेकज्ञानसंसर्गिणेति शक्यमेव। तस्माद् बहिरपि नियमसंभावनातिदूरैव, अभ्युपगमे वा ज्ञानेऽप्यपेक्षेत।

तत्रापि संवेदनैकप्रत्यक्षापेक्षैकज्ञानसंसर्गोऽस्तीति [7a] चेत्? ननु [न] संवेदनं नामैकं प्रत्यक्षमस्ति, धर्ममात्रस्य तस्य प्रतिस्वं भेदात्। सामान्यमाश्रित्यैकज्ञानसंज्ञया तु परितुष्टौ भिन्नेन्द्रियग्राह्ययोरपि स्वसंवेदनेन्द्रियज्ञानविषययोरपि वा प्रसङ्गः। ययोः सतोरन्योऽन्यप्रत्यक्षाव्यभिचारस्तत्रेत्थं व्यवस्थेति चेत्? रूपयोरपि नायं नियमः, प्रदेशपिशाचयोरदर्शनात्। विशिष्टयोरस्त्येव। न च सामान्यापराधो विशेषमास्कन्दति इति चेत्? एवमपि शब्दाकाशयोः शब्दमनस्कारयोर्वा प्रसङ्गः। न ह्याकाशप्रत्यक्षं मनस्कारसंवेदनप्रत्यक्षं वा सत्त्वे शब्दस्य प्रत्यक्षं व्यभिचरति। व्यभिचारे पुनः कार्यानुपलब्धेरनेकान्तप्रसङ्गः। तस्मादव्यापकमेकज्ञानापेक्षणमन्यस्यापि च सुलभम् इत्यलं विमत्या।

अपि चायं चित्तयोरेकज्ञानसंसर्गोऽपूर्व एव, मुख्यस्याभावाद् गौणस्य चैकायतनसंग्रहाभावात्। उपलक्षणमेकायतनसंग्रह इति चेत्? एकज्ञानसंसर्ग एव किं नोपलक्षणमाख्यायते? प्रकृतघटोदाहरणापेक्षया तु द्वयमप्येवमुक्तमित्यनभिनिवेशः।

यथा ह्येकायतनसंग्रहेणान्योऽन्यप्रत्यक्षाव्यभिचार उपलक्ष्यते, तथैकज्ञानसंसर्गेणापि प्रतियोगिमात्रापेक्षैवेति युज्यते।

कश्च कस्य प्रतियोगी ? ययोरेकाकारनियतं प्रत्यक्षमितराभावनिश्चयमुपपादयितुं शक्नोतीति। कयोश्चैवमनुपलब्धिः ? ययोरेकप्रत्यक्षमपरप्रत्यक्षाव्यभिचारि। तयोर्हि सतोर्नैकरूपनियता प्रतिपत्तिरसंभवात्। ततस्तावत्यो विशिष्टकालदेशदशासन्तानापेक्षयान्योऽन्यस्य प्रतियोगिनौ व्यवस्थाप्येते, सदृशः संवित्तिलाभलक्षणेऽयोगस्तयोरिति कृत्वा। अत एव तयोरेकाकारनियतं वेदनमन्यस्य प्रतिषेधविकल्पमुपपादयितुं शक्नोतीति तादृशामभावः प्रत्यक्षसिद्धोऽभिधीयते। तमेव निश्चयं मूढं प्रति प्रतियोग्युपलम्भस्वभावानुपलब्धिरुपलब्धियोग्यता युगयोगिनः संभवन्ती[?] व्याहारव्यवहारावपि साधयतीति तावतैवेतरमतप्रतिक्षेपेण स्वभावफलयोरपि परिनिष्ठासिद्धौ किमेकेन्द्रियग्राह्यतापेक्षोपग्रहेण ?

अयं हि प्रतियोग एकेनानेकेन वेन्द्रियेण ग्राह्ययोरर्थयोर्ज्ञानयोर्ज्ञानार्थयोर्वा साधारणोऽभावसाधने च निरपवाद इति कस्तदनुरोधः ? यथा हि भूतलकलसयोः ज्ञानयोर्वैकरूपवेदनमन्यप्रत्यक्षाव्यभिचारितया तदभावनिश्चयोत्पादने पर्याप्तम्, तथा पानकपानकर्मणि द्वयमुपलब्धवतस्तादवस्थ्यसंवेदिनः प्रदीपकवलने स्पर्शमात्रोपलब्धौ रसाभावनिश्चयजनने, स्वविकल्पाकारमात्रसंवेदनं वा सन्निहितस्पर्शाभावावसायसाधने शक्नोत्येव।

न हि तद्विकल्पवेदनं तदा सतः स्पर्शस्य प्रत्यक्षं व्यभिचरति। न चान्योऽन्यप्रत्यक्षाव्यभिचारादन्यदन्यत्रापि द्वितीयाभावनिश्चयोत्पादनसामर्थ्यं नाम। नाप्यभावनिश्चयोत्पादनसामर्थ्यादर्थान्तरमभावप्रत्यक्षीकरणं नाम। न ह्यसौ विग्रहवान् यतः साक्षात्कर्तव्यः। यदा च पर्युदासेन प्रतियोग्येवाभावस्तदा त्वस्य मुख्यैव प्रत्यक्षसिद्धिरिति युक्तं सर्वत्र व्यवहारफलत्वम्। न चायं प्रतियोगः स्वभावादिविप्रकर्षिणां केनचिदस्ति, येन कस्यचित् प्रत्यक्षं तदभावविभावनाय प्रभवेत्। न चैवं निवृत्तिमात्रम् अनुपलब्धिरुक्ता भवति।

भट्टस्तु पर्युदासपक्षेऽपि यथोक्तं प्रतियोगिनमनपेक्ष्यान्यमात्रस्योपलब्धिमनुपलब्धिं प्रमाणयतीति तन्मते युक्तः पिशाचादिप्रतिक्षेपः। रूपदर्शिनस्तु रसस्तद्देशविप्रकृष्ट एव, न तेन प्रतियोगं यथोक्तमावहति। रसनामसङ्गी तु नाभावमनुपलब्धौ व्यभिचरति

इति न दोषः कश्चित्। अत एव कार्यानुपलब्ध्यादीनां साक्षादक्षमः स्वभावानुपलब्धौ अन्तर्भावः पारम्पर्येणोच्यते, तादृशस्य प्रतियोगस्याभावात्।

तस्मादुपलम्भयोग्यताप्राप्तस्यानुपलम्भ इत्येव दृश्यानुपलब्धेर्लक्षणम्। सा च यथोक्तप्रतिपत्तियोग्युपलम्भरूपतया सिद्धस्याभावस्य व्यवहारिकस्यैवावतिष्ठत इति न न्यायशास्त्रयोरुपरोधः। एकेन्द्रियग्राह्योपन्यासस्तु घटाद्युदाहरणापेक्ष एव मन्तव्य इति स्थितम्। तत्र यदा तावत् तिमिरालोकसंक्षिते आकाशप्रदेशे दृश्यमाने देवकुलादौ वा भेर्यादेरेवाभावं प्रतिपद्यते, तदा तदेव तदेकाकारोपकारोपरक्तज्ञानविषयीभवत् ज्ञानं वा तादृशं नियतप्राप्तिकप्रत्यक्षोदयस्य निषेध्यस्य तज्ज्ञानस्य वा पर्युदासोऽनुपलब्धिः। अव्यापृतचक्षुषस्तु रसादिस्तज्ज्ञानं वान्ततो मनस्काराकारो ज्ञेयपर्युदासः। तत्संवेदनं च पर्युदासः।

न हि तदपि शब्दप्रत्यक्षोदयविनाकृतमुपपद्यते पटुश्रवणस्य। निर्विकल्पकस्य तु न निषेधेऽधिकारः। केवलं यावद्देशसंबद्धस्य ध्वनेरध्यक्षं न व्यभिचरति रसादि-प्रत्यक्षं विकल्पाकारसंवेदनं वा, तावद्देशशब्दापेक्षैव पर्युदासो वक्तव्यः, अन्यं प्रति प्रतियोगस्यान्योऽन्यप्रत्यक्षाव्यभिचारलक्षणस्य वक्तुमशक्यत्वात्। ततश्च पूर्ववत् प्रत्यक्षसिद्धिरभावस्य। व्यवहारश्च फलं दृश्यानुपलब्धेरेव शब्देऽपीति सिद्धम्,

एकधीविरहेऽप्यस्या व्यापारानुपरोधतः।
अनाकृष्टेरनिष्टस्य प्रतियोगिसमाश्रयात्॥
[ ]

इति॥

आलोकादिसमग्रवाधिगतये जन्माधिकव्यञ्जका-
पेक्षे सूचित एकधी[वचन]योः शब्दप्रदीपादिषु।
किञ्चित् तु श्रुतदृष्टपूर्विमनसस्तादृग्दृशः संविदो-
ऽन्येषु स्वानुपलब्धिरेव हि रवाद्याकारशून्यान्यधीः॥

नाक्षस्य सिद्धं यदि तादवस्थ्यं
शक्तिर्न कार्यानुपलम्भनस्य।
अक्षस्य सिद्धं यदि तादवस्थ्यं
फलं न कार्यानुपलम्भनस्य॥

अवश्यपेक्षणीयत्वे स्वभावानुपलब्धिषु ।
संसर्गस्य कथं सिद्धिर्ज्ञानकार्यदृशोऽपि वः ॥

बाह्य एवैष नियमो [8a] यदि तत्रापि किंकृतः ।
प्रदेशानानयोग्यत्वाच्चित्रा हि विषयस्थितिः ॥

अनालोकस्य धीर्यद्वद् बाधा नानुक्रमेदिका ।
संसर्गिणमनादृत्य तथा बाधात्तु कुत्रचित् ॥

तस्यास्तु रूपं प्रतियोगि वस्तु-
विज्ञानमेवेति न भद्रभीतिः ।
तथा हि सोऽपि प्रतियोगिभावो
मिथः समक्षाव्यभिचार एव ॥

तत एवैकविज्ञानमन्याभावविकल्पकृत् ।
नाभावबोध्योऽप्यक्षेण तत्कृतान्निश्चयात् परः ॥

यथोक्तप्रतियोगित्वे सत्येव ज्ञानमक्षजम् ।
तद्भावावसायायेतीदृशी वस्तुनः स्थितिः ॥

ननु प्रतियोग्येकैकज्ञानसंसर्गी साक्षादेकज्ञानसंसर्गस्याभिमतत्वान्मुख्यतया साकारस्वीकारात् । ततः सामर्थ्यादेकशब्दोऽव्यभिचारमात्रोपलक्षणतयाऽवतिष्ठते । प्रत्यक्षैकजात्यपेक्षया चैकवृत्तिरेव । न चैवं संज्ञामात्रम्, तथा रूढिदर्शनात्, यथैको व्रीहिः संपन्नः सुभिक्षं करोतीति । तेन यत्राप्येकज्ञानसंसर्गिणि दृश्यमान इति उच्यते, तत्राप्यन्योऽन्यप्रत्यक्षाव्यभिचारिणीत्ययमेवार्थः । एकायतनभाव एव तूपलक्षणतया प्रकृतापेक्षतया व्याख्येयः, यथा प्रदेशस्तज्ज्ञानं चानुपलब्धिरिति ।

ततश्च स्वभावानुपलब्धौ प्रतियोगिसमाश्रय इत्येकज्ञानसंसर्गिसमाश्रय एवोक्तो भवतीति कथमव्यापकमेकज्ञानसंसर्गित्वं नाम ? सत्यमेवम्,

प्रतियुगसितैकधीस्थिति-
र्यदि भवते प्रतिभाति का क्षतिः ।
ननु सकलकलापसंहृतं
स्वयमदृशोऽस्तु निषेधनं ध्वनेः ॥

अन्योऽन्यप्रत्यक्षाव्यभिचारस्य केनापि ध्वनावपि संभवात्, इतरस्य तु प्रतियोगिनः अयोगात्। प्रतियोगपर्यवसितमेकज्ञानसंसर्गं मन्यमानस्य स्वानुपलब्धितः प्रकृतनिषेधे का परापेक्षा? तस्मान्न योग्यदेशाशेषशब्दाभावसाधने ज्ञानकार्यानुपलम्भः शरणीकरणीयः, स्वभावानुपलब्ध्यैव सिद्धेरिति। तिमिरालोकयोस्तु परस्परदेशपरिहारेण स्थितयोरभिन्नेन्द्रियकृत एवैकज्ञानसंसर्गः सुलभ इति तदभावसाधनाधिकारे दूरस्थितैव स्वभावानुपलम्भादन्यसाधनचिन्तेति॥

॥ सर्वशब्दाभावचर्चा समाप्ता ॥



६

## ॥ अपोहप्रकरणम् ॥

अपोहः शब्दलिङ्गाभ्यां प्रकाश्यत इति स्थितिः।
साध्यते सर्वधर्माणामवाच्यत्वप्रसिद्धये ॥

स्थितिर्व्यवस्था। प्रसाध्य(? काश्य)त इत्यन्तेनापोहोऽत्राभिधेय उक्तः। शेषेण तत्प्रसाधनफलम्। अथवा यदाचार्यैरपोहः शब्दादिना प्रकाश्यत इति व्यवस्था क्रियते तदेतदर्थमित्यर्थः। उभयथापि सर्वधर्मानभिलाप्यत्वप्रतिपादनपरमपोहव्यवस्थापनमित्युक्तं भवति।

नन्वपोहः शब्दलिङ्गाभ्यां प्रकाश्यत इत्यनुभवबाधितमेतत्। तथा हीह महीधरोद्देशे वह्निरस्तीति शब्दाल्लिङ्गाद् वा प्रतीतिर्विधिरूपमेवोल्लिखन्ती लक्ष्यते। नानग्निर्न भवतीति निवृत्तिमात्रमामुखयन्ती। यच्चानुभवबाधितं न तत्र साधनान्तरचिन्ता, सर्वप्रमाणपौरुषस्य तत्रैव विश्रामात् [8b] तत्प्रसूतेस्तत्फलत्वाच्च। न हि प्रत्यक्षोपकारनिरपेक्षः प्रमाणान्तरोदयः। नापि प्रमाणान्तरोदयमात्रेण कृतार्थः प्रमाणानुसारी यावन्न तदुपनीतसाधनार्थक्रियानुभवः। तस्मात् तदनपेक्षायामसामर्थ्यवैयर्थ्यग्रस्तं प्रमाणान्तरं स्वयमेव न किञ्चिदिति न तेन साधिते बाधिते वावकाशमासादयति। तत्कथमपोहः शब्दादिगोचर उच्यते?

अथ यद्यपि निवृत्तिमहं प्रत्येमीति न विकल्पः, तथापि निवृत्तपदार्थोल्लेख एव निवृत्त्युल्लेखः। न ह्यनन्तर्भावितविशेषणप्रतीतिर्विशिष्टप्रतीतिः। ततो यथा सामान्यमहं प्रत्येमीति विकल्पाभावेऽपि साधारणाकारपरिस्फुरणाद् विकल्पबुद्धिः सामान्यबुद्धिः परेषाम्, तथा निवृत्तप्रत्ययाक्षिप्ता निवृत्तिबुद्धिरपोहप्रतीतिव्यवहारमातनोतीति चेत्? ननु साधारणाकारपरिस्फुरणे विधिरूपतया यदि सामान्यबोधव्यवस्था, तत् किमायातमस्फुरदभावाकारे चेतसि निवृत्तिप्रतीतिव्यवस्थायाः? ततो निवृत्तिमहं प्रत्येमीत्येवमाकाराभावेऽपि निवृत्त्याकारस्फुरणं यदि स्यात्, को नाम निवृत्तिप्रतीतिस्थितिमपलपेत्? अन्यथा वा तत्प्रतिभासे तत्प्रतीतिव्यवहृतिरिति गवाकारेऽपि चेतसि

तुरगबोध इत्यस्तु। अथ विशेषणतया अन्तर्भूता निवृत्तिप्रतीतिरित्युक्तम्, तथापि यद्यगवापोढ इतीदृशाकारो विकल्पस्तदा विशेषणतया तदनुप्रवेशो भवतु, किं तु गौरिति [प्रतीतिः]। तदा च सतोऽपि निवृत्तिलक्षणविशेषस्य तत्रानुत्कलनात् कथं तत्प्रतीतिव्यवस्था[1] ?

तदेतदायातम्, स्फुरतोऽपि विधेर्न विषयस्थितिरपोहस्य पुनरस्फुरतोऽपीति क एष न्यायः ? तथा च निश्चयैर्यन्न निश्चीयते रूपं तत्तेषां विषयः कथम् ? न च विकल्पे अस्फुरतस्तेन निश्चयनं नाम। यद्विधिरूपं स्फुरितमन्तर्मात्रायां तस्य परापोहोऽप्यस्तीति तत्प्रतीतिरुच्यते। तत्रापि सम्बन्धमात्रमपोहस्य। विधिस्तु साक्षान्निर्भासीति न पूर्वदोषान्मुक्तिः। अपि चैवमध्यक्षस्याप्यपोहविषयत्वमनिवार्यम्, विशेषतो विकल्पाद् एकव्यावृत्तोल्लेखिनोऽखिलान्यव्यावृत्तमीक्षमाणस्य। तस्माद् विध्याकारावग्रहाध्यक्षवद् विकल्पस्यापि विधिविषयत्वमेव नान्यापोहविषयत्वम्[2]।

यत् पुनरन्यस्मादपोह्यते, अपोह्यतेऽन्य[द]स्मिन् वेति विजातिव्यावृत्तं बाह्यमेव बुद्ध्याकारोऽन्यापोह इति गीयते। तेन न कश्चिदुपयोगः, अपोहनाम्ना विधेरेव विवक्षितत्वात्, न च नामान्तरकरणे वस्तुनः स्वरूपपरावृत्तिः। तस्मादनुभवानुसाराद् विधिरूपमेव बाह्यं शब्दादिगम्यमस्तु। शास्त्रं च, अत्र द्वौ वस्तुसाधनावेकः प्रतिषेधहेतुः।

अनङ्गीकृतवस्त्वंशो निषेधः साध्यतेऽनया।
वस्तुन्यपि तु पूर्वाभ्यां पर्युदासो विधानतः॥
[प्र. वा. ४. २६२]

यदि च नञ्प्रयोगवत् [9a][3] अभावमात्रस्यैव हेत्वन्तरादपि प्रतीतिः, तदा नानुपलम्भाद् भेद इति लिङ्गविभागपूर्वकाशेषव्यवस्थादौस्थ्यमायातमिति कथमपोहः शब्दलिङ्गाभ्यां प्रकाश्यत इत्युच्यत इत्यत आह, स्थितिरिति। व्यवस्थामात्रमेतत्। मुख्यतयापोहः शब्दादेर्विषय इति नेदं वस्तुतत्त्वमित्यर्थः। किं पुनरत्र वस्तुतत्त्वमिति चेत् ?

---

१. अथ यद्यपीत्यतः तत्प्रतीतिव्यवस्थेत्यन्तोऽनुच्छेदो रत्नकीर्तिनिबन्धावलावुद्धृतः (पृ: ५३)
२. यद्विधिरूपं.. ...नान्यापोहविषयत्वम् तुल° रत्नकीर्तिनिबन्धावली, पृ: ५२, पं ११-२२
३. नञ्प्रयोगपरत्वं पाठो नितरामस्पष्टः।

शब्दैस्तावन्मुख्यमाख्यायतेऽर्थ-
स्तत्रापोहस्तद्गुणत्वेन गम्यः।
अर्थश्चैकोऽध्यासतो भासतेऽन्यः
स्थाप्यो वाच्यस्तत्त्वतो नैव कश्चित्॥

इति प्रकरणार्थसंग्रहः।

न खलु शास्त्रमनुभवं परिभूय भवितुं क्षममिति विधिरूपमामुखयन्नेव विकल्प उपजायत इति तावन्न शक्यमपह्नोतुमिति प्रथमपादार्थः। नञ्प्रयोगे विवादाभावान्न तत्र चिन्ता। शब्दैरिति चोपलक्षणम्। लिङ्गैः प्रतिपाद्यते विकल्पैर्विषयीक्रियत इत्यपि द्रष्टव्यम्। एवं सत्यास्तामपोहस्य वाच्यता, तद्व्यवस्थामात्रमपि विलुप्तम्। सा स्थितिरपि हि द्विधा विधीयते, सन्निकर्षात् प्रयोजकाच्च। तत्र यद्यपि सर्वधर्मानभिलाप्यत्वप्रतिपादनं प्रयोजकमुक्तम्, न तु सन्निकर्षः कश्चिदित्याशङ्कयाह,– तत्रापोह इति। विधौ हि मुख्यतया प्रतिपाद्यमाने तद्विशेषणतयोपसर्जनत्वेन गम्यत एवापोहः। तत्र तद्गुणत्वेनेत्यर्थसन्निकर्षः। गम्यत इति प्रतीतिसन्निकर्षः। ततश्चार्थसंबद्धः प्रतीयमानश्च अपोहो मुख्यप्रतीतिकमपि विधिं तिरस्कृत्य प्राधान्येन स एवाभिधेय इत्युच्यते, उक्तप्रयोजनात्। अथवा तद्गुणत्वेनैव गम्यो न मुखत्वेनेति साक्षादपोहवादिनो निरस्ताः। यद्यपि चान्यापोहादिशब्दानुल्लेख उक्तस्तथापि नाप्रतीतिरेव विशेषणभूतस्यापोहस्य, अगवाद्यपोढ एव गवादिशब्दस्य निवेशितत्वात्। शास्त्रं हि,

निवेशनं च यो यस्माद् भिद्यते विनिवर्त्य तम्।
[ ]

इत्यादि। यथा हि नीलोत्पले निवेशितादिन्दीवरशब्दात् तत्प्रतीतौ नीलिमस्फुरणमनिवार्यम्, तथा गोशब्दादप्यगवापोढे निवेशिताद् गोप्रतीतावगोऽपोहस्फुरणम् अनिवार्यम्[1]।

ये पुनरगोऽपोहे गोशब्दसङ्केतविधावन्योन्याश्रयणं आम्यधन्धीकरणमुद्भावयन्ति, तेऽपि सामान्ये सामान्यवति वा सङ्केतवादिनः कथमतो दोषान्मुच्यमानमात्मानं पश्यन्ति? तथा हि सामान्यं नाम न सामान्यमात्रमभिप्रेतम्, तुरगेऽपि गोशब्दसङ्केतप्रसङ्गात्, किं तु गोत्वसामान्यमभिप्रेतम्। तावता च गोत्वसामान्ये

1. तुल० रत्न० निब० पृ: ५४

तद्वति वा गोशब्दसङ्केत इत्यर्थनिष्ठायां स एव दोषः, गवापरिज्ञाने गोत्वसामान्यापरिज्ञानात्, गोत्वसामान्यापरिज्ञाने गोशब्दवाच्यापरिज्ञानात्। अथ गोत्वे तद्वति वा गोशब्द इतीदृशाक्षरेण यदि सङ्केतस्तदा दोषः। यदा तु [9b] पुरः स्थितं पिण्डमेकमुपदर्श्य देशकालान्तरविप्रकीर्णाशेषव्यक्तिसाधारणरूपविकल्पस्थायिनं प्रकरणादेः प्रतिपत्तारमवधार्यायं गौरिति सङ्केतः, तदा यत्रैवासौ तत् साधारणं रूपं निरूपयति तमेव गोशब्देन व्यवहरतीति कथं मिथः प्रार्थनादोषः? तावता च गोत्वे तद्वति वा सङ्केत इति व्याख्यातॄणां सिद्धान्तानुवाद एषः, न तु सङ्केतकर्तॄणामुपदेशक्रमस्तादृगिति चेत्?

एवं तर्हि यद्यगवापोढे गोशब्द इतीदृशाकारं सङ्केताकारकीर्तनं तदाऽयं दोषः। यदा तु विवक्षितव्यक्तिष्वेकाकारप्रत्यवमर्शवर्तिनि प्रकरणादवधारिते प्रतिपत्तरि सङ्केतकरणमयं गौरिति, तदा क्व दोषावकाशः? स हि स्वविकल्पतल्पशायिनीः सकलव्यक्तीरगोव्यावृत्ताद्यक्षरमनपेक्ष्य स्वयं तद्विजातीयाशेषव्यक्तिव्यावृत्ता गोशब्दवाच्याः प्रतिपद्यमानो यत्रैव विजातीयव्यावृत्तिं प्रतिपद्यते ता एव गोशब्देन व्यवहरतीति, तावता अगोव्यावृत्ते गोशब्द इति सिद्धान्तानुवाद एव न सङ्केताकारः, अभिमते गोशब्दवृत्तावगोशब्देन शेषस्याभिधातुं शक्यत्वात्। स तु विजातीयव्यावृत्तः साधारणाकारो विकल्पे सामान्यस्य प्रतिभासो व्यक्तेर्वा स्वात्मैवेति पश्चान्निश्चेष्यते। इतरेतराश्रयस्तु नास्तीति सिद्धम्। सिद्धं च पुण्डरीकशब्दश्रुतौ श्वेतशतपत्रप्रतिपत्तिवद् गोशब्दश्रुतावप्यगवापोढप्रतीतौ जातिवादिनाप्यवश्याभ्युपगन्तव्यमपोहविशेषणशेमुषीनान्तरीयकत्वं विधेरिति। न च संबन्धगन्धमात्रं साक्षादेव द्वयोः प्रतीतिर्मुख्योपसर्जनभावेनेति भेदः। धर्मवाची वा गुणशब्दः, अन्यापोहधर्मणो विधिरूपस्य प्रतीतेः।

यत् तृतीयाकारस्यारोपितत्राह्ययोरन्यनिवृत्तिकृतं सादृश्यं दूषयन् वाचस्पतिराह[1]– न च स्वलक्षणधर्मो व्यावृत्तिर्भवद्भिरभ्युपेयत इति, तद् दुष्टमेव। अथ भाविकीति विवक्षितं तत्रेति चेत्? तथापि नोपयोगः, कल्पनारूढस्यैव धर्मिधर्मभावस्येष्टत्वात्। केवलं किं न विधिनैव व्यपदेशः प्रत्यक्षस्यापि वा परापोहविषयत्वव्यवहारप्रसङ्ग इत्यवशिष्यते।

अत्र ब्रूमः। इह काचिद् व्यवस्था तत्त्वलेशमाश्रित्य प्रयोजनविशेषादन्यथा स्थितावप्यन्यथा क्रियते, यथाक्षणादुत्पाद इति। उत्पादो हि प्रागभावविशिष्टस्य वस्तुनः

१. ता° टी° पृ: ६८४

सत एव धर्मः। अथ च प्रागभावलक्षणतत्त्वलेशमाश्रित्यासत इति व्यवस्थाप्यते सत्कार्यवादशङ्कासङ्कोचाय। यथा वाऽनेनैव कृतं कर्म कोऽन्यः प्रत्यनुभविष्यतीत्येकसन्तानप्रज्ञप्तिमाश्रित्य कृतनाशाकृताभ्यागमवञ्चना विमोहाय, तथात्रापि विधिविषयाभिधानं [10a] वस्तुतो वस्तुन एव परारोपितवाच्यतास्वीकारशङ्कानिराकरणाय नान्तरीयकप्रतीतिर[प्य]पोह एव विकल्पविषय इति व्यवस्थाप्यते। अतो न विधिनैव व्यवहारः। यदा त्वपोह एव मुख्यार्थः शब्दस्येत्यारोपः, तदा विधिरपि पुरस्क्रियते। यथोक्तम्,

शब्दैस्तावन्मुख्यमाख्यायतेऽर्थ इति।

प्रत्यक्षे तु विवादाभावान्नैवं व्यवस्थेति युक्तम्। अन्यापोहविशेषणं तु विधिस्तत्रातिशयो नेत्युक्तमेव। शास्त्रं हि,

तत् परिच्छिनत्ति ततोऽन्यद् व्यवच्छिनत्तीत्यादि।

निषेध्यापेक्षया तु तत्रानुपलब्धिशब्देन निषेधव्यापारः पुरस्क्रियत एव। यथा वा [विधिवृ]त्तेरग्रहणं नाम प्रसज्यपक्षे नियतरूपानुभवादभावविकल्पोत्पादनशक्तिरेव, तथा विधिविकल्पानामपि तन्त्रेऽनुरूपानुष्ठानदानशक्तिरेव निषेधग्रहणमग्निर्मया प्रतीत इत्यनुव्यवसायप्रसवशक्तिश्च। पर्युदासपक्षे च नियतस्वरूपसंवे[द]नमेवोभयत्र निषेधग्रहणम्। उभयं चैतदभिमतं शास्त्रकारस्य। क्वचित् तस्य प्रस्तावानुरूपं प्रसज्यप्रतिषेधाधिकारेण,

रूपे तस्य न किञ्चनेत्यादीनि

वचनानि, क्वचित् स्वतद्रूपपरावृत्तवस्तुमात्रप्रसाधनादित्यादीनि पर्युदासाश्रयाणि। नत्वेकनियमः। ततो यट्टीकाकारः स्वापोहसिद्धौ तदर्थावतारतरलत्रिलोचनश्चावोचताम् आचार्यः प्रसज्यप्रतिषेधवल्लभ उन्नीयत इति तन्निराकृतम्। न च भेदाभावात् विशेषणव्यवहारहानिः, राहोः शिरः गोत्वं सामान्यमित्यादिवद् विवक्षाकृतस्य अनपायात्। किं च व्यवह्रियत एव भवतापि घटाभावप्रदेशयोः पिशाचत्वाभावस्तम्भयोर्वा विशेष्यविशेषणभावः। तत् कथमस्माकं निषेधे निःस्वभावाभाववादित्वादिति चेत्? नेदानीं स्वरूपनिरूपणमभावस्य, किं तु प्रतीतिनिरूपणम्। सा च शक्या अपह्नोतुम्। पर्युदासपक्षेऽपि तद्विधिरेवान्यनिषेध इति न प्रतीतिक्षतिः। नापि विशेषणभावस्य। अनेनैव वाक्येन विधिनिषेधयोः सामानाधिकरण्यप्रदर्श-

इति। एवमपोहस्य वाच्यताव्यवस्थायां निमित्तान्यभिधीयमानानि शास्त्रेऽपोहस्य शब्दान्मुख्यस्फुरणविरोधीन्यूहनीयानि भाववाचिषु। अभाववाचकाधिकारे चायमेव मुख्यो विवेक इत्युक्तम्। भाववाचिपूपसर्जनतया विवेकस्यामुख्यतां ख्यापयति। विशेषतो ह्येष बोद्धव्यः। अभाववाचिषु पदार्थ एवापोहः। भाववाचिषु पुनः पदार्थस्यान्यतः अपोहः, पदार्थ[व]चान्यस्य। एतयोश्चोक्तिमात्रेण भेद इति। यदि तथाविधनिबन्धनाधीनाऽपोहस्य वाच्यताव्यवस्था, अर्थ एव तु मुख्यमाख्यायते, हन्त तर्हि सर्वधर्मानभिलाप्यतासमयोऽस्तमयमायातः, तदर्थश्च समारम्भ इति सूचितम्।

यच्चोक्तं वस्तुवाच्यतारोपनिषेधार्थमपोहस्य प्राधान्येनाभिधानव्यवस्थेति, तत्रापि स्वयमर्थवाच्यतैव स्वीक्रियते, परस्य त्वन्यथोपदिश्यत इति महती प्रेक्षतेत्याशङ्क्याह,

अर्थश्चैक इत्यादि।

अयमर्थः, अर्थो हि द्विविधः बाह्य आन्तरश्च, अन्यस्याभावात्। तत्रैकस्तावद् बाह्यः अध्यवसायादेव वाच्यो व्यवस्थाप्यते, न स्वलक्षणपरिस्फूर्त्या[1]। कथमिति चेत्? अनुभवादेव। यथा हि प्रत्यक्षचेतसि देशकालावस्थानियतानि परिस्फुटरूपाणि स्वलक्षणानि प्रतिभान्त्यनुभूयन्ते, तथा न विकल्पकाले। विकल्पकाले हि विजातिव्यावृत्तमेव परस्पराकाराकीर्णमिवास्फुटमिव प्रत्यक्षापरिचितं किञ्चिद्रूपमाभासमानम् अनुभवविषयः। [2]यच्छास्त्रम्,

शब्देनाव्यापृताक्षस्य बुद्धावप्रतिभासनात्
अर्थस्य दृष्टाविवेति,

उपायभेदादेकस्यैव प्रतिभासभेदः, एकत्र हि बुद्धाविन्द्रियमाश्रयोऽन्यत्र शब्दादीति चेत्? अत्राप्युक्तम्,

जातो नामाश्रयोऽन्यान्यश्चेतसां तस्य वस्तुनः।
एकस्यैव कुतो रूपं भिन्नाकारावभासि तत्॥
[प्र. वा. २. २३४]

न हि स्पष्टास्पष्टे द्वे रूपे परस्परविरुद्धे एकस्य वस्तुनः स्तः, यत एकेनेन्द्रियबुद्धौ प्रतिभासेतान्येन विकल्पे, तथा सति वस्तुन एव भेदप्राप्तेः। न हि स्वरूपभेदादपरो

१. तुल० रत्न० निब० पृ० ६६. पं० १६-१७   २. तत्रैव धृतम् पं० १८ तः।

वस्तुभेदः, न च प्रतिभासभेदादपरः स्वरूपभेदः। अन्यथा त्रैलोक्यमेकमेव वस्तु स्यात्[1]। ननु दूरासन्नदेशवर्तिनोरेकत्र शाखिनि स्पष्टास्पष्टप्रतिभासभेदेऽपि न [शाखि]भेदः, अर्थक्रियाभेदाभावादित्यर्थक्रियाभेदोपकृत एव प्रतिभासभेदो भेदकः।

न चेहार्थक्रियाभेद इति कथमिन्द्रियशब्दाभ्यां जनितज्ञानविषयो गवादिर्भेदभागिति चेत्? न ब्रूमः प्रतिभासभेदो भिन्नवस्तुनियतः, किं तु एकविषयत्वाभावनियत इति। [11b] तथा हि, यो यः क्वचिद् वस्तुनि प्रत्यक्षप्रतिभासाद् विपरीतः प्रतिभासो नासौ तेनैकविषयः, यथा घटग्राहकात् पटप्रतिभासः, यथा वा शङ्खग्राहकात् पीतप्रतिभासः। तथा च गवि प्रत्यक्षप्रतिभासाद् विपरीतः प्रतिभासो विकल्पकाले इति व्यापकविरुद्धोपलब्धिः। एकविषयत्वं हि प्रतिभासाभेदेन व्याप्तम्, सव्येतरनयनदृष्टवद् दृष्टम्। अव्याप्तिस्तु यदि प्रत्यक्षान्तरमपि विपरीतप्रतिभासं स्यात्, वस्तु च द्विरूपं भवेत्। तच्च द्वयमपि नास्तीति व्याप्तिरेव। आश्रयभेदभाविनि च ज्ञाने पक्षीकृते तद्विरुद्धः प्रतिभासभेदः सिद्धः। ततो यत्रार्थक्रियाभेदादिसचिवः प्रतिभासभेदस्तत्र वस्तुभेदः घटपटवत्। तं पुनः सहायं विहाय प्रवृत्तो नियमेनैकविषयतां परिहरतीत्येकोऽत्र भ्रान्त एव प्रतिभासः, शङ्खे पीतप्रतिभासवत्।

तत्रापि शङ्ख एव विषय इति चेत्? शुक्लतामस्पृशन्ती बुद्धिः शङ्खविषयेति सुव्याहृतम्। शङ्खमात्रं प्रत्येतीति चेत्- न, ततः परस्य शङ्खमात्रस्यास्फुरणात्। पृष्ठभाविनि विकल्पे स्फुरतीति चेत्? अस्तु, न तु निर्विकल्पः पीतप्रतिभासः शङ्खविषय इति सिद्धम्। एवं दूरतः शिखरिणि पिण्डाकारप्रतिपत्तिरपि न पिप्पलादिभेदावसायसमर्थपत्रादिविशेषविरहिणी वृक्षविषयेति प्रकृतसममेतत्। अर्थक्रियाभेदाद्यभावाच्च न भिन्नोऽर्थ इत्येकस्यार्पिते भ्रान्तिभावे यदि न प्रत्यक्षप्रतिभासो भ्रान्तः, तदान्यप्रतिभास एव भ्रम इति ब्रूमः। एवं पीताभासे गोविकल्पे च समानो न्यायः। ननु क्वचित् कस्यचिदारोपः कुतश्चित् सादृश्याद् भवति। न च विकल्पप्रतिभासवत् संभिन्नाकारं जन्मान्तरेऽपि किञ्चिदुपलब्धम्।

तत् कुतः कस्य क्व समारोपाद् भ्रमोऽयमिति चेत्? अयमपरस्तवैव दोषः, यदयं विकल्पेनाध्यक्षगम्य गवगोचरो नान्यगोचर इति निर्विषयोऽपि न भ्रमोऽभिधातव्यः। अस्माकं तु तद्विषयो न भवतीत्येतावतैव प्रकृतसिद्धिः। तदेवान्यथाख्यातीति तद्गोचर एवेति चेत्? यथा प्रत्यक्षपुरस्कृतेन रूपेणास्ति ततोऽतिरिक्तस्य वस्तुनोऽभावात्

1. तुल० रत्न० निब० पृ० ५५

नात्। अतएव विरोधचोद्यमप्यवद्यं न, स्वाभावेन हि विधेर्विरोधो, नान्याभावेन, सहैव स्थानात्। तस्माद् युक्तमुक्तम्,

तत्रापोहस्तद्गुणत्वेन गम्य इति।

अथवा तस्यार्थाख्यानस्य गुणोऽयमेव यदन्यनिषेधनं नाम, तेनासौ गम्यत इति व्यवहर्तव्यम्। यच्छास्त्रम्, तदन्यपरिहारेण प्रवर्तेतेति शब्दनियोगः, व्यर्थोऽन्यथा-प्रयोगः स्यादिति। एतेन तात्पर्यार्थत्वमपोहस्य दर्शितमव्यापित्वपरिहारश्च। एष पन्थाः श्रुघ्नमुपतिष्ठत इत्यत्रापि प्रकृतपथान्तरापेक्षयैष एव। श्रुघ्नप्रत्यनीकानिष्टस्थानापेक्षया श्रुघ्नमेव। अरण्यमार्गवद्विच्छेदाभावादुपतिष्ठत एव। सार्थदूतादिव्यवच्छेदेन पन्था एवेति सुलभो नियमः[1]। तर्जनीनिर्देशाद् गतार्थः पन्था एवेति चेत्। परव्यवच्छेदः तावदस्तीष्टश्च। प्रयोगस्तु गतार्थस्यापि लोके दृश्यत एव। अभ्यागच्छति [10b] ब्राह्मणौ द्वावित्यादिवत्। यथा हि-सार्थपुरुषादिव्यवच्छेदेन कः-पन्थाः श्रुघ्नमुपतिष्ठत इति प्रश्नः, तथोत्तरमप्येष पन्था इति। सर्वत्रैव हि प्रतिपाद्यशङ्काङ्कितस्यैव विधि-प्रतिषेधाविति। यदि च शब्दश्रुतिकाले कलितो न परापोहः कथमन्यपरिहारेण प्रवृत्तिः ? ततो गां बधानेति चोदितोऽश्वादीनपि बध्नीयात्[2]।

यत्तु गोःप्रतीतौ न तदात्मा परात्मेति सामर्थ्यादन्यापोहः-पश्चान्निश्चीयत इति मतम्- तदसङ्गतम्, प्राथमिकस्यापि प्रतीतिक्रमादर्शनात्। न हि तत्कालव्युत्पन्न-सङ्केतोऽपि गामानयेत्युक्तः परतो निवृत्तावर्थापत्तिमनुसरति। न च गोशब्दादन्याव-कीर्णप्रतिपत्तौ गोनिश्चयो युक्तः। तथा प्रतिपत्तौ वा पश्चादपि कथमर्थापत्तेरुदयः ? पररूपपरिकरो हि गौर्गृहीतः। कथं स तदनाकीर्णतासमर्थने समर्थः ? तस्माद् गोः प्रतीतिरित्यगोऽपोढप्रतिपत्तिरुच्यते। अतः स्वार्थप्रतीतिकाल एवार्थान्तरापोहस्य प्रतीति-कालः; चन्द्रप्रयोगे चन्द्रप्रतीतिकालवदवदाततायाः। यथा च शुक्तिमाप्रतीतौ कीदृशीन्दु-प्रतीतिः, पररूपसङ्कीर्णप्रतीतावपि कीदृशी गोप्रतीतिरिति समानम्। नापि नासङ्कीर्णं नासङ्कीर्णमवगन्तुं शक्यं वस्तु, पश्चादपि सामर्थ्यस्याशक्यत्वाच्च। तस्मान्न निषेध-मोघायार्थसामर्थ्यालम्बनं श्रेयः।

यदप्युवाच वाचस्पतिः[3],- जातिमत्यो व्यक्तयो विकल्पानां शब्दानां च गोचरः, तासां [च] तद्वतीनां रूपमतज्जातीयव्यावृत्तमित्यर्थवशत्तदवगतेर्गां बधानेति चोदितो

१. हल° रज° निय° पृ: २२ पं ६-१, २ गुल° सैव पृ: २७. पं० १४-१५; ता° टी° पृ: ६८४
३. ता° टी° पृ: ६८४.

नाश्वादीन् वध्नातीति, तदप्यनेनैव निरस्तम्। यतो जातेरधिकायाः प्रक्षेपेऽपि व्यक्तीनां रूपमतज्जातीयव्यावृत्तमेव चेत्, तदा तेनैव रूपेण शब्दविकल्पयोर्विषयीभवन्तीनां कथमतद्व्यावृत्तिप्रतीतिपरिहारः? अथ न विजातीयव्यावृत्तं [व्यक्तिरूपं] तथाप्रतीतं वा तदा जातिप्रसाद एव इति कमर्थतोऽपि तदवगतिरित्युक्तप्रायम्।

अथ जातिबलादेवान्यतो व्यावृत्तम्, सा तर्हि पूर्वमप्यासीदेवेति पूर्वं न समर्था, तन्निश्चये पश्चादपि कथम्? सङ्केतस्मरणसहकार्यपेक्षा हि नामयोजनायामेव, विजातीयेतरकल्पना तु दर्शनमात्राधीना वालादिवदिति यत्किञ्चिदेतत्।

यदि वा गुण्यतेऽभ्यस्यत इति गुण उपादेयो धर्मस्तेन प्राधान्यमत्र लक्षणीयम्, ततः स एव गुणोऽपोह एव प्रधानं येषु शब्देषु तद्भावेनापोह एव भाववाचिषु शब्देषु गम्य उच्यते, न विधिः स्फुरन्नप्यप्रधानवत्। तथा हि विजातीये सर्वत्राद्दष्टयपेक्षत्वात्, क्वचित् तु दृष्टयपेक्षणात्मजातीये श्रुतौ संवध्यतेऽपोह इति शास्त्रम्। अपि च, उभयावभासेऽपि यथावभास[प्र]मेयाभावादन्यनिवृत्तेस्तु भावनियमान्निवृत्तिरेव प्रधानम्। यच्छास्त्रम्,

वस्तुरूपस्य संस्पर्शो विच्छेदकरणे ध्वनेः।
स्यात् सत्यं स हि तत्रेति।
[ प्र. वा. ३. १३२ ]

अभाववाचिषु [11a] पुनर्वस्तुनोऽसत्त्वादेव। यच्छास्त्रम्,

रूपाभावादभावानां शब्दा रूपाभिधायिनः।
नाशङ्कया एव सिद्धास्ते व्यवच्छेदस्य बोधकाः॥
[ प्र. वा. ३.१८४-५ ]

इति। यद् वा तस्मिन्नपोहे पर्युदासेनापोढाकारे वा वाच्ये स्थितो गुणो दोषनिषेधो येषां शब्दानां तद्भावेनापोढ एव वाच्य उच्यते। यथाह,

निवृत्तेर्निःस्वभावत्वान्न स्थानान्तरकल्पना।
उपप्लवश्च सामान्यधियस्तेनाप्यदूषणा॥
[ प्र. वा ३. १६८-६ ]

कस्यान्यथाख्याने कर्तृत्वम् ? तत्तु न ख्यात्येवेत्यलं बहुभाषितया । तस्मान्न स्वलक्षण-प्रतिभासो विकल्पेष्विति न्यायः ।

तेन यदाह वाचस्पतिः[1], न च शाब्दप्रत्यक्षयोर्वस्तुगोचरत्वे प्रत्ययाभेदः, कारणभेदेन पारोक्ष्यापारोक्ष्यभेदोपपत्तेरिति, तन्नोपयोगि । परोक्षप्रत्ययस्य वस्तु-गोचरत्वासमर्थनात् । परोक्षताश्रयस्तु कारणभेद इन्द्रियगोचरग्रहणविरहेणैव कृतार्थः । ननु वस्तुविषयत्वे प्रत्ययाभेदप्रसङ्गः त्वयैवोक्त इति तत्परिहारेणैव वस्तुविषयत्वं सिद्धम्, न चान्यद् वस्त्वस्तीति तद्विषयत्वं चेति चेत्- नैवं, यतः प्रतिभास[12a]-वैजात्यस्यातद्विषयत्वेन व्याप्तिसाधनादसौ प्रसङ्गोऽस्मदीयः । अस्माकमपि व्याप्ति-विघटनायैव प्रयत्न एषः । कारणवैजात्यकृते प्रतिभासवैजात्ये संभविनि कुतो वा तद्विषयत्वेन व्याप्तिरिति ? एतदपि कदा युज्यते ? यदि तद्विषयत्वमात्रेण वा कारण-भेदो व्याप्तः शक्यो दर्शयितुम् । तत्तावन्नास्ति, कारणभेदस्य वस्तुनोऽप्रतीत्यैव चरितार्थत्वात् । अथ न गवो[? सत्यो]द्भावनमेतत् कारणभेदादपि संभाव्यते प्रति-भासभेदस्तद्विषयत्वेऽपीति । संभाव्यतां तर्हि गान्धारमधुरबोधयोरप्येकविषयत्वं, कारणभेदस्य तत्रापि संभवात् । निर्विक[ल्पसवि]कल्पयोरग्नित्वमात्रोल्लेखोऽस्तीत्येक-विषयताश्वासः । तत्र तु न गान्धारत्वस्य न वा मधुरत्वस्य तदुभयबोधयोरुल्लेख इति चेत् ? अहो निरूढता महती । आत्यन्तिककारणवैजात्यस्य हि फलमेतत् । एकविषय-त्वाश्वासः पुनरन्ततो वस्तुन उल्लेखाद् भविष्यति । सन्देहे कारणवैजात्येऽवान्तरस्याग्नि-त्वादेरुल्लेखः । आत्यन्तिके तु सर्वसाधारणस्य धर्मस्येति न तावतैवातद्विषयत्वम् । अस्ति चावान्तरधर्मस्य माधुर्यस्यानुवृत्तिर्गान्धारेऽपि ।

अन्यादृशं तन्माधुर्यमिति चेत् ? विकल्पन्यस्तस्याप्यग्नित्वमन्यदेव । न चैकरूपे अप्युल्लिख्यमानेऽवान्तरधर्मप्रतिभासयोरेकविषयत्वम्, शुक्तिरजतवत् । न हि शुक्ति-प्रतिभासो रजतविषयो रजतप्रतिभासो वा शुक्तिविषयः साधारणधवलतोल्लेखेऽपि । तस्माद् यथाऽग्निविकल्पे वस्तुस्फुरणेऽप्यवान्तरधर्मस्य गर्दभत्वस्यास्फुरणात् न गर्दभ-विषयता, तथावान्तरस्याग्नित्वस्य स्फुरणेऽपि स्वलक्षणाकारस्य प्रतिनियतस्यास्फुरणात् नान्यद्रव्यस्फुरणमिति न्यायः, स्वलक्षणस्यैवाग्निद्रव्यत्वात् । ततः कारणभेदो ज्ञान-प्रतिभासस्य भेदकोऽस्तु । वस्तुविषयत्वं तु न द्वयोरपि प्रतिभासयोरिति स्थितमेतत् । तस्मान्न स्वलक्षणं विषयः शब्दादेरिति सिद्धम् ।

1. न्या° वा° ता° टी° पृ° ४९

किं च एवं विधिनिषेधयोरपो[ह्त्वाद्]धारणमेव न स्यात्। तौ हि धर्मिणो वा स्याताम्, धर्माणां वा। यथा वृक्षोऽस्ति नास्ति वा, वृक्षो नीलो न वा नील इति। तत्र प्रथमः पक्षस्तावन्नास्ति। भावाभावनियतो हि वृक्षो वृक्षशब्देन चोदित इति भावनियमपक्षेऽस्तीति व्यर्थम्, नास्तीत्यसमर्थम्, विरोधात्। अभावनिरूपणे तु विपर्ययः। अस्ति च वृक्षपदश्रुतौ विधिनिषेधापेक्षेति, भावाभावसाधारणोऽयं वृक्षपदाद् वृक्षप्रतिभासो न बाह्यो वृक्ष इति न्यायः।

यत्तु न्यायदर्शने तात्पर्यटीकाकारेण जातिमद्व्यक्तिवाच्यतां स्ववाचैव प्रस्तुत्य अनन्तरमेव न च शब्दार्थस्य जातेर्भावाभावसाधारण्यं नोपपद्यते, सा हि स्वरूपतो नित्यापि देशकालविप्रकीर्णानेकव्यक्त्याश्रयतया भावाभावसाधारणी भवन्त्यस्तिनास्तिसंबन्धयोग्या। वर्तमानव्यक्तिसंबन्धिता हि जातेरस्तिता। अतीतानागतसंबन्धिता च नास्तितेति। सन्दिग्धव्यतिरेकित्वात् [12b] अनैकान्तिकं भावाभावसाधारण्यमन्यथासिद्धं वेति[1] विलपितम्, तावता तावन्न प्रकृतक्षतिः। जातौ भरं न्यस्यता स्वलक्षणावाच्यत्वस्य स्वयं स्वीकारात्।

अपि च जातिरप्यस्त्यादिपदप्रयोगात् प्रागभिधीयमाना शब्देन वर्तमानव्यक्तिसंबद्धा वा अभिधेया, अतीतानागतव्यक्तिसंबद्धा वा, उभयसंबद्धा वा, असंबद्धा वेति पक्षाः। न चैकत्रापि त्राणं प्राचीनचोद्यचतुरः क्षमते। प्रथमे पक्षे हि भावनियमः। द्वितीये त्वभावनियमः। तृतीयेऽपि यदि सदसद्व्यक्तियोगादस्याः सत्त्वासत्त्वव्यवहारमनोरथः, तथा यैर्यैराश्रयैर्वर्तमानव्यक्तियोगोऽस्या व्यवह्रियते, यैर्यैर्वातीतानागतव्यक्तियोगः, तानाश्रयांस्तथैव प्रतिपादयेत् शब्दः। न ह्यन्यथोभयव्यक्तिसंबद्धा प्रतिपादिता भवति। तथा च सति स एवास्त्यादिपदाप्रयोगप्रसङ्गः॥

अथैवं मतिः यत् तदुभयव्यक्तिसंबन्धिरूपं तदस्याः शब्देन चोदितमेव, न तु तत्संबन्धिनीनामुभयीनां व्यक्तीनां प्रतीतिः। न ह्येकसंबन्धिप्रतीतिः संबन्ध्यन्तरप्रतीतिमवश्यमन्वाकर्षति पुत्रादिप्रतीतिवदिति चेत्? एवं सति संबन्धिनामप्रतीतौ न संबन्धस्यापि प्रतीतिः। यतः,

द्विष्ठसंबन्धसंवित्तिर्नैकरूपप्रवेदनात्।
द्वयस्वरूपग्रहणे सति संबन्धवेदनम्॥
[ ]

१. तुल० ता० टी० पृ: ६८४ तथा रत्न० निब० पृ: ५६, पं ११-१६

ततो यथा तत्त्वतः कस्यचित् पुत्रोऽपि पितृसंबन्धानवधारणे पुरुषमात्ररूपः प्रतीतो घटवत् स्वतन्त्रः, तथा सामान्यसङ्घातमपि वस्तु स्वतन्त्रं प्रतीयमानं न सामान्यरूपतया प्रतीतं भवतीति चतुर्थपक्षप्रतिक्षेपः। तदापि संबन्धिनामनाक्षेपादस्त्यादिपदाप्रयोगः सिद्धः, स्वतन्त्रे हि तस्मिन्निश्चीयमाने तस्यैव भावाभावाभ्यामस्त्यादिप्रयोगेण भाव्यम्, नान्यस्य। संबन्धावधारणेऽपि हि नैकसंबन्धिनो भावाभावाभ्यामितरस्यास्त्यादिपदप्रयोगः। न हि चैत्रस्य भावाभावाभ्यां तत्पुत्रत्वेनावधारितोऽपि मैत्रोऽस्ति नास्ति वेति संबन्धमर्हति, किं पुनः संबन्धाबोधि सामान्यम्? अन्यादृशस्तत्र संबन्ध इति चेत्? कीदृशोऽपि वा भवतु, प्रतीतिमनारूढः पुनरसत्कल्प एवेति नान्यदीयभावाभावाभ्यामयःशलाकाकल्पस्य प्रतीतस्यास्त्यादिपदप्रयोगो योगमन्वेति, अतिप्रसङ्गात्। स्वरूपं चास्य सदावस्थायि प्रतिपादितमित्यस्तिपदवैयर्थ्यं, नास्तिपदविरोधश्च तदवस्थः।

तस्मान्नान्यथासिद्धं भावाभावसाधारण्यमैकान्तिकं च बाह्यविषयत्वसाधने विकल्पप्रतिभासस्य। नियमवती हि विषयव्यवस्था निमित्तवत्तया व्याप्ता[1]। न च विषयसदसत्ताप्रसाधनादन्यत् निमित्तमुपपद्यते, अतिप्रसङ्गात्। ततस्तदभावे व्यापकाभावादभवन्ती विषयवत्ता सदसत्त्वप्रसाधन एव नियम्यमाना तेन व्याप्तेति तद्विरोधिनि कथमवतिष्ठेत्? यज्ज्ञानं यत्र भावाभावसाधारणप्रतिभासं, न तेन तस्य विषयवत्त्वम्, [13a] यथा गोज्ञानस्याश्वेन। बाह्ये च भावाभावसाधारणप्रतिभासं वृक्षविकल्पज्ञानमिति व्यापकविरुद्धोपलब्धिः। तद्विषयत्वव्यापकस्य भावाभावप्रसाधनस्य हि विरुद्धं तदप्रसाधनरूपं साधारण्यम्। एवं जातिमद्व्यक्तिवचनेऽपि दोष एव। व्यक्तेश्चेत् प्रतीतिसिद्धिः, जातिरधिका प्रतीयतां मा वा, न तु तद्दोषान्मुक्तिः।

यच्चोक्तं कौमारिलैः, सभागत्वादेव वस्तुनो न साधारण्यदोषः, वृक्षत्वं ह्यनिर्धारितभावाभावं शब्दादवगम्यते, तयोरन्यतरेण शब्दान्तरावगतेन संबध्यत इति[2]। तत्रापि वृक्षत्वमिति यदि जातिर्विवक्षिता, तदा तद्दूषणेनैव निर्वृतिः। अथापरामृष्टभेदाभेदमेव वृक्षत्वम्, तदा तदवश्यम्भावेऽभावे वा नियतं, शब्देन च तथैव स्थापितमिति किमस्त्यादिपदेनापि?

स्यादेतत्। तन्नियतत्वेऽपि वृक्षत्वांश एव शब्देन चोदितो न सत्त्वासत्त्वांश इति चेत्? तयोरंशयोस्तर्हि भेदः काल्पनिकस्तात्त्विको वा? काल्पनिकत्वे इयं

---

१. नियमवती ...व्याप्तेति प्रान्तयोजना। २. कुञ्० रत्न० निब० पृ० २९ पं० १८—२१

गम्यवस्तुनोव प्रतियती शाब्दी बुद्धिः कथं वस्तुविषयेति सिद्धम्। तात्त्विकत्वे वृक्षः सन्निति सामानाधिकरण्यानुपपत्तिः, घटपटवत्। एकवस्तुनियतौ धर्माविति न्यायदर्शनविप्रतिक्षेपो वक्ष्यते। भेदाभेदपक्षोऽपि क्षिप्तोऽन्यत्र। यच्चेदं न च प्रत्यक्षस्येव शब्दानामर्थप्रत्यायनप्रकारो येन तद्दृष्ट इवास्त्यादिशब्दापेक्षा न स्यात्, विचित्रशक्तित्वात् प्रमाणानामिति। तदप्येकार्थत्वे भिन्नावभासदूषणेन दूषितम्। ततो यदि प्रत्यक्षार्थप्रतिपादनं शब्देन तद्वदेवावभासः स्यात्, अभयंश्च न तद्विषयख्यापनं क्षमते। तदस्यापि विचित्रशक्तित्वं प्रमाणानां वस्तुस्वरूपानुभवाध्यवसायमात्रकृतमेव, नैकार्थत्वेऽपि प्रतिभासभेदकृते, तद्भेदे एकार्थतायाः प्रमाणबाधितत्वादिति। तस्मादवस्थितमेतन्न स्वलक्षणाभिधाने धर्मिणो विधिनिषेधायोग इति कृतं पदप्रयोगेणेति।

नापि धर्माणां, वृक्षपदेन हि धर्मिणोऽध्यक्षवत् सर्वात्मना प्रतिपादितत्वात् कोऽवकाशः पदान्तरेण नीलत्वादिविधिनिषेधयोः प्रमाणान्तरेण वा? प्रत्यक्षेऽपि प्रमाणान्तरापेक्षा दृष्टेति चेत्? भवतु तस्याप्यनिश्चयात्मकत्वादनभ्यस्तस्वरूपविषये। विकल्पस्तु स्वयं निश्चयात्मको यत्र ग्राही तत्र किमपरेण? अस्ति च शब्दलिङ्गान्तरापेक्षा। ततो न वस्तुस्वरूपग्रहः, किं त्वेकधर्मच्छायानुकारिविकल्पोदयसंवेदनमेवेति सिद्धम्। न सिद्धम्, भिन्ना हि जात्यादयो धर्माः परस्परं धर्मिणश्चेति जात्येकधर्मद्वारेण प्रतीतेऽपि शाखिनि धर्मान्तरवत्तया न प्रतीतिरिति किं न भिन्नाभिधानाधीनो धर्मान्तरस्य नीलचलोच्चैस्तरत्वादेरवबोधः?

तदयुक्तम्, यदि हि भेदाद् धर्मिणः प्रतीतावपि न धर्माणां शब्दलिङ्गद्वारेण बोधः, इन्द्रियद्वारेणापि मा भूत्। अथेन्द्रियस्य संयोगसमवायबलात् सन्निकृष्टे धर्मिणि [13b] समवायादिसन्निकर्षभाजो धर्मा अपि प्रतीतिगोचरीभवन्तीत्युच्यते, लिङ्गस्यापीयं सामग्री न खलु कलयापि हीयते। शब्दस्य तु यद्यपि न वाच्येन सह संयोगसमवायौ, वाच्यवाचकभावलक्षणा तु प्रत्यासत्तिरिष्टैव, तदभावे वाच्यप्रतीतेरेवाभावप्रसङ्गात्। प्रतीतौ वा कीदृशी संयोगादेरपेक्षा? एतच्च स्वाभाविकसंबन्धावलम्बिनामपि लिङ्गाद् वस्तुप्रतीतौ तुल्यम्। न च शब्दद्वारेण प्रतीतौ प्रवृत्तिनिमित्तरोधिनी व्यवधानशङ्का। जातिमती हि व्यक्तिः सकृदेव शब्दादवसीयते भवताम्। क्रमेण त्वेकैकबोधान्न कदापि जातिमद्व्यक्तिबोधः स्यात्। न च निश्चयक्रमोपलम्भः। तस्मात् जातिरधिका प्रतीयतां नाम, व्यक्तिस्तु धर्मिणी प्रतीयमाना न स्वसमवेतगुणक्रियादीन् अप्रतिपाद्य स्वास्थ्यमासादयेत्। अन्यथा प्रत्यक्षेऽप्यपरोपाधिबुद्धिरनिबन्धना स्यात्।

अथैवं सति शब्दैर्व्यक्तिबोधनमेवास्तु किमुपाधिसाहित्यस्वीकारेणेति चेत् ? तत् किमिदानीं भवदुपगमवैयर्थ्यभयाद् भावैः स्वभावपरित्यागः कर्तव्यः ? तदयमपरस्तवास्तु दोषो न वा, न तु क्वचिद् गोचरे ज्ञानसाधनैरतत्संबन्धिनां बोधमसाधयित्वा स्थातव्यमिन्द्रियवत्। अथेन्द्रियादेव तथा दृष्टमिति नान्यत्र प्रसङ्ग इति चेत् ? एवं तर्हि तृणवह्निरिन्धनविकारक्रियानान्तरीयकधूमोत्पादनसमर्थो दृष्ट इति खादिरस्तथा न स्यात्। सामान्येन तु व्याप्तिरुभयत्रापीति न विशेषः। ततो यदि खादिरे विकारविरहस्तदा नासौ धूमोऽपि तु वात्यासंवलितधूलिनिवहः। न वा तत्र धूमध्वजः, किं तु कान्तिमत्पद्मरागरत्नराशिरश्मिसंहतिरुच्छ्रायवती। यदि पुनरसौ धूमः स च धूमध्वजः खादिरे यावश्यं विकार इति, तथा यद्यसौ धर्मिबोधस्तत्साधनश्च शब्दो, नियतं तदाश्रयधर्मबोधदोषः। न चेत् तदाश्रयधर्मबोधः, तदा नासौ धर्मिबोधो नापि धर्मिबोधनः शब्दः। यत् क्वचित् ज्ञानसाधनं तत् तदीयधर्माणां प्रतीतिसाधननियतं यथेन्द्रियम्। तथा च लिङ्गशब्दौ परोक्षाभिमतस्य प्रतीतिसाधनाविष्टौ तवेति स्वभावः प्रसङ्गहेतुः। न चैवं, शब्दलिङ्गान्तरापेक्षणात्। यन्न यत्समवेतधर्मबोधसाधनं न तत् तस्य स्वरूपज्ञानजनकम्, यथा गोशब्दस्तुरगे, तुरगो वा गर्दभे, न बोधयतश्च गोधुलिधूमौ स्वविषयाभिमतसमवेतधर्मान्तरमिति विपर्यये व्यापकानुपलब्धिः। जातिगुणक्रियादिरहितस्य स्वप्नेऽपि दर्शनशङ्काविरहाद् वस्तुदर्शनं तत्सत्तामात्रभाविना धर्मान्तरज्ञानेन व्याप्यत इत्युभयोरपि प्रयोगयोर्नानैकान्तः। भेदे एव हि जात्यादीनां विवादः। समवेतशब्दस्त्वभेदपक्षेऽपि कल्पनाबुद्धौ भिन्नवदाभासमानानामपृथक्प्रथनपरः। तद् वरमभेद एव धर्माणामस्तु, [14a] सर्वथा वस्तुप्रतीतिस्वीकारे धर्माणां प्रतीतिचोद्यस्य दुष्परिहरत्वात्, किमनुभवभ्रष्टभेदाभ्युपगमेन ? स्वभावा एव भावस्य जात्यादयः।

यत्तु भाषणं भूषणस्य, न च यत्स्वभावसंबन्धि स स्वभावः, तथा सत्यसंबन्धित्वमेव, न हि तदेव तेन साध्यत इति। तदसत्। स्वभावसंबन्धीत्यत्रैव स्वभावः यस्यचिद्वस्तुनो विवक्षितः, न च तयोर्भेदः। भेदे हि स्वभावत्वमित्यलौकिकमेतत्। तत् कथं तदेव तेन संबद्धमिति परिहृतम्, अन्यथास्य स्वभाव इति षष्ठीनिर्देशानुपपत्तेः। अथ स्वभाव इति जात्यादिरेवोच्यत इति न दोषः। दोष एव, यदा जात्यादिकं विविच्य वस्तुमात्रस्वभावपरामर्शः। न ह्यसौ वस्तुनः केवलस्य स्वभावो न वक्तव्यः। स एव च यत्स्वभावसंबन्धीत्यत्र विवक्षितः, संबन्धिशब्देन जात्यादेर्विवक्षितत्वात्।

तस्माद् यतो यदभिन्नमपि कल्पनया भिन्नमेव दर्शितम्, तत् तस्य संबन्धीति व्यवहारो दुष्परिहरः ॥

यच्च वाचस्पतिः[1], न चैकोपाधिना सत्त्वेन विशिष्टेऽस्मिन् गृहीते उपाध्यन्तरविशिष्टतद्ग्रहः, स्वभावो हि द्रव्यस्योपाधिर्विशिष्यते, न तूपाधयो विशेष्यत्वं वा तस्य स्वभाव इति। तदपि प्लवत एव। न ह्यभेदादुपाध्यन्तरग्रहणमासञ्जितम्, आकरेऽप्युपकार्योपकारद्वारेण भेदं पुरस्कृत्यैव सर्वाकारग्रहणप्रसञ्जनात्। शक्तीनां तु शक्तिमतोः अभेद उक्तः। तदनेनापि न स्पृष्टम्।

यत्पुनस्तत्र दूषणं भूषणेन, [2]सूर्यादिग्रहणे तदुपकार्याशेषवस्तुराशिग्रहणप्रसञ्जनमुक्तम्, तदभिप्रायानवगाहनफलम्, तथा हीदमाकूतम्। स्वयं वक्ष्यमाणसमवायनिषेधं स्थिरीकृत्य भवता नैयायिकप्रवरेण प्रत्यक्षकालेऽक्षसंबन्धमनुभवितरि धर्मिणि धर्माणां जात्यादीनां भेदाभ्युपगमादुपकार्यतयैव तदुपकारकशक्त्यभेदात् प्रतिपत्तिरेपितव्या। न ह्यनुपकारे कचित् कस्यचित् प्रतिबन्धो भेदवत इति शक्त्यभेदापादनमुखेनाह,

[धर्मोपकारशक्तीनां] भेदे तास्तस्य किं यदि।
नोपकारस्ततस्तासां तथा स्यादनवस्थितिः ॥
[प्र. वा. ३.५२]

इति। यत्तु शक्तिर्नाम सहजा जातिरौपाधिकी च सहकारिसाकल्यमतो भिन्नैवेत्यालम्बनम्, तद्दूषयित्वा क्षणभङ्गाध्याये कार्यक्रियाप्रवृत्त एव स्वभावः शक्तिरित्येव निर्वाहितम्। उपकारश्च समानकार्यार्जनस्वभावोऽकार्यस्यापि संभवतीत्यपि तत्रैव ध्वस्तम्। कार्योपकार्ययोरपि तत्त्वतो नास्त्येव भेदः, व्यवहारे पुनरपूर्वोत्पत्तौ सोहापोहात् कार्यता। पूर्वस्थिताभिमानविषये तु विशेषानुभवादुपकार्यतोच्यते। तत्त्वतस्तु पूर्वस्थितश्चाधुना विशिष्टश्चेति विरुद्धमेव। तदिह स्थिराभिमतजातिपुरस्कारेण चिन्तायां कार्यतानिष्ठ एवोपकार्यव्यवहारः, तत्त्वत एकार्थतया चेति न दोषः। तदेवम् अवश्याभ्युपगन्तव्यायामुपकारलक्षणायां प्रत्यासत्तौ सूर्योपकार्यादिभिरनुभवव्यभिचारः [14b] प्रसज्यायातः साधारण एवावयोः।

---

१. तुल° रत्न° निब° पृ: ५७, पं १६–१९    २. तुल° रत्न° निब° पृ: ५७, पं २२

यत्तु वाचस्पतिः, स्वाभाविकश्च संबन्धो व्यक्तेर्जात्या सह नोपकारमपेक्षत इति। तत्र न स्वभाविको नाम यथा प्रसिद्धादन्य एव कश्चित् संबन्धः, किं तु संयोगादि-सत्तायामेव संबन्धिनोर्व्यभिचाराव्यभिचारेण वृत्तिभेदादौपाधिकः, स्वाभाविकश्च सम्बन्ध इति व्यवस्थामात्रम्। एतद्विचारश्च व्याप्तिचर्चायामपेक्षितव्यः। यथा च जात्या सह व्यक्तेस्तदव्यभिचारात् स्वाभाविकः संबन्धस्तथा जातेरपि व्यक्तया सहा-व्यभिचारादेव,

निर्विशेषं न सामान्यं भवेत् शशविषाणवत्

इति न्यायात्। तदनयोः प्रत्यासत्यन्तराभावात् समवायस्य च कल्पनामात्रत्वाद् यद्युपकार्योपकारकभावोऽपि परस्परमसत्त्वनिर्बीजादिवत्, अव्यभिचारनियम एव भेदाभ्युपगमव्यसनिनामतिप्रसङ्गादनुपपन्नः। उपकारे हि स्वभावस्तद्विशेषो वा तन्नान्तरीय[क] इत्येवाव्यभिचारार्थो नान्यत्रेति नातिप्रसङ्गः।

तदभावे तु द्विधा तत्परिहारः स्वभाववादं समवायबलं वावलम्ब्य। नाद्यः पक्षः, सर्वस्य यत्र क्वचन दृष्टशक्तेर्विपर्यासनप्रसङ्गात्। दृष्टश्चोपकारो वह्निशिल्पिजलादौ धूमकुम्भबलाकादेरव्यभिचारहेतुः। केवलं कालदेशाद्यपेक्षयेति विशेषः। ततो भेदेऽपि स्वभावादेवाव्यभिचारो नोपकार इति ब्रुवता नियमेन सामर्थ्यमपोहितम्। द्वितीय-पक्षश्चासम्भवी, समवायस्यैवाभावात्। इहेदमिति बुद्धिसाधनो हि समवायोऽभ्युप-गतः; सा च बुद्धिर्न समानसङ्केतग्रहतिमिरनिकुरम्बकरम्बितदृशामुपादेया, सर्वस्य सर्वार्थसिद्धिप्रसङ्गात्। इच्छामात्रप्रसन्त्रोदयत्वाद् विकल्पानाम्। अन्यस्य च लोकस्य नास्त्येव विवादपदे सर्वत्र सा बुद्धिः, कारणाभावात्। परस्पररूपासङ्कीर्णवस्तुद्वय-प्रतिभासो हि कारणमिहेदमिति सप्तमीप्रथमार्थविभागमुत्कलयतो विकल्पस्य, कुम्भेऽम्भःसंभवेऽपि कुम्भमात्रोपलम्भिनः सकलान्यकारणकलापवतस्तदभावात्। तादृगवस्थस्य च पश्चा[द्] द्वितीयोपलम्भमात्रे भावात्। न चासौ द्वयप्रतिभासः क्वचिदपि समवायविषयेऽस्तीति संयोगकल्पनाविषय एव तद्विकल्पविषयः। यत्रानात्म-रूपपरिहारेण नोभयोपलम्भो न तत्रेदमिहेति प्रतीतिरनुन्मत्तस्य, यथा पात्रबदरयो-रेकानुपलम्भे। नास्ति चात्मात्मीयरूपप्रतिभासभेदेन जातितद्वतोरनुभव इति कारणा-नुपलब्धिः। धूमाग्निवत् कार्यकारणभावस्य विवक्षितयोः साधनान्नानैकान्तः। तदमी स्वयंकृतशब्देनार्थान्तरमुपकल्पयन्तस्तुरगतुलामनुपतन्तीत्येतदेव वक्ष्यति,

पटस्तन्तुष्विहेत्यादिशब्दाश्चेमे स्वयं कृताः ।

[ प्र. वा. २. १४६ ]

इति । ननु निर्विकल्पकबोधेन द्वयात्मकस्यापि वस्तुनो ग्रहणमित्युक्तम्, तत् कथं न स्वरूपद्वयप्रतिभास [15a] इत्यसिद्धा कारणानुपलब्धिः ? तदेतत् पापीयः। न हि प्रत्यक्षगम्येऽर्थे परोपदेशो गरीयान्। प्रतिभासोऽपि तथेति चेत् ? तदेतदायातम्,

एतासु पञ्चस्ववभासिनीषु प्रत्यक्षबोधे स्फुटमङ्गुलीषु।
साधारणं षष्ठमिहेक्षते यः शृङ्गं शिरस्यात्मन ईक्षते सः ॥

इति । वयं हि तावच्चर्मचक्षुषः चक्षुषी सुदूरमुन्मील्य शतकृत्वो निरूपयन्तोऽपि नापरम् उपलभामहे, भवतस्त्वदृष्टदेवताप्रसादात् तथा प्रतिभासेऽपि नेतरस्य तथा बोधसिद्धिः ।

तेन प्रत्यक्षमेव द्रष्टव्यं यदेकमनेकसाधारणं द्रष्टृणां दर्शयतीत्याचक्षाणः त्रिलोचनोऽप्यन्यलोचनेनेव वीक्षत इति लक्ष्यते । यच्चाह दृश्यमानापि जातिरपृथग्देशवर्तित्वाद् व्यक्तितो भेदेन व्यक्त्यन्तरवन्न दृश्यत इति । तत्रापि दृश्यते जातिर्न तु भेदेनेति ब्रुवता नियमादभेदेन प्रत्यक्षगोचर इत्युक्तं भवति । यथा च प्रत्यक्षेण गृहीतं तथैव समस्तं वस्तु, न खलु तत्र बाधकसाधकयोर्योगः । ततश्च प्रत्ययानुवृत्तिस्तु व्यक्तितः सामान्यं भेत्स्यतीत्युपपत्तिवर्णनमनवकाशम् । यथा स्पार्शनः प्रत्ययो गन्धादिभ्यः स्पर्शं भिनत्तीत्यपि न युक्तमुक्तम् । न हि गन्धस्पर्शयोरप्यभेदग्राहि प्रत्यक्षम् ।

एवं तर्हि भेदेन न दृश्यत इति भेदेन न व्यवसीयत इति व्याख्यायताम्, तदापि दृश्यमानापि जातिरिति किं भेदेनाभेदेन वेति विवक्षितम् ? यद्यभेदेन, तदा व्यवसायो भेदेनाभेदेन वास्तु, किमस्य चिन्तया, प्रत्यक्षेणाभेदस्य सिद्धत्वात् ? अथ भेदेन दृश्यमानेति विवक्षितम् ? तत् पुनरशक्यम्, प्रतिभासभेदाभावस्योक्तत्वात् । युक्त्या साध्यते प्रतिभासभेद इति चेत् ? तदेतत् लज्जाकरम् । यतः,

कस्यचित् प्रतिभासेन साध्यतेऽप्रतिभासि यत् ।
प्रतिभासोऽस्य नास्त्येति नोपपत्तेस्तु गोचरः[1] ॥

[ क्षणभङ्गाध्याये पृ० ११२ ]

---

१. साध्यते नोपपत्तिभिरिति क्षणभङ्गाध्यायस्थः पाठः ।

इति विवेचितमस्माभिरहेतुकाभावप्रस्तावे।

किं च यद्येकाकारप्रतिभासेऽपि प्रतिभासान्तरं युक्तिसाध्यमभ्युपेयते, तदाऽनुष्णो वह्निरिति न प्रत्यक्षबाध्यमभिधेयम्, अनुष्णप्रतिभासस्यापि तत्र संभवात्, व्यक्तौ जातिप्रतिभासवत्।

अनुष्णप्रतिभासस्य चित्रभानौ साधनाभावान्न साम्यमिति चेत्? तथापि संशयोऽस्त्विति कथमनुष्णस्य बाधकमध्यक्षम्, कथं च साधनाभावः, प्रमेयत्वस्य विद्यमानत्वात्? अव्यभिचारी हेतुरिति चेत्? व्यभिचारोऽपि साक्षात् परम्परया वा प्रत्यक्षादेव। तत्र च विपरीतप्रतिभासो निषेद्धमशक्य इत्युक्तम्। यदि चानैकान्तिकतया प्रमेयत्वान्न सिद्धिरनुष्णताया हेतुदोषात्, तर्हि दृष्टमनुष्णोऽग्निरिति नायं पक्षदोषः, ततोऽनुष्णत्वाबाधनात्। साधनमपि नाध्यक्षम्। उष्णमेव हि उष्णम्। न पुनरुष्णानुष्णम्। तस्मान्नियतप्रतिभाससंवेदनमन्यप्रतिभासस्य नियमेन बाधकम् अभ्युपगन्तव्यमकामकेनापि, अन्यथा प्रवृत्तिसङ्करप्राप्तेः। तथा च,

न ह्ययमनलं [15b] पश्यन्नित्यादि।

ततो यदोघपतितैरुद्घुष्यते, जातिमतीषु व्यक्तिषु सङ्केते कृते यत्र यत्र जातिदर्शनं तत्र तत्र तच्छब्दवाच्यताप्रतीतिरिति, तदसूत्रमम्बरं विडम्बयति, स्वलक्षणविलक्षणस्य स्वप्नेऽप्यनुपलक्षणात्। अतएव स्वरूपमात्रेण गृहीतावुपाधितद्वन्तौ योजयतो विकल्पस्य प्रामाण्यमिष्टं यत् तत्प्रत्यादिष्टम्, पूर्वं द्वयदर्शनस्यैवाभावात्। तस्मान्न कारणानुपलब्धेरसिद्धिः। असिद्धिः पुनरिहेति प्रत्ययस्येति क्व समवायवार्ता? वार्तं चैतद् व्यक्तेर्जात्या सह स्वाभाविकः संबन्ध इति। ततश्च यद्यप्युपाधिवद्वतां भेदवादो दुष्परिहरः, तदा उपकारलक्षणायामपि प्रत्यासत्तौ समानदेशस्यैव ग्रहणे वस्तुग्राहिणः शक्तिरिति समानः सूक्ष्मोपकार्यव्यभिचारपरिहारः।

तस्मादेकधर्मद्वारेणापि वस्तुस्वरूपप्रतीतौ सर्वात्मप्रतीतेः क्व शब्दान्तरेण विधिनिषेधावकाश इति किमद्यापि केवलवृक्षपदेन? ततश्च क्व सामान्यसामानाधिकरण्यविशेषणविशेष्यभावव्यवस्था? यदा तु,

[एकार्थश्लेषविच्छेदे एको व्याप्रियते ध्वनिः।
लिङ्गं वा तत्र विच्छिन्नं] वाच्यं वस्तु न किञ्चन॥

यस्याभिधानतो वस्तुसामर्थ्यादखिले गतिः ।
भवेन्नानाफलः शब्द एकाधारो भवत्यतः ॥
[प्र. वा. ३. १२८-३०]

वस्तुनि हि वाच्ये सर्वात्मना प्रतिपत्तेर्विधिनिषेधयोरयोगः । यदा पुनरनादिविषय-विकल्पाभ्यासवासनावशादेकव्यावृत्त्याकारशेखरा बुद्धिरेव कुतश्चिद् वासनाप्रबोधाद् उदयमासादयति, तदा वस्तुग्रहणसामर्थ्यभाविनामुक्तदोषाणां कावकाशः ? तथा हि वृक्ष इत्युक्ते धवखदिरादिसाधारणरूपप्रतिभासवशात् सामान्यमवृक्षापोहपरमार्थम् अवस्थाप्यते। तच्च रूपमप्रतिक्षिप्तानुपात्तसत्तासाद्बलत्वादिभेदतया पदान्तरप्रयोगसापेक्षम् इत्येकत्र धर्मिणि धर्म्यन्तरनिबन्धनैरिव सन्नीलचलादिपदैः सामानाधिकरण्यं च, तदा बुद्ध्यनुरोधतः एकभेदचोदनापेक्षायां वृक्षस्य सत्त्वमिति भेदनिर्देशश्चेति द्विविधोऽपि विशेषणविशेष्यभावः सिद्धः । एवं च सति यथा पृथ्वीरुहे पाथोऽग्नि-सङ्गमादुपचयापचयौ दृष्टौ, एकत्वारोपाच्च स एवायं पादप ईदृशो जात इति प्रतीतिः, स च धर्माणां तत्संबन्धयोग्यानामनुदयेऽपि तद्योग्य इव व्यवसीयते, तथा विकल्पेऽपि वृक्षाकारो धर्मान्तराप्रतिभासेऽपि तद्योग्य इति नीलो न फलिन इत्यादिप्रयोगे चोप-चयापचयभागिव भासते स एवेति चावसीयते, न तथा बाह्यो जलादिसम्पर्कवच्छब्दो-च्चारणकालेऽप्युपचयापचयवान् । एतच्च न बाह्यविषयत्वे युक्तम्, यथाप्रतिभासम् अतत्त्वात्, यथातत्त्वं चाप्रतिभासनात् । अतएव चैत्रस्य गौर्गोमान् मैत्रो नाश्ववानिति भिन्नविशेषणापेक्षयापि न पदान्तरप्रयोगयोगः, तत्कृतोपचयापचयप्रतिभासस्य बहिर-भावात् ।

तस्माद् बुद्धिविलास एवैषः । यत्र चायं विप्लवः परम्परया परापोढवस्तु-नान्तरीयकः [16a] तत्राभिमतार्थक्रियाकृतार्थो जनस्तादृशं विशेषमूहितुं न प्रयत्न-वान्, नापि क्षम इत्यनवच्छिन्नो व्यवहारः विसंवादेऽपि मृषेदमिति न व्यवस्थापयति । न पुनरन्यदापि बाह्येनाविषयत्वमिति शास्त्रका[रा]णामप्य[भ्यू]हसंभवात् का परस्य कथा ? तस्मान्न स्वलक्षणस्य शब्दादिगोचरत्वमिति स्थितम् ॥

एकं धर्मिणमाकलय्य विविधव्यावृत्तिधर्माश्रयं
तत्रैकैकविधानबाधनविधावायव्ययाभासिनम् ।
मुग्ध्या बुद्धिरियं यथा भ्रमयति भ्राम्यंस्तथायं जन-
स्तत्त्वांशेन कृतार्थतामुपगतो नो[प]प्लवं मन्यते ॥

इति संग्रहश्लोकः ॥

[1]नापि सामान्यलक्षणस्य। तथाहि उत्तरतीरे सरितश्चरन्ति गाव इति वाक्ये गवादिशब्दात् सास्नाशृङ्गलाङ्गुलादयोऽक्षराकारपरिकराः सजातीयभेदापरामर्शात् संपिण्डितप्रायाः प्रतिभासन्ते, न च तदेव सामान्यम्,

वर्णाकृत्यक्षराकारशून्यं गोत्वं हि कथ्यते।
[प्र. वा. २. १४७]

न चापरमाकाशवत् किञ्चित् प्रतिभाति। अन्यथा गोत्वाश्वत्वविकल्पयोरविशेषप्रसङ्गात्। तदेव हि ज्वलद्भासुराकारमात्रमखिलव्यक्तावत्यन्तविलक्षणमपि स्वलक्षणेन एकीक्रियमाणं सामान्यमित्युच्यते। न तु तत्सामान्यमेव तासाम्, बुद्ध्याकारत्वेनान्यत्रानुगमात्। शास्त्रं हि,

बुद्धेरव्यतिरिक्तं च कथमर्थान्तरं व्रजेत्।
[ ]

न चालोचनानन्तरजन्मनीन्द्रियार्थजन्यतयाभिमते सोऽयं, तादृशोऽयं, गौरयमिति वा विकल्पेऽर्थान्तरप्रतिभासः। यथा तु संपिण्डिताकारमलौकिकमात्मनि प्रतिभासमानं पुरः प्रतिभासिनि पिण्डे योजयति, तथा तस्य बाह्यस्याभावाद् भ्रान्तिरेवासौ, केशप्रकाशवत्।

बाधकादेवमिति चेत्? ननु प्रयत्नप्रणिहितपाणिप्रतिघाताद्यभावात् केशपाशे विसंवादः, प्रस्तुते तु यदि परिभावको भवति स एव व्यक्तव्यक्त्यनुभवो बाधकः किम् अपरेण? जनस्य तु विवेचनासामर्थ्यमित्युक्तमेव। कथं वा करप्रतिघातादिविरहोऽद्यापि न बाधकः? त एव हि शृङ्गादयो यथास्थाननिवेशिनोऽस्पष्टरूपा अप्रतिष्ठितदेशदशाविशेषा देशकालादिभेदादनन्तमूर्तयः सङ्कीर्यमाणा इवाद्यापि भासन्ते, तेषां प्रतिघातादिनियतत्वात् कीदृशः केशादिभ्यो भेदः, यतो नात्र बाधकमिति स्यात्?

तस्माद् वासनावशाद् बुद्धेरेव तदात्मना विवर्तोऽयमस्तु, असदेव वा तद्रूपं ख्यातु, व्यक्तय एव वा सजातीयभेदतिरस्कारेणान्यथा भासन्ताम्, अनुभवव्यवधा-

[1]. द्र० रत्न० निब० पृ० ४८. पं १-४

नात् स्मृतिप्रमोषो वाभिधीयताम्, सर्वथा भ्रान्तिरेवेयं वहिरपेक्षया सामान्यवार्ता, इदन्तया च पुरोवर्तिवस्त्वनुभवप्रभवतया भवितुं युक्तैव। ननु भ्रान्तिहेतवस्तिमिराशुभ्रमणादय इन्द्रियविकारकारिणः परिगणिता एव। न च तत्रैकस्यापि सन्निधिरिति कथमियमाकस्मिकी भ्रान्तिः? अथ निर्विकल्पकभ्रान्तेरेव हेतवस्ते, इयं च मानसी भ्रान्तिरिति मन्यसे? [16b] साप्यारोप्यारोपविषययोः सादृश्यदर्शननिबन्धनैवेति तादृग्विभागाभावात् कथं मानस्यपि भ्रान्तिः? सर्वा च भ्रान्तिः सादृश्यनिबन्धनैव, न खलु जन्मान्तरेऽपि सदृशदर्शनमन्तरेण भवितुमर्हति। न च संभिन्नाकारं किञ्चिज् जन्मान्तरेऽपि दृष्टमिति कथं तदारोपः? अहो महत् पौरुषम्! तथा हि निर्विषयत्वं तावदुक्तेन क्रमेण न चेत्परिहर्तुं शक्यते, भ्रान्तिव्यवहारं कुर्या[त्] मा वा, तावतैव प्रकृतसिद्धेः किमत्र निर्बन्धेन?

यत् पुनराकस्मिकत्वमुक्तं तदयुक्तम्, जनकसामग्रीभेदस्य भवताप्यवश्यस्वीकरणीयत्वात्। कथमन्यथा इन्द्रियार्थौ निर्विकल्पकज्ञानजननियतौ दृष्टौ विकल्पम् उत्पादयतः? तस्मात् पूर्वपिण्डदर्शनस्मरणसहकारिणातिरिच्यमानसामर्थ्येयं सामग्री विकल्पमुत्पादयतीति निर्विषयं ज्ञानमुत्पादयत्येवार्थः, निर्विषयतानिष्टत्वाद् विकल्पतायास्तद्दंशेन। तद् वरं विजातीयविकल्पवद् विस्पष्टप्रतिभासादनुभवाद् भिन्न एव सजातीयविकल्पोऽपीत्येव साधु, तस्मान्न जातिसिद्धिरध्यक्षात्।

नाप्यनुमानात्, अध्यक्षगोचरतयैव केनचिदग्निधूमवत् कार्यकारणभावस्य ग्रहीतुमशक्यत्वात्। सामान्येन तु ज्ञानजन्मनि यथा परिदृष्टकारणेभ्यः कारणान्तरम् अपेक्षणीयमिन्द्रियवत् कदाचित् सिध्येत् यदि सकलान्यकारणसन्निधौ कदाचिदभिमतज्ञानकार्याभावं विभावयेत्। न चैवं प्रस्तुते शक्यम्। यदा हि पिण्डान्तरे... वा गोबुद्धेरभावं दर्शयेत्, तदा गोपिण्डस्यैवाभावात् अभावो गोबुद्धेरप... कथमर्थान्तरापेक्षामाक्षिपेत्, यतस्तदेव गोत्वमिति प्रत्याशा स्यात्? ... पिण्ड इति गोत्वादेव सामान्यादन्यथा तुरगपिण्डोऽपि गोपिण्डः स्यात्; ... गोत्वमपि सामान्यं गोपिण्डादेव, अन्यथा तुरगत्वमपि गोत्वं स्यादिति ... चादृश्यस्य सामान्यस्य भावाभावौ क्वचित् निश्चेतुं शक्यौ पिण्डवदिति न ... अथापि स्याद् यदि बाहुलेयपिण्डाभावात् तुरगे न गोबुद्धिः, शाबले... स्वलक्षणस्य क्वचिदनन्वयात्। सत्यमनन्वयि स्वलक्षणम्, ... पिण्डान्तरदर्शनस्मरणवति प्रतिपत्तरि तदाकारप्रत्ययमर्शजनन...

तथा शाबलेयस्यापि। ततो नैक एव गोपिण्डोऽपि तु तादृग् विकल्पारोहिणः सर्व एव पिण्डाः। अतस्तुरगे न गोप्रत्ययः।

ननु सामर्थ्यं शक्तिरिति जातिरेवोच्यते। सा हि शक्तिर्भिन्ना वा स्यादभिन्ना वा ? यद्यभिन्ना, तदा स्वलक्षणवदननुगामिनीति नेतरः शक्तः। अथ भिन्ना, अन्यसाधारणी च, तदा जातिरेवासाविति नास्ति विवादः। अत्रोच्यते। अभिन्नैव सा प्रतिवस्तु, यथा त्वेकः शक्तस्वभावो भावस्तथाऽन्योऽपि भवन् कीदृशं [17a] दोषम् आवहति ? यथा हि भवतां जातिरेकापि समानधीध्वनिप्रसवहेतुरन्यापि स्वरूपेणैव जात्यन्तरविरहात्, तथाऽस्माकं व्यक्तिरपि निरपेक्षा स्वरूपेणैव भिन्नापि हेतुः। तत् तु स्वरूपं व्यक्तेः कारणपरम्पराप्रतिबद्धम्।

यत्तु त्रिलोचनः, अश्वत्वगोत्वादीनां सामान्यविशेषाणां स्वाश्रयेषु समवायः सामान्यमित्यभिधानप्रत्यययोर्निमित्तमिति[1]। तत् समवायनिराकरणेनैवापहस्तितम्। समवाय एव वा स्वरूपेणैव निमित्तमिति न दृष्टान्तक्षतिः। न च जातिसमवाययोः सहक्रियाकल्पनेनान्योन्यशक्तित्वम्, तदा हि स्वरूपेणैकस्यापि जनकत्वमिति सामान्याभिधानधियोर्दत्तो जलाञ्जलिः। स्वरूपेण जनकानामेव हि बीजादीनां सहकारिसाकल्यमौपाधिकी शक्तिरिति स्वरूपेण जनकत्वमवश्यवाच्यमिति समवायावलम्बनं विडम्बः। न च तद्व्यापारविरहे तदाकारवेदनोदयः कारणान्तरमात्रात्, अन्यथानुवृत्ताकारस्यापि प्रत्ययस्य जन्मनि स्वलक्षणैरेव किं न निर्वृत्तिरिति चिन्तापि जातेः समूलकाषं कषिता स्यात्। आकस्मिकत्वेऽपि स एव दोष इति गले पादिकया जातिस्वीकारिणोऽनुवृत्तप्रत्यये स्वरूपेणैव जातिव्यापारमनवस्थाभयात् स्वयमेवानारोपितजात्यन्तराः स्वीकारयितव्या इति कथं समवायेन परिहारः ? स पुनरधिकः सहकारी भवतु मा वा भूत्, जातिस्तु जातिनिरपेक्षा स्वरूपेण शक्तिमती अनुवृत्तप्रत्ययं जनयति, स्वभावस्यापर्यनुयोज्यत्वान्न व्यक्तिरिति न राज्ञामाज्ञामन्तरेण शक्यमभिधातुम्।

एतेन सेयं प्रत्ययानुवृत्तिरनुवृत्तवस्त्वनुयायिनी कथमत्यन्तभेदिनीषु व्यक्तिषु व्यावृत्तप्रत्ययविषयभावानुपातिनीषु भवितुमर्हतीत्यप्यूहाप्रवर्तनमस्य प्रत्याख्यातम्, जातिष्वेव परस्परव्यावृत्ततया व्यक्तीयमानास्वनुवृत्तप्रत्ययेन व्यभिचारात्। अथ जातीनामदर्शनात् क्वानुवृत्तप्रत्ययो यतो व्यभिचार इति चेत्– न, अभ्युपगमविरोधस्य

1. न्याय° रत्न° निय° पृः २८, पं २०-२१

अनेन क्रमेण प्रतिपादनात्। तथा हि प्रत्ययानुवृत्तिरनुवृत्तवस्तुसाधनायोपनीयते, सा चानुवृत्तवस्त्वभावनान्तरीयिका यद्यनुवृत्तवस्तुसिद्धिरिति क इमं व्याघातमुद्घोढुं शक्तोऽन्यत्र जाड्यात्? किं च कल्पितास्वपि जातिषु व्यभिचारस्तदवस्थ एव किमत्र दर्शनेन?

अथ दृश्यमानेष्वर्थेषु नियम उच्यते– न, तत्रापि विपर्ययबाधकाभावात् प्रतिबन्धानुपपत्तेः। सामान्येन च व्यभिचारदर्शनादन्यत्रापि शङ्काबीजम्। यदि च दृश्यविशेषापेक्षया सामान्यव्यभिचारपरिहारः, तदा न वक्तव्यं या भिन्नेष्वभिधानप्रत्ययानुवृत्तिरसावनुवृत्तवस्तुनिमित्ता, यथा कुसुमेषु सूत्रमित्यभिधानप्रत्ययानुवृत्तिस्तथा च गोषु भिन्नेषु गौरित्यभिधानप्रत्ययानुवृत्तिरिति। दृश्यमाननिमित्ततायामेवाभिधानप्रत्ययानुवृत्तेरनुवृत्तवस्तुनिमित्ततया व्याप्तेर्विश्रामनियमात्। युक्तं चैतत्। न खलु सूत्रेऽपि [17b] दर्शनाविषयीकृतेषु सूत्रप्रत्ययानुवृत्तिः। सवस्तुको हि विकल्पोऽनुमानं विना वस्तुदर्शनकार्यः सिद्ध इति विपर्ययात् कारणानुपलब्ध्या निवर्तमानानुवृत्तवस्तुना प्रत्ययानुवृत्तिव्याप्तिर्दृश्यनिमित्ततायामेव विश्राम्यति, सति वस्तुविषयत्वे। वस्तुविषयत्वविवादे तु नायं नियमः।

यत् पुनरनेन विपर्ययबाधकमुक्तम्, अभिधानप्रत्ययानुवृत्तिः कुतश्चिन्निवृत्त्य क्वचिदेव भवन्ती निमित्तवती। न चान्यन्निमित्तमित्यादि। तन्न सम्यक्। अनुवृत्तमन्तरेणाप्यभिधानप्रत्ययानुवृत्तेः [अतद्रूपपरावृत्त]स्वरूपविशेषादवश्यं स्वीकारस्य साधितत्वात्। तस्मात् यथा स्वलक्षणान्निवृत्त्य गोत्वाश्वत्वादावेव सामान्यं सामान्यमित्यभिधानप्रत्ययानुवृत्तिः कयाचित् प्रत्यासत्त्या भवति, तथा व्यक्तिष्वपि भवतु, एतेनानुवृत्तवस्तुनि साध्येऽभिधानप्रत्ययानुवृत्तिः, तेनास्या व्याप्तौ च विपर्ययबाधिका व्यापकानुपलब्धिरित्युभयमनैकान्तिकमिति वेदितव्यम्। प्रत्यासत्तिरित्यपि नास्य-[न्य]व्यावृत्तेरन्या। यथाहि गोत्वम[श्व]सामान्याद्व्यावृत्तं तथाश्वत्वद्रव्यत्वादिकमपि, एवं यथैका गोव्यक्तिरगोतः परावृत्ता तथाऽन्यापि। अस्या अपि भेदाभेदचिन्तामौखर्यं शक्तिवदेवोत्तरम्। ततश्च येऽर्था अतद्रूपपरावृत्त्या परस्परं प्रत्यासन्नास्ते तेष्वेकदर्शनानन्तरमपरदृष्टौ अनुवृत्तप्रत्ययमुत्पादयन्ति नान्ये। सैव च शक्तिः, न जात्यात्मा। अन्यथा,

आत्मैकत्रापि सोऽस्तीति व्यर्थाः स्युः सहकारिणः।
[प्र. वा. ३. १६४]-

एतच्च क्षणभङ्गे सहकारिवादादवधार्यम्। सा च प्रत्यासत्तिः कारणपरम्परायातेत्यनन्तरमुक्तमेव। अवश्यं च हेतुकृतः प्रत्यासत्तिविशेष एषितव्यः, यतः काश्चिदेव व्यक्तयो जात्यधिष्ठानभाजनीभवन्ति नेतराः। अन्यथात्वे तु सामग्रीनियमाच्च नियतजातिमत् कार्यं भवतीति उक्तमपरित्राणं भूषणस्य स्यात्।

तथा च सति,

तुल्ये भेदे यया जातिः प्रत्यासत्त्या प्रसर्पति।
क्वचिन्नान्यत्र सैवास्तु शब्दज्ञाननिबन्धनम्॥
[प्र. वा. ३. १६१-२]

किमत्र जात्या ?

यत् पुनरत्र तेनोक्त[मपर]मपि कुचोद्यम्, न ह्येवं भवति, यया प्रत्यासत्त्या दण्डसूत्रादिकं प्रसर्पति क्वचिन्नान्यत्र, सैव प्रत्यासत्तिः पुरुषस्फटिकादिषु दण्डिसूत्रित्वादिव्यवहारनिबन्धनमस्तु किं दण्डसूत्रादिनेति[1] ? एतत् कदा शोभते ? यदि प्रमाणसिद्धं सामर्थ्यं किञ्चित् क्वचिदपलप्येत। यथा हि, उपसर्पणप्रत्ययाद्याश्रया प्रत्यासत्तिर्दण्डसूत्रयोः पुंसि स्फटिके च प्रसर्पणहेतुः प्रत्यक्षादिप्रमाणसिद्धा, तत्संपृक्तपुरुषस्फटिकानुभवश्च दण्डिसूत्रिबुद्धेर्निबन्धनं सिद्धं समयस्मरणवतः प्रतिपत्तुः, तथा न गोत्वभावाभावावनुविधीयमानेयं गोबुद्धिरुपलब्धा, किं त्वन्धकारे करामर्षमात्रमेतदीदृशा केनचिद् भवितव्यं गोबुद्धिनिबन्धनेनेति। तत्र यद्यवश्याभ्युपगन्तव्येन प्रकारान्तरेण तत्सिद्धौ न [18a] बा[ध]स्तत् किं गुर्वितरया परिकल्पनयेत्युच्यते ? अन्यथा तदपि कल्पयित्वानर्थकार्थशतकल्पनमनिवार्यम्। यदि तु यथोपसर्पणप्रत्ययादेः पुरुषादौ दण्डादिसन्निधिर्भावाभावमनुविदधानो दृष्टः, दृष्टश्च पुरुषादौ दण्डादिसन्निधानानुभवभावाभावानुविधायी दण्डयादिप्रत्ययस्तथा कारणकलापस्य नियतजातिकतायामेव परं व्यापारो नैकामर्शे। एकामर्शे पुनरियमसौ जातिरेव संप्रति व्यापारवतीत्यनुभूयेत, स्यात् तदपवदितुरपराधः, यावता समयमात्रमेवत्, जातेरनुभवातिक्रान्तिप्रतिपादनात् इति कुतस्तद्वैयर्थ्यचोदनं दण्डादिकमपि विषयीकुर्यात् ? एवमन्यत्रापीदृशि प्रतिविधापनमूह्यम्।

---

१. तुल° रत्न° निब° पृ: २१, पं १—१७

अथैवमनुमानम्, यद्विशिष्टज्ञानं तद्विशेषणग्रहणनान्तरीयकम्, यथा दण्डिज्ञानम्। विशिष्टज्ञानं चेदं गौरयमिति प्रत्यय इत्यर्थतः कार्यहेतुः। विशेषणानुभवकार्यं हि दृष्टान्ते विशिष्टबुद्धिः सिद्धेति। अत्रानुयोगः, विशिष्टबुद्धेर्भिन्नविशेषणग्रहणनान्तरीयकत्वं वा साध्यम्, विशेषणमात्रानुभवनान्तरीयकत्वं वा? प्रथमपक्षे पक्षस्य प्रत्यक्षबाधा साधनावधानमनवकाशयति, वस्तुग्राहिणः प्रत्यक्षस्योभयप्रतिभासाभावात्। विशिष्टज्ञानत्वं च सामान्यं हेतुरनैकान्तिकः, भिन्नविशेषणग्रहणमन्तरेणापि दर्शनात्। यथा स्वरूपवान् घटः, गोत्वं सामान्यमिति वा। द्वितीयपक्षे तु सिद्धसाधनम्, स्वरूपवान् घट इत्यादिवत् गोत्वजातिमान् पिण्ड इति कल्पितं भेदमुपादाय विशेषणविशेष्यभावस्येष्टत्वादगोव्यावृत्तानुभवभावित्वाद् गौरयमिति व्यवहारस्येति। तदेवं शाब्दादिबुद्धौ न बाह्यस्य स्वलक्षणस्य सामान्यलक्षणस्य वा प्रतिभासः। न च सामान्यं प्रमाणसिद्धमिति प्रतिपादितम्। तद्वदुपाध्यन्तराणि चिन्त्यानि ॥

यद्येवं कथं तर्हि,

शब्दैस्तावन्मुख्यमाख्यायतेऽर्थः।

इति शास्त्रं सङ्गतियुक्तम्? न हि तच्च तेन प्रतिपाद्यते, न च तज्ज्ञाने तत्प्रकाश इति सङ्गतिः काचिदित्याह,

अध्यासत इति।

द्विधा विषयव्यवहारः, प्रतिभासादध्यवसायाच्च। तदिह प्रतिभासाभावेऽपि परापोढस्वलक्षणस्याध्यवसायमात्रेण विषयत्वमुक्तम्। तथा च ततोऽपि विकल्पात् तदध्यवसायेन वस्तुन्येव प्रवृत्तेरिति। अथ कोऽयमध्यवसायो नाम विकल्पादन्यः, विकल्पितमध्यवसितमित्यनर्थान्तरत्वात्? तत् कथं विकल्पादध्यवसायेनेति भेदनिर्देशः? अन्यापोढं च स्वलक्षणं न विकल्पे परिस्फुरति। अध्यवसिते [विकल्पि]त इति क एष न्यायः, यतोऽध्यवसायापेक्षतया तदपि विकल्पस्य विषय इति व्यवस्थाप्यते? किं च विकल्पस्याविषयश्च बाह्यम्, ग्रहणं चास्य शब्देन संयोज्येति दुर्योजम्। आत्मनि च तत्रास्तीति विकल्पो नाम नास्त्येव, [18b] तत् कस्य विषयचिन्ता? अगृहीते च स्वलक्षणे शब्दात् प्रवृत्तिरिति सर्वत्राविशेषेण प्रसज्येत, सर्वस्यागृहीतत्वेन विशेषाभावात्। ततः प्राप्तिरपि नाभिमतस्य नियमेनेत्यनुमानस्यापि विप्लव इति।

अत्रोच्यते, सत्यमेकार्थौ विकल्पाध्यवसायौ केवलं विकल्पशब्दः शब्दादियोजनानिमित्तकः। अध्यवसायस्त्वगृहीतेऽपि प्रवर्तनयोग्यतानिमित्तः। यद्यपि च विभ्रमगृहीतम्, तथापि नियतविषया प्रवृत्तिर्नियताकारत्वाद् विकल्पस्य। नियतशक्तयो हि भावाः प्रमाणपरिनिश्चितस्वभावा न शक्तिसाङ्कर्यपर्यनुयोगभाजः, असदुत्पत्तिवत्। सर्वस्य तत्रासत्त्वेऽपि हि बीजादङ्कुरस्यैवोत्पत्तिः, तत्रैव तस्य शक्तेः प्रमाणेन निरूपणात्। तथेहापि हुतवहाकारस्य विकल्पस्य हुतवहार्थक्रियार्थिनः तत्स्मरणवतो हुतवहविषयायामेव प्रवृत्तौ सामर्थ्यं प्रमाणप्रतीतं कथमतिप्रसङ्गभागि? प्रत्यासत्तिचिन्तया च तात्त्विकस्यापि वह्नेर्ज्वलदङ्गाखुराकारत्वं विकल्पोल्लेखस्यापीति, तावता तत्रैव प्रवर्तनशक्तिर्ज्वलनविकल्पस्य न जलादौ। न च सादृश्यारोपेण प्रवृत्तिभ्रमः, येनाकारे बाह्यस्य बाह्ये चाकारस्यारोपद्वारदूषणावकाशः। किं तर्हि? स्ववासनापरिपाकवशादुपजायमानैव सा बुद्धिरपश्यन्त्यपि बाह्यं बाह्ये प्रवृत्तिमातनोतीति विस्तुतैव।

यच्चात्रम्,

> [देशभ्रान्तिश्च] न ज्ञाने तुल्यमुत्पत्तितो धियः।
> तथाविधाया [अन्यत्र तत्रानुपगमाद् धियः॥]
>
> [प्र. वा. २. १३]

इति। तस्मान्न रूप्यादिवदारोपद्वारेण प्रवृत्तिरपि तु तथाविधाकारोत्पत्तिप्रतिबद्धशक्तिनियमात्, यथा शालित्वेन शालिबीजमुपादानं निरन्वयोदयेऽपि शाल्यङ्कुर उपादेये, शालित्वादिस्थितेः स्थैर्यदूषणेन निरस्तत्वात्। न च विचारकस्य वस्त्वदर्शनं निश्चिन्वतः अप्रवृत्तिप्रसङ्गः सङ्गच्छते, दर्शनेऽपि हि प्रवृत्तिरर्थक्रिययान्वितया, अर्थक्रियाप्राप्तिश्च वस्तुसत्तानियमे। स च नियमो यथा दर्शनाद् वस्तुप्रतिबन्धकृतस्तथा विकल्पविशेषाद् अपि पारम्पर्येणेति, नानुमानमनवस्थितम्। शब्दात् तु क्वचिदर्थसंशयेनेति प्राप्तेरपि तत्रानियमः। तस्मादध्यवसितमित्यप्रतिभासेऽपि प्रवृत्तिविषयीकृतमित्यर्थः।

ततो विकल्पबुद्धावप्रतिभासेऽप्यध्यवसितत्वं न बाह्यस्य बाध्यते। अयमेव चार्थो दृश्यविकल्पयोरेकीकरणस्याभेदप्रतिपत्त्यादेश्च। ततश्च तत्र न प्रतीयते तेन चाभेदभासनमित्युपालम्भोऽसंभवीति दर्शितम्, तदर्थनिष्ठायाः कृतत्वात्। स चाग्निरत्रेति व्यवसायो यथा कायिकीं प्रवृत्तिं प्रसूते, तथाग्निर्मया प्रतीत इति वाचिकीमपि

प्रसूते। एतदाकारानुव्यवसायरूपां मानसीमपि प्रसवति। एवं सति यथा विकल्पेन अयमर्थो गृहीत इति निश्चयस्तथा शब्देन संयोज्येत्यपि, अर्थाकारलेशवच्छब्दाकारस्यापि स्फुरणात्। तस्माद् यावदर्थग्रहणाभिमानवान् मानवः [19a] तावदभिधानसंयुक्तग्रहणाभिमानवानपीत्यवसायानुरोधादेव विकल्पव्यवस्था न तत्त्वतः।

आह च,

न शब्दैः संसर्गः क्वचिदपि बहिर्वा मनसि वा-<br>
क्षराकाराकीर्णः स्फुरति पुनरर्थाकृतिलवः।<br>
उभावप्यात्मानौ यदपि धिय एवाध्यवसिति-<br>
र्निधत्ते तौ बाह्ये वचसि च विकल्पस्थितिरतः॥

अतएव च तदभिमानम्लानमानसं व्यावहारिकं प्रति प्रत्यक्षलक्षणे कल्पनापोढविशेषणमुपादीयते, सूत्रतोऽपि विकल्पादध्यवसायेनेति भेदनिर्देशः। तत्रापि नायम् अध्यवसायध्वनिर्धर्मिण एव विकल्पस्याभिधायकः प्रयुक्तः, किं तु तद्गतस्याध्यवसानलक्षणस्य धर्मस्य। तदयमर्थः, अदृष्टेऽपि प्रवर्तनयोग्यता नाम यो धर्मस्तया विकल्पात् प्रवृत्तिरिति। ज्ञातश्चेदर्थो व्यवस्थापितोऽध्यवसायात् संवृत्त्या, ततो विषयव्यवहारोऽपि लब्ध इत्यवसायमात्रेण विषयत्वमिति युक्तम्।

अत उक्तम्,

अर्थश्चैकोऽध्यासतो वाच्य इति।

यदाह भाष्यकारः,

कथं तद्विषयत्वं तत्र प्रवर्तनादिति।

[ ]

यस्तु कथमदृष्टे प्रवर्तनमित्याशङ्क्यादृष्ट एव सर्वत्र प्रवर्तनमित्यादिसिंहनादः, स न विपञ्चितोऽस्माभिर्ग्रन्थगौरवभयात्।

एवं स्वप्रतिभासेऽनर्थाध्यवसायेन प्रवृत्तेरित्यत्राप्यनर्थे स्वप्रतिभासे सति अध्यवसायः पूर्ववत्, अर्थस्त्वर्थक्रियासमर्थो बाह्य उक्तः। तत्पर्युदासेनानर्थो बुद्ध्याकारः। एवं स वस्तुवत् असन्निति च द्रष्टव्यम्। एतच्च वार्तिकवाचैव स्फुटीकृतं

साकारसिद्धौ। अर्थाध्यवसायेन प्रवृत्तिरनुमानस्येत्यपि हि अर्थाध्यवसायानुमानमित्यर्थः। टीकाकारस्य[1] तु यथाऽत्र व्याख्यानं स्वापोहसिद्धौ तद्धेयमेव, विस्तरप्रसङ्गभीत्या नोद्भावितमस्माभिः।

यदि तर्हि बाह्यस्याध्यवसायेन वाच्यता, कथं बुद्ध्याकारस्य ? यच्चाख्यम्,

अनादिवासनोद्भूतविकल्पपरिनिष्ठितः।
शब्दार्थः [त्रिविधो धर्मी भावाभावोभयाश्रयः ॥]
[प्र. वा. ३. २०४-५]

इत्यादि।

विकल्पप्रतिबिम्बेषु तन्निष्ठेषु निबध्यते।
[ततोऽन्यापोहनिष्ठत्वादुक्तान्यापोहकृच्छ्रुतिः ॥]

व्यतिरेकीव यज्ज्ञाने भात्यर्थप्रतिबिम्बकम्।
शब्दात् [तदपि नार्थात्मा भ्रान्तिः सा वासनोद्भवा] ॥
[प्र. वा. २. १६४-५]

इति। न हि बुद्ध्याकारेऽप्यध्यवसायः शक्योऽभिधातुम्, प्रवृत्तिविषये तस्य व्यवस्थापनात्। स चार्थक्रियार्थिनो बाह्य एवेत्याह,

भासतेऽन्योऽर्थो वाच्य इति।

बाह्यादन्यो बुद्ध्याकार इत्यर्थः। शब्दादिजन्यायां बुद्धावाकारमात्रस्य प्रतिभासनात् स एव विषय उच्यते, चक्षुष इव रूपं विषयः, न पुनरध्यवसायादितिभावः। उक्तं च,

यथाप्रतीति कथितः शब्दार्थोऽसा[वसन्नपि]
[प्र. वा. ३. ८३]

इति। असन्निति तु यथाप्रतिभासं बहिरभावात्, बहिर्मुखापेक्षया च चिन्तायाः प्रक्रमात्। अयमेवार्थो यथाध्यवसायमतत्त्वात्, यथातत्त्वं चानध्यवसायादिति। अध्यवसायस्य विकल्पपर्यायत्वाद् यथाविकल्पस्फुरणमित्यर्थनिष्ठानात्। असदर्थप्रकाशनादेरपि यथाप्रतीति बहिरसत्त्वमेवार्थः। भ्रान्तित्वमपि बहिरपेक्षयैवेति सर्वम्

१. धर्मोत्तरस्य।

अनाकुलम्। न तु स्वसंवेदनगोचरस्य ज्ञानरूपतयार्थत्वात् केशाद्याकारस्येवासत्ताभिधानं [19b] साधु। अतएव वाच्यत्वेऽपि,

नाकारस्य न बाह्यस्य तत्त्वतो विधिसाधनम्।
बहिरेव हि संवृत्त्या संवृत्यापि तु नाकृतेः॥
[ ]

न ह्यसन्देह्यस्य विषयस्य स्वसंवेद्यस्याकारस्य शब्दादिना विधिनिषेधयोगः, वैयर्थ्यादसामर्थ्याच्च। नापि विकल्पाप्रतिभासिनो बाह्यस्य। विषयाप्रतिपत्तेर्हि कस्य विधिर्निषेधो वा स्यात्? तस्माद् यथा वृक्षशब्देन बाह्यो वृक्षोऽध्यवसायादभिधेयो व्यवस्थापितः, तथाध्यवसायादेव बाह्यस्य विधिर्निषेधो वा व्यवह्रियते। यदापि कुतश्चित् प्रकरणाद् बुद्ध्याकारं कश्चिद् विकल्पान्तरेणादाय परीक्षा, तदापि तद्विकल्पाद् बाह्य एव विधिनिषेधौ।

तं हि पतत्यर्थे विवेचयन्।
[प्र. वा. २. २२०]

इति हि शास्त्रम्। तस्मात् तत्त्वतो नोभयोरपि विधिनिषेधौ, संवृत्त्या हि बाह्यस्यैव, दुष्परिहरौ च। अन्यथा संव्यवहारहानिप्रसङ्गात्।

एतेन [1]यट्टीकाकारः आरोपितस्य बाह्यत्वविषयौ विधिनिषेधावित्यलौकिकमनागममतार्किकीयं कथयति, तदपहस्तितम्। न हि संवृतिपरमार्थसत्यद्वयमनाश्रित्य काचिद् व्यवस्था। तत्र न तावदियं संवृतिः, लोकाभिमानरूपत्वात् तस्याः, लोकस्य च बाह्य एव पदस्यार्थो विहितः प्रतिषिद्धो वेत्यविगानेन व्यापी प्रवृत्तिनिवृत्त्याश्रयः अभिमानः, नारोपितस्य बाह्यत्वादिकं स्पृशति लोकः। नाप्येष परमार्थः। न ह्यवाच्यस्य विधिनिषेधौ। न च वाच्यं किञ्चित् तत्त्वत इत्यागमः[2]। तर्कस्यापि नान्या दिक्। किं च नानध्यवसेयस्य विधिनिषेधौ, न च शब्दादध्यवसायः स्वलक्षणादन्यत्रेति स्वयमप्युद्घुष्यते। अतः किमायातमारोपितबाह्यत्वविधिनिषेधयोः? प्रतिभासाध्यवसायद्वारा च सर्वा व्यवस्थितिस्तत्त्वमस्पृशती। तत्रारोपितमारोपितबाह्यत्वं वा न प्रतिभासस्य विषयो, नाप्यध्यवसायस्य। तत्रारोपितं तावन्न प्रतिभासस्पर्शि, यत् स्वयम्

१. धर्मोत्तर एव, द्र० रत्न० निब० पृः ६०, पं १२

२. न रूपं तस्य किंचन। प्र. वा. २. २०.

एवाह, उल्लेखानुभवसमानकालं समारोपणमप्रतिभासरूपमेवावस्तु विकल्पविषय इति। अतएव तद्ग्राह्यत्वमपि न प्रतिभासि, तद्धर्मत्वात्। अध्यवसायस्तु बाह्यस्वलक्षण-नियमादेव नैनयोरित्यलमेनामुत्थाप्य।

आरोपितमित्यपि कल्पितमेवोच्यते, कल्पनाकर्म च प्रतिभासमवसितं चेति द्वयम्। तत् कुतस्त्योऽयमारोपिताख्यो राशिरपरः? तस्माद् बुद्ध्याकारबाह्याश्रयैव संवृतिपरमार्थाभ्यां चिन्तोचितेति। तथाविधार्थक्रियाविवक्षायां च किं वक्रदुर्गमार्गा-श्रयेणेत्यलमतिनिर्बन्धेन। स्थितमेतदध्यवसायेन बाह्यस्य बुद्ध्याकारस्य तु प्रतिभासेन शब्दवाच्यत्वमुच्यते इति। नन्वेवंव्याचक्षाणेन भवतोभयार्थराशेरशेषस्य वाच्यता स्वीकृतेति कथं सर्वधर्मानभिलाप्यतासमर्थनार्थमिदमवतारितमित्याह,

स्थाप्यत इति

प्रयोजनान्तरमुद्दिश्य व्यवस्थामात्रमेतत् क्रियते, अध्यवसायमात्रेण प्रतिभासमात्रेण [20a] वा वाच्यत्वमिति। तथा च बहिर्विषयीकरणं तत्त्वव्यवस्थानमात्रं गृह्णतः तावदन्यापोढं स्वलक्षणमेव विषय इत्युच्यते उपाधिराशिनिरसनपरं, एवमन्यापोढाकारो विकल्पस्यात्मा विषय इति समस्तबाह्यनिरसनपरम्, न तु स्वस्मिन् विषयत्वस्य विश्रामायेति न विरोधः।

कुतः पुनरेतत्? तत्र तत्र विषयताप्रतिपादनेऽपि न विश्रामो विवक्षितः, किं त्वन्यनिरसने तात्पर्यमित्याह,

वाच्यस्तत्त्वतो नैव कश्चिदर्थः।

इति। अध्यवसायसहापोहिप्रतिभासः सांव्यवहारिकापेक्षया तत्त्वतो ज्ञेयस्य ज्ञान-विषयतामुपनयति प्रत्यक्षवत्। न हि प्रतिभासमात्रमवसायशून्यमन्यावसायाक्रान्त-व्यापारं वा प्रवृत्तिकामस्य विषयव्यवस्थामर्थं क्षमते, गच्छत्तृणस्पर्शवत्, मरीचावुद-कारोपवत्। नाप्यवसायमात्रमपेतप्रतिभासम्, उदकारोपवदेव। तस्मात् प्रवृत्ति-योग्यतया व्याप्तं विषयव्यवस्थानमुभयाभावे व्यापकाभावेन परिभूयमानमुभयसंभव-प्रतिबद्धमेकविवेके स्वीक्रियमाणं सांवृतमेव। यत्र ज्ञाने यन्न प्रतिभासते येन वा यन्नावसीयते स न तस्य विषयो यथा गोज्ञानस्याश्वः। न प्रतिभासते च शाब्दज्ञाने स्वलक्षणं, नावसीयते चानेन बुद्ध्याकार इति व्यापकानुपलब्धिः। प्रतिबन्धसाधनात् नानैकान्तः। यद्यपि चात्यन्ताभ्यासे प्रतिभासमात्रेणापि प्रवृत्तिर्विषयत्वं च दृष्टम्,

तथापि स एवाभ्यासो नावसायाद् विनेत्यवसायस्यैव तत् पौरुषम्, ततो येन यन्नावसीयतेऽसत्यभ्यास इति विशेषणमपेक्ष्यम्।

ननु प्रत्यक्षेऽपि न गृहीतक्षणस्यावसायः, किं तु सन्ततेः, न चारया प्रतिभास इति केनास्यापि सविषयत्वं, क्षणे सन्ततौ चोभयाभावात्। अनुमाने तु परीक्षैव वर्तते। न चान्यत् प्रमाणमस्ति, यस्योभयसंभवेन विषयः कश्चिदित्यसंभवमेतत्। तदेकैकेन विधेयत्वे स्थितविषयकस्थितिरखिलस्य बाह्यस्यान्तरस्य वा वाच्यत्वमिति।

अत्रोच्यते। तत्त्वव्यवस्थामाह, उभयसंभवेनैव विषयत्वं, केवलं सांव्यवहारिकापेक्षया संवृतेरेवाधरसंस्थितिमपेक्ष्य तत्त्वमिति व्यवह्रियते, क्षणभेदावतारे संव्यवहारविलोपात् व्यावहारिकं प्रति प्रतिक्षणक्षीणताया अभावात्, तत्त्वतः प्रत्यक्षेणोभयसंभवाभावः, इति न दोषः। अथ पृथग्जनस्य दृश्यविकल्प्ययोरप्यभेदग्रहो नियत एवेत्यवसितो बहिः प्रतिभासित एवेति चेत्– न, प्रतिभासान्तरसरणेन तत्प्रतिभासभ्रमभ्रंशस्य कृतत्वात्। यथा च विकल्पप्रतिभासादन्य एव वस्तुप्रतिभासो दर्शयितुम् अध्यक्षे शक्यः, तथा नाध्यक्षप्रतिभासादन्योऽस्तीति तत्रैव वस्तुप्रतिभासविश्रामात् तद्विजातीयस्य वस्तुप्रतिभासताव्युदासः श्रेयान्। तस्माद् युक्तमुक्तम्,

स्थाप्यो वाच्यस्तत्त्वतो नैव कश्चित्।

इति। [20b] अथवा वस्त्वन्तरावाच्यत्वेऽपि तत्रापोहस्तद्विशेषणत्वेन गम्य इति अपोहस्य वाच्यता स्वीकृतैव। तथापि कथं सर्वधर्मानभिलप्यत्वमित्याह,

वाच्यस्तत्त्वतो नैव कश्चिदर्थ इति।

अयमभिप्रायः। पर्युदासपक्षे तावद् वस्तुरूपवत् तस्याप्यध्यवसायमात्रकृतं वाच्यत्वम्, न प्रतिभासादध्यक्षवत्। प्रसज्यपक्षे पुनरन्यनिवृत्तिमात्रस्यान्यदापि न विशेषः, तथाप्यसौ नार्थ इति नोक्तदोषः। यद् वा यः शास्त्रे, तस्मात् सिद्धमेतत् सर्वशब्दाविवेकविषया विकल्पाश्चेत्युपसंहारः, तस्यार्थनिष्ठामुपसंहारेणैव दर्शयति,–

वाच्यस्तत्त्वतो नैव कश्चिदर्थ इति।

संवृतौ प्रतिभासाध्यवसायमात्रेण वाच्यताया दर्शितत्वात्,

तत्त्वत इत्याह।

तदयमर्थः। यदेतच्छास्त्रे विवेक एव वाच्य इत्युपसंहृतं तस्य न किञ्चिद् वाच्यमेवार्थः, यथा अभावो भवतीति भावो न भवतीत्येवार्थः, तथा अपोहस्य वाच्यतेति वाच्यताया एवापोह इत्यर्थः। एतच्च हेतुत्रयविभागकरणादिना स्वयमेव शास्त्रेण स्फुटीकृतमित्युपपादितम्।

तदेवं कथमपोहः शब्दवाच्य इति प्रश्ने तद्गुणत्वेन यथोक्तार्थेनेत्युत्तरम्। अथ बुद्ध्याकारः स्वलक्षणमुपाधयो वा कस्मान्न वाच्या इति प्रश्नः, तदध्यवसायस्य प्रतिभासस्य उभयस्य चाभावादिति क्रमेण विसर्जनानि। यदा तु शब्दैः किं वाच्यमित्यनुयोगः, तदा प्रतिभासाद्यथाध्यवसायात्, यद् वा तत्त्वत इति विकल्प्य विकल्पस्थेऽन्यापोढाकारः, अन्यापोढस्वलक्षणं न किञ्चिदिति प्रतिवचनानि क्रमेणैवेत्युक्तं भवति। तस्मात् शब्दलिङ्गयोरपोहविषयतास्थितिप्रसाधनं सर्वधर्मावाच्यत्वप्रतिपादनपरमिति प्रथमश्लोकार्थोपसंहारः॥

भवत्वपोहे कृतिनां प्रपञ्चो
वस्तुस्वरूपास्फुरणं तु मर्म।
तत्रादृढे सर्वमयत्नशीर्णं
दृढे तु सौस्थ्यं ननु तावतैव॥

समर्थनैतस्य दिशः प्रकाशः
कृतोऽयमस्माभिरविस्तरेण।
तद्विस्तरस्त्वाकर एव चिन्त्यः
परोदितं तूलमिव क्षिपद्भिः॥

॥ अपोहप्रकरणं समाप्तम् ॥

७

# ॥ ईश्वरवादः ॥

## ॥ पूर्वपक्षसंक्षेपः ॥

कर्मनिर्मितवैचित्र्यमनीशं यो जगज्जगौ ।
प्रणमामि प्रमाणेन तमव्याहतशासनम् ॥

इह प्रत्यवस्थानमन्येषाम्, विवादास्पदीभूतं भूधरादि बुद्धिमत्कर्तृपूर्वकम्, कार्यत्वात् । यद्यत् कार्यं तद् बुद्धिमत्कर्तृपूर्वकं दृष्टम्, यथा घटः । कार्यं चेदं भूधरादि । तस्माद् बुद्धिमत्पूर्वकमिति । न चेदमसिद्धम्, बौद्धस्यापि विन्ध्यगन्धमादनादीनां कार्यत्वे विवादाभावात् । नापि विरुद्धम्, सपक्षे भावात् । न चानैकान्तिकम्, क्वचिदपि कार्ये बुद्धिमदधिष्ठानव्यभिचारस्य दर्शयितुमशक्यत्वात् । प्रत्यक्षागमाभ्याम् अबाधनाच्च न कालात्ययापदिष्टम् । प्रतिहेतोरभावाच्च न प्रकरणसमम् । तदनेन यत् सिद्धम्, तदुपादेयं विदुषाम्, साधनान्तरसिद्धवत् । न च सर्वत्रान्वयव्यतिरेके हेतुवल्लभतया बुद्धिमति कार्यस्य [21a] तदुभयासिद्धेरसाधनत्वमभिधेयम्, सपक्षे सतोऽस्य विपक्षराशेराकाशादेरत्यन्तं व्यावृत्तेः ।

त्रयो हि भावराशयः । बुद्धिमत्कर्तृकाश्च घटादयः, अकर्तृकाश्चाकाशादयः, सन्दिग्धकर्तृकाश्च भूधरादयः । तत्र घटादिषु सपक्षेषु विद्यमानम्, अविद्यमानमम्बरादिषु विपक्षेषु इत्यन्वयव्यतिरेकि कार्यत्वं शेषेषु वर्तमानमवश्यं साध्यमुपस्थापयति । यद्यपि च दिगम्बरादयोऽसन्तस्तन्मते परमाणवस्तु कार्यमेव, तथाप्यसतोऽपि व्यावृत्तिः स्वीकृतैव । तथा च,

निवृत्तिर्यदि तस्मिन्न हेतोर्वृत्तिः किमिष्यते ।
[प्र. वा. ४. २२४]

इति हि शास्त्रम् । न च विपक्षताक्षतिः, साध्यानधिकरणलक्षणत्वाद् विपक्षस्येति किमेषां सत्तासाधनप्रयासेन ? तस्मान्नान्वयव्यतिरेकारेकः कर्तरि यथोक्ते कार्यत्वस्य । एवमुत्पत्तिमत्त्वाचेतनोपादानत्वस्थित्या प्रवृत्त्यादिषु योज्यम् ॥

अत्र बौद्धमुत्थापयन् शङ्करः प्राह, नोत्पत्तिमात्रेण यथोक्तबुद्धिमत्पूर्वकत्वस्य सिद्धिः। अपि तु यादृशं प्रासादादिषु दृष्टम्, यद्दृष्टेरक्रियादर्शिनोऽपि कृतबुद्धिरुत्पद्यते, यदि तादृगेव क्षित्यादिषु भवेत् स्यादत्रापि बुद्धिमतोऽनुमानम्। न कार्यत्वशब्दसाम्येन, तत्र व्यभिचारस्यापि संभाव्यमानत्वात्। न ह्यर्थान्तरान्,

शब्दसाम्यादभेदिनः

[प्र. वा. १. १४]

पाण्डुत्वादग्नेरनुमानं न्याय्यम्। अचेतनोपादानत्वाद् घटादिवत् क्षित्यादेरपि कर्तुः अनुमानमिति चेत्? एवं तर्हि घटादेर्मृद्विकारस्य कुम्भकारपूर्वकत्वाद् वल्मीकस्यापि तत्पूर्वकत्वानुमानप्रसङ्गः। तदुक्तम्,

सिद्धं यादृगित्यादि

[प्र. वा. १. १२]

वार्तिकत्रयम्[1]। तदिदमनिरूपितपराभिप्रायस्य व्याहृतम्। तथा हि बुद्धिमत्कारणस्य सद्भावे भावो घटादावुत्पत्त्यादेरभावे चाभावो गगनादिषु। स च तथा प्रसिद्धाविनाभावो यत्रैव क्षित्यादावुपलभ्यते तत्रैव तद्विनिर्माणसमर्थकर्तृबुद्धिं तद्विदो जनयति। न चैवं पाण्डुत्वादयः, तेषां जात्यन्तरसमवायिनामग्निव्यभिचारोपलब्धेरिति। तथा न ह्य[न]धिष्ठितानां प्रयत्नवता करणकर्मणां क्रियासु स्वातन्त्र्यमुपलब्धपूर्वम्, सर्वत्र बुद्धिमदधिष्ठितेभ्य एव प्रासादादिप्रसवोपलब्धेरिति॥

[2]वाचस्पतिस्तु स्वाभाविकसम्बन्धं प्रस्तुत्याह, इहापि कार्यत्वस्योपादानाद्यभिज्ञेन कर्त्रा स्वाभाविकः सम्बन्धोऽस्त्येव, उपाधेरनुपलम्भेन व्यभिचारासिद्धेः। तृणादयश्च पक्षीकृता इत्युक्तम्। उत्प्रेक्षणमात्रं तु न कर्तव्यमित्यपि प्रतिपादितमेव। ततः स्वभावतः प्रतिबद्धं स्वसाध्येन यदि साध्यमन्तरेण भवेत्, स्वभावादेव प्रच्यवेतेति तर्कसहायं निरस्तसाध्यव्यतिरेकवृत्तिसन्देहं भूधरादिषु दृष्टं स्वसाध्यमुपस्थापयितुं शक्तं किम् अरुचिभिः? ये तु पाण्डुत्वमृद्विकारगोत्वादयस्तेषां जात्यन्तरसमवायित्वेन प्रत्यक्ष एव व्यभिचारोपलब्धेर्न ते हेतवः, जात्यन्तरसमवायिनो हिमादिगतपाण्डुत्वस्याग्निव्यभिचारात्। तथा मृद्विकारस्य स्थपत्यादिपूर्वकत्वेन [21b] कुलालव्यभिचारात्। एवमन्यत्रापि बोद्धव्यम्। ततश्चायं तत्र विभागः। यदेव विशिष्टं पाण्डुद्रव्यधूमरूपम्,

---

१. परत्र वार्तिकसप्तश्लोकी द्रष्टव्या।

२. तुल० ता. टी. ४. १. २१

तदेवाग्नेर्हेतुः, तत्र तस्याऽव्यभिचारदर्शनात्। यत् पुनरग्निविलक्षणकारणजन्मपाण्डुद्रव्यमात्रमर्थतो भिन्नं शब्दसाम्यादभेदि, न ततोऽग्नेरनुमानम्, तत्र तस्य व्यभिचारोपलब्धेः। एवं मृद्विकारादिष्वपि योज्यम्। कार्यत्वसामान्यस्य त्वभूत्वाभावलक्षणस्य पर्वतादिषु भावः परैरिष्ट एव। किं तु प्रतिबन्धासिद्धेरनैकान्तिकमिति ब्रुवते। स च धूमादेरिव प्रतिपादित इति युक्तं ततस्तदनुमानमिति॥

वित्तोकस्त्वाह, स्यादेतत्। न सपक्षविपक्षयोर्दर्शनादर्शनमात्रेणाव्यभिचारनिश्चयोऽतदात्मनोऽतदुत्पत्तेश्चाव्यभिचारनियमायोगात्। तदिदं कार्यत्वं सन्दिग्धव्यतिरेकत्वादसाधनम्॥

अत्रोच्यते। नास्ति विपक्षव्यावृत्तिसन्देहो धूमानलयोरिव कार्यबुद्धिमतोरुपलम्भानुपलम्भसाधनस्य कार्यकारणभावस्य सिद्धत्वात्। कार्यविशेषस्यैव तदुत्पत्तिसिद्धिर्न कार्यसामान्यस्य, यथा धूमादिवर्तिवस्तुत्वादेर्नानलादिजन्यत्वनिश्चय इति चेत्– न, विशेषहेत्वभावात्। उपलम्भानुपलम्भयोस्तदुत्पत्तिसाधनत्वेनेष्टयोः साध्यसाधनसामान्ययोरविशेषात् कार्यविशेषस्येव कार्यमात्रस्यापि प्रबोधाश्रयायत्ततासिद्धेः। न चैवं वस्तुत्वस्यापि वह्निकार्यत्वम्, तदन्तरेणापि सहस्रश उपलम्भात्। ततो यथा कार्यं वस्त्रादि उपादानवद् दृष्टमिति कार्यान्तरमपि तथा व्यवस्थाप्यते, तथा तदेव वस्त्रादिकार्यं बुद्धिमद्धेतुकं दृष्टमित्यदृष्टकर्तृकमपि कार्यं कर्तृ[पूर्वकं] व्यवस्थाप्यते, उपादानस्येव कर्तुरपि कार्येणानुकृतान्वयव्यतिरेकत्वात्। तेन यथा कार्यं च निरुपादानं चेति न शक्यमाशङ्कितुम्, तथा कार्यं च भवेदकर्तृकं चेति नाशङ्कनीयम्, कार्यमात्रस्य कर्तृमात्रादुपादा .ादिवोत्पादसिद्धेरविशेषादिति॥

यत् तूच्यते अन्यादृशमेव कार्यं बुद्धिमता व्याप्तम्, यद्दृष्टेरक्रियादर्शिनोऽपि कृतबुद्धिः, तच्चासिद्धं सिन्धुभूधरादाविति। ननु केयं कृतबुद्धिः ? किं साधनबुद्धिरथ साध्यबुद्धिः ? साधनबुद्धिस्तावद् भवतां सिद्धैव, कर्मजं लोकवैचित्र्यमित्यभ्युपगमात्। अथोत्तरः पक्षः, तेनायमर्थो भवति, नेदं क्षित्यादिषूपलभ्यमानं साध्यानुमानसमर्थं कार्यत्वं किं त्वन्यदेव साध्यबुद्धिजननात्। न चैतद् युक्तम्, सर्वानुमानोच्छेदप्रसङ्गात्। धूमादिष्वपि हि शक्यमेवं वक्तुम्– नायं वह्न्यनुमितिसमर्थो धूमः, किं त्वन्य एव साध्यदर्शिनः साध्यबुद्ध्यजननात्। तथा च तावन्न साधनं सिध्यति, यावन्न साध्यबुद्धिः सिध्यति। तावन्न साध्यबुद्धिः सिध्यति, यावन्न साधनं सिध्यतीति स्फुटतरमितरेतराश्रयत्वमिति॥

शङ्करोऽप्याह, न च व्यामोहात् कस्यचित् साध्यबुद्ध्यभावे हेतोरसिद्धिः, सर्वानुमानेषु तद्भावप्रसङ्गादिति ॥

भूषणकारस्त्वाह, कृतकत्वेन प्रतीतौ कथं न कृतबुद्धिः ? सर्वेषां प्रासादादिष्वपि [22a] कृतबुद्धिर्न भवति, यथा चिरन्तनेषु प्रासादादिषु व्याप्त्यभिज्ञस्यैव कृतबुद्धिः भवति, व्याप्तिविमूढानामकृतबुद्धिरेव, तथा क्षित्यादिष्वपीति न कश्चिद् विशेषः। पुरुषकृतबुद्धिः प्रासादादिष्विव क्षित्यादिषु न भवतीति चेत् ? किं प्रसिद्धाविनाभावानामुत अप्रसिद्धाविनाभावानाम् ? प्रसिद्धाविनाभावानामपि किं व्याप्तिग्रहणस्मृतिविकलानाम्, अथान्येषाम् ? अभ्रष्टस्मरणानां तावद्भवत्येव पुरुषकृतबुद्धिः, लोकेऽपि विचित्रं जगत् केनचिद् धात्रा निर्मितमित्यस्ति प्रतीतिः। व्याप्तिग्रहस्मृतिविमूढानां तु प्रासादादिष्वपि केषुचिन्न पुरुषकृतबुद्धिर्भवतीति नैतावता तेषामपुरुषकृतत्वम्।

अपि चेयं वेदेष्वपि पुरुषकृतबुद्धिर्मीमांसकानां नास्तीत्यतश्च तत्रापि पुरुषकृतिसाधनायोक्ता वाक्यत्वादयोऽसिद्धाः स्युः। किं चानित्यत्वसिद्ध्यर्थं यत् कृतकत्वं साधनमुक्तम्, तदप्यसिद्धं स्यात्। न हि यादृशं कृतकत्वादि घटादिषु दृष्टं श्रोत्राग्राह्यरूपम्, तादृशं शब्देऽस्तीति। तस्मात् दृष्टान्तदार्ष्टान्तिकवैधर्म्यमेतत् सर्वानुमानेषु समानं नेश्वरानुमानस्यैव बाधकमिति ॥

मञ्जर्यां त्रिलोचनः पुनराह, बुद्धिमत्पूर्वकत्वेन व्याप्तं जन्म घटादिष्वेवास्तीति कुतः प्रतिपद्यसे ? कृतबुद्धिहेतुत्वादिति चेत् ? एवं तर्हि घटादीनां स विशेषो वाच्यो येन महाभूतासंभविना विशेषेण घटादय एव कृतबुद्धिमुत्पादयन्ति न महाभूतानि। न तावत् कर्तृक्रियोपलब्धिर्विशेषः, अक्रियादर्शिनोऽपि कृतबुद्धिहेतुत्वाभ्युपगमात्। महत्त्वपरिमाणं विशेष इति चेत् ? तस्यापि कारणबहुत्वमहत्त्वप्रचयविशेषेभ्यो महाभूतेष्वपि दृष्टत्वात्। कृतकत्वमेव विशेष इति न वाच्यम्, कारणसमवायलक्षणस्याभूतप्रादुर्भावस्य पृथिव्यादिष्वप्यविशिष्टत्वात्। न चैतेभ्योऽन्यः शक्यो विशेषः शक्रेणापि निरूपयितुम्, यस्य भावाद् घटादय एव कृतिबुद्धिहेतवो न पृथिव्यादय इति ॥

वाचस्पतिस्त्वाह[1], इदमत्र निपुणतरं निरूपयतु भवान्, किं बुद्धिमदन्वयव्यतिरेकानुविधानं विशेषः ? उताहो तद्दर्शनम्, यत् पर्वतादिषु नास्तीत्यभिधीयते ? यदि पूर्वः कल्पः, स बुद्धिमद्धेतुकत्वं तनुभुवनादेरातिष्ठमानैरभ्युपेयत एव। न हि कारणं

---

१. ता. टी. पृ. ४२९.

कार्याननुविहितभावाभावमन्यो वक्तुमर्हत्यह्नीकात्। अथ दर्शनमिति चरमः कल्पः ? न तर्हि अक्रियादर्शिनः कृतबुद्धिसंभवः। य एव घटोऽनेन बुद्धिमदन्वयव्यतिरेकानुविधायी दृष्टः, स एव तत्कार्यो, न तु विपणिवर्ती। तज्जातीयस्य तदन्वयव्यतिरेकानुविधानदर्शनाददृष्टान्वयव्यतिरेकानुविधानमपि तज्जातीयं तथेति चेत् ? हन्तोत्पत्तिमद्घटादि बुद्धिमदन्वयव्यतिरेकानुविधायीत्यन्यदपि तनुभुवनादि तथा भवन्न दण्डेन पराणुद्यते। [1]घटजातीयमुत्पत्तिमद्बुद्धिपूर्वकमिति चेत् ? ननु प्र[ा]सादादि तद्धेतुकं न भवेदघटजातीयत्वात्। [22b] अथ यज्जातीयं बुद्धिमदन्वयव्यतिरेकानुविधायि दृष्टम्, तज्जातीयमेवादृष्टान्वयव्यतिरेकमपि बुद्धिमद्धेतुकम्। तत् किमिदानीं कार्यजातीयप्रासादादि बुद्धिमद्धेतुकं न दृष्टम्, येनोत्पत्तिमत् तनुभुवनादि तथा न स्यात्। न खलु तज्जातीयत्वेन कश्चिद् विशेषः ॥

विशेषोऽपि, भवतु वा कश्चिदनिरूपितरूपो विशेषः, किं पुनरनेन विशेषं प्रतिपादयताभिप्रेतम् ? किं कार्यत्वसामान्यस्यासिद्धत्वम्, अथ कार्यविशेषस्य, अथ कार्यमात्रस्य बुद्धिमत्कर्तृव्यभिचारः, अथ साध्यदृष्टान्तयोर्वैधर्म्यमात्रम् ? किं चातः ? यदि तावत् कार्यमात्रस्यासिद्धत्वम्, तन्नास्ति, विश्वम्भरादिषु घटादिष्विव कारणव्यापारजन्मतयोभयसिद्धत्वात्। अथ कार्यविशेषस्य कुम्भादिवर्तिनः पक्षेऽसिद्धिः अभिधीयते, तदा न काचिदत्र क्षतिः, विशेषस्य हेतुत्वेनानुपादानात्। यदि तु कार्यसामान्यस्य कर्तृव्यभिचारः प्रतिपादयितुमिष्टः, स न शक्यो विपक्षेऽदर्शनात्, तृणादेश्च पक्षीकृतत्वात्। अथ साध्यदृष्टान्तयोर्वैधर्म्योद्भावनम्, तन्न, सर्वत्र तस्य सुलभत्वात् ॥

[1]अपरस्तु एवं तावद् धूमादेरिव कार्यत्वस्य स्वाभाविकः प्रतिबन्धः प्रतिपादितः। इदानीं सौगतमनोऽनुरञ्जनार्थं बाधकान्यपि प्रमाणान्यभिधीयन्ते। न खल्वस्माकं बाधकप्रमाणादारिद्र्यम्। किं तु नायं न्याय इति ब्रूमहे। तत्र तावदिदमेव बाधकं प्रमाणम् सकृदपि पुरुषादनुत्पादो नाम। यथा सौगतानां चित्रभानोरनुमाने यदि चित्रभानुमन्तरेण कारणान्तरादपि धूमो देशान्तरे कालान्तरे वा जायेत, दृष्टयोरपि देशकालयोर्न चित्रभानोः सकृदप्यात्मसत्तां लभेत, यस्मान्न तदभावे भवतस्तत्कार्यनियमो युक्तः, अतिप्रसङ्गात्। ततश्च तादृशस्य सर्वस्यैवातद्धेतुत्वान्न ततः सकृदपि जायेत। भवति च तस्मान्नातज्जन्यं तादृशमिति विपर्यये बाधकप्रमाणवृत्त्या प्रति-

1. सतानन्दस्त्विति पत्रप्रान्ते टिप्पनम्।

बन्धसिद्धिः, तथाऽस्माकमपि यदि किञ्चिद् बुद्धिमदधिष्ठानमन्तरेणान्यतोऽपि कार्यमुपजायेत, हन्त न तर्हि सकृदपि बुद्धिमतः कुम्भकारादेरुत्पद्येत। भवति च ततस्तज्जन्यम् इत्येकं बाधकं प्रमाणम्।

यथा वा सौगतानामपि न धूमोऽन्यस्माद् भवतीति शङ्कनीयम्, अनियतहेतुकत्वेन निर्हेतुकत्वप्रसङ्गात्। निर्हेतुकस्य च,

नित्यं सत्त्वमसत्त्वं वाऽहेतोरन्यानपेक्षणात्।
अपेक्षातो हि भावानां कादाचित्कत्वसम्भवः॥
[प्र. वा. ३. ३४]

तथास्माकमपीति द्वितीयं बाधकं प्रमाणम्।

एवं च सति यथा भवतामयं नियमः सिध्यति, स धूमोऽग्न्यन्वयव्यतिरेकानुविधायी पदार्थविशेषः, स चाग्निर्यस्तस्य जनकः। तद् यद्यसौ शङ्क्यमानो धूमस्तदाग्निकार्य एवेति, तथास्माकमपि तत्कार्यं यद् बुद्धिमत्पूर्वकम्। स पुरुषो यस्तत्कारीति। तथा यदि चेतनावन्तमधिष्ठातारमन्तरेण [23a] क्वचिदपि कार्ये निश्चेतनानां प्रवृत्तिनिवृत्ती स्याताम् तदानीं कार्यक्रियाया अविरामप्रसङ्गः। तथा हि यद्यचेतनानां स्वरसतः प्रवृत्तिस्तदा निरभिप्रायव्यापारतया सर्वदा प्रवृत्तिः स्यात्। न ह्यकस्मात् प्रवृत्तिनाशो युक्तः। ततश्च कार्यस्याविरामः। अथौदासीन्यम्, तदा कदाचिदपि प्रवृत्तिर्न स्यात्, विशेषाभावात्। अधिष्ठायकेन तु प्रयत्नवता कदाचित् प्रवर्त्यन्त इति युक्तं पश्यामः, नाचेतनेन। तस्येच्छायत्तप्रवृत्तिनिवृत्त्योरयोगादिति तृतीयं बाधकं प्रमाणम्।

इह खलु कार्यत्वं कादाचित्ककारणसन्निधिमत्तया व्याप्तम्, कादाचित्ककारणसन्निधिश्चान्वयव्यतिरेकाभ्यां कर्तृव्यापाराधीनः, यथा तुरीवेमादीनां सन्निधिः। विपक्षे च कादाचित्ककारणसन्निधिसत्ता नास्ति। न ह्यचेतनः कारणानि सन्निधापयितुं शक्नोति, शक्तौ वा घटादावपि कर्तृव्यापारनिवृत्तिप्रसङ्गात्। ततश्च व्यापकानुपलब्ध्या विपक्षान्निवर्तमानं कार्यत्वं बुद्धिमत्पूर्वकत्वेन व्याप्यत इति प्रतिबन्धसिद्धिरिति चतुर्थं बाधकं प्रमाणम्।

तथा देशादिनियमप्रसङ्गो बाधकः। तथा हि कार्यत्वं देशकालप्रकृतिनियमेन व्याप्तं यदि प्रयत्नवन्तमन्तरेण भवेत्, न देशादिनियमेन भवेत्। कर्तुरिच्छया हि क्वचिद् देशादावन्यदेशादिव्यवच्छेदेन जायेत। तदभावे सर्वत्र देशादौ भवेदिति

विपक्षाद् व्यापकानुपलब्ध्या निवर्तमानं कार्यत्वं प्रयत्नवन्नान्तरीयकत्वेन व्याप्यत इति प्रतिबन्धसिद्धिः पञ्चमं बाधकं प्रमाणमिति ॥

यत् शङ्करः, निरभिप्रायव्यापारेभ्यः सर्वकार्याणां देशादिनियमो न स्यादिति। तथा नापि कश्चिद् विशेषः क्षित्यादिहेतूनां प्रासादादिहेतुभ्यो येनामी निरभिप्राय-व्यापाराः सन्तः प्रयत्नवन्निरपेक्षाः प्रतिनियमवता च व्यापारेण तद्वन्तः स्युरिति ॥

[1]वाचस्पतिस्तु कणिकायामीश्वरवादमुत्थापयन्नाह, यदि पुनरचेतनानि चेतनान-धिष्ठितानि कार्यं कुर्युः, ततो यत्र क्वचनावस्थितानि जनयेयुरिति न देशकालप्रतिनियत-प्रसवं कार्यमुपलभ्येत। हेतुसमवधानाधीनजन्मतया कार्यं न प्रत्येकं कारणैर्जन्यत इति चेत्? [सत्यम्,] समवधानमेव तु [2]कारणानां कुतः? कादाचित्कपरिपाकाद् अदृष्टविशेषादिति चेत्? [3]नन्वयमप्यचेतनः कथं यथावत्कारणानि सन्निधापयेत्? नो खलु यत्र क्वचनावस्थितानि दण्डादीनि विना कुम्भकारप्रयत्नमदृष्टविशेषवशादेव[4] परस्परं सन्निधीयन्ते, सन्निहितानि वा कार्यस्येशते। तस्मात् कारणसमवधानव्याप्त-त्वात् कार्योत्पादस्य, तस्य चोपलब्धिमत्पूर्वकत्वाभावेऽनुपपत्तेर्व्यापकनिवृत्त्या विपक्षात् कार्योत्पादो निवर्तमान उपलब्धिमत्पूर्वकत्वेन व्याप्यत इति प्रतिबन्धसिद्धिरिति ॥

एवं [23b] सति भवतु कर्तृमात्रसिद्धिः, सर्वज्ञता तु कथमस्य, दृष्टान्ते तदन्वय-स्याभावादिति चेत्?

अत्र त्रिलोचनः, नैतदस्ति। यतो नास्माभिरुपात्तभेदः कर्ता साधयितुमिष्टः, किं तर्हि? साध्यसामान्यम्। तस्य च येन विशेषेण सह वास्तवः प्रतिबन्धोऽस्ति सोऽप्युपादानादिसाक्षात्करणलक्षणो विशेषः साध्यसामान्ये निश्चेतव्येऽवश्यनिश्चेतव्यः, तत्त्यागे साध्यसामान्यत्यागप्रसङ्गात्। न च शक्यं त्यक्तुम्, साध्यसामान्यस्य क्षित्यादिधर्मिव्यापकत्वात्। तत्पुनः क्षित्याद्युपादानं परमाणुचतुष्टयम् सर्वक्षेत्रज्ञ-समवेतसिद्धिरूपाणि कर्माणि। दिक्कालौ चोपकरणम्। सर्वक्षेत्रज्ञलक्षणं च सम्प्रदानम्। क्षेत्रज्ञोपभोगलक्षणं च प्रयोजनम्। एतत् सर्वं प्रत्यक्षतः प्रतिपद्यमानः कर्ता प्रत्यक्षी-कृतसकलविश्वविभागः सर्वज्ञः। न चास्योपन्यासपूर्वकोऽन्वयो दृष्टान्ते प्रदर्श्यते, येनानन्वयादिदोषगणस्यापत्तिः स्यात् ॥

---

१. न्या० क० पृ: २१९-६
२. कारणानामन्योन्यमिति न्या० क०
३. न खल्वय० न्या० क०
४. ०पादेव न्या० क०

स्यादेतत्। महाभूतोत्पत्तेर्द्व्यणुकादिक्रमस्य घटनिष्पत्तेरपि द्व्यणुकादिक्रमविशेषानुपलब्धेरयं घटं कुर्वन् कुम्भकारो द्व्यणुकमपि करोति। न च तस्योपादानम् उपकरणं वा कुलालः प्रत्यक्षतः प्रतिपद्यते। तस्मादयमनेकान्तः, यो यस्य कर्ता स तस्योपादानादि जानातीति ॥

अत्रोच्यते। भवेदनेकान्तो यदि कुलालो द्व्यणुकस्य कर्ता भवेत्। न हि यावदन्त्यावयविनिष्पत्तेरङ्गं तत् सर्वं कुलालः करोति, दृष्टसामर्थ्यकारणप्रयोक्तृलक्षणत्वात् कर्तृकत्वस्य। तस्माद् द्व्यणुकमपि महाभूतवत् सन्दिग्धकर्तृकत्वात् साध्यमेव। तदेवं यत् साध्यवादिना साधयितुमिष्टमनुमेयसामान्यं तद् दूषणवादिना प्रतिबन्धुं न शक्यते। यस्तु दूषणवादिना प्रतिबन्धुमिष्टो विशेषः, नासौ साध्यसामान्यवादिना साधयितुमिष्टः। किं तर्हि? साध्यसामान्ये निश्चेतव्ये तेन वास्तवप्रतिबन्धस्य विशेषस्य सिद्धिर्बलाद् भवन्ती नोपेक्ष्यते। एवं साधनायत्तां विशेषसिद्धिमाचार्यो मन्यमानो यद् दूषणमवादीत्,– यावतीमर्थगतिं साधनं व्याप्नोति तावतीं दूषणमपि। यद्यसौ विशेषो न साधनेन विषयीकृतः, कथमतस्तत्सिद्धिः? सिध्यन् वा कथमविषयः? विषयश्चेत्, कथं स्वाश्रयां दोषगतिं न स्पृशेदिति, तन्निरस्तम्। यतः साधनवादी साधनाधीनां यदि विशेषसिद्धिमभ्युपगच्छेत्, तदैतत् स्यात्। न च नैयायिकः साधनायत्तां विशेषसिद्धिमुपजीवति। किं तर्हि? साध्यसामान्यप्रतिबन्धाकृष्टस्य विशेषस्य सिद्धिम, यथा बौद्धः क्षणिकत्वसिद्धौ तेन वास्तवप्रतिबन्धान्नैरात्म्यसिद्धिमुपजीवति। न ह्यात्मनि नित्ये विभौ च सति सर्ववस्तुविषयं क्षणिकत्वमनुमातुमीशः ॥

मीमांसकोऽपि दर्शनस्पर्शनाभ्यामेकमवयविनं निश्चिन्वन् निश्चेतव्यानुषङ्गिण इन्द्रियस्य नानात्वं नियतविषयत्वमिन्द्रियाणां स्वविषयग्रहणलिङ्गत्वं ज्ञातुर्ज्ञानसाधनत्वं गन्धादिगुणव्यतिरिक्तं [24a] च गुणाधिकरणमनियतविषयश्चेतन इत्येतावतोऽर्थानुपजीवति। तथा साध्यविशेषोऽपि नैयायिकैरुपजीव्यत इति सर्वं समानम् अन्यत्राभिनिवेशात्। तस्मात् सिद्धं सर्वज्ञत्वमिति ॥

वाचस्पतिस्तु[1], स्यादेतत्। उत्पत्तिमत्त्वमुपादानाद्यभिज्ञकर्तृमात्रव्याप्तं घटादिषु दृष्टं तन्मात्रमेव पृथिव्यादीनां गमयेत्। नित्यसर्वविषयज्ञानवत्कर्तृपूर्वकत्वं तु कुतस्त्यम्? न चैतद् घटादौ दृष्टान्तधर्मिणि दृष्टम् ॥

---

१. ता. टी. पृ: ६५४

नन्वेवं रूपाद्युपलब्धेः क्रियात्वेन चक्षुरादिसाधनानुमानमपि कथम्? न हि छिदादयः क्रिया इन्द्रियसाधना दृष्टाः, तासां कुठारादिसाधनत्वात्। अथ दृष्टान्तधर्मिण्यदृष्टमपि इन्द्रियसाधनत्वं पक्षधर्मताबलात् सिध्यति, रूपाद्युपलब्धिगतं हि क्रियात्वं तदेव करणं गमयेत्, यत् तदुपलब्धिनिर्वर्तनसमर्थम्, न च कुठारादयः समर्था इति पक्षधर्मताबलात् कुठारादिविलक्षणमदृष्टचरमपि चक्षुरादि उपस्थापयतीति। तदत्रापि समानम्। न ह्यपरिमेयानियतदिग्देशैन्द्रियकातीन्द्रियकत्रसस्थावरादिलक्षणकार्योत्पादयौगपद्यमसति सर्वविषये ज्ञाने नित्ये वा सेद्धुमर्हति। नो खल्वीदृशं पारमेश्वरं ज्ञानं कार्यशरीरेन्द्रियादिकार्यं संभवति, शरीराद्युत्पत्तेः प्रागस्याचैतन्येन तत्प्राक्कालकार्योत्पादाय परमेश्वरान्तरकल्पनाप्रसङ्गात्। एवं च ततः प्राक् ततः प्रागिति अनेकालौकिककल्पनायां वरमेकमेवालौकिकं बुद्धिनित्यत्वं कल्पितम्। एतेनैव शरीरेन्द्रियनित्यत्वकल्पना प्रतिव्यूढा। एतेन यदेके ब्रुवते,

सन्निवेशादिमत्सर्वं बुद्धिमद्धेतु यद्यपि।
प्रसिद्ध्येत् सन्निवेशादेरेककर्तृकता कुतः॥
[विधिविवेके पृ: २१६]

इति, तदपि पराकृतम्। तेषां सिध्येत् सर्वज्ञनिराक्रियामनोरथो यदि पिशितचक्षुषः परमाणून् क्षेत्रज्ञान् तत्समवेतान् वा कर्माशयान् द्रष्टुमीशते। न चैतदस्ति। तस्मात् अतीन्द्रियार्थदर्शिनोऽस्मदादिविलक्षणा बहवः कल्पनीयाः। तद् वरमस्त्वेक एव तादृशः कल्पनालाघवायेति। तदेवं कार्यत्वादेव पक्षधर्मतासहायादेवम्भूतेश्वरसिद्धिरिति स्थितम्॥

भवतु वास्मादुपादानाद्यभिज्ञकर्तृमात्रसिद्धिः। पारिशेष्यानुमानात् तु व्यतिरेकिद्वितीयनाम्नो विशेषसिद्धिः। तथा हि तनुभुवनाद्यभिज्ञः कर्ता नानित्यासर्वविषयबुद्धिमान्, तत्कर्तुस्तदुपादानाद्यनभिज्ञत्वप्रसङ्गात्। न ह्येवंविधस्तदुपादानाद्यभिज्ञो दृष्टो यथास्मदादिः। तदुपादानाद्यभिज्ञश्चायम्। तस्मात् तथेति। नो खलु परमाणुभेदान् प्रतिक्षेत्रज्ञसमवायिनश्च कर्माशयभेदानपरिमेयानन्यः शक्तो ज्ञातुमृते तादृशादीश्वरादिति॥

विस्तीकस्तु, यथा धूमदर्शनेन पक्षधर्मतावलात् निकुञ्जवर्तित्वं वह्नेर्विशेषोऽन्या· पकोऽपि प्रतीयते तथा कर्तुरपीत्यदोष इति तादृगेव पुरुषविशेष ईश्वरः [24b] प्रमाण· सिद्ध इति कथमनीशजगद्वादिनो भगवतः प्रमाणेनाव्याहतशासनत्वमिति ॥

॥ ईश्वरवादाधिकारे पूर्वपक्षसंक्षेपः समाप्तः ॥



## ॥ ईश्वरवादाधिकारे संक्षेपदूषणम् ॥

वार्तिकसप्तश्लोकीव्याख्यापेक्षप्रबन्धभीरूणाम् ।
ईश्वरवादे दूषणमात्रकथेयं समासेन ॥

इह यद्यपि बहुलं सहचारमात्रं कार्यस्य प्रयत्नवता दर्शितम्, दर्शितश्च तदभावे क्वचिदभावः, तथापि प्रतिबन्धासिद्धेः कार्यमपि स्यात्, न च बुद्धिमत्कर्तृपूर्वकमित्याशङ्का बाधवैधुर्यात् कार्य बुद्धिमति साध्ये सन्दिग्धविपक्षव्यावृत्तिको हेत्वाभासः। न च सपक्षविपक्षयोर्दर्शनादर्शनमात्रमेव साधनस्य भावे साध्यस्यावश्यम्भावः, साध्याभावे वा तदभाव इत्येवं रूपाया व्याप्तेः प्रतिबन्धशब्दवाच्यायाः साधनं भवितुमर्हति, भाविव्यभिचारदर्शनेष्वपि तथोपलब्धेः । किमिदमिदानीमदर्शनमभावादेव व्यभिचारस्य, अथ दर्शनसामग्रीसमवधानविरहादिति निर्णेतुमशक्यमेव सहचारमात्रदर्शिनो विमर्शशीलस्य।

अत एव वाचस्पतेः स्वाभाविकसम्बन्धघोषणमपि शब्दपुष्टिमात्रम्, तदतिरिक्तार्थापोषणात्। भूयोदर्शने हि व्यभिचारादर्शने स्वाभाविकव्यवस्था। व्यभिचारादर्शनं च विपक्षेऽदर्शनमात्रमुक्तं भवति। यत् पुनरेतदुपाधेरनुपलम्भेन व्यभिचारासिद्धिरिति, तत्र नोपाधिर्नाम दृश्यचिह्नस्थानीयं किञ्चिदस्ति, यदनुपलम्भोऽव्यभिचारं व्यवहारयेत्। किं तु व्यभिचारदर्शनमात्रेणैव तत्परिकल्पः। तददर्शनात् च स्वाभाविकत्वमिति विशेषाभावात् न स्वाभाविकवादेन किञ्चित्, साध्येन सह भूयो दृष्टो हेतुर्व्यभिचारे च न हेतुरितीयतैव पर्याप्तत्वात्। एतच्च सर्वं व्याप्तिचर्चायां विविच्य क्वचिदर्थान्तरस्य प्रतिबन्धो नाम तदुत्पत्तिमन्तरेण, सा च प्रत्यक्षानुपलम्भसाधनैवेति व्यवस्थापितमिति तत एवावधार्यम्। एतेन शङ्करवाचस्पतिमतावलम्बिनः प्रत्युक्ताः।

अस्तु तर्हि प्रयत्नवतापि कार्यस्य तदुत्पत्तिलक्षण एव प्रतिबन्धो धूमस्येव वह्निना। यथोक्तं वित्तोकेन। तथा हि कुम्भकारव्यापारात् प्राक् मृत्पिण्डदण्डचक्रादिषु सत्स्वपि कार्यं कुम्भाख्यमुपलब्धिलक्षणप्राप्तमनुपलब्धं तद्व्यापारानन्तरम् उपलभ्यत इति हेतुफलभावसिद्धौ कुतो विपक्षव्यावृत्तिसन्देहः? सत्यमत्र पक्षविपक्षवृत्तिरेव न सन्देहः, अत्र हि प्रत्यक्षानुपलम्भयोग्यस्वरूपस्वीकारादभिव्यक्तोऽनुपलब्धपुरुषव्यापारैर्वृक्षवीरणादिभिर्व्यभिचारः । पक्षीकृतास्तृणादयः, न च पक्षीकृतेनैव

व्यभिचार इति चेत्– न, प्रतिक्षिप्तस्य पक्षीकरणे न्यायाभावात्। अन्यथा अनुष्णोऽग्निः प्रमेयत्वादित्यादावपि पक्षीकरणमेव शरणं स्यात्। तथा हि,

सन्दिग्धे हेतुवचनाद् व्यस्तो हेतोरनाश्रयः।
[प्र. वा. ४. ९३]

इति न्यायः। अध्यक्षमेव प्रतियोगिनः प्रतियोग्यन्तरापेक्षयानुपलब्धिरुच्यते। [25a] ततोऽनुपलब्धिबाधितमपि प्रत्यक्षबाधितमेव। व्यवहारसाधनापेक्षया तु सानुमानम्। न चानुमानबाधितेऽप्यन्यावकाशः। सा तर्हि दृश्यविशेषणापन्नस्यैवाभावं व्यवहारयति, दृश्यादृश्यशरीरेतरसाधारणं च बुद्धिमत्त्वमिति दृश्यतानियमानुपपत्तेर्बुद्धिमतः कथम् अनुपलब्धिमात्रेण तृणादिजन्मनि निषेधः? ततः सन्देहात् पक्षीकरणं न्याय्यमिति चेत्? तदेतद् विक्रीतगवीरक्षणम्। व्याप्तिसाधनायाध्यक्षानुपलब्ध्योरवकाशदानादेव दृश्यविषयतास्वीकारस्य प्रसह्यायातत्वात्। न ह्यदृश्ये प्रत्यक्षमन्वयसाधनमनुपलब्धिर्वा व्यतिरेकसाधनी भवितुमर्हति। तदयं भेदे सत्यन्वयव्यतिरेकरूपमध्यक्षानुपलम्भाभ्यां हेतुफलभावमवतरन्न दृश्यतामतिवर्तितुं साध्यस्य शक्तः। दृश्यत्वे च नियततृणादिना व्यभिचार इति साधारणानेकान्तः॥

अथ व्यभिचारचमत्कारादध्यक्षागोचरेण प्रयत्नवता व्याप्तिं गृह्णीयात्? गृह्णातु, न तु प्रत्यक्षानुपलम्भाश्रयः श्रेयानस्य। ननु दृश्यादृश्यविशेषणमनपेक्ष्य प्रेक्षावन्मात्रेण व्याप्तिग्रहः? नैवम्, तावतापि हि प्रत्यक्षकृताया व्याप्तेरनवकाश एव। दृश्यैकस्वभावनियता हि सा कथं दृश्यादृश्यविषया भवेत्? तद्धि दृश्यमदृश्यं च रूपमेकबुद्धिमत्त्वादिधर्मानुवृत्तावपि स्वभावविप्रकर्षेतराभ्यामत्यन्तं भिन्नजातिः। ततः प्रत्यक्षं दृश्यैकजातिस्वीकारेण प्रवृत्तमितरवार्तानभिज्ञं तद्विशिष्टमेव साधारणमपि धर्मं व्यापकमादर्शयति।

यद्यपि देशकालविप्रकृष्टमपि न दृश्यम्, तथापि त[द्]दर्शनयोग्यतयैकजात्येवेति स्वभावविप्रकृष्टस्यैव प्रत्यक्षेण परिहारः। सर्वान्यवर्जने हि स्वलक्षणैकपर्यवसानाद् व्याप्तिरेव न स्यात्, धूमाग्निवत्, कम्पमारुतवच्च। यथा हि स्वप्रवृत्तियोग्यज्वलद्भासुराकारपुरस्कारेण प्रवर्तमानाध्यक्षकृता व्याप्तिः सप्तार्चिषि न जठरानलसाधारणरूपपर्यवसायिनी, अन्यथा तार्णादिभेदवदभिमतेऽपि रूपे सन्दिहानो न तत्साध्यार्थक्रियालाभैकाग्रबुद्धिः प्रवर्तेत। प्रतिबन्धवैकल्यवद् वासति जठर्यत्व इत्याशृशातः

प्रवृत्तिः स्यात् । यथा वा पल्लवोल्लासने समीरणेन व्याप्तिरध्यक्षजकृतास्पृश्यरूपपुरस्कारान्नस्तिमितमारुतसाधारणरूपपर्यवसायिनी, अन्यथाद्यापि किसलयकम्पेन मातरिश्वानमनुमापयन् स्पृश्यप्रभञ्जनानुरूपप्रवृत्तिनिवृत्ती निश्चयेनाचरेत्, तथा पुरुषेऽपि प्रत्यक्षकृता व्यापिताग्रहीतिरदृश्यरूपपरिहारेणैव । तस्मात् प्रत्यक्षाव्याजेन यदि परमिष्टमात्रमेव साधनं नाध्यक्षं दृश्यादृश्यसामान्येऽपीति व्याप्तेरभावात् सन्दिग्धविपक्षव्यावृत्तिकत्वमेव ।

प्रयोगः, यो यः प्रत्यक्षकृतः [25b] कारणत्वनिश्चयः, नासौ दृश्यादृश्यरूपपर्यवसायी, यथाग्नौ जठरजातजातवेदःसाधारणरूपं परिहरन् । प्रत्यक्षकृतश्चासौ बुद्धिमतीति व्यापकविरुद्धव्याप्तोपलब्धिः । प्रत्यक्षकृतत्वं हि दृश्यविषयत्वेन व्याप्तमदृश्ये तस्याप्रवृत्तेः, तद्विरुद्धं दृश्यादृश्यविषयत्वम्, तद्व्याप्तं दृश्यादृश्यरूपपर्यवसायित्वम् । किं च यदि दृश्यादृश्यविशेषणमवधूय धीमन्मात्रेण व्याप्तिर्विवक्षिता, एवं सति यदा बुद्धिमदभावे कुम्भकार्यस्याभावमुपदर्शयेद् व्यतिरेकप्रतिपादनाय, तदा दृश्यादृश्यविशेषणरहितचेतनमात्रस्याभावः केन प्रमाणेन सिद्धः, दृश्यानुपलब्धेर्दृश्यस्यैव प्रतिषेधेऽधिकारात् ? अन्यथा तृणादिना व्यभिचारस्याशक्यपरिहारत्वाच्च ?

न च दृश्यपुरुषविषयैवानुपलब्धिर्बुद्धिमन्मात्रस्य व्यतिरेकबोधसाधनीभवितुम् अर्हति, आत्यन्तिकविषयभेदस्य व्यक्तत्वात् । अन्यथा तृणादिजन्मन्यपि दृश्यपुरुषविषयैवानुपलब्धिस्तद्व्यभिचारस्थिरीकरणकारणं स्यात् । न हि लाभे प्रवेशश्छेदे निःसरणमिति न्याय्यम् । तस्माद् दृश्यविशेषणापोढपक्षे व्याप्तिग्रहणकाले व्यतिरेकग्रहणोपायाभावात् अव्याप्तेः पुनरपि विपक्षव्यावृत्तिसन्देहः । न च नभस्युभयाभावविभावनमुपायो व्यतिरेकग्रहणस्य, कार्याभावस्य बुद्धिमद्व्यापाराभावप्रयुक्तत्वनिश्चयानुपपत्तेः । तदपरकारणसाकल्ये हि तन्मात्राभावेऽभावः कार्यस्य तदभावप्रयुक्तः प्रत्येतुं शक्यः । यथा त्रिकपञ्चकचिन्तायां चिन्तितम् । द्वयोस्तु क्वचिन्निवृत्तिमात्रम् अकार्यकारणभूतयोरपि सुलभम् ।

किं च बुद्धिमत्कारणव्यापारविरहात् विहायसि कार्यत्वाभाव उत कारणमात्रविप्रयोगादिति को निष्टङ्कः ? तथा च सति विफलः सकलो यत्नः । अन्वयोऽपि हि कारणमात्रेण कार्यमात्रस्य गृह्यतामुतस्वित् पुरुषविशेषणेन कारणेनेति सन्देह एव । अथ दृष्ट एवायं विशेषः कथं परिहर्तुं शक्यः, धूमे दहनात्मवत् ? यद्येवं दृश्यशरीर-

रूपोऽपि विशेषः प्रतीत एव, कथं परिहर्तुं शक्यः, चित्रभानोर्भासुराकारवत् ? स तर्हि विशेषः कार्येण व्यभिचर्यत इति चेत् ? व्यभिचर्यताम्। कार्येऽपि कारणवद् यथा परिदृष्टविशेषनिष्ठ एवान्वयो भवतु घटवत् सौधादावपि दृष्टत्वादिति किं नश्छिन्नम ? एतश्चान्वयमात्रं गजनिमीलितेन दूषणमवधीर्याभिधीयते । वस्तुतस्तु प्रत्यक्षानुपलम्भयोरेकस्यापि व्यापारायोगान्नान्वयो न व्यतिरेकः। अस्ति च कार्यत्वमुर्वीधरादौ, न च दर्शनातिक्रान्ते कर्तर्यन्वयव्यतिरेकौ स्पृशति। तादृक्चेतनकृतेतरत्वाभ्यां च राश्यन्तराभावाद् गन्धादिवदसाधारणानेकान्त एव। तस्मान्न प्रत्यक्षेण कार्यमात्रस्य व्याप्तिग्रहणमिति सिद्धम्।

[26a] यताश्चैवं यदमी प्रत्यक्षानुपलम्भाविशिष्टकार्यजात्युल्लेखेनैव कार्यकारणभावग्रहणप्रवृत्तयो न कार्यमात्रोल्लेखेन। तथा हि प्रत्यक्षानुपलम्भप्रवृत्तिसमनन्तरमीदृशात् ज्वलद्भासुरस्वरूपवस्तुविशेषादीदृशं धवलिमलिप्तकण्ठाम्बकविकारकारि वस्तु जायत इत्यनेनाकारेण हेतुफलभावव्यवहारः सर्वापरकार्यकारणजातिव्युदासेन विशिष्टमेव जातियुग्ममुल्लिखन् प्रवर्तते। इयमेव गतिः सर्वत्र हेतुफलभावव्यवहृतौ, ईश्वरानुरोधात् तु प्रसिद्धन्यायोल्ल[ङ्घनमेतत्] इति पश्यामः॥

कः पुनरत्रापराधो यदि तार्णादिभेदमुदस्य वह्निना धूममात्रस्येव भूधरादिभेदमप्युदस्य कार्यमात्रस्य बुद्धिमता व्याप्तिं प्रतीयात् प्रत्यक्षम् ? यथैव तर्हि वह्निना कार्यजातिविशेषस्य धूमस्यावान्तरसूक्ष्मजातिमात्रमन्तर्भाव्य व्याप्तिग्रहो न तु तद्विजातीयस्पर्शः, तथा बुद्धिमताप्यस्तु वस्त्रादेः। यथा वात्यन्तविसदृशोरपि कार्यजातीः अन्तर्भाव्य भूतिभन्मात्रस्य चेतनेन व्याप्तिं जिघृक्षसि, तथा वह्निनापि गृह्येयाः। इन्द्रियप्रत्यक्षस्यैव हि व्यापार उभयत्र कथं भिन्नां वृत्तिमाश्रयेत ? व्यभिचारदर्शनादर्शनकृतोऽयं विभाग इति चेत् ? तत्तर्हि दर्शनादर्शनं सङ्कल्पमनारूढं गच्छत्तृणस्पर्शवदकिञ्चित्करमिति तदनुरूपविमर्शेनावश्यभाव्यम्। न चास्ति।

न हि कश्चिदग्निधूमादिष्वन्वयव्यतिरेकग्राहिप्रत्यक्षानुपलम्भप्रवृत्तौ कार्यजातिः अखिलानलादुत्पद्यत इति सङ्कल्पमनुभूय भूयो व्यभिचारदर्शनात् यतो वा कार्यान्तराणि वह्निमन्तरेणाप्युपलब्धान्युपलभ्यन्ते वा ततो धूम एवानेन जन्यत इति निश्चयं परिचिनोति, किं तु झगित्येव प्रत्यक्षानुपलम्भान्तरमस्मादग्न्यादेरिदं धूमादीति जातिविशेषद्वयं हेतुफलभावव्यवहारभाजनीकुर्वन्ननुभूयतेऽनुसन्धानप्रत्ययः। प्रत्यक्षगोचरे

[अन्वयव्यतिरेकयो]र्न कश्चिद् विशेषः। यदा च विकल्पान्तरस्थितस्य झगिति कण्टकाद् व्यथेत्यनुपलम्भपूर्विकाध्यक्षविहिता हेतुफलभावग्राहिणी मतिः, तदाभिव्यक्तो व्यभिचारदर्शनविमर्शविरहः, समसमयासम्भवाद् विकल्पानाम्। तदिहाप्यस्मात् शिल्पिन इदं पृथुबुध्नोदराद्याकारं कार्यमित्यवान्तरसूक्ष्मभेदमुदस्य व्यवहारः। यदा तु पटशकटादिकमपि पुरुषादुत्पद्यमानं पश्यति, तदेदमपीदमपि पुरुषेण जन्यत इति मतिरविसंवादिनी समुदेति॥

किं च व्यभिचारो नाम किं सिद्धायामेव व्याप्तावनुमानमात्रं खण्डयति? अथ व्याप्तिरेव मिथ्येति व्यवस्थापयति? अत्रापि पक्षे स्वसामर्थ्येन स्फुरत्येव व्याप्तिग्राहिणि प्रमाणे। यद् वा तस्यैव प्रामाण्यक्षयमादधानः, अद्यापि सर्वत्र विषये नियते वा? नियतेऽपि किमिष्टिवशात्, अथ प्रत्यक्षस्य तत्रैव प्रवृत्तेः? प्रथमः पक्षस्तावन्न युक्तो विरोधात्। न हि [26b] साध्याविनाभावलक्षणा च व्याप्तिर्हेतोः साध्याभावसंभवकृतश्चानुमानाभावः सङ्गच्छते, अन्यत्रापि व्याप्तावनाश्वासाच्च।

एवं व्याप्तिग्राहिणि प्रमाणे प्रामाण्यादप्रच्युतिभृति व्याप्तिमृषात्वबोधनमप्यसम्बद्धं बोद्धव्यम्। सर्वत्र च व्याप्तिग्राहिणः प्रामाण्यक्षये धूमादग्निरपि नानुमातव्यः, अन्यस्य व्याप्तिग्राहिणोऽभावात्। किमिदानीं शरणमीश्वरानुमानस्य भविष्यति? स्वेच्छया च नियते विषये व्याप्तिविहितौ प्रमाणं वराकमुदासीनमिति न कश्चित् हेतुरहेतुर्वा तत्त्वतः, धूमेऽपि स्वेच्छया व्याप्तिखण्डनप्रसङ्गात्। नियतविषयत्वं तु व्यभिचारगोचरस्यापि प्रत्यक्षस्य कथम्, यावता यथा नियतजातिप्रवृत्तं व्याप्तिग्राहि सर्वविषयमिष्टम्, तथा व्यभिचारगोचरमपि सर्वविषयमेवान्यूनानतिरिक्तशक्तित्वाद् उभयोः? तदेकविषय एव व्याप्तिग्रहो व्यभिचारवेदनं चेति किमधुना साधनमसाधनं वा स्यात्? भवतु वा भवदुपरोधाद् बाधबोधिनः प्रमाणस्य नियतविषयत्वम्। तथापि न खलु सकृदेव व्यभिचारवतां बाधबोधः, किं तु क्रमेण। तदा च व्यभिचारिणामपि व्यभिचारदर्शनमाहत्य नास्तीति धूमस्य ततो विशेषाभावात् पुनरहेतुत्वम्, हेतुत्वं वान्यस्यापि।

न च सर्वस्यान्यस्य व्यभिचारदर्शनैर्धूमे व्याप्तिविश्वास इति वाच्यम्। एवं हि पुरस्ताद् धूमे व्याप्तिग्रहणानन्तरमेव पर्वतनितम्बे धूमाद् दहनानुमानं न शार्दूलादिति न स्यात्, व्यभिचारदर्शनविलम्बापेक्षणात्। अशक्यं चैतदन्यत्र व्यभिचारदर्शनैरभि-

मते व्याप्तिविश्राम इति । व्यभिचारविषयाणामप्यनन्तत्वाद् देशादिविप्रकर्षवतां गोचरीकरणकालापेक्षया पुरुषायुषस्य कनीयस्त्वात् । तस्माद् व्यभिचारदर्शनवर्जनियतविषय एव व्याप्तिग्रहो निरपवादः, शुद्धैकाध्यवसायस्य विभागेन प्रवृत्तेः । अतएव च स्वाभाविकविकल्पस्यैव कार्यकारणभावग्रहणेऽधिकारो नौपाधिकस्य ।

अस्ति हि शुद्धविषयजनितालोचनाज्ञानमात्रापेक्षो बालतिर्यक्साधारणो विकल्पः । स शुद्धः स्वाभाविक इति चोच्यते, यद्वशात् पशवोऽपि क्षुत्पिपासाप्रशमादिसाधनानि तत्रैव समर्थान्यवधारयन्तः पुनरतदन्वितया तथैव ततस्तत्र प्रवर्तन्ते, निवर्तन्ते वानन्वितया । अस्ति च सङ्केतस्मरणसचिवालोचनाज्ञानजनितो [विकल्पः], यथा दीपात् कज्जलमालोकयतो नीलमिदं रञ्जनाद्युपयोगीत्येवं विकल्पः पूर्वदृष्टार्थक्रियास्मरणसहायानुभवभावितस्तादृगौपाधिक उच्यते । न च तदा नीलविकल्प इत्येव प्रदीपादखिलं नीलमुत्पद्यत इति प्रेक्षः कश्चिन्निश्चिनोति । किं तु यदेव कज्जलावलोकनमात्रानुरूपविकल्पपुरस्कृतं [27a] वस्तु कज्जलशब्दसङ्केतयोग्यं जातियोगात् स्वरूपविशेषाद् वा तदेव प्रदीपकार्यं व्यभिचारालम्बने चोक्तम् ।

एवं धूमेऽपि धवलमिदं वस्तु वह्नेर्जायत इति सङ्केतानुसारी विकल्प औपाधिक एवाक्षिपति कार्यत्वेन तुहिनादिकम् । शुद्धे तु विकल्पे धूमजातिरेव परिस्फुरतीति तत एव तुहिनादेर्व्याप्तौ निरासो न व्यभिचारालम्बनं साध्विति बोद्धव्यम् । तद्वत् कार्यविकल्पोऽपि सर्वत्र औपाधिक एव । अपेक्षितपरव्यापारो हि स्वोत्पत्तावन्धः । कार्यमिति सङ्केतस्मरणसहायादिन्द्रियज्ञानादुत्पत्तिरिति न हेतुफलभावव्यवहारस्याङ्गम् । ततो यद्यपि पुरुषात् घटोदयदर्शने घटोऽयमस्मादिति विकल्पवत् कार्यमिदमस्मादित्यपि सुलभो विकल्पः, तथापि स्वाभाविकत्वाभावान्न तत्पुरस्कृतस्वरूपस्य तत्कार्यत्वव्यवस्था । नैसर्गिकविकल्पविषयीकृतस्य तु भवतु ।

ननु शुद्धावसायगोचरेऽपि विकल्पः सङ्केतस्मृतिजनितो दृश्यतेऽयं घटः पौरुषेय इति नामोल्लेखात् । ततः सोऽप्यौपाधिकः प्राप्तः । न, तन्मात्रविकल्पने स्मरणस्य अप्रयोजकत्वात्, वाचकांशोल्लेख एव तस्य सामर्थ्यात् । यद्यपि च वाच्यवाचकाकारोत्कलिताखण्डविकल्पोदयः स्मरणसाहायकेन, तथाप्यपोद्धारद्वारेण तन्मात्रे तद्व्यापार उच्यते, मृन्मयत्वमात्रे कुलालस्येव । जात्यन्तरसमवायिकार्यत्वधवलतादिधर्मकल्पनं तु सङ्केतसम्बन्धग्रहणादिप्राचीनव्यापारस्मरणमन्तरेण शुद्धाध्यवसायस्य

तन्मात्रजात्युल्लेखेनैव कृतार्थत्वाद् बालकादिवत्, अतस्तन्मात्रविषयैव प्रत्यक्षकृता व्याप्तिरित्यनवद्यम्। तस्माद् व्याप्तिग्रहः प्रत्यक्षकृतो व्यभिचारप्रत्ययो वा भिन्नविषय एवेति सिद्धम्।

एवं तर्हि व्यभिचारदर्शनेन साधारणानेकान्तव्यवस्था दुःस्थेति चेत्? एवमेतद् यदि बुद्धिपाटवनियमः सर्वेषाम्। मन्दबुद्धिस्तु सादृश्यादिना जातिविशेषप्रवृत्तेऽपि प्रत्यक्षे जात्यन्तरेणैकीकृत्य व्याप्तिग्रहाभिमानादनुमानमातिष्ठमानः पटुना परेण व्यभिचारमादर्श्य व्याप्तिदुर्ग्रहमापाद्यते। अतः साधारणानेकान्तव्यवस्था। यथा धूमे प्रवृत्तेऽपि प्रत्यक्षे व्याप्तिग्राहिण्युच्छलद्बहलरूपमनलव्याप्तिमनुस्मरन् मारुतोद्धूतधूलिपटलादनलमनुमापयन् बाष्पोदयेन प्रसिद्धोपर्वुधवैधुर्येण व्यभिचारमादर्श्य वार्यते, ततोऽपि कारणात् जातिविशेषविषयैव व्याप्तिः प्रत्यक्षेण गृह्यत इति सिद्धम्।

यदि हि धूमैकजातिप्रतिबद्धप्रतिबन्धबोधमध्यक्षम्, तदा सादृश्यापेक्षोऽन्यत्र तद्रूपारोपः, सदृशान्तरव्यभिचारेण च वारणं युक्तम्। यदा तु कार्यजातौ सर्वत्र व्याप्तिग्रहः, तदा किं सादृश्यापेक्षयेति? यदि तर्हि जातिविशेषप्रतिबद्ध एवाध्यक्षेण प्रतिबन्धबोधः कथमत्यन्तविजातीयोऽपि घटकुटकुड्यादयः साधारणरागयोगिनो [27b] हरिद्रादिद्रव्यसंस्कारमनुमापयन्ति? कथं वा कुठारादि च्छेदक्रियायां दृष्टव्यापारं करणमत्यन्तविजातीयापि बुद्धिः क्रियात्वेनानुमापयति?

एवमत्यन्तविजातीया अपि कैलासकुलिशादयः साधारणकार्यत्वादिधर्मकाः पुरुषमनुमापयिष्यन्तीति चेत्? नैवम्, व्याप्यस्य गमकत्वात्, तदपेक्षयैव सजातीयविजातीयतायाश्चिन्त्यत्वात्। व्याप्यं च निवर्त्यविकार्यकर्मापेक्षया द्विविधं धर्मिरूपं धर्मरूपं च। तत्र सर्वथापूर्वोत्पत्तौ धर्मिणो व्याप्तिरुच्यते, धूमादिवत्। तदा च धूमान्तरमेव सजातीयम्, विजातीयमन्यद् वस्तु। यदा तु पूर्वस्थितस्यैव धर्मान्तरोत्पत्तिव्यवसायः, तदा धर्मव्याप्तिरुच्यते, पयसि औष्ण्यादिवत्, तदा च औष्ण्यान्तरमेव सजातीयो धर्मः, नाधुना धर्मिजातेरपेक्षा।

एवं रागोऽपि घटकुटादिद्रव्यवैजात्यमवमत्य स्वयं स्वजातीयकार्यापेक्षयैव रागद्रव्यसंस्कारस्य गमकः। अतएव तद्विशेषे क्वचित् कुङ्कुमस्य सम्पर्कः, क्वचित् हरिद्रादेरनुमीयते। न चैवं पूर्वस्थिते भूधराम्भोधरादौ कार्यत्वादिमात्रनिर्वर्तकः पुरुष इष्टः, किं तु कुम्भादिवदपूर्वकोत्पादक एव। तदा च धूमे धवलतादिवत् कार्यतादयः

सन्तोऽपि जात्यन्तरसमवायिनो धर्मा व्याप्तेर्बहिर्भावादकिञ्चित्करा एव। तस्माद् धर्मिवस्तुव्याप्तिग्रहो न धर्ममात्रप्रत्यासत्तिमनुरुध्यते। नापि धर्मव्याप्तेर्धर्मिणः सजातीयताम्। शुद्धैकविमर्शापेक्षया च सजातीयेतरव्यवस्थानमुक्तम्। नातो रागवद्धर्मिवैजात्येऽपि कार्यत्वादीनां गमकत्वम्। अन्यथा पाण्डुद्रव्यादपि हव्याशनानुमानप्रसङ्गो दुष्परिहरः, व्यभिचारोत्तरस्य दूषितत्वात्।

इन्द्रिये त्वेवमनुमानम्। यदन्यकारणसन्निधौ कादाचित्कम्, तत् कारणान्तरापेक्षम्, यथा पाथःपृथ्वीसन्निधावङ्कुरः, विषयमनस्कारालोकसन्निधौ च कादाचित्की बुद्धिरिति स्वभावहेतुः। अनपेक्षत्वे विपक्षे कादाचित्कं विरोधादनवस्थायीति बाधकात् व्याप्तिसिद्धिः। यत् तदन्यदपेक्ष्यं तदिन्द्रियमिति व्यवस्था, ततो न क्रियात्वेन करणानुमानं, नापि प्रत्यक्षं व्याप्तिग्राहि। अवश्यं च स्वाभाविकविकल्पामुखीकृतजातिभेदपुरस्कारेणैव सामान्यग्रहणमेपितव्यमध्यक्षस्य, अन्यथा यदा प्रत्यक्षेण व्याप्तिमेकामुपदर्श्यायं घट इति सङ्केतः क्रियते, तदा किमसौ कार्यत्वादिधर्मयोगि विश्वमाविशति ? व्यभिचारदर्शनेन च नियतविषयतामुपनीयते ? उपदेष्टैव वा सर्वान्यजातिषु निषेधन् विषयनियमे निष्ठापयति ? अथ सामान्यविषय एव नासौ समयः ?

एवं वाचकजातिभेदेऽपि द्रष्टव्यम्। कार्यशब्दस्तु प्रत्यक्षमनपेक्ष्य विकल्पमात्रगोचरित्वे परापेक्षोदयमात्रे निवेशित इति न विशेषवृत्तिः। यदि तु सोऽपि प्रत्यक्षवर्तिन्ययं कार्य [28a] इति निवेश्येत, सोऽपि तत्पर्यायान्तरवन्नियतवृत्तिरेव स्यात्। तस्मात् कार्यजातिविशेषविषयीकरणमेव निसर्गः प्रत्यक्षस्य। यदि च कार्यजातिभेदे प्रवृत्तमपि प्रत्यक्षं कार्यमात्रमधिष्ठानीकरोति, कारणे तर्हि प्रवर्तमानं कारणमात्रमेव व्यापकमवधारयतु, कस्मादुपादानादिवेदनविशिष्टमवलम्ब्यते ? ततो यदि न भवदभिप्रायानुरोधोऽध्यक्षस्योभयत्र सामान्यावलम्बिना विशेषावलम्बिना वा भवितव्यमनेन, सामान्यालम्बने कार्यात् कारणानुमानमिति का वार्तेश्वरसिद्धेः ? विशेषावलम्बने च कार्यमात्रव्याप्तेरसिद्धेरिति। तस्मादनुभवाद् युक्तेश्च विशिष्टामेव कार्यजातिं हेतुविशेषव्याप्तामुपदर्शयति प्रत्यक्षमिति।

प्रयोगः। यद् यत् कार्यकारणभावग्राहि प्रत्यक्षम्, तद् विशिष्टजातिप्रतिनियतव्यापारम्, यथाग्निधूमयोः। तथा चेदं बुद्धिमता कार्यस्य व्याप्तिसाधनमिति स्वभावहेतुः। नास्यान्यथाव्यापाराशङ्कयानेकान्तः, कारणानुपलब्धिबाधितत्वात्। कारणभेदो हि कार्यभेदस्य कारणम्, अन्यथा सर्वस्याहेतुकत्वप्रसङ्गात्। न चास्य कारण-

भेदोऽस्ति, विषयेन्द्रियालोकादिलक्षणसमानसामग्रीप्रभवत्वादिति । दृष्टान्ते साध्यशून्यताशङ्कायां च यद् यत् प्रत्यक्षम्, तत् तद् विशिष्टजात्यैव सामान्यावलम्बनम्, यथा व्यभिचारग्राहि प्रत्यक्षम्, प्रत्यक्षं च व्याप्तिग्राहीति स्वभाव एव । स एवानेकान्तपरिहारः । बुद्धिमत्कार्ययोरपि व्याप्तिग्राहिणि धर्मिण्ययमेव वा प्रयोगः । अथवोभयत्रापि यद् यत् सम्बन्धग्राहि प्रत्यक्षं तद् विशिष्टजात्यैव, यथा वाच्यवाचकयोः, सम्बन्धग्राहि च प्रत्यक्षं कार्यकारणयोरपि पूर्ववत् । तदयं यदि तत्त्वतः कृत्स्नोऽपि कार्यग्रामः प्रयत्नवन्नान्तरीयकः, तथापि कार्यजातीनामत्यन्तविलक्षणानामानन्त्यात्, प्रतिजातिभेदं च व्याप्तिग्रहणापेक्षणात्, यावज्जातिकं कार्यं पुरुषपूर्वकं परिच्छिन्नम्, तावत एव तदनुमानमाञ्जसमिति युक्तमुक्तम्,

सिद्धं यादृगित्यादि ।

तथा च वह्नेरेव धूमभस्माङ्गारपाकपार[दो]त्सारणवीक्षणक्षतिप्रभृतिषु कार्येषु यत्र यत्रैव प्रतिबन्धसाधकमध्यक्षं प्रवृत्तम्, तत एव तदनुमानम्, नान्यस्मात् । एवं देवकुलकलसप्रासादस्यन्दनदुकूलादिषु वस्तुवृत्त्या पौरुषेयेष्वपि यज्जातीयेष्वेव पुरुषक्रियोपलब्धिरासीत्, तज्जातिकादेव कार्यात् तदनुमानमनुमन्यामहे । धाराधरधराधरादिजातौ पुनस्तद्व्यापारानवधारणात् कानुमानवार्ता, जातिवैजात्यस्यात्यन्तिकस्य सम्भवेन व्याप्तेरग्रहात्? गृहीतव्याप्तेश्च कार्यस्यादर्शनात् ॥

क्रीडापर्वतकादिनिर्मितिदृशां शैलादिषु क्वानुमा
नापि न्यायसहा स्खलद्गति यतस्तन्नाममात्रं समम् ।
किं चानेकसमानमानवकृताः सिध्यन्ति चेदीशिनः
का वार्ता फलसाम्यसंविदि कुतो हेतोर्विशेषस्थितिः ॥

[28b] इति ह्यन्तरश्लोकः ॥

कीदृशी पुनः कार्यजातिः प्रयत्नवता व्याप्तेत्याशङ्क्य तस्या अप्यानन्त्यात् संक्षेपार्थमुच्यते, यद्दृष्टेरर्थक्रियादर्शिनोऽपि कृतबुद्धिर्भवतीति । तत्र च कृतबुद्धिरिति न साधनबुद्धिः, नाप्युपादानाद्यभिज्ञलक्षणप्रकृतसाध्यबुद्धिः, किं तु कुविन्दादिस्वभावसाध्यबुद्धिः । तदभावाच्च न साक्षाद्भवदीयहेत्वसिद्धिः प्रकृतसाध्यसिद्धिर्वा विवक्षिता, किं तु आत्यन्तिकवैजात्यप्रदर्शनमेतत् । तद्द्वारेण च हेतोरसिद्धिरव्याप्तिर्वाभिमतैव ।

तथा हि शून्यनगरपरिदृष्टदेवकुलादौ कुलालादि[सम]शिल्पिबुद्धिराविरस्ति, न मलयमकरालयादौ। तस्याः शिल्पिबुद्धेर्भावाभावौ न जातिभेदमात्यन्तिकमन्तरेण इत्यभिप्रायः। व्याप्तेरग्रहणे स्मरणसंस्कारभ्रंशे वा देवकुलादावपि न स्यादियं समान-शिल्पिबुद्धिः। ततो यथा धूमादग्निबुद्धिर्भवन्ती गर्दभादभवन्ती धूमाद् गर्दभस्य नियतं जातिभेदमापादयति, तथेयमपि परिनिश्चितपौरुषेयभावेभ्यो भावेभ्यः कैलासकुलिशा-दीनाम्।

कथं पुनरनुमानाभाव एव प्रत्येतव्य इति चेत्, कुम्भकारादम्भोदम्भोलि-प्रभृतिसम्भव इति स्वप्नेऽपि शङ्काविरहात्। अन्यथा कुविन्दपादमर्दनादनावृष्टिकष्टम् आविशेत् न लोकः, परचक्राक्रान्तिकातरो वा क्षितिधरजलधिव्यवधिमभिलपंस्तत एव निर्वृत्तिमासादयेत्। कुविन्दस्थानीयस्तत्रापरोऽपेक्ष्यत एवेति चेत्– न, समाने कार्यजन्मनि विजातीयकारणगवेषणानुपपत्तेः, कुविन्देनैव साध्यसिद्धेः। न हि पटान्तरे अपि कुविन्दादपरस्यापेक्षा।

अस्ति च वस्त्रविशेषे विशिष्टशिल्पिनोऽपेक्षेति चेत्? अस्ति, यावदेव तु वस्त्रान्तरेणैकजातिपरामर्शो दृढः, अत एव कुविन्दस्यैव शिल्पिनः कल्पनम्। तद्वि-मर्शाभावे पौरुषेयताया एव सन्देहः। मेरुमन्दरादयस्तु न केनचित् पौरुषेयेणैक-प्रत्यवमर्शभाजः। तदेषामध्यक्षसिद्धमत्यन्तवैजात्यं शाठ्यादपह्नुवानः समानशिल्प्यनु-मानविरहेण स्वीकार्यते। सिद्धे च जातिभेदे यादृक् कार्यं कुम्भादि पुरुषप्रतिबद्धं सिद्धम्, न तादृग्गर्भार्भकादि। यादृक् चेदं न तादृक् पुरुषव्याप्तमिति सिद्धा असिद्धिः अव्याप्तिश्च द्वयोः। एवं च स्थिते प्रकृतसाध्यबुद्ध्यजननद्वाराणि दूषणानि दूरम् अपास्तानि॥

न हि वयं प्रकृतसाध्यबुद्धेरभावात् कार्यत्वादिहेतोरसिद्धिं ब्रूमः। किं तर्हि? मन्दरादौ कुविन्दसमशिल्पिबुद्धेरभावादम्बरादिसजातीयकार्यत्वासिद्धिम्। ततश्च प्रकृतसाध्यबुद्धिवैधुर्यमिति न कश्चिद् दोषः। कुविन्दसाध्यापेक्षया च व्याप्तिग्रहण-स्मरणसंस्कारभ्रंश एवेष्ट इति न भूषणविकल्पावकाशः। कृतकत्वमात्रप्रतीतिस्तु न विवक्षितैव। अभ्रष्टस्मरणानां तावद् भवत्येष पुरुषकृतबुद्धिः क्षित्यादिष्विति तु दूरमपकृष्टम्।

बौद्धकृतस्य हि [29a] कृतबुद्धिनिषेधस्यासिद्धिः प्रस्तुता अभिधातुम्। न च सा शक्या, कृतबुद्धिशब्देन शिल्पिबुद्धेरस्य विवक्षितत्वात्। पुरुषकृतबुद्धिभावविभावनं

पुनरनुपयोगि। प्रतीत एव तस्मिन् दूषणचिन्तेयम्। तत्राप्यभ्रष्टस्मरणानामित्यसङ्गतम्, अत्यन्तवैजात्यसिद्धेः सिन्ध्वादेरन्यतो न व्याप्तिप्रतीतेः, स्मरणसंस्कारभ्रंशस्य परिहर्तुमशक्यत्वात्। अत एव जगत् केनचित् सृष्टमिति प्रलापमात्रे क आश्वासः? प्रकृतसाध्यबुद्ध्यासिद्धिचोदनपरिहारादेव च वेदेष्वपीत्यादि प्रत्यादिष्टम्।

यदि तु पौरुषेयवाक्यादेरत्यन्तं वेदस्य वैजात्यमुपदर्शयेत् मीमांसकः, तत् किं समयमात्रेण पराजेतव्यः? न तु तयोः स्वरूपद्वारकः शक्तिद्वारको वा कश्चिद् विशेषोऽस्ति। तथा च तत् द्वयमगृहीतसंकेतस्य पुरः पठित्वा प्रतीहि कस्य कीदृशं विशेषं व्याकुर्वीत श्रोता, किं न वा पश्यसि गरुडादिमन्त्रकृतं विषापाकरणादि? तदेतदायातम्,

एकः कार्यविशेषमेव कलयन् हेतोर्विशिष्टं निजं
लक्ष्याग्नेरिव कार्यमात्रममुना व्याप्तं समुत्पश्यति।
तज्जातीयकमेव कार्यमपरो नावैति तद्धेतुकं
हन्त ध्वान्तविशेष एष विदुषामध्यक्षवस्तुन्यपि॥

तस्मात्,

यद् वाचः पुरुषान्वयव्यतिरिचोस्तद्भावभाजः स्थिता
नान्यस्माद् वचसश्च वैदिकगिरां भेदोऽस्ति शक्यात्मनोः।
तुल्यातीन्द्रियसूचना च नियतं नैकत्र चाश्वासनं
वेदस्तेन न पौरुषेयपदवीमप्राप्य विश्राम्यति॥

यदि तत्, का कथा विचारगोचरातीतात्यन्तिकजातिभेदेषु कुम्भादम्भोदम्भोलिप्रभृतिषु तज्जातिनियतप्रतीतेः पौरुषेयतायाः? यदप्यनित्यतासाधनायोपालब्धम्, तदपि न्यायबाह्यम्। प्रत्यक्षेण प्रतिबन्धबोधाधिकारे हि तादृशी सजातीयेतरत्वमीमांसा। अनित्यत्वे कृतकत्वमात्रस्य विपर्ययबाधकप्रमाणादनुमानस्वभावात् प्रतिबन्धसिद्धिरिति न तत्र जातिविशेषानुरोधः। जातिविशेषानवच्छिन्ने तु कृतकमात्रे व्याप्तिसाधनसमर्थमसमर्थं वा तत् प्रमाणमिति चिन्तनीयम्। शक्तौ न दोषस्पर्शः। अत एव तत्र घटशब्दभेदेन भेदोद्भावनं दृष्टान्तदार्ष्टान्तिकवैधर्म्याभिधानमिति न युक्तम्। यतो धर्मिरूपादाकृष्टधर्मद्वयस्य व्याप्तिव्यवस्थापनाद् धर्मवस्त्वेव धर्मीति तद्भेदाभिधानस्य धर्मिमात्रभेद एवार्थः।

इहापि तर्हि कार्येषु धर्मिषु पौरुषेयत्वं साध्यं कार्यत्वमात्रं हेतुरिति न विशेषः कश्चिदिति चेत् ? उच्यते, कार्यत्वमात्रं हेतुरिति कोऽस्य भाषितस्यार्थः ? किं तावन्मुख्यतया धर्ममात्रे कारणस्य कुङ्कुमादेरेव रागे व्यापारादेवमुच्यते ? उतस्वित् कार्त्स्न्येन कार्ये व्याप्तिसिद्धेः, धूमत्वमात्रं हेतुरितिवत् ? यथा कृत्स्नो धूमः साध्यव्याप्तः, तथा यावत् कार्यं तत् कृत्स्नं पुरुषव्यापारजन्यकमिति निश्चयात्। तदेतदुभयमपि निरस्तम्। कृतकत्वमात्रमनित्यत्वव्याप्तमिति तु कार्त्स्न्यपर एव भावनिर्देशः, यावत् कृतकं तत् सर्वमनित्यमित्ययमेवार्थः। [29b] अत्रार्थे प्रमाणबले मिलिते सिद्धे च ध्वनेः कृतकत्वे घट एव कृतकोऽनित्यो दृष्टः कथं शब्दः स्यादिति निरवकाशमेवेत्ययमेवार्थो धर्मिमात्रभेदोऽयमित्यनया रीत्या प्रकाश्यते।

यथा हि स्वभावहेत्वधिकारप्रस्तावात् साध्यसाधनधर्मौ विकल्पारूढरूपापेक्षया भिन्नौ व्यवस्थापितौ तथा धर्म्यपि शब्दादिः, अन्यस्य तद्धर्मणोऽभावात्। न चान्यत्र धर्मिणि कृतकवस्तुना अनित्यवस्तुसाधने ध्वनेरनित्यतासिद्धिः। तस्य च धर्मिणो घटशब्दभावेन भेदमापादयन् दूषणमभिधाय निगृह्यते धर्मिमात्रभेदद्वारेण। प्रस्तुते तु कार्यहेत्वभिमानाद् धूमस्थानीयः कार्यराशिः साध्यश्च भिन्नोऽग्निवत् पुरुषः। केवलं नाग्निवत् तद्देशकाल एव। किं तु जन्मदेशकाले सन्निहितो निश्चेयः, भस्मकुम्भाभ्याम् इवानलकुलालौ। ततो यथा कुलालपूर्वोऽयं घटो घटत्वादित्युपन्यासेऽप्युत्पत्तिकालदेशसन्निहितव्यापारः कुलालो निश्चीयते, घटश्च हेतुर्वस्तुतः, तथा पुरुषेऽपि साध्ये वस्त्वेव हेतुर्न कार्यत्वधर्मः, तथा सति पुरुषव्याप्तात् कार्याद् विलक्षणं क्षोणीधरादिकार्यमिति वदता साधनवैसदृश्यमुद्भावितम्, न धर्मिवैसदृश्यम्। तदा हि तदुदयदेशकालमेव धर्मि, न च कलसादिकालदेशात् कैलासादिकालदेशवैसदृश्यं कश्चिद् वक्तुमुपक्रान्तो येन धर्मिवैसदृश्योद्भावनं भवेत्।

तस्माद् दहनरूपमात्राद् दहनानुमानवत् साधनवैसदृश्योद्भावनमेतदसिद्धिम् अव्याप्तिं वा दर्शयितुं धर्मिण इति तु विप्लवः परेषाम्। अयमेवार्थो यादृक् कार्यत्वं देवकुलादौ पुरुषव्याप्तं प्रतीतम्, न तादृग् युगन्धरादावित्यनया दिशोपदिश्यते। यज्जातीयं देवकुलादि पुरुषव्याप्तं न तज्जातीयं युगन्धरादीत्यर्थः। अत्यन्तवैजात्याच्च कार्यशब्दमात्रसाम्यमुच्यते न पुनरकार्यव्यावृत्तेः क्वचित् न्यूनभावः। व्याप्तौ तु कार्यत्वादेरनन्तर्भावं ब्रूमः। अतएव तन्मात्रेण साम्यं नोपयोगि, मूर्तत्वादिनेव दहनानुमाने।

मञ्जर्यांतु पर्यनुयोगोऽस्थानपतितः। घटादिजातिरेव पुरुषव्याप्ता सिद्धेवि वदतान्यत्र संशयमात्रस्य विवक्षितत्वात्। कुलालादिमनुष्यकृतबुद्धिश्च कृतबुद्धिरुक्ता। तदभावश्च जातिभेदे उत्तरीकृतः। स चोभयसिद्धतया न विसर्जनान्यवकाशयति। न चात्यन्तिकजातिभेदमन्तरेणोपपद्यत इति निवेदितम्।

एवं वाचस्पतेरपि विशेषगवेषणं कृतबुद्धिवैधुर्यस्याभिधेयप्रयोजनयोरपरिज्ञान-प्रयुक्तमिति वेदितव्यम्। यदि हि कृतबुद्धिर्नास्तीति प्रकृतसाध्यबुद्धिर्नास्तीति विवक्षितम्, तदा प्रतीतिकलहेऽमुस्मिन् कुतो विशेषादन्यत्र सा भवति पर्वतादौ तदभावान्नेति चिन्त्यते। यदा तु कृतबुद्धिर्नास्तीति [30a] समानशिल्पिकृतबुद्धिर्नास्तीत्यभिधेयम्, तत्र च न विवादः। प्रयोजनं च कुम्भादिभ्योऽम्भोधरादेरत्यन्तवैजात्यख्यापनम्। तदप्यशक्यपरिहारम्। ततो गृहीतव्याप्तिकेभ्योऽत्यन्तविलक्षणात् कथं प्रकृतसाध्य-बुद्धिरित्यभिप्रेतम्? तदा प्लवत एव सकलमेवंविधम्। उत्पत्तिमन्मात्रे च व्याप्ति-निरसनात् हन्तोत्पत्तिमदित्याद्युत्तरं कालदण्डखण्डितमेव। तेन घटे दृष्टव्याप्तिकस्य घटसजातीयमेव बुद्धिमत्पूर्वकम्। यदा तु प्रासादादावपि व्याप्तिग्रहस्तदा तज्जातेरपि तत्पूर्वकत्वसिद्धिरित्यप्युक्तम्।

यच्चा[थ] यज्जातीयमित्याशङ्क्य, किं कार्यजातीयम्? तथा न दृष्टमित्युत्तरम्, तदपि स्वाभाविकविकल्पावभासिनः सामान्यस्य प्रत्यक्षेण व्याप्तिग्रहणयोग्यतासमर्थ-नात् कदर्थितम्। तस्माद् यदपि औपाधिकविकल्पप्रतिभासिनापि रूपेण तज्जातीय-व्यवहारो दुष्परिहरः, व्याप्तिग्रहणे तु प्रत्यक्षेण प्रतिक्षिप्तत्वान्महान् विशेष इति।

अत एव वित्तोकविकल्पा अपि न किञ्चित्। तथा हि, यद्यस्मदभिप्रायप्रश्नः, तदा विशिष्टैव कार्यजातिर्देवकुलकलसादिलक्षणा बुद्धिमद्व्याप्ता यद्दृष्टेर्हि परोक्षक्रिय-स्याप्यनुभूतसजातीयशिल्प्यनुमानम्, सा न सिद्धा सिन्धुभूधरादौ। कार्यत्वमात्रं तु न व्याप्तमित्युच्चैस्तरां तन्वन्त एवास्महे। तत्र किमेभिर्विकल्पैरिति चिन्तय। यद्विशेषाद् विशिष्टा कार्यजातिः स विशेषः किमनिरूपितरूप एवेत्यपि पापीयः, प्रत्यक्षसिद्धानां कार्यजातीनां परस्परवैसदृश्यस्यापह्नोतुमशक्यत्वात्। व्याप्तिस्तु विशिष्टायां जातौ भवतु कार्यमात्रे वेत्यत्र परमापाततो विमन्तुमर्हति। कथमन्यथा स्वयमपि वस्तुत्व-व्याप्तिकार्यत्वासंजननं व्यभिचारमालम्ब्य परिहृतम्? व्यभिचारबुद्धीनां नियतजाति-विषयत्वे विवादाभावादित्याविर्भावितमेव। तस्मादाकारार्थक्रियासामर्थ्यादिवेदनात्

चित्राकारे जगति नियतमीश्वरप्रसादादेवालौकिकमेकाकारमालोकितमस्येत्युपेक्ष्यैव ज्यायसी ।

यदपि प्राचीनमुपादानोदाहरणमस्य कार्यमात्रे व्याप्तिसमीहया, तदपि नौपयिकम्, तत्रापि प्रत्यक्षव्यापारस्याशक्यसाधनत्वात्, नैसर्गिकविकल्पविषयत्वात्, उपादानस्य दृश्यादृश्यस्वभावत्वाच्च। तत् किमिदानीमुपादानेन कार्यराशेर्व्याप्तिरेव नास्ति? आहोस्वित् प्रमाणान्तरगम्या भवत्विति चेत्? उभयत्र संशयः, सतोऽपि व्यभिचारस्य विपर्ययबाधकानुमानस्य वानुल्लेखसंभवादिदानीमेकान्तहेतोरभावात्। तदयं सोपादानं सर्वोत्पत्तिरिति सर्वतन्त्रसिद्धान्तोऽविरोधादनुवृत्तः, यावच्च कार्यम् आलोकयामस्तावदुपादानवदेवेत्यविगानेन व्यवहारोऽपि। न च कार्यपर्यन्तबोधः पृथग्जनस्येति तनीयसापि विपरीतांशेन संशयो दुर्वारः। बुद्धेश्च बुद्धिरुपादानं निश्चिता इति विज्ञानस्य विज्ञाना[न्या]नुपादानाच्च सिध्यतीति न विरुध्यते, ततो यदि सिद्धान्तादपि [30b] तद्व्याप्तिव्यवसायो न काचित् क्षतिः। प्रत्यक्षात् तु मा भूत्, केवलमत्र पक्षेऽचेतनोपादानत्वहेतुरेकदेशसिद्धः शङ्क्येतेति व्यवस्था। सा चायातैव, किं क्रियताम्? विपर्ययबाधकप्रमाणलाभे तु सापि न स्यात्। केवलं प्रत्यक्षेण कृत्स्नकार्यव्याप्तिवादेऽनुदाहरणमेवेदम्। अतः प्रत्यक्षस्य जातिविशेषे व्यापारनियमप्रसाधनाद् विशेषहेत्वभावादित्याद्यपि ध्वस्तम्॥

यत्पुनरपरस्य[1] विपर्ययबाधकप्रमाणोपन्यासपौरुषम्, तत्रापि प्रथमद्वितयं तावद् बाधकं धूमस्येव सिद्धायामेव तदुत्पत्तौ तत्साधकप्रत्यक्षानुपलम्भस्य विशिष्टजात्यधिकारेण प्रवृत्तिसाधनाद् विशिष्टमेव घटादिकार्यं प्रति शक्यम्। एवं च यदि बुद्धिमन्तमन्तरेण जायेत सकृदपि ततो न भवेत्, अनियतहेतुत्वे वाहेतुत्वमिति न कार्यमात्रं प्रति, तस्य पुरुषादुत्पत्तिप्रसाधनाभावात्। ततश्च यत् कार्यं यत् पुरुषपूर्वम् इत्यपि निरवकाशम्॥

नापि कार्याविरामप्रसङ्गसङ्गतिः, स्वकारणायत्तसन्निधेरदृष्टपरिणामसहकारिणः कारणावस्थाविशेषस्य सततमभावेऽपि कार्याणां कादाचित्कतोपपत्तेः, यदपेक्षया नित्यशक्तेरपि ईश्वरस्य शश्वन्न करण[त्व]म्। एकावस्थानियमे हि कारणान्तराणां प्रवृत्तिनिवृत्तिसाधनीच्छा प्रार्थ्येत। स च नास्ति, बीजस्योच्छूनतरतमादिभाववत् परिणाम-

१. शताानन्दस्येति प्रान्तलेखः।

परम्परापरिचयस्य तेषामपह्नोतुमशक्यत्वात्। अस्तु वा एकावस्थानियम ईश्वरस्य इच्छाया अपि नित्यत्वात् तदवस्थः कार्याविरामः, अनित्ये तु यदपेक्षोऽस्याः कदाचिद् भावः, तदपेक्षया कार्यगानस्य यदि स्यात् कीदृशो दोषः? कुम्भादिकार्यक्रमेऽपि तर्हि किं पुरुषेच्छया, यदपेक्षोऽस्याः क्रमः, तदपेक्ष एव कुम्भादेरप्यस्तीति वक्तुं शक्यः? तदयुक्तम्, प्रमाणेन दृष्टसामर्थ्यस्य हेतोरपोहितुमशक्यत्वात्। प्रस्तुते तु प्रमाणाभावात् कार्यकादाचित्कतामात्रमाश्रितं तदन्यथाप्युपपत्स्यत इति कुतः पुरुषापत्तिनियमः कार्यस्य?

अथ कुम्भादेः कदाचिद्भावः पुरुषाधीनो दृष्ट इति कार्यान्तरस्यापि तथेति चेत्? एवं तर्हि तदेव दर्शनादर्शनमात्रं व्याप्तिसाधनमायातम्, किमत्र विपर्ययबाधकोपन्यासशौटीर्येणेति तृतीयमपि निरस्तम्॥

यच्चोच्यते, कारणसन्निधेर्धीधनाधीनो निश्चित इति, तत्रापि तथा दर्शनमात्राश्रये एतदेव वाच्यम्। विपर्ययबाधकं च न किञ्चिदुक्तम्। प्रत्यक्षानुपलम्भशरणीकरणे च वातोपघातादिमिलज्जम्बालबीजादिसामग्र्या अनैकान्तिकत्वादि सर्वमाक्षेपपरिहारसमेतं कार्यवदवगन्तव्यं सामग्रीविशेष एव व्याप्तियोग्य इत्येतत्पर्यन्तम्। तन्न कारणसामग्र्याः पुरुषेण व्याप्तिसिद्धिः, यतो विपक्षे व्यापकानुपलम्भादसम्भव इति चतुर्थमपि कदर्थितम्॥

तावतैव वाचस्पतेरपि [31a] हृदयशून्यः प्रलापोऽपहस्तितः। यथा हि विततानां तावदजननबीजमुक्तमवस्थाविशेषाभावो नाम। यद्यपि दण्डचक्रादीनां पुरुषादेव मिलनमुपलब्धं तत्प्रयत्नसचिवानां च कार्यारम्भः, तथापि सर्वत्र सर्वदा वा तथैवेति नियमयितुः प्रमाणस्याभावात् कार्योत्पादव्यापकस्यापि कारणसमवधानस्य बुद्धिमदधीनत्वेन व्याप्त्यसिद्धेस्तदवस्थो दोषः। यथा च कारणान्तरदशाविशेषाश्रयेणैव कार्याणां कदाचिद् भावस्तथा प्रकृतिविशेषोऽपीति पञ्चमं च पञ्चतामञ्चितम्॥

कारणमात्रापत्तिसाधनं पुनरेतदिति दर्शितं शास्त्रे॥

एतेनैव शङ्करोक्तमपि नापि कश्चिद् विशेष इत्यादि काव्यरचनामात्रमापादितम्, प्रतिबन्धसाधकप्रमाणपर्यादानात्। यद्यपि च निरभिप्रायव्यापारत्वेन प्रासादादिहेतुभ्यो भूभूधरादिहेतूनां न विशेषस्तथापि प्रयत्नवदपेक्षानपेक्षाभ्यां यदि स्यात् को दोषः? यथा पार्थिवत्वाविशेषेऽपि लोहलेख्यत्वालोहलेख्यत्वे। अवश्यं च निरभि-

प्रायत्वाविशेषेऽपि विशेष एषामेषितव्यः शक्तेः, कथमन्यथा कार्यवैजात्यमात्यन्तिकम्? तदसौ शक्तिः प्रयत्नवदपेक्षावैमुख्यमपि यदि क्षमेत का क्षतिः? किं च कर्तुरपि करादिव्यापारमन्तरेण समीहामात्रात् न मूर्तकार्यसिद्धिरुपलब्धा, तमतिवर्तमानानां भूधरादीनां का गणना समीहामात्रे?

करादयोऽपि समीहया प्रवर्त्यन्त इति चेत्? समीहापि सन्निवेशिनि शयादि-व्यापारविरहे न किञ्चित्करीत्युक्तम्। ततो यया शक्त्या करादिव्यापारपारवश्यमपास्य महीधरादिहेतवो निरभिप्रायत्वे सत्यपि न कार्यकर्मणि प्रतिहन्यन्ते, तया समीहामपि नातिक्रमेयुरिति क एवं श्रद्दधीत? न हि धूमोदयकाले उच्छलद्‌बहलरूपं वस्तु वह्नी-न्धनजन्यतया सम्भावितमेकाभावनिश्चये निश्चीयमानमन्याभावेऽपि न भावशङ्कायां निवेशयति, तादृगेतदपि॥

शरीरस्वीकारे तु प्रादेशिककार्यानित्यानेकासर्वज्ञत्वात् साधु साधितः सुधी-भिरीश्वरः। एतेनैव वा व्यभिचारः कार्यत्वादेः। न ह्यनधिष्ठितानामित्यादि [व]चनाद् दर्शनादर्शनमात्रादन्यमुपायमस्य व्याप्तिसाधनाय स्पृशति, तच्च कृतोत्तरम्। यदि च दर्शनादर्शनमेव शरणम्, तदा यथा समीहावतः कार्यक्रिया दृष्टेति कार्ये सति समीहा-वतोऽनुमानमिष्टम्, तथा करादिमत एव मूर्तक्रिया दृष्टेति करादिव्यापारानुपपत्तौ पुरुषस्याक्रियैव कस्मात् न निश्चीयते? न खलु कार्यहेतुव्यापकानुपलम्भयोः प्रामाण्ये कश्चिद् विशेषः। यदि तु दर्शनादर्शनमात्रमनास्थाय प्रमाणान्तरमेकनियतं स्यात्, स्यादेकसाध्यबुद्धिः, तदभावे तु प्रतिबन्ध [31b] एव तयोः परस्परम्, न बाधा तुल्य-कक्षत्वादिति प्रकरणसमः पराभिप्रायात्।

प्रयोगः, यो न स्वाङ्गव्यापारवान् नासौ मूर्तनिवर्तनसमर्थो दृष्टः, यथा कुलाल एव संहृतकरादिव्यापारदशायाम्। नास्ति च स्वाङ्गव्यापारः प्रकृते पुंसीति व्यापका-नुपलब्धिः। नाश्रयासिद्धिः क्षणभङ्गाध्यायन्यायेनेति। वस्तुतस्तर्हि दूषणान्तरमेव युक्तं, कः प्रतिहेतोरवकाश इति चेत्-न, भूयोदर्शनस्य व्याप्तिसिद्धावनङ्गत्वप्रतिपादनार्थमस्यो-पन्यासात्। यदि भूयोदर्शनमुपायः तदैवमपि स्यादित्युक्तेरिति व्याप्तिग्रहप्रकाराणाम् अयोगादनेकान्त इति स्थितम्॥

अस्तु वा व्याप्तिग्रहः कथञ्चित्, तथापि नेश्वरसिद्धिप्रत्याशा फलवती, बुद्धि-मतः साध्यस्यैकत्वनियमनिश्चयाभावात्। एकत्वे हि तस्य सिद्धे नित्यविभुसर्वज्ञत्व-

सिद्धिरीश्वरव्यवहारमारोपयेत्। यदा तु भिन्नदेशकालकलितं कार्यजातमनेकेन संख्यातिक्रान्तेन कर्त्रा कृतं सम्भाव्येत, न तदा विभुत्वनित्यत्वे, स्वस्वविषयोपादानादिमात्रवेदनसिद्धौ च क्व सर्वज्ञत्वम् ?

अथ बहूनां व्याहतमनसां व्यापारे कार्यस्यानुत्पत्तिरुपन्यस्य विलोपादिप्रसङ्गश्च स्यादिति चेत् ? प्रत्येकं वैभवादिगुणयोगादीश्वराणां व्यापारे स्यादपीयमाशङ्का, अद्य पुनरेकोऽपि तादृङ् न सिध्यतीत्युच्यते। अर्वाचीनशक्तयश्च भूयांस एकमनेकं च कार्यम् आरभ्य निष्पादयन्तो दृश्यन्त एव। नन्वनेकत्रापि प्रधानभूतेनैकेन भाव्यम्, बलीयसा वा, सूत्रधारवत्, सेनानीवद् वा। अतस्तस्यैव कर्तृत्वमितरेषां तदनुवृत्तित्वादिति चेत्-न, तत्रापि नियमाभावात्, स्वस्वप्रयोजनानुरोधेन स्वतन्त्राणामपि केषाञ्चिदेकसत्त्वादिघटनादर्शनात्। तत्रापि कश्चिदेव प्रथमः प्रयोजक इत्यपि नास्ति, अनेकस्य तथा हृदयोत्कलिकाया अनिवारणात्, नीचस्यापि प्रयोजकत्वसम्भवात्।

तस्माद् भ्रमरमधुमक्षिकावल्मीकजन्तुवत् क्षुद्रप्राणिभिरप्येकैकमैनाकादिकरणसम्भावनायां का वार्ता विश्वस्यैकेन क्रियायाः ? तत्रादृष्टजन्मानस्तावत् तावतैव कृतार्थीकृतचेतनानुमितयः क्षितिधरादयः। ते च क्षुद्रजन्तव उपादानमतिक्षुद्रं पृथिव्यादिद्रव्यमुपकरणं सुखादिसम्प्रदानमात्मानं स्थितिसुखादि च प्रयोजनं जानन्त एव वल्मीकजन्तुवत् प्रवर्तेरन्। सिद्धे च नावश्यमधिष्ठायका दृश्येरन्, विचित्रशक्तिकर्माक्षेपात् स्वभावविप्रकर्षाद् वा। येऽपि दृष्टजन्मानो वृक्षादयः पौरुषेयाः, तत्र चिन्तैव नास्ति। अदृष्टपुरुषव्यापारास्तु ये विन्ध्ययुगन्धरादिपरिसरद्भावास्तेऽपि पिशाचादिप्रकारैरधि[ष्ठा]तृभिरसंख्यैः कर्तृमन्त इति कः सर्ववेदी भवतु ? देशकालयोश्च भिन्ना एवेति क्व विभुत्वनित्यत्वे ? न चैवं शङ्काया [32a] बाधकं किञ्चिदस्ति वस्तुबलप्रवृत्तमनुमानम्।

ननु चैवं तावद् भवद्भिरपि न स्वीकृतमेव। एतावच्चातिकष्टतरं कल्पयतो वरम् ईश्वरकल्पनैव लाघवादिति चेत् ? सत्यम्, यदि कल्पनामात्रेतरन्यासः, तदा भवदुपन्यासमेव पुरस्करिष्यामः। यावत् पुनरनुमानव्याजं न वर्जयसि, तावदवश्यमस्माकं दृढनिरूपणाभियोगः। अथ क्षुद्रैरसंख्यैर्निर्मिता नर्मदादय इति दुनोति चेतश्चेत् ? एकेनाशरीरेण निर्मिता इति सुष्ठुतराम्। तस्मात् प्रमाणमेव सर्वतो बलवद् यथा स्थापयति तथार्थस्थितिः। अतएव तद् दृढं निरूप्यते। न च क्षुद्रेष्वनुरोधः कश्चित्।

क्षुद्रैरक्षुद्रैरदृश्यैः समानशक्तिभिरधिकशक्तिभिः स्वतन्त्रैः प्रधानसम्मतैकैकजन्तुसनाथापरिमितयूथैर्वा स्थूलाणुकैकानेकरवकार्यभागोपादानादिमात्रवेदिभिः पङ्क्तिपर्यापन्नैः कृतो भवतु भुवनसन्निवेशः, एक एव तु कर्ताऽस्य मा भूत्।

नापि बौद्धैस्तथानुपगमात् ततो हेतुव्यावृत्तिः, एकतोऽपि व्यावृत्तिप्रसङ्गात्। न च वस्तुबलप्रवृत्तेऽनुमाने परोपगमापेक्षा। उपगममात्रस्य त्यागेनाविरोधात्। तदेवं बुद्धिमन्मात्रे साध्ये उपादानाद्यभिज्ञतालक्षणविशेषनान्तरीयकतया साक्षादुपादानाद्यभिज्ञकर्तृसाधनाद् वाभिमतसिद्धिर्नैकान्तिकी, सर्वकार्यक्रियाया एककर्तृत्वासिद्धेः। उपादानाद्यभिज्ञमात्रसाधने च वैफल्यम्, भारतादिकथावत्। ततः साधनान्तराभावादस्मादेव सर्वज्ञादिगुणवतः सिद्धिरिष्टेति तदपेक्षयैव दूषणमभिधानीयमनेकान्तलक्षणमिति स्थितम्।

अतो यावतीमर्थगतिमित्यादि दुर्लङ्घ्यम्। साध्यसामान्यप्रतिबन्धाकृष्टत्वेऽपि विशेषस्य सिद्धिः साधनाधीनैव, तदेकपरतया साधनोपन्यासादन्यसाधनाभावाच्च। बौद्धस्यापि हि नैरात्म्यसिद्धिः साधनाधीनैव। यदि हि नैरात्म्यत्यागेऽपि क्षणभङ्गसाधनं चरितार्थं भवेत्, तदा किं क्षणभङ्गसाधने नैरात्म्यसिद्धिः स्यात्? भवतस्तु सार्वज्ञ्यादिसिद्धिमुद्धूयान्यथाप्युपादानाद्यभिज्ञानलक्षणो विशेष उपपादितः। अतएव नात्मोपन्यासपूर्वकोऽन्वयो दृष्टान्ते प्रदर्श्यत इति अनुपयुक्तम्। साक्षात् तदन्वयदर्शने अपि तन्नान्तरीयकत्वं साध्यसामान्यस्य दर्शयितव्यमेव। तच्चैकत्वेन सकलक्रियाधारस्य व्याप्तेरभावादशक्यम्।

एतेनैव वाचस्पत्योऽपि सार्वज्ञ्यसाधनाभिनयः प्रतिव्यूढः। सिद्धे तु सर्वज्ञे कर्तरि कर्तुरेकत्वनिरूपणश्रमोऽस्माकमनु[प]योगीत्युपरस्यते। यदप्ययं व्यतिरेकिप्रयोगमाह, तदप्येकत्वानिश्चयादेव दूषितम्, अनित्यासर्वविषयबुद्धित्वेऽप्युपादानादिवेदनसम्भवस्योपपादितत्वात्।

वित्तोकसमाधाने तु धूमादूधराधरा[योग]व्यवच्छेदवत् अग्नेः पञ्चवर्णशिखाकलापताया अप्यनुमानप्रसङ्गः। नात्र सामर्थ्यमिति चेत्? तत्रापि पक्षायोगव्यवच्छेद एव सामर्थ्यात्। पृथ्वीभृति प्रयत्नवतः सिद्धावप्येकत्वानिश्चयात् क्व सर्ववेदनसिद्धिः?

[27b] ननु द्व्यणुकस्यापि कार्यत्वात् कर्ता तदुपादानपरमाणुदर्शी नियमेन एषितव्यः। न च मांसचक्षुषस्तथा भवितुमर्हन्ति। अन्यथा किमस्मदादिभिरपराद्धं येन

तथा न भवामः ? तदवश्यं कर्तातीन्द्रियदर्शी स्वीक्रियमाणो नेश्वरादन्यो युक्तः। तदपि यत्किञ्चित्। न हि मांसचक्षुष्ट्वेऽपि सर्वसाधारणं करणसामर्थ्यम्, अस्मदत्यन्तमपकृष्टानमपि गृध्रादीनामिन्द्रियपाटवातिशयदर्शनात्। क्षोदिष्ठानामेव च केषाञ्चित् परमाणुदर्शनमपि स्यात् कर्मशक्तिविशेषात्, यथा पिपीलिकानामस्मदगोचरगन्धाणुग्रहणम्। न च तन्मात्रसूक्ष्ममीक्षमाणैर्देशकालविप्रकृष्टस्यापि सूक्ष्मान्तरस्य ग्रहणम्, सकलस्थूलस्य वा ? तन्न तावतैवेश्वरसिद्धिप्रत्याशा।

एवं तर्हि भवतु परमाणोर्दर्शनसम्भावना सकलक्षेत्रज्ञतत्समवेतधर्माधर्माशयविशेषाणां तु कथम् ? न कथञ्चित्। न हि कार्यक्रिया क्षेत्रज्ञस्वरूपादिपरिज्ञानेनापि व्याप्ता कुलालदृष्टान्ते दृष्टा, किं तु सम्प्रदानोपकरणवेदनद्वारेण तदाकृष्टिरिष्यते। सा चाशक्या, सामर्थ्यानुपपत्तेः, उक्तक्रमेणापि तन्मात्रवेदनस्य चरितार्थत्वात्। कर्मणि स्वस्याभिप्रेयमाणत्वेन सम्प्रदानताया दुर्वारत्वात्, यथा स्वस्मै मन्दिरं करोतीति। अन्यथा तेनैव व्यभिचारप्रसङ्गः सम्प्रदानज्ञानापेक्षायाः।

अनुमीयमानस्तत्रापरः सम्प्रदानवेदी भविष्यतीति चेत्– न, व्यभिचारदर्शनेन कर्तुः सम्प्रदानज्ञाननान्तरीयकत्वासिद्धेरनुमानवार्ताविरहात्। न चानुमीयमानापेक्षया तस्याकर्तृत्वम्। एवं हि कुलालस्याप्यकर्तृत्वप्रसङ्गे व्याप्तिग्रहविरहात् तदवस्थोऽनुमानानुदयः। तस्माद् यद् यदवश्यं सम्प्रदानज्ञानापेक्षं कर्तृत्वे, स्वात्मापि सम्प्रदानमेषितव्यः। न च परमपि सम्प्रदानं व्यवहारप्रसिद्धमुद्दिश्य क्षेत्रज्ञरूपमसौ ज्ञातुमीशः कर्माशयभेदार्थोपकरणशब्दसंगृहीतानपि। ततो यथा कुलालस्तानविद्वान् दण्डचक्रादिवेदनेनैवोपकरणज्ञः, तथानुमीयमाना अपि जन्तवः स्वकीयकरमुखादिज्ञानेनाप्यन्ते भविष्यन्ति।

तत् कुतस्त्यमेतत् क्षेत्रज्ञरूपतदीयधर्माधर्माशयभेदपरिज्ञानम् ? अथाशरीरस्य क स्वाङ्गव्यापारसङ्गतिः ? अशरीरस्य सिद्धिसङ्गतिरपि कीदृशी ? एकत्वे हि सिद्धे शरीरी प्रादेशिको न सर्वकर्मणि समर्थ इति सामर्थ्यादशरीरिसिद्धिप्रत्याशा, एकत्वं च दुःसाधमित्युक्तम्। न चाशरीरत्वेऽपि दण्डचक्रकरमुखाद्युपकरणानुपपत्तेः पारिशेष्यात् कर्माशयभेदज्ञानेनैवोपकरणज्ञाननिष्ठेति सौष्ठवाय। दिक्कालसमवायादेरप्युपकरणसंगृहीतस्य ज्ञानेन तज्ज्ञतामात्रस्य कृतार्थत्वात्।

कः पुनरसौ विशेषो यतस्तदवस्थस्य दिगादिज्ञानेनैवोपकरणज्ञता ? [33a] न धर्माधर्मादिज्ञानेनेति। उभयज्ञानेनैव भवत्विति चेत् ? तदयुक्तम्। नहि यावदुपकरणं

|| ईश्वरवादाधिकारे वार्तिकसप्तश्लोकीव्याख्यानम् ||

कर्मनिर्मितवैचित्र्यमनीशं यो जगज्जगौ ।
प्रणमामि प्रमाणेन तमव्याहतशासनम् ॥

नित्यप्रमाणप्रतिषेधसिद्धौ यदप्रमाणत्वमनित्यभावे ।
विभावयन्नाह कृती तदंशे विमोहदंशापह एष मार्गः ॥

स्वयं निरस्यापि परस्य साधनान्यसङ्गतौ वार्तिककारकीर्तने ।
न निर्वृतिश्चेत् पुनरस्य वर्णनाद् वरं हि तद्वर्णनयैव विक्रमः ॥

यद् यत् कार्यं तत् तद् बुद्धिमत्पूर्वकम्, यथा घटः । कार्यं च महीमहीधरादि ।
यद् वा, यद् यत् न बुद्धिमत्पूर्व[कं] तत् तन्न कार्यम्, यथा आकाशम् । कार्यं च तरुगिरिसागरादीत्यर्थतः कार्यहेतुः । एवमचेतनोपादानत्वम्, अर्थक्रियाकारित्वम्, स्वारम्भकावयवसन्निवेशनाविशेषवत्त्वम्, स्थित्वा स्थित्वा कार्यकर्माणि, प्रवृत्तिधर्मकत्वं च प्रयोज्यमिति कथमुच्यते,

अनित्येऽप्यप्रमाणतेति ?

एतच्च नित्यानित्ययोः साधारणमेव [33b] साधनम् । अनित्यताप्रक्रमणे तु परस्य प्रमाणपर्येषणा प्रवर्तेत । तदुपन्यासनिदानत्वमात्रेणानित्यशब्दानुवादः । न पुनः असावनित्य एव भगवान् अस्माभिरिष्यते । तथा हि,–

एको विभुः सर्वविदेकबुद्धिसमाश्रयः शाश्वत ईश्वराख्यः ।
प्रमाणमिष्टो जगतो विधाता स्वर्गापवर्गार्थिभिरर्थनीयः ॥

अत्रोच्यते । किमेभिरेव हेतुभिरुपदिष्टगुणगणागारपुरुषातिशयसाधनमनोरथोऽथ हेत्वन्तरबलात् ? तत्र न तावदाद्यः पक्षः । तथा हि यत् साधनं यावतोमर्थगतिं व्याप्नोति ततस्तावत्येव सिध्यति नार्थान्तरम् । न हि यावानिच्छया व्याप्तोऽर्थः, तावति प्रमाणस्य सामर्थ्यम् । अपि तु यावति प्रमाणस्य सामर्थ्यम्, तावतोऽर्थस्य तन्निमित्ता सिद्धिः । न च कार्यत्वादि चेतनपूर्वकत्वेन व्याप्यमानमपि तदेकत्वादिनियतां मतिमुत्पादयितुं शक्तम्, तद्विशेषणे व्याप्तेरेवाप्रतीतेः, अन्यथा विपरीतरूप-

तावत् कर्त्रावश्यं ज्ञेयमिति दृष्टम् । न च दिगादिज्ञानेनैवोपकरणवित्तिस्तदवस्थस्येति निश्चयं ब्रूमो यतो विशेषपर्यनुयोगः, किं तूपकरणान्तरसम्भवान्न पारिशेष्यविश्रान्तिः अत्रेत्युच्यते । ततो यथा परापरकर्तृपु दण्डचक्रादितुरीवेमाद्युपकरणविरहपरम्परायाम् अन्यान्यैरुपकरणैर्धर्मादिवाह्यैरुपकरणज्ञतास्थितिरुपलब्धा, तथा किमद्याप्यस्तु ? उत धर्मादीनादायैवेति सन्देह एव ? यदि पुनरन्यदुपकरणं न स्यात् पारिशेष्यव्याख्यानं शोभेत । अभ्युदयनिःश्रेयसमार्गादिसन्देहे च किं तादृशा तेन कर्तव्यमीश्वराभिधानेन धनविरहिणेव ?

तस्मादशरीरित्वेऽपि न धर्मादिज्ञानाकृष्टिः, किं पुनस्तदसिद्धौ ? मा भूदुपकरणतया धर्मादेर्वेदयिता नियमेन कार्यतया भविष्यति, यतः कर्ता कार्यरूपादिवेदकः स चेश्वर इत्यपि निःसारम् । दानहिंसादिकं हि कुर्वन्तस्तद् वेदयन्त एव स्वरूपमात्रेण, न तावता त एवेश्वराः । न चान्यः कार्त्स्न्येन तद्वेदी सिद्धः । धर्माधर्मत्वेन तु निश्चयः तत्कारिणोऽपि नावश्यम्भावी कुम्भकारवत् । तत्कारिणां तर्हि तत्त्वेन निश्चयाभावात् तत्त्वनिश्चयः कार्यत्वात् कर्तारमीश्वरमेव सन्निधापयेदित्यपि नास्ति । धर्माधर्मत्वनिश्चयोऽपि हि समीचीनः सन्दिग्धसत्ताक एव वर्तते । कथं ततः प्रत्याशा ? अनिरस्तविपर्ययाशङ्कसङ्कल्पस्वभावस्तु भूयसामागमद्वारेण । देवजातिस्मरादिस्वीकाराच्च तेषाम् अप्यस्ति लेशेन सम्यक्कर्मफलसम्बन्धबोधः । न च तावतैवैश्वर्यपर्याप्तिरिति ।

तदेवमीश्वरासिद्धेः सकलजन्मिनां शुभाशुभकर्माणि नोपकरणम्, किं तु कारणान्येव लोकवैचित्र्यस्येति धीमतामुपादेयः प्रथमश्लोकार्थ इति ॥

॥ ईश्वरदूषणं समाप्तमिति ॥



## ॥ वार्तिकसप्तश्लोकी ॥

स्थित्वा प्रवृत्तिसंस्थानविशेषार्थक्रियादिषु ।
इष्टसिद्धिरसिद्धिर्वा दृष्टान्ते संशयोऽथवा ॥१२॥

सिद्धं यादृगधिष्ठातृभावाभावानुवृत्तिमत् ।
सन्निवेशादि तद्युक्तं तस्माद् यदनुमीयते ॥१३॥

वस्तुभेदे प्रसिद्धस्य शब्दसाम्यादभेदिनः ।
न युक्तानुमितिः पाण्डुद्रव्यादिवद्धुताशने ॥१४॥

अन्यथा कुम्भकारेण मृद्विकारस्य कस्यचित् ।
घटादेः करणात् सिध्येद् वल्मीकस्यापि तत्कृतिः ॥१५॥

साध्येनानुगमात् कार्ये सामान्येनापि साधने ।
सम्बन्धिभेदाद् भेदोक्तिदोषः कार्यसमो मतः ॥१६॥

जात्यन्तरे प्रसिद्धस्य शब्दसामान्यदर्शनात् ।
न युक्तं साधनं गोत्वाद् वागादीनां विषाणवत् ॥१७॥

विवक्षापरतन्त्रत्वान्न शब्दाः सन्ति कुत्र वा ।
तद्भावादर्थसिद्धौ तु सर्वं सर्वस्य सिध्यति ॥१८॥

प्रमाणवार्तिके प्रथमेऽध्याये ।



निश्चयस्यापि प्रसङ्गात्। न हि दहनसामान्येन व्याप्तं धूममुपलभ्य कश्चिद् विस्फुरत्पद्म-वर्णशिखाकलापकमनीयमनलमनुमातुमीशः।

ननु तथापि देशकालविशेषविशेषणमनुमिमीत एव पक्षधर्मताबलात्, एवं भूधरादावपि बुद्धिमदधिष्ठानाधीनं कार्यत्वमुपलब्धवतोऽभिमतसिद्धिरधिकरणसिद्धान्त-न्यायेन भविष्यतीति चेत्- न, सामर्थ्यानुपपत्तेः। यथा ह्यतद्देशकालेन वह्निना जन्यमानस्य न तद्देशकालत्वमिति धूमाद्यनुमाने सामर्थ्यम्, न तथा चेतयितुरेकत्व-सर्वज्ञत्वादिकमन्तरेण तरूणां वासनिवेशाद्यनुपपत्तिमाकलयामः। ततः पक्षधर्मता-बलात् कुलालादौ तदुत्पादनसमर्थत्वसिद्धिरपि भवन्ती नाभिमतं विशेषमवलम्बितुम् अलम्।

ननु यदि भूधरादिनिर्माणसमर्थः सिद्धः, किमपरं प्रार्थ्यते ? तत् किमिदानीम् अपरिनिष्ठितवाच्यरूपेण वाचकमात्रेण परितुष्टिः ? न ह्येवमभिमतप्रस्तुतवस्तुसिद्धिः। उत्पादनव्यापारो हि नोत्पित्सुकार्यं प्रति नियतप्राग्भावित्वमात्रादतिरिक्तः। स चाचेतन-साधारणो बुद्धेरपि नैकसर्वगत्वादिविशेषप्रतिबद्धः सिद्धः। ततो विवक्षितसाध्या-पेक्षया वचनमात्रसिद्ध्या न किञ्चित्।

कः पुनरेवं प्रतिजानाति सर्वज्ञपूर्वकाः पर्वतादय इति ? अपि तु बुद्धिमद्धेतुका इत्याशङ्क्य साधनेनान्तरुपहसन्नाह,

स्थित्वा प्रवृत्तिसंस्थानविशेषार्थक्रियादिषु।
इष्टसिद्धिरिति।

साधारणासाधारणकर्मनिर्मितो हि समस्तो वस्तुराशिरिष्यते। कर्म चाचेतन-स्वभावमिति सकलज्ञानहेतवोऽसिध्यन्तः सिन्धुभूधरादयः किमनिष्टमस्माकमावहन्तीति भावः। तन्मात्रसाध्याभिप्राये च विरोधासिद्धेः साधनोपन्यासवैयर्थ्यप्रसङ्गः। तस्मात् उपात्तविशेष एवानेन [34a] साध्यः। न च तत्र साधनसामर्थ्यमित्युक्तम्। अस्तु तर्हि साधनान्तरादेव तथा सिद्धिरिति द्वितीयपक्षापेक्षया निश्चयाभावमुद्भावयन्नाह,

असिद्धिर्वेति।

न प्रमाणान्तरं न वा हेत्वन्तरमस्ति यतोऽयं निश्चयः स्यादित्यर्थः। अथवा, अतीन्द्रियत्वेनाध्यक्षासंभवादनुमानमभ्यर्थनीयम्, तदर्थं च सर्वं हेतुमधिकृत्याह,

असिद्धिर्वेति ।

उक्तानुमानतो हि प्रतिवादिसाधारणसर्वज्ञचेतनमात्रे सिद्धेऽपि विशेषशंसी न कश्चिद्धेतुर्यो न स्वरूपासिद्धोऽन्यत्र सत्तायाः, तन्मात्रसत्तातिरेकिणि धर्मेऽनुमानस्यानवसरात् । सत्ता तु क्षणभङ्गसंशिनीति नित्यैकत्वापेक्षया आह,

असिद्धिर्वेति ।

विपरीतसिद्धिरित्यर्थः । अधर्मादिवत् पर्युदासेन नित्येऽपि हि परसाधनवद् दूषणस्याभिमतत्वात्, प्रस्तावमात्रफलत्वादनित्योक्तेः । व्यापित्वापेक्षया अनेकान्तमप्याह,

असिद्धिर्वा दृष्टान्त इति ।

व्याप्तित्वस्य परमार्थतोऽभावादेव दृष्टान्ते दर्शनाभावान्न तेन कस्यचिद् धर्मस्य व्याप्ति[:] सिध्यतीत्युक्तं भवति । सर्वबोधस्य तु भावेऽपि न व्यापकत्वप्रतीतिः । कुत इत्याह,

दृष्टान्ते संशयोऽथवा

इति, अर्वाग्दर्शनेन विशेषनिष्टतया वस्तुतो निश्चेतुमशक्यत्वात् । तस्मादुपगीतगुणस्य यथोक्तसाधनेभ्यो न साक्षान्नाधिकरणसिद्धान्तन्यायेन, नापि साधनान्तरात् सिद्धिः इति सिद्धः साधकप्रमाणविरहः । तद्विशेषविरहिणि त्विष्टसिद्धिरिति ॥

अथवा कार्यत्वादिहेतुपून्यस्तेषु साध्यसामान्यविशेषभावेन विकल्प इति सिद्धिरसिद्धिर्वेत्याह । तत्र कर्मवादिताप्रसिद्धया सिद्धसाधनं व्यक्तमित्यसिद्धिनिबन्धनं विशेषेऽनुगमाभावमादर्शयन्नाह,

असिद्धिर्वा दृष्टान्ते संशयोऽथवा

इति, साध्यस्येति प्रकृतम् । तत्र विभुत्वादिप्रत्यनीकधर्मणः कुलालादेरविवादेन सिद्धेः असिद्धिरिष्टस्य दृष्टान्ते । अथ देहातिरिक्तभागस्यानिसर्गदुर्विभावस्य वैभवादिकमिष्टम् इति मतिस्तथापि संशयोऽस्तु, किमिदानीमत्र निर्बन्धेनेति भावः ।

सामान्ये सिद्धसाध्यतेति,

तस्मात् साध्यविकलात्सन्दिग्धसाध्यधर्मत्वाद् वा न दृष्टान्ते साध्येन कार्यत्वादेर्व्याप्तिरिति विशेषस्यासिद्धे रेव, अनेकान्तस्तु हेतुदोषः ।

ननु धूमानुगमेऽपि,

विशेषेऽनुगमाभावः सामान्ये सिद्धसाध्यता ।

[ ]

इति समानो न्यायः, तदनयोर्नैकनियतं प्रामाण्यमन्यद् वेति । नियतं चेत् ? न समीचीनमालोचितम् । तथा हि न तावद्विशेषसिद्धिमवधूय प्रामाण्यमनुमानमनुभवतीति सिद्धम् । स तु विशेषः पक्षायोगव्यवच्छेदमात्रलक्षणस्तदतिरिक्तश्च संभवति, यथा अग्निरत्र धूमात्, एवंरूपो वा ? तत्र प्रथमापह्नवे स्यादनुमानस्यापलापः, तन्मूलत्वाद् अतिरिक्तसिद्धेरपि। न चासौ तथान्वयानुसरणमन्तरेणापि निरसितुं शक्यः। पक्षधर्मो हि यत्प्रतिबद्धः सिद्धः स तेन धर्मिणमवियुक्तमनादर्शयन् स्वरूपसत्तयैव [34b] वियुज्येत, यदि परं कार्यहेत्वधिकारेण कालाद्यपेक्षातिरिच्यते । द्वितीयसिद्धिस्तु तन्मात्रसाध्येति तज्जन्यविशेषग्रहणनान्तरीयकतयान्वयानुसरणमन्तरेणाभवन्त्यपि नानुमानापलापाय प्रभवति, तद्विशेषविरहिणा धर्मेणायोगव्यवच्छेदसिद्ध्यापि तस्याश्चरितार्थत्वात्। अनुमानविशेषापलापस्तु स्यात्, यथा कश्चित् पञ्चवर्णशिखं शिखिनमनुमातुमभिप्रेत्य वह्निरत्र धूमादिति साधने परेण सिद्धसाधनाननुगमाभ्याम् अभियुज्यमानस्तर्हि धूममात्रोच्छेदेनेह चानुमानमपि न स्यादिति ब्रुवाणः शोभेत। न त्वनुमानोच्छेद एव स्यात्, तदैव दहनसामान्यानुमानस्य तेन प्रमाणीक्रियमाणत्वात्। तस्मात्,

पक्षायोगव्यवच्छेदमात्रभेदेन दूषणम् ।
इष्टसिद्ध्यन्वयाभावावतिरिक्तेषु दूषणम् ॥

नैतौ दूषणत्वेऽदूषणत्वे वा नियतौ, विषयभेदेन तु द्वयी स्थितिरिति मतम्। तद्वदिहापि जलधिभूधरादौ बुद्धिमदधिष्ठानायोगव्यवच्छेदमङ्गीकृत्य विवक्षितविशेषान्तरापेक्षया तौ दूषणमुद्भावयतश्चित्रकान्तिशिखानुमानोच्छेद एव प्रसञ्जयितुमाञ्जसः नानुमानोच्छेदः । ततोऽनुमानविशेषापेक्षया नैकनियतं प्रामाण्यमप्रामाण्यं वेति युक्तं न सामान्येन ।

ननु चाद्यापि भेदोऽन्वयमनपेक्ष्यैव सिद्ध इति भेदान्तरे कः प्रतिरोधः ? न वै निरन्वया कापि सिद्धिरस्ति। सामान्यान्वय एव तु तं विशेषमनाकृष्य नावस्थातुं शक्तः। न चैवं विशेषान्तरेऽपि तस्यावश्यं शक्तिरिति शक्यम्, यथोपवर्णितं प्राक्, अन्यथा पञ्चवर्णशिखाद्यनुमानस्य दुर्निवारत्वात्। अत्रासंभवादिक्षेपणमेकचित्तत्वादिमति पुरुषेऽपि समानम्। तादृगनुमानोद्धारस्तत्रापि समानः। तस्मादतिरेकविशेषशंसिनावश्यमनेनान्वयः प्रदर्शनीय इति तदभावादनेकान्त एव। बुद्धिमन्मात्रसाधने च सिद्धसाधनमिति स्थितम्॥

स्यादेतत्। बुद्धिमानिति न चैतन्यमात्रवान्, अपि तूपादानाद्यभिज्ञः प्रयत्नवान् वाभिमतः, तेन चान्वयो घटादिकार्ये सिद्ध इति भूधरादावपि कार्यत्वमुपलभ्यमानं तादृशमेव कर्तारमुपस्थापयतीति नो[क्तो]भयदोषः। तथा हि तदुपादानाद्यभिज्ञ इत्येव सर्वज्ञः, देशकालनियतश्च, न तद्भेद उपादीयमानकार्यग्रामनिवर्तनसमर्थः स्यात् इति नित्यत्वविभुत्वादयोऽपि तद्धर्माः सिद्धा इति चेत्? सेयं छिन्नमूलविटपस्य फलभोगप्रत्याशा। एकत्वे हि सिद्धे सिद्धिरेषां गुणानाम्, अन्यथा भिन्नदेशकालस्य कार्यस्यानेककृतौ संभाव्यमानायां कस्य वैभवादयः, स्वस्वव्यापारविषयमात्रवेदनाच्च कस्य सार्वज्ञमिति ?

एकत्वे सिद्धे [35a] साध्यमशेषमाकृष्येत, न च तन्निश्चये किञ्चिन्निबन्धनम् अस्ति। न च क्षित्यादिनिर्माणसमर्थः सिद्ध इत्येकवचनप्रयोगपतनात् तत्सिद्धिः, प्रतिबन्धाभावात्। प्रतिबन्धे वा सिद्धैकत्वः परः कथमेनमुपेक्षेत ? जात्यपेक्षया तु स्यादपीति न निर्बन्धः, अपरापरधूमप्रमितस्येव वह्नेः। न च विचित्रेऽपि चित्रकर्मणि सजातीयरेखाद्यनुगमादेककर्तृसिद्धिवत् कार्यभेदेषु गुणविशेषानुगमात् तदेकत्वसिद्धिः, तथाविधस्य कस्यचिदनुगतस्यैवानुपलब्धेः। उपलभ्यमानं च कार्यत्ववस्तुत्वादि नैकत्वसाधनं चित्रवदेव। गुणान्तरसंभवेऽपि हि सदृश एको वा कर्तेति सन्देह एव किं पुनस्तदभावेऽप्येकनिश्चयः ? नियतमिदमभित्तिचित्रकर्मैव, यदभेदानिश्चये सर्वज्ञत्वादि व्यवसीयत इति।

इतरस्त्वाह एकत्वमपि कार्योत्पत्त्यैवावगन्तव्यम्। कथम् ? बहूनां व्याहतमनसां स्वातन्त्र्येण परस्परविरोधेन मिथः स्वानुकूलाभिप्रायानवबोधेन युगपत् कार्यानु[त्]पत्तिः, उत्पन्नस्य विलोपनादिप्रसङ्गश्च स्यादिति।

अत्र चिन्त्यते बहुभिः करणे युगपत् कार्यानुत्पत्तिरिति भिन्नकालानां भिन्नदेशानां कार्यानुत्पत्तिर्विवक्षिता, एकस्यैव वा महावयविनः क्षितिधरादिरूपस्येति पक्षः। तत्र नैकत्राप्यनेकेन करणे उत्पत्तिविरोधं पश्यामः। यथा ह्येकस्य प्रवृत्तिस्तथान्येषामपि स्याद् वल्मीकवत्। किं प्रयोजनमभिसन्धाय तेषां प्रवृत्तिरिति चेत्– न, विचित्रवृत्तित्वान्मनसां प्रवृत्तिनिबन्धनस्य विशेषनिश्चायनाशक्तेः। अन्यथेश्वरस्यैव किमभिप्रेत्येति चिन्तानिर्बन्धो निर्वोढुं न शक्यः। शक्यो वा अन्येषामभिप्रेतादिवाध्यतावधारणपटीयसाम्, न मृदुप्रकृतेरीश्वरस्य।

नापि बहूनां परस्परव्याहतिनियम उपपादयितुं शक्यः, वल्मीकौकसामेकारम्भदर्शनात्। पुरुषाणामहमहमिकया संभाव्यत एव तदिति चेत्? सद्विवेकिनो ह्येककार्यारम्भिणः सन्त्यपीति तथाविधैरपरैरप्यतिप्रचुरतरैरेकस्य क्रमेण स्थवीयसः करणे संभविनि कोऽस्माकं नरेष्वनुरोधः? नापि युगन्धरादेर्युगपन्निष्पत्तिः केनचिदुपलब्धा, यत एकस्यैव कस्यचिच्छक्तिः संभाव्यते। न चाहमहमिकया पुरुषेष्वपि व्याघातनियमः शक्यनिर्वाहः, परस्पराव्याघातेन पुरुषस्य विरोधद्वयस्यानुपपत्तेः। तस्मात् संभावनामात्रमेतत्, न प्रमाणवर्त्म इत्युपन्यासमर्हति, नानेकेनैकमनाकादेः करणमिति समयमात्रानुस्मृतिर्वा।

नन्वनेकत्रापि प्रधानभूतेनैकेन भाव्यं बलीयसा सूत्रधारवत्, सेनानीवद्' वा, अतस्तस्यैव कर्तृत्वमितरेषां तदनुवर्तित्वादिति चेत्– [35b] न, तत्रापि नियमाभावात्, स्वस्वप्रयोजनानुरोधेन स्वतन्त्राणामपि केषाञ्चिदेकसेत्वादिघटनादर्शनात्। तत्रापि कश्चिदेव प्रधानः प्रयोजक इत्यपि नास्ति, अनेकस्य तथा हृदयोत्कलिकाया निवारकाभावात्, अप्रधानस्यापि वा प्रयोजकत्वसंभवात्। न तावतैव प्राधान्यं, लोकविरोधात्। किं च सूत्रधारस्थानीयापरिमितैकैकजनसनाथैः सार्थैरपरिमितैरेव खण्डशः स्थूलारम्भसंभवेऽपि का नाम कामसिद्धिः? एतेन वल्मीकजन्तुषु मुख्योपन्यासः प्रत्युक्तः।

अपि च यथैकहृदयानुवर्तिभिरनेकैरभिनिर्मीयमानस्य प्रासादस्य सुखोपधानावयवसन्निवेशविशेष उपलभ्यते, न तथा विसंस्थूलस्थूलशिलाजालकलितेषु कुलगिरिष्वपि, येन तथैवैकप्रधानभूतपुरुषपूर्वकत्वमेषामपि स्यात्। तस्मादेकैककैलासादिसम्पादने बाधितुमशक्योऽनेकव्यापारः कथमपरदूरान्तरानेकदेशकालकलितेषु भावेषु बाध्यः?

आगमादेकत्वसिद्धिस्तर्हि इति चेत् ? सोऽयं सन्निपातापन्नस्य सर्षपै रक्षाबन्धविधिरबाधक एव बौद्धानधिकृत्यागमविचारैकचतुरचेतसः। यदि हि परीक्षागमग्रहः तदायमेव परीक्षाकाल इति कस्तदनुरोधोऽधुनैव ? अथ परीक्षानपेक्षः, तदापि तत एवाभिमतसमस्तवस्तुसिद्धिरस्तु, किमनुमानोपन्यासव्यसनेन प्रयासैकसारेण ? कष्टो हि हेतुशोधनव्यवसायः सूक्ष्मप्रतिवेधविधुरबुद्धीनाम्, सुकरस्तु शास्त्रैकदेशपाठेनाभिमतलाभः।

यदप्य[य]मेव वादी प्रामाण्यमागमानां समर्थयन् न ह्यप्रमाणत्वे समस्ताश्रमिणां संवादो नाम, तस्याप्रमाणत्वे कस्यचिदप्रामाण्यबोधेन विसंवादस्यापि संभाव्यत्वात्, संवादनियमस्य च प्रमाणेष्वेव प्रत्यक्षादिषूपपत्तेरिति नाप्रमाणानि ऋग्यजुः सामानि, समस्ताश्रमिणां संवादिज्ञानसाधनत्वात् प्रत्यक्षादिवदित्यादि पञ्चालकं पठति, तदपि शिष्यसमिताववो[प]युज्यते। तथा हि संवादो नाम प्रमाणान्तरसङ्गतिरर्थक्रिया वा स्यात्, न च तदुभयमपि,

सहस्रशीर्षा पुरुषः
[ऋ. वे. १०. ९०. १]

स वेत्ति विश्वं न च तस्य वेत्ता
[तुल° श्वेता° उप° ३.१९]

द्यावाभूमिं जनयन् देव एक आसीत्
[तुल° सैव ३. ३]

इत्यादिवाक्यार्थेषु स्वर्गसाधनाग्निष्टोमादौ वा कस्यचित् संभवति।

आश्रमिणस्तावद् यथैकस्य एको विभुः शाश्वतः स्रष्टा जगतोऽस्तीति मतिः, तथान्यस्यापि। तदनुरूपानुष्ठानं चेति चेत् ? सा पुनरेषां मतिस्तदेकागमप्रभवा, तादृगन्यप्रभवा वा, आकस्मिकविकल्पमात्ररूपा वा स्यात्, न तु प्रत्यक्षानुमानरूपा, अनाश्रमिणामप्यवकाशप्रसङ्गात्, प्रत्यक्षादेः पुरुषान्तरैः [36a] अनपराधात्। आगमाश्रयं तु ज्ञानमश्रुतवतोऽनादृतवतो न स्यात्, भवान्तराभ्यासवासनावशाद् वा संभवेत् नान्यस्येति युक्तम्। तत्रेदं स्वतन्त्रतया न प्रमाणम्, सत्यसति वा वस्तुनि संभविनः अभ्यासात् प्रसूतेः। तदागमप्रभवत्वेन प्रमाणान्तरसङ्गतिरुक्ता भवति, तादृक्प्रभवत्वात्, तस्याप्यप्रामाण्यात्। तदसिद्धं यदसिद्धेन साध्यत इति न्यायः। तस्मात्

तादृक्समयानुस्मरणमात्रमेवदेवम्भूतः कश्चिदस्तीति । किं च, आश्रम इत्यपि दर्शनमात्रं विघ्नः, ततश्च समस्ताश्रमिणामिति विशेषणासिद्धिः, बौद्धदिगम्बरादेः संवादासिद्धेः । कतिपयसंवादश्च विपरीतमतेऽप्यस्तीति नोपन्यासः सफलः । अतएव विसंवादस्यात्यन्तनिवृत्तिरसिद्धा, यतः प्रामाण्यमवतिष्ठेत । अभिमतमाश्रमिणां त्वनादिकालप्रवृत्तसमानसंमोहसामर्थ्यादपि स्यादिति । यत्किञ्चिदेवत् ।

तस्मादेकत्रापि मन्दरादावपरिमितपुरुषव्यापारविषयभागोपादानादिवेदिनां प्रयत्नवतां कतमः सर्ववेदी ? भिन्नदेशकालैश्च तादृशां करणे कुतो नित्यविभुत्वादयः ? न चादृष्टभागज्ञानावकाशः, तदन्तरेणापि कुम्भकारेण स्वव्यापारविषयस्य निष्पादनोपलब्धेः । न च बहुभिरुत्पादितस्यावश्यं विलोपनादिप्रसंगे संगतिः काचिदिति एकत्वापायेऽनुमतत्वमनिवार्यं सर्वज्ञत्वादीनामनुमतमिति । एवं च सति, एतदप्यनिबन्धनमेव, यदाह–तेषां बहुत्वे सर्वज्ञत्वे सति सर्वकर्तृकत्वात् तद्देशकालप्रतिनियतेषु कार्येषु प्रवृत्तौ यौगपद्यप्रमाणाभावादिति, सर्वज्ञानक्रिययोरेकाधारासिद्धेः । अतएवैकनिराकरणे बहुतराद्यपगमप्रसङ्गोऽपि न बाधकः । यदि हि सर्वज्ञाः सर्वकर्तारश्च बहवः सिद्ध्येयुरेकनिराकरणमेवानुपयोगि स्यात्, बहुतरप्रयासश्चाभ्युपगतो भवति । यदा पुनरनेकमेकैकजनकं वल्मीकजन्तुवज्जन्तुजातमासज्यते प्रकृतगुणासंस्पर्शि, तदा का नाम हानिः ? न हि तदा त एव,

स्वर्गापवर्गार्थिभिरर्थनीयाः

भवेयुरिति,

एतेन योऽपि मन्यते, भवदीयसर्वज्ञवदीश्वरोऽप्यनेक एव भविष्यतीति, तदपि अनवकाशम्, सर्वक्रियाधिकरणस्यैकस्याप्यसिद्धेः । अस्माकं तु न सर्वक्रियया सर्वबोधसिद्धिः, किं त्वभ्यासात् । स च सकलसाक्षात्कर्तव्याकारविकल्पसंभवात् संभवानुमानमन्वेतीति तादृक्सार्वज्ञ्यसिद्धिर्यथैकस्य तथान्यस्यापि स्यादिष्यते वा इत्यदोषः ।

अभ्यासादेव तर्हि सर्वनिर्माणमपि भविष्यतीति चेत्– न, अशक्यत्वात् । तथा हि, स्थावरजीवजननं जङ्गमापत्तिर्वा नाभ्यासफलम् । परिशिष्टप्रतिकृतिनिर्माणकल्पनायामपि [36b] कश्चिदेवमपि स्यादिति स्यात् । न तु इदमेव परिदृश्यमानं भवतु वनादिकं न तयेति निश्चयः, विशेषोद्देशेन संभवानुमानस्याप्रवृत्तेः । तत्रापि दुर्लभ-

बाह्योपकरणसंभवातिशयपराधीनो न चित्तमात्रपराधृत्तिवत् सुकरस्तदभ्यास इति अध्यवसायः।

प्रभावातिशयसहायापेक्षायां किं शिल्पेन ? न तदन्तरेण तस्य शक्तिरिति अप्रमाणकम्, तथैवान्यत्र दर्शनादिति चेत्– न, दृष्टक्रमेण गर्भस्थशरीरादिनिर्माणप्राप्तेः। तदवश्यं प्रभावेतरः। न च तादृक्प्रभावाधिगतये मार्गस्य कश्चिन्निश्चयः। अस्तु वा व्यापिशिल्पसिद्धिरादिशब्दसंग्राह्यश्चाभ्यासः। तथाप्याह, सन्निवेशादिषु हेतुषु इष्टस्याकर्तृत्वस्य सिद्धिरसिद्धिर्वा, असिद्धिरेव, उपयोगाभावात्।

न हि नरकादिना तावत् कश्चिदुपयोगः संविक्त्यानुष्ठातुः सुखोपकरणमात्रसृष्टावपि नार्थः। श्रमेण स्वश्रेयसः संभवे हि तान्यन्यथा भवन्ति, भूतानि वा सुखम् आधास्यन्ति। यदि परं तन्मार्गमविदुषां तदुपदेश एवानुग्रहकरः, अतस्तदर्थं मार्गसाक्षात्करणाभ्यास एव श्रेयानिति वैयर्थ्यानध्यवसायाभ्यां नाभ्यासः। तर्हि प्रतिपरमाणु ज्ञानाभ्यासेऽपि कथं तद्वद् वा सर्वकरणेऽपि न क्षतिरित्याह सर्वसर्वविदि,

दृष्टान्ते संशयोऽथवा

इति, उपयुक्तसर्वज्ञपक्षस्य मुख्यतया वक्ष्यमाणत्वात्। अथवा वैयर्थ्यानध्यवसाययोस्तत्र संशयो नाभावनिश्चय इत्यर्थः। उद्देशश्चान्यत्रोपदर्शनमिति न परेण सह साम्यम्। ततः प्रकृतहेतुभ्यः प्रयत्नवतां सिद्धावपि न क्षतिरिति।

ननु प्रयत्नवशा जन्तुजातेन जनिता गन्धमादनादय इति भवतामनिष्टमेव, ततः प्रकारान्तराभावेनानेकतो निवर्तमानः प्रयत्नवानेक एव सकलकार्यकर्ता सिध्यन् सर्वज्ञत्वादिकमपि प्रत्युज्जीवयतीति चेत् ? नैतदस्ति, वस्तुप्रतिबन्धानुपपत्तेरिच्छायाः, ततः कृताया अनेकतो निवृत्तेरसाधनत्वात्। यदि च कथञ्चिदसौ न स्वीकुरुते, स्वीकारयितुं तर्हि चरणमर्दनादिनाराधनीयः प्रतिवादीति,

नायं न्यायः स्वतन्त्रस्य प्रसङ्गोऽपि न सङ्गतः।
प्रसङ्गैक्यमपायेऽस्य न ह्यनेकत्वमीहितम् ॥

विपर्ययपर्यवसायिव्यापारत्वात् तस्येति।

ननूभयथापि तावत् परस्यानिष्टमेव, न हि सत्त्वलोकः सकलोऽपि प्रयत्नद्वारेण कारणमिष्यते, अपि तु चेतनालक्षणकर्माधिपत्यमात्रेण, ततः प्रयत्नयन्नान्तरीयकं

कार्यत्वमेकमनेकं वा प्रयत्नवन्तमन्तिके दधानं साधनमनिष्टस्यैवेति चेत्? तत् किमिदानीं परानिष्टमात्रसिद्धये साधनमुपन्यस्तम्, किं नु स्वसाध्यसिद्धये? तत्र च परेष्टसिद्धिरसिद्धिर्वात्मन इति न [37a] किञ्चित् साधनोपन्यासफलमिति वक्तुमाह,

स्थित्या प्रवृत्त्यादिषु, इष्टसिद्धिरसिद्धिर्वा

इति। समानमिदमुभयसाधनाङ्गवचनत्वनिबन्धनमानर्थक्यादिति भावः। न च पर एव साधनवादी, यतोऽस्य द्विधानिष्टमापाद्यमानं शोभेत। अनिष्टमप्यस्य प्रकरणापन्नं नित्यैकसर्वज्ञत्वे तत्त्वमेव विश्वस्यापादयितुमारब्धं न यत्किञ्चिदिति। एवं तर्हि साधनोपन्यासेऽपि किमसिद्धिनिबन्धनमिति वक्तव्यम्।

यत्पुनरुक्तम्,

विशेषेऽनुगमाभावः

[ ]

इति, तत्र यद्यपि सर्वगसर्वज्ञत्वादिभिरन्वयेऽसिद्धिसंशयौ यथायोगम्, तथाप्येकत्वेन मा भूताम्, तदेकप्रयत्नवत् कर्तृसिद्धौ सिद्धमशेषं साध्यम्। दृष्टश्च कुलाल एकोऽनेकघटपिठरादिकारक इत्याशङ्क्य एकत्वेऽप्यन्वयमापादयन्नाह,

दृष्टान्ते

इति। असिद्धिरिति वर्तते। अयमभिप्रायः। न प्रकृतमेव घटपिठरादिकार्यमेकेन कृतमिति सर्वस्य तथाभावः। तत्रानेककुलालादिव्यापारः स्फुटमवधार्यते। तत् कुत एकेन यत्नवता दृष्टकार्याणामन्वय इति? अथवा कुलालो नामैकः कश्चिदस्ति भूतभौतिकसंवित्तिराशिरयं कुम्भकारादिप्रज्ञप्तिविषयः, करचरणसमुदायो वेति। वस्तुतः केनैकेन करणं कुम्भादेरुपलम्भगोचर इत्यर्थः।

अथ किमनेन निर्बन्धेन? यादृश एव कश्चिदेकव्यहारगोचरो दृष्टः, तादृशः संहतस्वभाव एवैकः कर्ता सर्वस्योपादानाद्यभिज्ञः सिध्यन् सर्वज्ञ एव सिध्यति। ततो गुणान्तरतिरस्कारेऽपि तावतैवोपादेयत्वमुभयपुरुषार्थशंसितिरस्योपपद्यत इति न काचित् क्षतिरिति, अत्रापि पक्षे तेनैव सर्वेऽमी कार्यत्वादिहेतवो व्यभिचारिण इति व्यक्तमनैकान्तिकत्वमभिप्रेत्याह,

संशयोऽथवा

इति। साध्यस्येति शेषः। कुलालवत् संघातमात्रतया कार्यत्वसन्निवेशादिभावेऽपि प्रयत्नवत्कर्तृपूर्वकत्वस्याभावात्, एतदभावेऽपि वा तस्य भावात्। तत्राप्यन्यत्कारकेष्टौ वा अनवस्थानादप्रतिपत्तिः।

ननु चाचेतनस्वभावः स्वयमुत्पत्तौ परं चोत्पादयितुं प्रयत्नवन्तमपेक्षते। स तु स्वयमेव तथाविधबुद्ध्याधार इति किमपरेण? न हि जडा घटादयः प्रकाशमपेक्षन्त इति प्रकाशेनाप्यपरः प्रकाशोऽपेक्षितव्य इत्यस्ति नियमः। ततः केयमनवस्थेति?

एवं तर्हि कुलालसंज्ञित एव प्रयत्नवान् बुद्धीन्द्रियादिकलापः कथमपरमपेक्षते? तस्माच्चेतनोऽचेतनो वा कलापः स्वभावेनैवापरचेतनमपेक्ष्य जायते जनयति वेत्युपगन्तव्यमित्यनवस्थैव। अथ चेतनवर्गश्चेतनान्तरनिरपेक्ष एवेष्यते, तदा घटादिवर्तिनः कार्यत्वादयोऽभिमतकारकाधिष्ठायकविपरीतनान्तरीयकाः सिध्यन्तो न विरोधदूषणपरिहारेण स्थितिमनुभवेयुः। तथाविधाधिष्ठानस्वीकारे तु स्वभावविप्रकर्षादनुपलब्धावपि तद्व्यापारसंभावनायां न [37b] तद्विपरीतदृष्टैकनान्तरीयकत्वमेषामिति विपर्ययव्याप्तेरभावादभावो विरुद्धव्यवहारस्य स्यात्। तदापि यदि कार्यकारणव्यवस्थानाय व्यतिरेकचिन्ताचतुरः कश्चिन्न प्रत्यवस्थानमाद्रियते, न चेदानीं तदारब्धमित्यास्तां तावत्,

तत् किमनेन निर्बन्धेन? निर्बन्धे वा विरोध्यध्यक्षस्थूलदोषावतारप्रसङ्गात् तथाप्यसिद्धिर्वेति विपरीतसिद्धिर्योजयिष्यत इति सान्तर्गर्वो गजनिमीलितेनैव वाऽवधीर्य यथैवानेन सर्वकार्योत्पत्तौ निमित्तकारणमीश्वरो गृहीतः, तथैनं संभाव्य चेतनस्यापि चेतनान्तरापेक्षायामनवस्थानभीरोस्तेनैवाव्यभिचारानाश्रित्य संशयमाह,– अथ प्रयत्नवानपि कुलालो न स्वशरीरे किं तु कुम्भादौ, ततः स्वशरीरसिद्धये किं न परमपेक्षेत? तर्हीश्वराभिमतोऽपि परकरणप्रयत्नवान् न स्वशरीर एव, स्वात्मनि कारित्रविरोधादिति किं न परमपेक्षेत? न चापेक्षते। ततो यदर्थकारि कार्यादि वा तत्प्रतियत्नवदधिष्ठितमिति तत्तेनैव व्यभिचारीति संशयसिद्धिः।

ननु तस्य शरीरमेव नास्तीति कुतोऽनेकान्त एषः? तदेतत् प्रकरणविस्मरणफलम्। तथा ह्यन्वयोपदर्शनसमीहया कुलाले सांवृतमेकत्वमङ्गीकृत्य तादृक्सांवृतैकपुरुषनिर्मेयत्वं जगतो भवतैव स्वीकृतमित्ययमस्माकमवकाशः। यदि तु वास्तवमेव

एकत्वं शरीरसहचारविरुद्धमनुरुध्यते, न तर्हि सांप्रतमेकत्वमुपनेतव्यं दृष्टान्ते व्यापकत्वेन कार्यादेः। नापि नाममात्रपरेण तेन व्याप्ता तत्त्वतस्तथासिद्धिप्रत्याशा फलवती। न खलु दहनोपचरितमाणवकप्रतिबद्धवचनविशेषादिकार्यमुपलभ्य पारमार्थिकं कश्चिद् दहनमनुमीमते।

अस्खलन्ती एकप्रतीतिः पुरुषावयविनीति चेत्? कः पुनरिह साक्षादुपचारत्वम् आह? अतस्मिंस्तद्व्यवहारस्तु द्वयोः समान इत्युच्यते। शरीरत्वेऽवयविबाधकात् एकाध्यवसायस्य भ्रमत्वमवसातव्यम्, सत्त्वेऽपि वावयविनः शरीरावयवी करावयवा बुद्धिरित्येष कलाप एकशब्दाभिधेयः, भूतादिकलापो वेत्यपारमार्थिकत्वं सिद्धम् अधिष्ठातुः।

स्यादेतत्। पुरुष एव तत्राधिष्ठाता, कर्ता वा, स च शरीरादिभ्यो लब्धव्यतिरेक एक एवेति चेत्?

संदृष्टकारणकलापकृतेऽपि कार्य-
 जन्मन्यदृष्टमपरं परिकल्प्यते यत्।
तत्रापि दृष्टमवधूय तदेव वच
 नानेक[मित्य]नवधिर्विविधो विमोहः॥

अदृष्टस्य तावद् भाव एव दुरवधारः सहजवैषम्यादत्रानुमानस्येत्युक्तम्। तस्यापि दृष्टानुपलम्भसचिवप्रत्यक्षसाध्यः कारणभावः। स च दृष्टव्यवच्छेदेन तस्यैव। अन्यथा करचरणादेरपि व्यापारसंभवे तस्याप्यनुमानप्रसङ्गे पुनः स एव व्यभिचारः। अन्यथा पुरुषस्याप्यनुमानमनिबन्धनं स्यात्। एतेन चैतन्यसन्तानस्यैकपुरुषत्वपरिकल्पनं प्रत्युक्तम्, अस्यापि करचरणादिसहकृतस्यैव '[38a] शक्तिप्रतीतेः, कार्यात् तत्त्वत एवानुमानप्रसङ्गो धूमादिव सेन्धनशिखिनः।

चैतन्यमात्रेण व्याप्तिर्गृह्यते नापरेणापीति चेत्- न, समानन्यायतया विभागस्य कर्तुमशक्यत्वादिति। तदयं बुद्धिशरीराव्यतिरेकिणः कारणतामन्ययोगव्यवच्छेदेनैव वक्तुमर्हति, यतस्तन्मात्रमनुमातुमप्रतिबन्धेन शक्नुयात, पारमार्थिकैकत्वेन च व्याप्तिं ग्रहीतुम्। तथा च सति दृष्टं दृष्टान्वयव्यतिरेकं कारकसमुदायमपहायान्यदेव कारणं कल्पितमित्ययमपरो धिक्कारः। तदपि यदि कथञ्चिदनेकं स्याद् विफलः सकलो

यत्र इत्येकमेव परिकल्पनीयमित्याकाशकमलपरिमलाकृष्टमधुकरकोलाहलप्रायमिदम् अखिलमाकलयामः।

तदलं देहादिव्यतिरिक्तोपक्षेपेण। तस्मात् प्रयत्नवतः कर्तुरेकत्वेन व्याप्तिर्न मुख्या, कर्तृवाच्यस्य कुलालादेस्तत्त्वत एकत्वानुपपत्तेः। सांवृताश्रये च तादृशस्यैवानुमानप्रसङ्गेन तेनैव व्यभिचारः कार्यत्वादेरिति संशयः साध्यस्येत्युक्तम्।

ननु तथापि तादृशः साध्यस्यासिद्धौ केन व्यभिचारः, सिद्धौ च व्यभिचारः किं करिष्यति? व्यभिचारादसिद्धिरेवेति चेत्? असिद्धौ तर्हि व्यभिचारोऽपि नास्तीति कुतोऽसिद्धिरिति सिद्धिरिति [वा] व्यवतिष्ठते? कार्यत्वादेश्च वस्तुधर्मस्य वस्तुसन्नेव धर्मी भवितुमर्हतीति न चोद्यम्, अभ्युपगमविरोधस्यानेन क्रमेण प्रतिपादयितुमारब्धत्वात् तत्त्वतः। अस्ति चासौ साध्यस्य साधनत्रैरूप्येण त्रिरूपसाधनस्य च यथाभिमतसाध्येन, तत्र साध्यसत्त्वे विपक्षव्यतिरेकस्यासत्त्वात्, स्वाभ्युपगमसिद्धतया प्रमाणसिद्धमिति साधारणानैकान्तिकमुच्यते,

तत्राभ्युपायः कार्याङ्गम्

[ ]

इति वचनात्। पराभ्युपगमः खलु न प्रमाणमिति युक्तम्, तद्बाधनायैव प्रवृत्तेः। अतएव न स्वतन्त्रहेतावस्याश्रयः। प्रसङ्गस्य च विपर्यय एव फलम्। स्वोपगमस्य त्वप्रमाणत्वे वचनोच्चारणमेव न स्यात्। स्वदृष्टार्थप्रकाशनं च वचनं परार्थानुमानात्। न चैवं स्वदृष्टरूपत्रयप्रकाशनमनेन कृतं भवतीति तद्वादिनोऽसाधनाङ्गवचनं निग्रहस्थानमुचितम्। परस्य तु दोषोद्भावनमेवेति स्थितम्। अथवा अन्वयघटनार्थमेवैकेन करणमुपनीतमाशङ्क्याह,

दृष्टान्ते संशयोऽथवा

[प्र. वा. १. १२]

इति। दृष्टान्तेऽसिद्धिरेव तावदेकेन करणस्य। सिद्धावपि वा सन्देह एव कस्य, यदर्थम् उपनीयते दृष्टान्तः? सर्वोपसंहारवत्या व्याप्तेरिति यावत्। तथा हि न दृष्टान्ते दृष्टम् इत्येव यस्य कस्यचिद् वस्तुनो व्याप्यव्यापकभावप्रतीतिः, अतिप्रसङ्गात्, अपि तु प्रतिबन्धसिद्धेः। न चेह किञ्चिन्निबन्धनमस्तीति साध्यधर्मिणि सिध्यन्तोऽपि कर्तृत्वादयो नैकत्वनियतमात्मानमातन्वन्तीति विपर्यये बाधकप्रमाणाभावात् प्रयत्नवत्कर्तृ-

नियता [38b] अपि कार्यत्वादय एककर्तृकत्वे साध्ये सन्दिग्धविपक्षव्यावृत्तिकतया संशयहेतव एवेति ।

तथा च शंकर एवाह, न कर्तुरेकत्वेनाचेतनोपादानत्वस्याव्यभिचार इत्यादि । यत् पुनराह, न चैवमचेतनोपादानत्वस्य प्रयत्नवदधिष्ठानमात्रेण व्यभिचार इति, न तन्मात्रेण प्रस्तुते कश्चिदुपयोगः । विवादाधारधर्मसिद्धेस्तत्सिद्धौ प्रतिबद्धत्वस्य पूर्वं प्रतिपादनादिति ।

॥ प्रथमः खण्डः ॥



तदेवं साध्यविशेषापेक्षया व्याप्तिदूषणमभिधाय प्रयत्नवन्मात्रेऽप्यभिधातुं वितर्कयन्नाह,

स्थित्वा प्रवृत्तिसंस्थानविशेषार्थक्रियादिषु ।
इष्टसिद्धिरसिद्धिर्वा दृष्टान्ते संशयोऽथवा ॥

इति । दृष्टोऽन्तो दृष्टान्तः सिद्धान्त इति योऽर्थः, प्रयत्नवन्मात्रेण व्याप्तेः सिद्धत्वात्, एकानेकरूपानतिक्रमाच्च वस्तुनः । स्थित्वा प्रवृत्त्यादिषूपन्यस्तेषु वादिन इष्टसिद्धिः किमस्तु एकत्वपक्षे, असिद्धिमात्रं वानेकत्वे, अथ व्याप्तिरेव नास्तीति सिद्धान्ते संशय एव उभयत्रापीति प्रश्नार्थः ।

अत्र चानन्तरमभेदसाधनाधिकारेण सन्दिग्धविपक्षव्यावृत्तिकत्वोद्भावनेन दत्तमेवोत्तरम् । अतस्तृतीय एव पक्षः । न हि प्रयत्नोपयोगमन्तरेणापि कार्यजन्मनि संभाव्यमाने बाधकं किञ्चिदालोचयामः । तत् कुतस्तत्र नियमः कार्यादेः ? अथ कालदेशाद्यनियमप्रसङ्गो बाधकः ? तदयुक्तम्, [यतः] प्रतिनियतशक्तेरसर्वकालभाविनः स्वकारणायत्तसन्निधेः कारणदशाविशेषस्य व्यतिरेकेऽपि व्यतिरेकः कार्यस्य संभवन्न प्रयत्नवन्नान्तरीयकत्वमुपकल्पयितुं कल्पते । सर्वथा हेत्वनपेक्षायां तद्बाधकमुपपद्यमानं कार्यस्य हेतुमात्रेण व्याप्तिं साधयेत् । न तु हेतुविशेषेण प्रयत्नवता ।

ननु कारणं नाम सर्वत्र कलाप एव, स च न व्यग्रावस्थायाम् । तत्संहतिश्च प्रयत्नवन्तमन्तरेण यदि स्यात्, नित्यमेव स्यात् । एवं देशेऽपि वाच्यम् । ततश्च स एव देशकालनियमप्रसङ्ग इति, चैतन्यनिरपेक्षत्वे कलापकार्यत्वस्य व्यापकस्याभावेन कार्यत्वादयोऽसंभवन्तः प्रयत्नवदपेक्षत्वेन व्याप्यन्त इति चेत् ? एवं तर्हि सोऽपि प्रयत्नवान् यदि क्षणिकः प्रादेशिकश्च तत्क्षणैकदेशत्वमेव सर्वकार्यग्रामस्य स्यादिति सनातन एवाङ्गीकर्तव्यो व्यापी च । ततश्च स एव देशकालानियमोऽव्यापि प्रसक्त इति किमस्योपगमेन ? अथ सोऽदृष्टमपेक्ष्य जनयन्नियतं जनयेत् ? जडानां तु नादृष्टं लोचनमिति ।

एवं तर्हि तददृष्टपरिपाकसहाया एव प्रत्यया नियतमुत्पादयिष्यन्ति निरालोचा अपीति किं चैतन्येनेति चेत् ? एवं ब्रुवतः कुलालादेरपि वैयर्थ्यप्रसङ्गः, न हि तत्रापि नादृष्टमस्ति सहकारि । न चैवम् । तस्माद् विपर्ययः । या या सामग्री सा नादृष्टापेक्षया पुरुषप्रयत्नं विफलयति । [39a] यथा सूत्रपिण्डदण्डचक्रादिः । सामग्री च

गिरिसागरादिजनिकेति विरुद्धव्याप्तोपलब्धिः। प्रयत्नविफलीकरणं हि तदनपेक्षत्वम् अम्बरादौ सिद्धं निषेध्यम्। तेन यद् विरुद्धं प्रयत्नापेक्षत्वं तद्व्याप्तं सामग्रीत्वम्, तस्या यत्नकार्यत्वात्।

अत्रोच्यते। यदि प्रयत्नकार्यं सामग्री सर्वोपसंहारेण सिध्येद्, युक्तमेतत्। न चैवम्, न हि तत्रापि विपर्यये बाधकं किञ्चिदस्ति। यथा हि कार्यं स्वकारणायत्त-सन्निधेः कारणावस्थाविशेषस्यापेक्षया असर्वकालभावि संभाव्यते, तथा सामग्र्यपि किं न स्यात्, यतो नित्यं भावप्रसङ्गश्चोद्येत ? ततश्चानिवर्तितविपक्षवृत्तिशंका सामग्री यदि प्रयत्नापेक्षां नियच्छेत्, साक्षात्कार्यत्वादिभिरेव कीदृशोऽपराधः कृतः, येन तदुपन्यासे संशयितस्य सामग्री शरणमुपक्षिप्यते ?

मृदादयः पुरुषादेव मिलन्तो दृष्टा इति चेत् ? कार्यमपि प्रयत्नवत एव जाय-मानमुपलब्धमिति किं नोच्यते ? यथा च यद्यपि किमपि कार्यं प्रयत्नवतो दृष्टम्, तथापि कार्यान्तरं तिरस्कृत्यापि बुद्धिमन्तं भविष्यतीति शङ्का, तथा सामग्र्यपि संभाव्यमाना कमर्थं पुष्णाति ? ततोऽनुक्तसममेतत्। तस्मात् सामग्रीमपि मध्ये प्रक्षिप्य कुम्भादिषु सामग्र्यास्तथा दर्शनमेव प्रमाणयितव्यम्। तथा च सति कार्यमेव प्रत्यक्षानुपलम्भैः प्रयत्नवन्नान्तरीयकं सिद्धमित्येव साधु। किमत्र व्याप्तिसिद्धये विपर्यये बाधकप्रमाणोपन्यासशौटीर्येण ? अथ वक्ष्यमाणक्रमेण प्रत्यक्षानुपलम्भा जातिविशेष-मेव विषयीकर्तुं शक्नुयुरिति न कार्यमात्रं प्रयत्नवता व्याप्तं सिध्येत् ? तदर्थं विपर्यय-बाधाश्रयणम्, एवं तर्हि सामग्र्या अपि प्रयत्नवत्कार्यत्वे त एव प्रत्यक्षानुपलम्भाः शरणमिति एवंविधा संहतिः प्रयत्नवता क्रियत इति युक्तः सर्वोपसंहारः। तथा च,

न व्यग्रादुदयः क्वचिन्न च चयश्चैतन्यशून्याद् भवेद्
भावे किं न सदा सदातनतनोरप्येष दोषः समः।
तस्याददृष्टमपेक्ष्य कालनियमे किं चेतसा चेत् तदा
कुम्भादावपि शिल्पिनो विफलता नैतच्च तद्व्यत्ययः॥

कुम्भादौ यदि दर्शनादभिविधिः किं व्यत्यये बाधया
प्रत्यक्षानुपलम्भतः किमु मता न व्याप्तिरेवं सति।
तेषां जातिविशेष एव विषयो यद्येवमेवंविधो
व्यूहश्चेतनतो भवेदिति भवेदन्यत्र को निश्चयः॥

इति संग्रहश्लोकौ॥

न च सामग्र्यन्तरस्यातत्पूर्वकत्वे अस्या अपि मा भूदिति युक्तम्, असर्वव्यापिनामपि धर्माणां प्रदेशवृत्तेर्दर्शनात् लोहलेखनस्येव पार्थिवे, असिद्धशरीरपूर्वकत्वस्येव वा कार्ये। तत्र बाधकान्न सर्वव्यापित्वमिति चेत्? तदस्फुरणे तर्हि संशयः केन निवार्यते? यथा हि न परस्य बाधकं कलापान्तरेऽपि कार्यान्तरादौ वा चेतनापेक्षायाः, तथा भवतोऽपि सर्वजातौ तयावश्यंभाव्यमिति न साधकमस्ति। यथा च तव क्वचिद्बुद्धिमदपेक्षादर्शनमस्ति, तथा परस्याप्येकत्र दृष्टस्य [39b] धर्मस्य भिन्नजातीयाव्याप्तिदर्शनमस्ति। ततो लोहलेखनस्य शरीरव्यापारस्य च क्वचिद् बाधकादर्शनं सन्देहसाधनमुपयुक्तमेव परस्य, अन्यथा संशयस्यैव निर्बीजताप्रसक्तेः।

न च साधारणानैकान्तः प्रारब्धोऽधुनाभिधातुम्, यतस्तद्वदत्र बाधकानुपदर्शनं बाधकं स्यात् प्रतिवदितुः, अपि तु सन्दिग्धविपक्षव्यावृत्तिकत्वमेव। तच्च सिद्धं, दृष्टान्ते दृष्टिमात्रेण व्याप्तेरसिद्धेः, निबन्धनान्तरस्याभावात्। एतेन क्षित्यादिहेतूनाम् अचेतनत्वे सति नियतप्रवृत्तित्वेन प्रासादादिहेतुवत् प्रयत्नवदधिष्ठानसिद्धिरित्यपि प्रत्युक्तम्। अचेतसोऽपि कालादिनियतायाः प्रवृत्तेः प्रयत्नवन्नान्तरीयकत्वसाधकप्रमाणस्य तद्वदेवाभावादिति।

नापि कार्यविरामप्रसङ्गः सङ्गतिमावहति, अपरापरप्रत्यययोगजन्यस्वभावभेदसंभवेन भावेष्वेकशक्तिनिर्वाहस्य दूरीकृतत्वात्। ततश्च कर्तुरेकत्वे सन्देहोद्भावनेन समानन्यायतया आगतमेव बुद्धिप्रतिबन्धं परपरितोषाय साधारणानैकान्तिकत्वेन दूषयितुमाह,

स्थित्वा प्रवृत्तिसंस्थानविशेषार्थक्रियादिषु
इष्टसिद्धिरसिद्धिर्वा दृष्टान्ते

इति। वाशब्दः समुच्चये। एषु सत्सु यदिष्टं चैतन्यं तस्य दृष्टान्ते साधनवति धर्मिणि सिद्धिरसिद्धिश्च घटादौ विटपादौ च यथाक्रमम्। ततो व्यक्तं विपक्षैकदेशवृत्तिरेषामिति भावः। एतेन यदि कृतकादिवद् विपर्ययबाधाभिधानमशक्यम्, धूमादिवत् प्रत्यक्षानुपलम्भाभ्यामन्वयव्यतिरेकप्रतीतिः प्रयत्नेन सह कार्यादीनां भविष्यतीति गत्यन्तरम् अपास्तम्, तमन्तरेणापि कार्यस्योदयाद् व्यतिरेकस्यैवाभावादित्युक्तम्।

ननु बुद्धिमत्त्वं नाम दृश्यादृश्यशरीरेतरसाधारणो धर्मः क्ष्मारुहादिजन्मनि व्याप्रियमाणं नास्तीति कथमवगन्तव्यम्, अनुपलब्धिमात्रादभावासिद्धेः? युक्तमेतत्,

यदि दृश्यशरीरोपाधिविधुरेण बुद्धिमात्रेण व्याप्तिरभिमता स्यात्। बाढमेवेति चेत् ? एवं तर्हि धूमवद्व्यतिरेकमेवाधिकृत्याह,

संशयोऽथ वा

इति। यदा कुम्भकारव्यापारात् प्राक् कलसस्य व्यतिरेकः प्रत्येतव्यः, तदा न साध्याभाव[कृतो घट]व्यतिरेकः प्रतीतः स्यात्, साध्याभावस्य सन्देहात्। न हि तथाविधशरीरोपाधिकेन चेतसा व्याप्तिर्जिज्ञासिता, यतोऽनुपलब्धिविशेषेण निषेधः सिध्येत्, किं तु प्रयत्नवन्मात्रेण। तस्य च यथा वृक्षादिजन्मसमये संभावना निषेधस्याशक्यत्वात्, तथाद्यापीति, तत्संभवेऽपि संभाव्यमानः कुम्भाभावस्तदभावप्रयुक्तत्वमात्मनो बोधयितुं न शक्नोतीति सन्दिग्धव्यतिरेकः।

ननु साध्याभावे साधनस्य भावसंशये सन्दिग्धो व्यतिरेक इति युक्तम्, न तु कुलालव्यापारात् प्राक् कुम्भभावः सन्दिह्यत इति चेत्? तदयुक्तम्, साध्यव्यतिरेकप्रयुक्तो व्यतिरेकः साधनस्य [40a] व्याप्तिवादिना दर्शयितव्यः। स च साध्याभावसन्देहाद् वा स्वयमतोऽपि न दर्शितः। साध्याभावेऽपि वा स्वभावसन्देहादिति न कश्चिद् विशेषः, उभयथापि तस्य सविशेषणस्य सन्दिग्धत्वादिति। अतएव सन्दिग्धसाध्यसाधनधर्मित्वं दृष्टान्तयोर्दोष उच्यते।

यदि तु साधनाभावमात्रमभिधीयेत साध्याभावमनपेक्ष्य, तदा युक्तमेतत्। न च तावता व्याप्तिग्रहः। अन्यथा प्रत्यक्षानुपलम्भाभ्यां व्याप्तिं प्रतिपद्य पवनोपघातसाधनोपनीयमानः कम्पो यदा मर्दनादिसंभवेन कम्पेन साधारणं क्रियते, तदा स्तिमितमारुतमस्पर्शयोग्यतया निषेद्धुमशक्यं संभाव्य परिहरन्ननिवार्यः स्यात्।

तत्र विशेषसाधनाद् व्यभिचार एवेति चेत्? कुतः पुनरेतद्विशेषस्तेन साध्यत इति? उपहतिशब्दस्त्वशरीरव्यापारवत् तदनुरूपविषयो भविष्यति, प्रत्यक्षानुपलम्भेन व्याप्तिवर्णनादिति चेत्? तदपि भवतः समानम्, यथा चास्य तादृग्मरुन्मात्रापेक्षया अदृश्यत्वेन व्यभिचारपरिहारे व्याप्तिग्रहणकालेऽदृश्यत्वेनैव व्यतिरेकासिद्धिस्तथा भवतोऽपि शरीरविरहिणि चैतन्यमात्रे। ततो यदा तदभावसंशयेऽपि कार्याभावमात्रेण व्याप्तिग्रहणाभिमानस्तथा अस्पृश्यप्रभञ्जनाभावसंशयेऽपि कम्पाभावः सिद्ध इति स्याद् व्याप्तिः।

अथ न कश्चित् देहवतेव देहविरहिणापि व्याप्तिं करोति, किं तु चैतन्यमात्रेण, तच्च कायवत्कालेऽप्यस्ति विशेषसंभवे सामान्यस्यावश्यंभावादिति तदपेक्षया व्याप्तिग्रहः सामान्यविषय एवावतिष्ठते, वह्नाविव वह्न्यन्तरस्वरूपानुप्रवेशादिति। एतदपि समानं समीरानुमाने। न च कश्चित् चेतनावान् वेपथुमात्रेण मारुतमनुमिमीते, सर्वगत्वाध्यवसायेऽपि कम्पमात्रस्य साधनसामर्थ्याप्रतीतेः। न हि राज्यमिष्टमिति तन्नामकरणानन्तरमुपजायमानमपि तदुपायवादिनं प्रमाणीकरोति, साधनमपि वा कृतकत्वं वस्तुतः असाधनाङ्गो व्यापकत्वेनोपनीयमानमनित्यतासिद्धौ।

तस्मात् न कोष्ठशुद्धया प्रमेयतथाभावेन परितोषः, प्रमाणगुणस्तु निरूप्यते। न च कम्पस्य मरुन्मात्रेण व्याप्तिसिद्धौ किञ्चिद् विपर्यये बाधकमस्ति, प्रत्यक्षानुपलम्भास्तु स्वगोचरीभावयोग्यमेव स्वभावदेशकालविप्रकृष्टमपि तदा त्वसन्निहितेऽन्तर्भावयितुं शक्नुवन्तीत्यवश्यमेषितव्यम्, नान्यम्। अन्यथा व्याप्तिग्रहणवद्व्यभिचारोऽपि तन्निष्ठ एव प्रसज्येत। ततो यथा विशेषविषयावन्वयव्यतिरेकौ प्रत्यक्षाद्यगोचरचैतन्यमरुन्मात्रविषयौ व्यवस्थितौ, तथापि विशेषविषयो व्यभिचारोऽपि तन्मात्रविषयः किं न व्यवस्थाप्यते ? न हि लाभे प्रवेशः, छेदे निःसरणमिति लभ्यम्।

वह्निस्तु देशकालविप्रकृष्टोऽपि तदात्मा सन्निहित इव स्वभावविप्रकृष्ट[40b]-प्रत्यक्षादियोग्यतया तदनुप्रवेशमासादयतीति युक्तम्, यतस्तदेकाध्यवसायात् सर्व एव धूमव्यापकतयावधार्यमाणो न दुष्यति, जाठरं तदयोग्यतया तथा निश्चायि। अत एव धूमादभिमते शिखिनि प्रवृत्तिरसंशयानस्य युज्यते। इतरथा प्रत्यक्षायोग्येनापि व्याप्तिः आश्रयभुजा गृह्यमाणा धूमस्य तद्योग्यायोग्यदहनसामान्यविषयैव व्यवतिष्ठत इति तार्णादिभेद इवाभिमतेऽपि रूपे सन्दिहानो न तत्साध्यार्थक्रियालाभैकाग्रबुद्धिः प्रवर्तेत। प्रतिबन्धवैकल्यवद् वा असति जाठरस्य इत्यामृषतः प्रवृत्तिः स्यात्। न चैवम्, तस्मान्न स्वरूपविशेषनिष्ठं प्रमाणं सामान्येन व्याप्तिं प्रपद्यते।

अनित्यत्वेन तु कृतकत्वस्य व्याप्तिं विपर्ययबाधकप्रमाणमधिगच्छद् भूत्वाभवनमात्रेण विशेषानवच्छिन्नेन प्रवृत्तमिति सामान्येनैवाधिगच्छति। नापि कृतकात् प्रवर्तमानोऽभिमतानित्यैकाग्रबुद्धिः कश्चित् प्रवृत्तिमर्हति। अतश्च सामान्यपर्यवसितमपि प्रमाणं न विशेषेण व्याप्तिं गृह्णातीति सिद्धम्। उक्तं च न्यायानुसारिणा शंकरेण, यत् प्रमाणं यावतीमर्थगतिं व्याप्नोतीत्यादि। यत् प्रमाणं यत्स्वभावसापेक्षप्रवृत्तिकं तन्नैव तदितरस्वभावेन कस्यचिद् व्याप्तिं प्रतिपद्यते, यथा विपर्ययबाधकं भूत्वाभवनमात्रा-

पेक्षमनित्यविशेषेण कृतकत्वस्य। यथा वाभिमतस्वरूपविशेषापेक्षमध्यक्षानुपलम्भम् अग्नेर्जाठरसाधारणेन रूपेण धूमस्य। स्वरूपविशेषापेक्षप्रवृत्तयश्च प्रत्यक्षानुपलम्भाः प्रभञ्जनेन कम्पस्य व्याप्तिग्रहण इति व्यापकविरुद्धोपलब्धिः, मातरिश्वलघुत्ववत् प्रत्यक्षप्रवृत्तेरभावात्।

नाप्यनेकान्तः। विवक्षितस्वभावेन हि कस्यचित् व्याप्तिग्रहणं प्रमाणस्य तत्स्वरूपापेक्षप्रवृत्तिकत्वेन व्याप्तम्, अन्यथातिप्रसङ्गः प्रवृत्तिसंकरश्च दोषः। तद्विरुद्धा च तदितरस्वभावापेक्षा प्रवृत्तिः, तस्मात् स्वरूपविशेषापेक्षं प्रत्यक्षानुपलम्भं नानिलमात्रेण स्तिमितेतरसाधारणेन कम्पस्य व्याप्तिं प्रतिपद्यत इति प्रमाणार्थः। ततो न परमार्थतः कम्पेन पवनानुमानमस्ति।

अथ च न काचिद् भवदीयसमयसमाधानकल्पना, या नैनमनुधावति, न चैतदीयमप्रामाण्यनिबन्धनं किमपि, यत्र भावत्कमनुमानमुपनीयते, ततश्च वह्निधूमवत् प्रयत्नवत्कार्ययोर्यदि व्याप्तिसिद्धयेऽध्यक्षानुपलम्भं शरणमाश्रियते, तदा तत्प्रवृत्तियोग्यस्वरूपापेक्षया प्रयत्नवतो नियतो व्यभिचारः कार्यमात्रेण तृणादिना।

अथ व्यभिचारचमत्कारागोचरेण चेतनावता व्याप्तिरिष्यते, तदा महीरुहादिजन्मनीव शिल्पिव्यापारादपि प्राक् निषेद्धुमशक्ये प्रयत्नवन्मात्रव्यापारे [41a] व्यतिरिच्यमानो घटादिः कस्याभावप्रयुक्ताभावोऽवधार्यताम्, यतस्तेन व्याप्तः सिध्येदिति सन्दिग्धविपक्षव्यावृत्तिकतया पुनरनेकान्तः पूर्वं दृश्यादृश्यविशेषमनपेक्ष्य विपर्यये बाधकाभावं स्वयमुपदर्श्य कृतः, इदानीं वादिन एवाभ्युपगमेन तदिष्टप्रमाणापेक्षया व्यतिरेकासिद्धेरिति भेदः। विपक्षबाधकं तु हेतुमात्रेण व्याप्तिं प्रतीयात् न तद्विशेषणबुद्धिमतेत्युक्तम्।

ननु वृक्षादयः पक्षीकृता इति कथं तैर्व्यभिचारः? त्रिविधो हि भावराशिः, सन्दिग्धकर्तृको बुद्धिमत्कर्तृकोऽकर्तृकश्चेति। तत्र बुद्धिमत्कर्तृके घटादौ प्रत्यक्षानुपलम्भाभ्यां व्याप्तिमादाय सन्देहपदे भूधरादौ कार्यत्वमुपसंहृत्य प्रयत्नवान् साध्यते। न पुनरसौ व्यभिचारविषयो भवितुमर्हति।

यदाह, न च साध्येनैव व्यभिचार इति, तदयुक्तम्। न हि व्यभिचारविषय एव पक्षो भवितुमर्हति,

सन्दिग्धे हेतुवचनाद् व्यस्तो हेतुरनाश्रयः।
[प्र. वा. ४. ६१]

इति न्यायात्। ततश्च क्ष्माधरादिरेव सन्दिग्धकर्तृकः पक्षीकर्तुमुचितः। क्ष्मारुहादिस्त्वचेतनकर्तृक इति चतुर्थो राशिरेषितव्यः। व्याप्तिसमीहया प्रत्यक्षयोग्याभिमतस्य वृक्षादिजन्मन्यनुपलब्धेरिति कथं पक्षीकरणम्? मा भूदशेषसाधारणानैकान्तिकोच्छेदः।

कार्यत्वस्य विपक्षवृत्तिहतये संभाव्यतेऽतीन्द्रियः
कर्ता चेद् व्यतिरेकसिद्धिविधुरा व्याप्तिः कथं सिध्यति।
बाधा त्वाहितहेतुमात्रनियतिर्भेदेन न व्याप्तये
नाप्यर्धो व्यभिचारगोचरचरः पक्षीक्रियायां क्षमः॥

इति संग्रहश्लोकः॥

ननु तथापि कथमव्याप्तिराकाशस्य व्यतिरेकग्रहणाधिकरणस्य संभवात्? यदाह, बुद्धिमत्कारणसद्भावे भावो घटादावुत्पत्त्यादेः, अभावे चाभावो गगनादिषु, स च तथाप्रसिद्धाविनाभावो यत्रैव क्षित्यादावुपलभ्यते, तत्रैव तद्विनिर्माणसमर्थकर्तृबुद्धिं तद्विदो जनयतीति। उत्पत्त्यादेरिति कार्यत्वादेरित्यर्थः। अत्राभिधीयते। न साधर्म्येण वैधर्म्येण वा दृष्टान्तमात्रमस्तीति साध्यसिद्धिः, यदृच्छोपनतावपि तथा संभवात्। तस्मान्निदर्शनं नाम गृहीतविस्मृतप्रतिबन्धसाधकप्रमाणस्मरणद्वारेणैव हेतावुपयोगि, न स्वसन्निधिमात्रेण।

स च प्रतिबन्धो द्वारान्तरेण वा गृहीतो विहायसा स्मर्येत, स्वाधिकरणप्रमाणप्रसिद्धो वा? तत्र तावत् प्रथमकल्पनमपास्तं, प्रागेव दृश्यशरीरोपाधिना धीमात्रेण वा कार्यत्वादेर्घटादावपि प्रतिबन्धग्रहणोपायापायात्। चरमं चासंभवि। तथा हि, यदि नाम व्योम्नि द्वयनिवृत्तिरुपलब्धा, तथाप्येकाभावप्रयुक्तत्वनिश्चयायोगादन्याभावे विश्वरूपस्य च तत्रावृत्तेः कस्य केन संबन्धबोधः स्यात्? करभगर्दभादेरपि [41b] कार्यकारणभावग्रहणप्रसङ्गाच्च। अन्यत्रान्वयदर्शनसहायस्य तथा प्रतीतिरिति चेत्? ननु सहदर्शनमेवान्वयार्थः, तच्च कदाचित् करभादेरप्यस्तीति साध्वी व्यवस्था।

न सहदर्शनमन्वयस्यार्थः, किं त्वेकसंभवप्रयुक्तोऽन्यभावः। स च बुद्धिमत्कार्यत्वयोरस्ति नान्यत्रेति चेत्– न, तद्भावप्रयुक्तत्वं नामापरभावस्य न तद्व्यापारात्

प्रागभाविनः सत्तालाभादन्यः, प्रागभावश्च नानुपलब्धिव्यापारमन्तरेणेति प्रत्यक्षानुपलम्भाभ्यामन्वयव्यतिरेकयोर्निश्चये संशयो नाम कीदृक् हेतुफलस्थिताविति तत्प्रतीतिप्रतिबन्धस्मरणमेव विहायसा विधीयत इति प्रथमपक्ष एवायम् ।

किं च किमिदमीश्वरेऽनुजीविवृत्ताविष्करणमात्रमत्रभवतः, उत [प्रति]वन्दीकृते ? धूमानुमानेऽपि सैव गतिः, एकत्रोभयसंभवमुपलक्ष्यान्तरीक्षे एकव्यापारनिवृत्तौ अन्यनिवृत्तेरुपलक्षणाद् व्याप्तिग्रह इति । यद्येष एव न्यायः, तदा तदिच्छतामनिबन्धनः प्रकृतप्रद्वेषः, केवलमेवं विलपता दहनानुमानमपि हारितं, दूरतरा तु प्रकृतसिद्धिः, उक्तक्रमेण गर्दभेनापि तस्य प्रसङ्गे वह्नावपि हस्तकत्यागात् । यदा तु गत्यन्तरमपि तत्र प्रकृतासंभवि संभवि, तदा कुतो वन्दीकरणं शरणम् ?

एवं तर्हि प्रत्यक्षानुपलम्भव्यापारः तदतिप्रसङ्गभयादेवाश्रीयते, न तु स एव समय इति चेत् ? एवं सति भवतैव किमयमतिप्रसङ्गे भरो दत्तो नेति कोशपानं कर्तव्यम्, यो हि प्रत्यक्षानुपलब्धी विहाय विहायसि वह्निव्यापारनिवृत्त्या धूमनिवृत्तिम् आदाय व्याप्तिमभिधत्ते, तं प्रति यथा वस्तुमात्रस्यापि तत्र व्यापारोपरमात्तेनापि व्याप्तिसिद्धिः स्यादित्यतिप्रसङ्गः, तथा योऽपि प्रत्यक्षानुपलब्धीरुद्धूय तद्योग्यपुरुषविशेषव्यापारविरहेण व्योमनि घटादिकार्यत्वनिवृत्तिं दर्शयित्वा तेन व्याप्तिमस्य मन्यते, तं प्रति पुरुषमात्रस्यापि तत्र निवृत्त्या तेनापि व्याप्तिः, तथा कार्यान्तरत्वस्यापि निवृत्त्या तस्यापि स्यादिति व्यक्तमतिप्रसङ्गमात्रमेतत्, न न्याय इति पश्यामः ।

धूमे गर्दभादिव्यभिचारदर्शनान्न वस्तुमात्रेण व्याप्तिरिति युक्तम्, पुरुषमात्रस्य तु व्यभिचारानुपलब्धेर्नेदमतिप्रसङ्गमात्रोद्भावनं भविष्यति । नैवं, समानन्यायानाम् एकत्र बाधकदर्शनमन्यत्रापि शङ्कामुत्पादयति । यदि हि विहायसि उभयनिवृत्तिदर्शनं प्रतिबन्धसाधकं भवेत्, वस्तुधूमयोरपि न बाध्येत, तत्र तु बाध्यमानमन्यत्रापि कथम् एकान्तावसायसाधनं स्यात् ? न च पक्षीकृते नैव व्यभिचार इत्यपि, न पक्षीकरणं मन्त्रप्रभावः, किं तु व्याप्तिग्राहकदार्ढ्यम् । तच्च यदि नभसि उभयाभावमात्रम्, तदा तत्र बाधकाधिगतेरस्तं दार्ढ्यमिति सत्यपि [42a] पक्षीकरणव्यभिचाराशंका न निवर्तत इति ।

व्योमास्ति व्यतिरेकभूमिरिति चेद् धूमस्य धूमध्वजाद्
उत्पत्तावपि किं स एव समयो नातिप्रसङ्गोदयात् ।

यद्येवं भवतैव किं विनिहितो नातिप्रसङ्गेतर-
स्तस्मिन् बाधविलोकनं पुनरिहाप्यारेकमाकर्षति ॥

इति संग्रहः ॥

तस्मात् नाकाशे द्वयनिवृत्त्या व्याप्तिसिद्धिः, सिद्धव्याप्तिकयोस्त्वभावदर्शनं गृहीतव्याप्तिस्मरणकारणं स्यात्। न च व्याप्तिग्राहकं किञ्चिदुपपद्यत इत्युक्तम्। तस्मात् अन्वयमात्रभावेऽपि व्यतिरेकाभावादनेकान्त एवेति स्थितम्। वस्तुतस्तु व्यतिरेकवदन्वयोऽप्यस्य दुर्लभ एव। यस्य हि प्रत्यक्षागोचरतया अभावप्रयुक्तः कार्याभाव इति प्रत्येतुमशक्यं तस्यान्वयो दूरोत्सारित एव, प्रत्यक्षग्राह्यत्वात् तस्य। प्रत्यक्षं हि परिदृश्यमाने वस्तुनि देशकालविप्रकृष्टमपि स्वप्रवृत्तियोग्यमेवान्तर्भाव्य व्याप्तिमवकल्पयेत्, न स्वभावविप्रकृष्टमपीति उक्तप्रायम्। ततश्चान्वयमात्रं गजनिमीलितेनावधीर्य व्यतिरेकाभावेनैव दूषणमुक्तम्। वस्तुतस्तु नान्वयो न व्यतिरेक इति प्रयत्नवन्मात्रे साध्ये कार्यत्वमसाधारणमेवेति वा दर्शयितुमाह,

संशयोऽथवा

इति। प्रत्यक्षादियोग्यापेक्षया साधारणानैकान्तिकम्, चैतन्यमात्रापेक्षया असाधारणम् इत्यर्थः। ननु शरीरोपाधिबुद्धिकृतं कार्यं सिध्यत् बुद्धिमात्रकृतं सिध्यत्येव, शिंशापाकृतमिव वृक्षकृतम्, विशेषे सामान्यानपह्नवादिति कथमुच्यतेऽन्वयाभावः? एवं सति व्यतिरेकोऽपि तदपेक्षया स्यादिति चेत्? का नो हानिः, बुद्धिमति कार्यहेतोरन्वयव्यतिरेकवत्त्वाभ्युपगमादिति? उक्तमत्र, एवमन्वयव्यतिरेककल्पने जाठरचित्रकादिगतेनापि रूपेण धूमादनुमितमग्निं संशयानो नाभिमतैकाग्रचित्तः प्रवर्त्तेतेत्यादि।

अपि च न तत्र संभवीत्येव प्रत्यक्षेण यत्किञ्चिद्वस्तुनो रूपं कार्यस्य व्यापकम् अवधार्यते, अपि त्वध्यवसायापेक्षया। अध्यवसायश्च पुरुषेण कृत एव इति बुद्धिमता वेति विशिष्टविषय एव प्रवर्तते, तादृश्येव पुरुषादिशब्दस्य रूढेः। न तु करादिव्यापारनिरपेक्षेण चैतन्यमात्रेणेति, चैतन्यमात्रं सदप्युदासीनमन्वयग्रहणकालेऽध्यवसायस्य विशेषोन्मुखेनैव प्रवृत्तेः, सामान्यशब्दत्वेऽपि वा प्रकृतविशेषमाक्षिप्यैवाग्निव्याप्तिवत्। स चाध्यवसायः प्रत्यक्षव्यापारानुसारी तद्योग्यमेव रूपं बहिः कुर्यात्, न तु तदयोग्यमपि, जाठरादिवत्, तार्णादिवच्च। एवं पुरुषेणापि व्याप्तौ कस्यचित्

शरीरोपाधिविधुरस्य बुद्धिमात्रस्य तदयोग्यस्य प्रतिक्षेपः स्यादेव । अप्रतिक्षेपस्तु खर्वादि भेदस्यैव । अयमेव न्यायः सर्वत्र प्रत्यक्षेणान्वयग्रहणे ।

[42b] अथाङ्गारसङ्गादगुरुखण्डजनितं धूममुपलब्धवतः प्रत्यक्षयोग्यतया इन्धनाद्यन्तरेणापि तदन्वयप्रसङ्ग इति चेत् ? तत्किमिदानीं प्रमाणविषयप्रतिनियमम् अनादृत्य यत्र क्वचित् प्रवृत्तमध्यक्षं येन केनचिदन्वयं प्रत्येत्विति विवक्षितम् ? एवं सति हेतुमदाभासव्यवस्थाविलोपात्, सर्वस्य सर्वसिद्धिरिति प्रतिनियतसाधनान्वेषो विफलः ।

अथ प्रत्यक्षेण स्वयोग्यमुल्लंघ्यापि व्याप्तिर्गृहीतेत्युच्यते ? तदसिद्धम् । यदा प्रत्यक्षं स्वप्रवृत्तियोग्येऽपि वस्तुन्यवान्तरभेदापेक्षया सामान्यमुदासयदन्वयं प्रतिपद्यते तदा कैव कथा स्वप्रवृत्त्ययोग्यस्यात्यन्तं विजातीयस्य ? न चास्माकं पक्षः प्रत्यक्षयोग्येण सर्वेण व्याप्तिरिति, किं तु प्रत्यक्षयोग्येणैव तत्कृता व्याप्तिरिति । अन्यथा गर्दभादिभिरपि धूमकुम्भादेरेवान्वयप्रसङ्गः । किमतः परम् ? कथं पुनरत्रावान्तरभेदापेक्ष एव व्याप्तिग्रहो न दर्शनयोग्यतामात्रापेक्षः ? विकल्पस्तु वासनाप्रबोधमात्रार्थमपेक्षित प्रत्यक्षादिसन्निधिरनियतोदयाकारतया न प्रतिनियतं विशेषमावेशयितुमर्हतीति ।

सत्यम्, अतएव व्यतिरेकसाधन्या अनुपलब्धेरवतारः । तत्र यथा वह्नि पुरुषाभ्यां धूमकुम्भयोरन्वयाध्यवसाये सहायतामनुपलब्धिः प्रतिपद्यते, पूर्वस्थितिरन्यत उत्पत्तिरन्यत आगमनमिति त्रिधा भिन्नसंभवव्यतिरेकं साधयन्तीतरथानुपयोगात्, तथा यदि गर्दभान्वये वेदनमात्रान्वये वा प्रतिपद्येत, स्यादेव ताभ्यामपि व्याप्तिः, नान्यथा, यतो न प्रत्यक्षमात्रं व्याप्तिं प्रतिपद्यते, नाप्यनुपलम्भमात्रं, किं तु प्रत्यक्षानुपलम्भावन्योन्यसहायाविति निर्णीतं शास्त्रे बहुशः । अस्माभिरपि त्रिकपञ्चकचिन्तायां किञ्चिदिति ।

न च गर्दभाद्यन्वये तस्याः साहायकमस्ति । एतेन धूमविशेषापेक्षयानुपलम्भव्यापाराभावो व्याख्यात इति नैवंवादिनि कश्चित् पर्यनुयोगः । यस्तु प्रत्यक्षगोचरेऽपि तत्कृतां व्याप्तिमुपवर्णयति तस्य तद्विषय एव व्याप्तिग्रहविरह इति दुःस्था व्यवस्था । ततश्च तस्यैवासौ पर्यनुयोगः । तस्याप्यनुपलब्धिव्यापाराभावान्नेति चेत्– न, [यतः] प्रत्यक्षयोग्येऽपि तत्कृतव्याप्तिवादिनोऽनुपलम्भव्यापारविरहेऽपि तत्कृतव्याप्तिमिच्छतः

कः प्रतिरोद्धा ? यदि ह्यस्य व्रीडा स्यादप्रत्यक्षयोग्य एव तद्व्यापारं कथं वर्णयेत् ? अथोपादानादिविदा प्रयत्नवता करणदर्शनादेव गर्दभस्य निरासः, किमत्रानुपलब्ध्या ?

एवं तर्हि दृश्यमानेनैव व्याप्तिमुपवर्णयन् [न च] दर्शनपथातिक्रान्तेन, न च शरीरोपाधिं व्यवधूय चैतन्यमात्रमुपलब्धं क्वचित्। यदि च दर्शनबलादेव व्यवस्था चैतन्यमात्राधिष्ठितं शरीरं कुम्भादि जनयत् दृष्टमेवेति न गर्दभेनान्वयविरोधः, तत् कथमनुपलब्धि[43a]प्रतिक्षेपः ? व्यापकगताः सामान्यधर्मा एव व्याप्तौ साधकाः इतरेषां व्यभिचारदर्शनेनान्यत्र शंकावका[शा]देव न गर्दभेनान्वय इति चेत् ? ननु व्यभिचारदर्शनमिति तदभावेऽपि भावदर्शनमित्यनुपलब्धिव्यापाराभावेऽसाधनत्वम् उपनीयमानमनुपलब्धेरेव साधनाङ्गनिश्चये व्यापारं परिदीपयति।

यदि च विशेषे व्यापारशंकाकुलः सामान्यमनुसरति भवान्, उपादानाद्यभिज्ञमपि विशेषमपहाय चैतन्यमात्रेण गर्दभसाधारणेन सिद्धसाधनयोग्येन ततोऽपि वा सामान्येन कारणमात्रेण व्याप्तिमभिधत्ताम्। एवं हि सति सर्वथा दूरीकृतः शंकावकाशः स्यादिति। एतावत्तु सामान्यमवमन्य उपादानाद्यभिज्ञविशेषे स्थितिर्न तु तदप्यवज्ञाय यथादृष्ट इति किमत्र सामर्थ्यमन्यत्र जाड्यात् ? प्रत्यक्षानुपलम्भवादिनस्तु यावति यादृशि सामान्ये प्रत्यक्षानुपलम्भव्यापारो न तत्र शंका, शंकावकाशिनि च न व्यापार इति नासौ क्वचन स्वयमिच्छया व्याप्तिमुपनयत्यपनयति [वा] प्रमाणेनैव समर्पणादिति न दोषः।

ननु सोऽपि हेतुमात्रकृतं वा कार्यग्रामं ब्रुवन् प्रत्यक्षयोग्येऽपि प्रत्यक्षव्यापारोपलम्भं किं न पश्यति ? पश्यत्येव विपर्ययबाधकादागमाच्च तस्य तदाभ्युपगमात्। प्रत्यक्षानुपलम्भं तु शरीरविशेषोपाधिक एव चेतसि स प्रमाणयति। इच्छायामपि करादिव्यापारोपरमे कार्याभावात् तद्‌द्वारेणैव कुलालादिव्यपदेशविषयस्य समुदायस्य प्रत्यक्षत्वव्यवहारात्। न त्वियं गतिः प्रयत्नसचिवचित्तमात्रे। तदाप्यनुमानादन्वयः प्रत्येष्यते। न च प्रत्यक्षस्यैव कश्चिदनुरोधः। उपलम्भानुपलम्भाभ्यामन्वयव्यतिरेकनिश्चयः कर्तव्यः। स चोपलम्भः प्रत्यक्षरूपोऽनुमानरूपो वेति नात्र निर्बन्धः।

अत्र चिन्त्यते। किं तदेव शरीरोपाधिकं चित्तं प्रयत्नवच्चित्तमात्रशब्देनाभिमतम्, उतान्यत् ? तत्त्वे किमनुमानेन, प्रत्यक्षसिद्धौ विवादाभावात् ? तेन चान्वयव्यतिरेकौ सिद्धौ कार्यमात्रेण च तद्व्यभिचारो व्यक्तः। अन्यत्वे लिङ्गाभावदोषः,

भापणादेः कार्यस्य शरीरिणैव चरितार्थत्वात्। न च तेनानुमितेनापि व्याप्तिः स्वीक्रियते, व्यतिरेकानिश्चयात् पूर्ववत्। एवं तर्हि वह्निनापि धूमस्य व्याप्तिर्न देशकालावस्थानियतेन, किं तु वह्निमात्रेण। तच्च दृश्यमानादन्येनैवेति विकल्पे व्यभिचारादिदोषः साधारण इति तादृग्विशेषविरहिणा सामान्येन व्याप्तिर्वक्तव्या।

तथेहापीति चेत्? एवमपि जाठरादिगतेनापि रूपेण व्याप्तिप्रसङ्गो धूमस्य। तस्मान्न सामान्यमित्येव व्याप्तावधिक्रियते, नापि विशेष इत्येव प्रतिक्षिप्यते, [43b] धूमानुमानस्यैवोच्छेदात्, अभिमते शिखिनि प्रवृत्तिसन्देहात्। ततो यदि न स्वेच्छैव संग्रहपरिच्छेदसाधनी, तदा प्रमाणव्यापारमन्विष्य व्यवस्थाप्रक्रमे किञ्चित् सामान्यं स्वीकारप्रवृत्तेनापि प्रत्यक्षेण प्रतिक्षिप्तमर्थादर्पितव्यम्, यद्विशेषातिक्रमेण नास्यावतारः। यथा ज्वलद्भासुराकाररूपातिक्रमे धूमव्याप्तिग्राहिणः। किञ्चित्तु प्रत्यक्षस्वीकृतम् अप्यनुपलब्धिः प्रतिक्षिपति, पिठरादिवत् सामर्थ्यात्।

सा हि दहनाभावे कार्याभिमताभावं साधयन्ती दहनभावप्रयुक्ततद्भावविभावनादयोगव्यवच्छेदेन तत्कार्यतासाधनप्रवृत्ताप्यन्यस्य हेतुतां साधयत्येव, यदभावे स्वयं न वर्तते। अनुपलम्भपूर्वके तु प्रत्यक्षे प्रागभावादिबाधनप्रवृत्तयानुपलब्ध्यानेकवस्तुरूपसत्त्वाभावेऽभावसिद्धौ यदेकवस्तुस्वभावसन्निधौ सन्निधिरध्यक्षेण प्रतीयते प्रागपि तदभावप्रयुक्ताभावविभावनात् तद्धेतुभावसाधने यदप्रवृत्तियोग्यतया प्रतिक्षिप्तम् अध्यक्षेण तत्प्रतिक्षिप्तमेव।

ततो न जाठरादेरन्वयः। नापि कालदेश[दशा]भेदभिन्नस्वभावप्रतिक्षेपः, सर्वस्य प्रत्यक्षेण स्वजन्मयोग्यतया स्वीकारात्। नाप्यनुपलब्ध्या, सा ह्यतादृक्स्वभावाभावेऽभवन्ती तद्विजातीयहेतुतां प्रतिक्षिपतीति युक्तम्, न तु तस्यैव, अन्यथा तदाश्रयणवैयर्थ्यात्। ननु देशादिभिन्नस्वभावाभावेऽप्ययं धूमो दृष्टः, न देशादिभिन्नस्याप्येकाकारप्रत्यवमर्शप्रत्ययेन परिदृश्यमानरूपेण सहैकीकरणात्, दर्शनायोग्यस्वभावाद् अन्यत्र। अतएव वह्निमात्रशब्दाभिधेयं तदेव परिदृश्यमानयोग्याद्भेदाकृष्टावप्यभेदावभासात्।

ननु देशादिविप्रकृष्टमप्यदर्शनयोग्यमेव। सत्यं, केवलं कदाचित् क्वचित्। स्वभावविप्रकृष्टं तु सदेत्यत्यन्तविजातीयतया स्वीकारपरिहारयोर्भेदेन वृत्तिर्न विरुध्यते। ततो यथानुमानवादिना सामान्यमनुसरणीयमव्याप्तिमसंभवं वा परिहर्तुं, तथा

दृश्यविशेषापेक्षयातिरिक्तसामान्यमपि परिहर्तव्यमतिव्याप्तिपरिहाराय। एवं सति यथा दर्शनायोग्यवह्निसामान्यपरिहारेण तद्योग्यावान्तरसामान्येन व्याप्तिरेकत्वव्यवस्था च युक्ता, न प्रयत्नवन्मात्रेण, प्रत्यक्षप्रतिक्षिप्तत्वादिति।

तत्र व्यामोहात् प्रमाणान्तरेणान्वयमिच्छन् तत्त्वान्यत्वाभ्यां पर्यनुयुज्यते। दहने तु तत्पक्षेणैव समाधिरित्युक्तम्। तस्मात् प्रत्यक्षानुपलम्भाभ्यां व्याप्तिजिघृक्षायां [44a] तद्योग्यसामान्यापेक्षाया घटविटपादौ दृष्टान्त इष्टस्य सिद्धिरसिद्धिश्चेति साधारणानैकान्तिकत्वं कार्यस्य। चैतन्यमात्रेण तु तदयोग्येनान्वयव्यतिरेकयोरेकस्याप्यनिश्चयात् सन्दिग्धान्वयव्यतिरेकत्वं वक्तुं युक्तमुक्तम्,

संशयोऽथवेति।

सिद्ध्यसिद्ध्योरिति प्रकरणात्। ताभ्यां च भावाभावावुक्तौ। यथाह,— उपलब्धिरेव सत्ता अनुपलब्धिरसत्तेति। ततः कार्यत्वादिसाधनवति धर्मिणि दृष्टान्ते साध्यत्वेनेष्टस्य प्रयत्नवन्मात्रेण सत्त्वासत्त्वसन्देहात्, तदधिष्ठानानधिष्ठानाभ्यां च सर्वसंग्रहादेकतान्वयव्यतिरेकानुपपत्तेर्युक्तमसाधारणानैकान्तिकत्वम्।

ननु तथाप्यनेकान्तोऽप्यस्तु, अन्वयमात्रं किमिति प्रतिक्षिप्यते, कार्योत्पत्तौ बुद्धेरेव व्यापारदर्शनात्? जाठरसाधारणेनापि रूपेण तर्हि धूमेऽन्वयप्रसङ्गः, दहनव्यापारदर्शनात्। ततश्च तदपेक्षो व्यतिरेकोऽपि स्यादिति प्राचीनदोषः। प्रत्यक्षप्रतिक्षेपस्तु साधारणः।

ननु जाठराद्यभावेऽपि धूमभावान्न प्राचीनदोषः, सत्यप्यन्वय इति चेत्? कैलासकरणकौशलविकलेनापि कलसस्य करणं किं न कीर्त्यते? अथ करणकौशलसामान्येनान्वयोऽत्र? तत्रापि दाहकमात्रेणेति न व्यक्त्युपक्षेपेण किञ्चित्। जात्यपेक्षया तु तदान्यदापीति कथं तदभावेऽपि धूमभावः? अथ दाहकत्वमात्रं परिहृष्टविशेषाद् भिन्नां जातिमास्थाय व्यभिचार उच्यते, तदा तदपेक्षयान्वयोऽपि कुतः, प्रत्यक्षेण विशिष्टाया एव जातेरधिगमात्? अन्वये वा पुनर्व्यभिचारानुपपत्तेरिति।

यत्पुनः सजातीयेन प्रत्यक्षतः प्रतिबन्धनिश्चयमाशंक्य, न हि सर्वत्र समानजातिरनुमीयते, प्रत्यक्षश्च यस्मादसमानजातिः, अप्रत्यक्षश्च रूपादिव्यक्तिभिरनुमीयते चक्षुरादिग्रामः, तथा चन्द्रमसः पृथिव्याश्च परभागाधोभागावित्युक्तम्, तदपि पापीयः। तथाहि न तावद् व्याप्तिशून्यमनुमानम्, व्याप्तिश्च सामान्येन सामान्यस्य

भवन्ती कथमसमानानुमानमनुसहेत ? तथा च सा द्विधैव प्रत्यक्षानुपलम्भतः, विपर्ययबाधकाद् वा। उभयथापि दृष्टान्तदृष्टसजातीयस्यैवानुमानम्। अन्यथान्यजातीयेन धर्मेण व्याप्तिमुपादायान्यजातीयमनुमिनोतीति महती प्रेक्षा।

सामान्यतो दृष्टानुमानेऽपि हि यदेव गतिसामान्यमन्यस्थानप्राप्तिनिबन्धनमुपलब्धम्, तदेवाधिकरणान्तरे निश्चीयत इति कथं विजातीयधर्मानुमानम ? अथाधारभेदापेक्षया सामर्थ्यसाध्यमवान्तरभेदमभिप्रेत्योच्यते, तदनुक्तसमम्। न हि कश्चित् अनुमानवादी तन्मात्रेण विशेषमनिच्छन् [44b] फलिनमनुमानं समर्थयितुमीशः। यदि चेश्वरानुमानेऽपि तादृशो व्याप्तिः स्यात्, तन्मात्रविशेषसिद्धया चेष्टसिद्धिः स्यात्, कस्तत्र मत्सरमाचरेत् ? न च तन्मात्रविशेषापेक्षया न हि सर्वत्र समानजातिरनुमीयत इति वक्तुं युक्तम्, क्वचिदसमानजात्यनुमानेऽपि तथोच्यते, तन्मात्रविशेषश्च सर्वत्रानुमानेऽस्ति। विशेषतो दृष्टस्य सामान्येऽपि तदेव निश्चीयत इति तदपेक्षया न सर्वत्र तदेवानुमीयत इति वक्तव्यम्, भेदाधिष्ठानत्वात् समानजातिचिन्तायाः।

तत् पुनरप्रकृतमेव। स तु न सर्वः प्रत्यक्षोऽनुमीयत इति। यदि प्रकृतमग्निवत् प्रतिबन्धग्रहे प्रमाणमधिकृत्योच्यते, तदा प्रत्यक्षस्यैव सर्वत्रानुमानम् अन्यत्रापदिष्टप्रमाणप्रवृत्तेः। अथ विपर्ययबाधकापेक्षया, तदा न वक्तव्यं न कश्चिद्विशेषोऽग्निसाधनात् ईश्वरानुमानस्येति। अनित्यसाधनादिति तु वक्तुमुचितम। अथ कार्यहेतुतामात्रेणैवम् उच्यते, तदा कार्यकारणभावः प्रत्यक्षानुपलम्भसाधन एवेति स एव दोषः। न च विपर्ययबाधकं किञ्चिदस्तीति चर्चितमेव। देशाद्यनियमप्रसङ्गश्च हेतुमात्रापत्तिं साधयत्यपि। तस्मात् प्रकृतप्रमेयानवगाहनात् प्लवत एतत् न सर्वः प्रत्यक्षोऽनुमीयत इति।

अनुमानकालापेक्षया तु सर्वः परोक्ष एवानुमीयते, न च तत्र काचिद् विमतिः इत्यनुक्तसमम्। इन्द्रियं तु न साक्षाद् बुद्धेरनुमातुं शक्यम्, प्रतिबन्धाग्रहणात्। बुद्धिकार्यं तु केषुचित् सत्त्वभावाभाववत्तदतिरिक्तकारणसापेक्षतामावहतीति तादृशीन्द्रियघोषणा। तत्राङ्कुरादिषु दृष्टजातीयमेव सापेक्षत्वं [यथा] साध्यते, तथा परभागाधोभागावपि घटादिकार्येषु। अर्वागेकसामग्रीप्रतिबद्धौ सामान्यतो दृष्टावेवानुमीयेते इति साध्यशून्यमुदाहरणमपि इत्यलं बहुना। अथवा कारणसामान्येन कार्यसामान्यं व्याप्यते, कारणविशेषेण तु कार्यविशेष एवेति न्यायः। अध्यवसायमात्रतो वा कारणसामान्येन कार्यविशेष इति प्रवादः। तत्रायं कारणविशेषेण बुद्धिमता कार्यसामान्यं व्याप्तमितिब्रुवाणः प्रमाणावष्टम्भेन नाम प्रसिद्धिमुल्लङ्घयेत्।

तच्च प्रमाणं व्याप्तिसाधकं द्विविधमेव प्रत्यक्षानुपलम्भं वा, विपर्ययबाधकं वा, अनयोः प्रत्यक्षानुमानस्वभावत्वात्, अन्यतो निश्चयायोगात्। तत्र तावदुक्तक्रमेण कार्यसामान्यस्य,

नो भेदेन विपक्षबाधकवशाद् व्याप्तिः समस्तस्य च
प्रत्यक्षानुपलम्भतो न तदतज्जातीयभेदस्पृशः।
प्रागभावादिनिषेधपूर्वकतया धूमादिवज्जन्मधी-
रन्वेतीदृशमीदृशादिति यतः सामान्यभेदद्वयम् ॥

इदमुपलब्धिलक्षणप्राप्तमनुपलब्धमस्योपलम्भ उपलभ्यत इत्येवं [45a] हि प्रत्यक्षानुपलम्भयोर्व्याप्तिग्रहणक्रमः। तत्रेदमित्येकजातीयतया एकप्रत्यवमर्शप्रतिभासि धूमादिकमनेककार्यजात्यन्तरव्युदासेनानेककारणजात्यन्तरव्युदासेन चास्येति वह्न्यादेः इत्यर्थः। ततः कार्यकारणयोः प्रत्येकं तज्जातीयेतरयोरितरेतरतो भेदे परामर्शपूर्विका प्रवृत्तिः, अन्यथा सामर्थ्यवैयर्थ्याभ्यामनुपयोगात्।

तथा ह्याकार्यराशिव्यवच्छेदेन वा, कार्यान्तरव्यवच्छेदेन वा इदमेतद् भावाभावानुविधायीत्यवधार्येत? आद्ये पक्षे एतानि वस्तुनि एतन्नियतानि इत्ययमर्थो नैवद्धास्त्विति, एकाकारविरहादेकाकारप्रत्यवमर्शानुपपत्तेः। ननु कार्यत्वादिना सामान्येन इदमिति कार्यं सन्निवेशो वेत्यादि वक्तुं शक्तेः, असिद्धमेतदिति चेत्? उच्यते, इह भावाभावविधानबुद्धिर्द्विधा संभवति, धर्मिविषया धर्मविषया च, कार्यस्य निर्वर्त्त्यविकार्यभेदेन द्वैविध्यात्। तत्राद्या सर्वात्मनोत्पत्तिनिश्चयमुपादाय धर्मिणमेव विशिष्टाकारक्रोडीकृतं कालदेशादिभेदभिन्नमपि स्वभावमन्त[र्भाव्यै]कप्रत्यवमर्शाद् विषयीकरोतीति तद्विषयेत्युच्यते। स हि संभविनमप्यतदाकारभेदविरोधिनं धर्ममुदासयति, धूमादिषु धवलतादिवत्।

यत्र पुनरवस्थितस्यैव धर्मिणो धर्मान्तरमुदयमासादयति, तत्र धर्ममात्रस्यैव हेतुभिरन्वयव्यतिरेकाविति धर्मविषयेत्युच्यते। सा पुनराकारमेवोदासयन्ती धर्ममात्रम् अधिष्ठानीकरोति रागादिवत्। न ह्याकारक्रियादिवैजात्यमत्यन्तमनुभवन्तः पटकूटादयः साधारणरागयोगिनो गृहीतसामर्थ्यरागद्रव्यान्तरयोगमनुमाप्य तृप्यन्ति। प्रथमा त्वाकारशरणैव सर्वात्मनोत्पत्तेः। यथैव हि विशिष्टाकारोपरक्तं वस्तु कुतश्चिदुपजायते तथैव तद्बलोत्पन्नेनेन्द्रियज्ञानेनानुभूयानन्तरं विकल्पद्वारेण व्यवहारगोचरीक्रियत इति

कथमाकारपरिहारः ? अतएव धूमकुम्भादिव्यक्तिरेकत्रानुपलभ्यप्रमया उपलभमानस्य अन्यत्र तदेव यद्युक्तिभेदेन व्याप्तिसिद्धिरतत्रैव तत्कारणावसायो जायते, नान्यत्र व्यभिचारदर्शनादर्शनमपेक्ष्यापि। अनन्तरं त्वाकारमुदासयेत् केवलं व्यवस्थिते धर्मिणि धर्ममात्रोदयदर्शिनः।

न च व्यवस्थिते कुम्भादौ कार्यत्वादिधर्ममात्रोत्पत्तिरीक्ष्यते, क्षितिधरादौ वाभ्युपेयते, येनाकारमनादृत्य रागवत्तन्मात्रमेव हेतुमनुमापयेत्। सन्निवेशस्तर्हि स्थित एव तदात्मनि कुम्भकारादिति चेत्– न, प्रागपि संस्थानचिनाकृताया मृदोऽनुपलब्धेः। अथ तादृशस्याभाव एव पूर्वं यः कुम्भप्रज्ञप्तिगोचर इति चेत् ? तदेव संस्थानं तर्हि पुरुषादिति न तावन्मात्रव्याप्तिः,

तथापि यदि संस्थानसामान्ये पुरुषक्रिया।
हरिद्राद्रव्ययोगोऽपि [45b] वर्णमात्रविधायकः॥

ननु तथापि न पूर्वसिद्धदर्शनमित्येव व्यक्त्यन्तरे गृह्यमाणाया व्याप्तेर्व्याघातः, तद्बलात्त्वनुमानमेव तत्रेत्यनन्तरमेव समर्थितम्। न च तावता वर्णमात्रं कुसुम्भसंभवसाधनसाधु, व्यभिचारालम्बनं तु दुर्बलमिति किमत्र प्राप्तम् ?

गुणेऽपि द्रव्यवत् तस्मात् सजातीयपरिग्रहः।
तत्पूर्वसिद्धेऽप्यनुमा न वर्णात् कुङ्कुमस्य च॥

तन्नियतविशेषापरिग्रहे हि रागादपि कुतः कुङ्कुमानुमा ? दवीयसी तु वर्णमात्रात्। वर्णवच्च संस्थानस्यापि विचित्रमेव वैजात्यमनुभवविषयः। तदनयोरेकत्र जातिनियमेन व्याप्तिव्यवस्थानमनियमेन वा व्यक्तौ व्यभिचारो नैकनियतः। तस्माद् वर्णवदनेकजातिनि संस्थानेऽपि तत्त्वं सामान्यमनुवर्तमानमपि व्याप्तिग्रहाद् बहिर्भूतम् एव। एवमर्थक्रियापि पूर्वमसति वस्तुनि पुरुषादिति वक्तुमशक्यम्। सर्वसामर्थ्यविरहिणः प्रागभावप्रसङ्गेनापूर्वोत्पत्तिप्राप्तेरिति विशिष्टे वार्थक्रियापि पुरुषान्वयव्यतिरेकानुविधायिनीति सिद्धम्।

तस्मादेवंविधा धर्मविषयापि व्याप्तिबुद्धिर्न सामान्यमनुधावति। यदा तु कार्यहेत्वधिकारेण धर्मिविषयैव, तदा यथापरिदृष्टाकारार्थक्रियासामान्यं समाश्रित्य यथा कारणे प्रतिनियतस्वरूपसामान्येन व्यापकत्वावसायिनी, तथा कार्येऽपि प्रतिनियताकारसामान्यपुरस्कारेणैव व्याप्यत्वावसायिनी समक्षबुद्धिरिति न सन्देहः।

अन्यथा कार्यवत् कारणेऽपि बुद्धिमदादिविशेषव्युदासेन प्रवृत्तिमती मतिः किमभिमतम् उपनयेत् ? तस्मात् कारणवत् कार्येऽपि तथाभूताकारविशेषमेवमयमवसातुमर्हति ।

तत्रेदानीं तदाकारबहिर्भूतेषु भूतलादिषु सदपि कार्यत्वमभिधीयमानमनुपयुक्तमेव, धर्मविषयहेतुफलमाहिप्रत्यक्षव्यापारापेक्षया धर्ममात्रसाम्यस्याकिञ्चित्करत्वात् । न हि तदेवाकारार्थक्रियादिरूपं तत्साम्योन्मीलनहेतुर्वा । तदनेन साम्यं न किञ्चिदर्थं पुष्णाति अगौणकार्यशब्दप्रवृत्तेरन्यत्र । स हि संकल्पनिवेशिन्युदयार्थमपेक्षितपरव्यापारमात्रे अर्थे अकारादिकमुदास्य कृतसमय इति न तस्य व्याघातः । उपपत्त्यन्तरेण व्यापकतया यः प्रतीतो धर्मः तत्रैव नाशवत्प्रत्यक्षव्यापार एव तु स्वोदयसमयपरिस्फुरदाकारादिसादृश्यमपेक्षते, देशादिकृतभेदे तु वैसदृश्यावसाय इति न विरोधः ।

तस्मादेककार[ण]विरहात् प्रत्येकं प्रत्यक्षानुपलम्भापेक्षायामेतानि वस्तूनि एतत्कारणानुगामीनीत्यनेनैवाकारेण व्याप्तिनिश्चयः कार्यः । केवलमद्यापि न व्यक्तिकार्त्स्न्येनोपयोग इति सर्वकार्यप्रकारेष्वेकैकविषयोऽवतिष्ठते । स [46a] चाशक्यः क्रमयौगपद्याभ्यामयोगात् । तथा हि न तावत् सकृदेव तेषामन्वयः, सर्वप्रकारोपनिपाते दर्शनस्य द्रष्टुरेवान्तर्धानप्राप्तेः । व्यतिरेको वा शक्यनिश्चयः, अशक्यपरिहारत्वात् केषाञ्चिदाधारालोकशरीरादीनाम् ।

नाप्येकेन नरायुषा क्षममिदं सर्वप्रकारेक्षणं
कार्यस्यान्तवियोगतः कतिपयापेक्षासु कार्त्स्न्यं कुतः ?

न खलु भूयसोऽपि भागस्याभिविधिबोधे निर्वृत्तिः, न हि तदपि यद्यत् कार्यं तत्तदेवम् इति शक्यमभिधातुम्, एतावदिति तु स्यात् ।

यत्पुनरेकत्र प्रवृत्तो विचारः सर्वभावांस्तथाभावे व्यवस्थापयतीत्युच्यते, तत्साधारणाकारप्रवृत्तिमधिकृत्याकृत्यादिव्युदासेन प्रमाणान्तरावलम्बनात् । प्रत्यक्षव्यापार एव ह्येकजातिग्रहनियम उक्तः । ननु तत्राप्यवान्तरानेकभेदसंभवादयमेवम् इत्यभिधातुमशक्तेरनाश्वासः । अत्र वा भेदतिरस्कारेण धूमादिजात्यन्तरमवलम्ब्य संव्यवहारे कार्यतामाश्रित्य जात्यन्तरेष्वपि कीदृशो दोष इति चेत् ? न वयं स्वेच्छया कञ्चिद्भेदं तिरस्कुर्मः, पुरस्कुर्मो वा कामपि जातिम् । अध्यक्षपूर्वकस्तु संस्कल्पो यथा अर्थानुपस्थापयति भेदेनाभेदेन वा, तथा हेतुफलभावव्यवहारमवतरामः । स तु

प्रकृतिविशेषमासाद्य यदि सूक्ष्मस्थूलभावेन भेदेष्वभिभूतिसामर्थ्यासामर्थ्याभ्यां भिनत्ति वृत्तिम्, किमत्र केश्चित्कर्तव्यं[1] तद्विवर्तस्तु चिन्त्यः। तत्र,

धूमोऽवान्तरभेदवत्यपि यथा जात्यन्तरापोहितं
सारूप्यं विषयीकरोति हृदयं किं कार्यमात्रे तथा॥

एकसंस्थानाद्यनुगमाननुगमयोः प्रत्यात्मवेद्यत्वात् नापरमत्र प्रार्थ्यते निर्णयनिबन्धनम्, अन्यथा च व्यपदेशार्थक्रियाविनियोगादिसंकरप्रसङ्गः। तस्मान्न क्वचित् कारणे सर्वकार्यप्रकाराणां क्रमेण यौगपद्येन वा अध्यक्षानुपलम्भसंभवा व्याप्तिरुपपादयितुं शक्येति किमाभ्याम्? अत एवंमुखेन सर्वकार्यव्याप्तिवादिनः स्वाभिप्रायनिवेदनमात्रमेतद्, वर्त्मनि स्थाणूपदेशघोषणवत्। तथा च सति इच्छामात्रं साधनम् अस्त्विति स्फुटमनयोरपार्थकत्वम्। तस्मादाभ्यामत इदमिति मतिः कार्यान्तरव्यवच्छेदेनैव भवन्ती न कार्यमात्रगोचरीकरणसंवादमासादयति। ततो निश्चयमुपादानादिविदोऽपनुदन्नाह,–

संशयोऽथवेति॥

परेष्टसिद्धिर्न परस्य बाधने प्रसाधने वेदन[य]न्नमात्रयो-
रनन्वयोऽभीष्टविशेषसाधने विपक्षसन्देहसहं तु साधनम्।
साध्ये च दृश्ये व्यभिचार एव दृश्यं न चेन्न व्यतिरेकसिद्धि-
र्न चान्वयोऽपि व्यतिरेकवद् वा व्याप्तिर्विशेषेण न चेतरस्य॥

॥ द्वितीयः खण्डः॥

---

१. केचिदिति मातृकायाम्।

एवं सति सत्यपि व्याप्तिरशक्यनिश्चया संभाव्यत इति किमत्र साम्प्रतमिति [46b] चेत्? पश्य,

कार्यं तावदनेकजाति, जनकश्चैको जडो वीक्षते
नानाभेदवतो न चैकनियमज्ञानेऽन्यभेदेऽपि तत्।
यद्यज्जातिकमेकहेतुविदितं तत्तत्तदङ्गं ततो
नैवं चेदतिसञ्जनं न च मतः साध्योपमेऽयन्नयः॥

न हि नानाप्रकारकार्यजननं नाम प्रयत्नवत्येव नियतम्, वह्न्यादेरपि विविध-सामग्रीमध्यमध्यासीनस्य धूमभस्माङ्गाराङ्गतापपाकपार[दो]त्सारणवीचणक्वतिप्रभृति-विचित्रकार्यक्रियादर्शनात्। यदि परं प्रयत्नवतोऽधिष्ठानेनेत्यत्र विवादः, न चैकस्य तत्र नियमे ज्ञाते कार्यान्तरेऽपि नियमज्ञानमुपपद्यते, यथोक्तं प्राक्। ततो यावन्तः प्रकारा एकहेतवो निश्चिताः, तावन्तस्तस्य हेतोश्चेतनस्येतरस्य वा साधनं युज्यन्ते। अन्यथा स्तिमितेन्धनसखेन शिखिना गृहीतधूमव्याप्तिरपरिचिततत्कार्यभावैर्भस्मादिभिरपि दहनमनुमिनुयात्। न चैवं, तस्मात्तज्जातिभेदो व्यक्तो व्याप्तिमहश्च पृथक् पृथगपेक्ष्य-माणो यत्र क्वचित्तद्ग्रहणेन येन केनचिदनुमानमुन्मूलयति।

कः पुनरेवमाह, यत्र क्वचिद्गृहीतव्याप्तिर्येन केनचिदनुमिमीतामिति, एकधर्मा-नुवृत्तिविरहे हेतोरेवाभावात्? न हि तदा भस्मसाधनमव्याप्तेः। नापि धूमोऽसिद्धेः। कुटकूटादौ कार्यत्वमेवान्यधर्माननुवृत्तावप्यनुमाने वर्तमानं हेतुः स्यादिति चेत्- न, कार्यत्वस्यापि प्रागव्याप्तेर्विस्तरेण साधनात्। तत्र यथा कुलगिरिः कुलालव्यापारकाले स्वभाववैकल्यादिकलितनियमः, तथा सदपि कार्यत्वं प्रामाण्यप्रवृत्त्या धूमजन्मनीव रासभ इति प्रमाणेन व्याप्तिग्रहविरहे न कश्चिद्विशेषः। तदयं घटादौ कार्यविशेषे गृहीतव्याप्तिः सर्वतो न कार्यतामात्रेण वा व्यापकमनुमातु। न तु व्याप्तिग्रहणसाधन-व्यवस्थयोर्भिन्नाधिकरणतामतिक्रामतीति कथमतिप्रसङ्गोपालम्भपरिहारः?

तस्मान्नैकधर्मानुवृत्तिमात्रेणोपयोगः। केन वा धूमसंभविनः कार्यत्ववस्तुत्वादयो भस्मनि भस्मसादेव कृताः? सन्तोऽपि व्यभिचारिण इति चेत्? ननु सव्यभिचारो व्याप्तिवियोगादेव, व्याप्तौ तद्गन्धस्याभावात्। स च व्याप्त्यभावः कार्यत्वेनापि अ[व]र्जित इति तत्रापि व्यभिचारो दुर्निवारः। आहत्यादर्शनं तु विप्रकर्षादपि स्यात्।

न तावता तदभाव एव, तन्मूलभूताया अव्याप्तेस्तादवस्थ्यात्। यदि तु व्याप्तावेव सव्यभिचारः, तदा नितरामव्याप्तावित्यलं मिथ्याभिनिवेशेन। तद् यद्यपि साधारणधर्मो तन्मात्रं व्याप्तिमनादृत्य साधनमिष्यते, किं न भिन्न एव भूधरादिसाधारणं धर्मम् अनादृत्येत्यतिप्रसङ्गस्तदवस्थः ?

नाप्ययं नयः साध्यसमानीकृते कलसादावप्यस्ति, तत्रापि यथायथा प्रतिसरशरावोदञ्चनादिषु कुम्भकारकृतिमुपलभामहे, [47a] तथातथैवमपीदमप्यनेन सृज्यत इति प्रतियन्तः परिचितक्रियेभ्य एव प्रकारेभ्यस्तद्व्यापारमवधारयामः, अन्यथा तद्दोपानतिवृत्तिः। तस्माद् यदि परमार्थतः प्रयत्नवन्नान्तरीयक एवायं सकलप्रकारः कार्यग्रामः, तथापि स्वयमकिञ्चित्कर इति प्रमाणवृत्त्यपेक्षया,

सिद्धं यादृगधिष्ठातृभावाभावानुवृत्तिमत्।
सन्निवेशादि तद्युक्तं तस्माद् यदनुमीयते ॥
[ प्र. वा. १. १३ ]

इति ॥ यददृष्टेरक्रियादर्शिनोऽपि कृतबुद्धिर्भवति, शून्यनगरपरिदृष्टदेवकुलादिवत् सन्निवेशादि,

तादृगेव यदीदृयेत तन्नगादिषु धर्मिषु।
युक्तं तत्साधनादस्माद्यथाभीष्टस्य साधनम् ॥
[ ]

तच्चासिद्धमित्याकृतम्।

ननु भवत्येवास्माकं सर्वत्र पौरुषेयबुद्धिः, कृतबुद्धिः सा, साध्यबुद्धिरेवानुमानम् इति नियमः, कथञ्चित् कस्यचित्तत्राप्यभावात्। किं च कृतबुद्धिरिति कार्यमात्रबुद्धिर्वा, पुरुषमात्रबुद्धिर्वा ? यदि कृतकमात्रबुद्धिः, सा बौद्धस्यापि सिद्धा सिन्धुभूधरादिषु। सावयवत्वाच्च तदारम्भसंभवित्वमेव कृतत्वम्। अथ पौरुषेयबुद्धिः कृतबुद्धिः ? सा साध्यबुद्धिरेवानुमानमिति चोच्यते, ततस्तदभावान्नानुमानमिति कथमुच्यमानं नोपप्लवते ?

यदाह, न च व्यामोहात् कस्यचित् साध्यबुद्ध्यभावे हेतोरसिद्धतादोषः, सर्वानुमानेषु तद्भावप्रसङ्गादिति। यदपीदमुच्यते, तादृक्कार्यत्वादि निषिद्धमचलादिष्विति,

तत्रापि न कार्यत्वादिना कैलासकलसादेः किञ्चिद्विशेषमुपलभामहे। आह च, नापि कश्चिद्विशेषः चित्यादिहेतूनां प्रासादादिहेतुभ्यो येनामी निरभिप्रायाः सन्तः प्रयत्ननिरपेक्षाः प्रतिनियमवता च व्यापारेण तद्वन्तः स्युः, न ह्यनधिष्ठितानां प्रयत्नवता करणधर्माणां क्रियासु स्वातन्त्र्यमुपलब्धिपूर्वम्, सर्वत्र बुद्धिमदधिष्ठितेष्वेव प्रासादादिप्रसवोपलब्धेरिति ॥

अत्रोच्यते, नेयं कृतबुद्धिः सिद्धान्ताभिनिवेशवासितबुद्धीनधिकृत्य कीर्तिता, किं तु संव्यवहारप्रगल्भपुरुषमात्रापेक्षया। तस्य च पूर्वप्रतीतप्रतिबन्धस्मरणवतः कारणपरामर्शवैमुख्याभावे भवत्येव देवकुलादौ तादृशी बुद्धिर्न तु मलयमकरालयादौ। तदनयोरस्या धियो भावाभावौ न जातिभेदमव्यवस्थाप्य स्थातुं प्रभवतः, धूमद्वयदर्शनेऽपि तथाभावप्रसङ्गात्। इयं च कार्यं साध्यबुद्धिरेव, कः पुनरेनामेतद्वतोऽनुमाननिबन्धनमाह, तदभावाद् वा भूधरादौ तदभावम्? किं तु जातिभेदमात्रोपलक्षणार्थमस्या भावाभावोपन्यासः समानजनापेक्षया कस्यचिद् दुर्विदग्धबुद्धेः प्रतिबोधसाधनाय। जातिभेदे हि तावति सिद्धे नैकत्र प्रवृत्तमध्यक्षानुपलम्भमन्यत्र प्रतिबन्धसाधनसमर्थमिति वक्तुं [समर्थः] स्यात्।

ततो नाप्रतिबद्धात् सन्नि[47b]वेशादेः साध्यसिद्धिः, प्रतिबद्धश्चासिद्ध इति कथमनुमानमित्यन्ततोऽनुमाननिषेधायोपन्यासेऽपि नैकस्यैव तदभावात्तदभाव इत्युक्तं भवति। ननु तथाप्यन्यस्यानुमानोदयाभावादन्यस्यापि न भवितव्यमित्युक्तं भवति। तच्च कथं सङ्गतिमालम्बेत? उक्तं हि, न च व्यामोहादित्यादि। तदयुक्तम्। समानसाधनसामग्रीसंभवे साध्यस्यैकप्रतिनियमानुपपत्तेः। यद् येन विशिष्टसामग्रीकं तत् तेनाविशिष्टफलमेव, यथा साधारणधूमसाधनेन्धनदहनादिसमुदायं प्रदेशद्वयम् अन्योन्यम्, अविशिष्टानुमानसाधनप्रतिबन्धग्रहणादिसामग्रीकश्च भवता सह सांव्यवहारिकः पुरुष इति स्वभावहेतुः प्रसङ्गः। भवतोऽपि हि प्रत्यक्षानुपलम्भमेव प्रमाणं प्रतिबन्धसाधनं देवकुलसूत्रधाराद्यधिकारेण प्रवृत्तम्। एतच्च परस्यापि साधारणम्। असाधारणं तु विपर्ययबाधकप्रमाणमेव दुरभ्यूहतया भवेत्। तच्च भवतोऽपि नास्तीति प्राक् प्रकाशितम्।

तद् यदि स्वमताभिनिवेशमात्रमनुभवतो नावृणोति चेतः, किं तु तदेव साधनम् इतरसाधारणम्, तदा तस्यापि शून्यनगरपरिदृष्टदेवकुलादिवन्मेरुमन्दरादावपि पौरुषेयानुमानमनिवार्यम्। न चैवम्। ततो यस्य यत्प्रतिबन्धग्राहकप्रमाणव्यापारे

यथावत्स्मरणवतो यद्दर्शनान्न तदनुमानं न तस्य तत्र प्रतिबन्धः सिद्धो, यथाग्नौ धूमप्रतिबन्धस्यानुस्मरतो गर्दभदर्शनादग्निमननुमिन्वतः। न भवति च चेतनेन देवकुलादिप्रतिबन्धस्मृतिमतो मलयहिमालयादौ पुरुषानुमानमिति कार्यानुपलब्धिः स्मरणकारणानुसरणवैमुख्यादिप्रत्ययान्तरसंभवे प्राचीनप्रतिबन्धसाधकप्रमाणेन विषयीकरणवैकल्यं साधयति। तच्च न जातिभेदातिशयमन्तरेणावान्तरभेदवतोऽपि, धूमाद् गर्दभवत्।

व्याप्तिग्रहणस्मरणयोरपराधे तु नेयमिष्टसिद्धिः। तदर्थं यथावद्ग्रहणम्। तत्र स्मरणापराधे देवकुलान्तरादपि नानुमिमीत, ग्रहणापराधोऽपि प्रत्यक्षापेक्षयाऽसंभवी, एकप्रत्यवमर्शयोग्यताया एवाभावादित्युक्तेः। अन्यथा जलधरार्थिनोऽपि कुम्भकारसूत्रधारादीनपेक्षेरन्। अपेक्षत एव तत्रापि सूत्रधारस्थानीयोऽन्यो यथा कुम्भकारस्थानीयः कश्चित् सूत्रधार इति चेत्- न, कार्यजातिवैसदृश्याभावे कारणसामर्थ्यवैसदृश्यापेक्षानुपपत्तेः। अन्यथा कुम्भान्तरेऽपि न कुलालमात्रेण तोषमश्नुवीत। तद्वद् वा कृषीवलः कुलालपौरुषापनेयानावृष्टिकष्टः स्यादिति सिद्ध एव तादृशो जातिभेदः, तस्मादेकाकारप्रत्यवमर्शानुपपत्तेरध्यक्षसाध्या व्याप्तिर्विशिष्टविषयतया न दुर्ग्रहदोषमावहति, यतोऽनुमानाभावेऽपि जातिभेदातिशयस्यासिद्धेः सिद्धसाधनदोषः स्यात्।

[48a] ततश्च यथावद् ग्रहणसिद्धेर्यत्र नानुमानं तत्र व्याप्तेरेवाग्रहादिति नानेकान्तः। कथं पुनरनुमानहानमेव तादृशि लोकस्या[व]गन्तव्यमिति चेत्? उक्तादेव जलधरार्थिनोऽपि कुलालजङ्घामर्दनप्रसङ्गात्, परचक्राक्रान्तिकातरस्य वा कुलगिरिजलधिव्यवधिमभिलषतः, चेतनमात्रेण व्याप्तिं प्रतीमो न कुम्भकाराद्यवस्थानियतेन तेन नायं प्रसङ्ग इति चेत्? तदवस्थानियतेनैव व्याप्तिग्रहे कीदृशो दोष इति किमत्र वक्तव्यम्? न च समयापक्षालकलङ्कितधियं भवन्तं प्रति काचिच्चिन्ता, अपि तु लोकं प्रति। सोऽपि व्यभिचारान्न तेन प्रतिपद्यते इति चेत्? एवं तर्हि कलसान्तरादपि नानुमानमयं कुर्यात्।

अन्यत्रैव व्यभिचारदर्शनादत्र को दोष इति चेत्? तदेतज्जातिवैसदृश्येऽसति न लभ्यते। ततश्च विशिष्टायामेव जातौ व्याप्तिग्राहि प्रत्यक्षं प्रवृत्तमतो नान्यत्र तद्व्यापारानुमानमित्येवं किं नोच्यते, किमत्र व्यभिचारोपक्षेपेण? अवश्यं च प्रत्यक्षस्य प्रतिनियतजातिव्यवसाय एषितव्योऽन्यथा व्यभिचारागोचरमपि प्रत्यक्षं न नियतजातिकमिति कलसान्तरमप्यास्कन्देत्। तथा च सति स एव दोषः। व्याप्तिग्राहिणैव

कलसान्तरस्याधिष्ठितत्वादिति चेत्? ननु तदधिष्ठित एव विषये व्यभिचारचारि चेतः प्रचरत् कथं तमेव परिहरेत्?

उभयोर्नियतविषयत्वे तु नायं दोषः। केवलमिदानीमध्यक्षेण विशिष्टविषय-स्वीकारान्न व्यभिचारोपन्यासः सफलः। व्याप्तिग्राहिणस्तु प्रमाणस्य विशिष्टविषय-प्रवृत्तिस्मरणाधानार्थमुपयुज्यते मूढं प्रति। न तु परितो विसारिणी व्याप्तिगृहीतिरस्य नियतविषया क्रियते व्यभिचारेण। नाप्यनुमानखण्डनमात्रमुक्तन्यायादेव। तस्माद् विशिष्टविषयैव व्याप्तिः कुम्भकारादिना गृह्यते व्यभिचारदर्शनादर्शनापेक्ष्यप्रत्यक्षस्यैक-जात्यपेक्षयैव प्रवृत्तेरिति सिद्धम्।

एवं चेतनमात्रेणापि व्याप्तिजिघृक्षायां व्यभिचारो दर्शनाभावात् यज्जातिनि वस्तुनि प्रत्यक्षप्रवृत्तिस्तदेव तेन व्याप्तं सिध्यतीत्यपि सिद्धम्। तत् कथं सामान्येन व्याप्तिमभिदधानः समयानुवादमात्रेण नोपालम्भमर्हति? यदि तु पुरुषमात्रेण व्याप्तिं जिघृक्षोरध्यक्षप्रतिक्षेपेण प्रमाणान्तरं शरणम्, तदा नैष दोषः। तत्तु विचा-रितम्। यदि वेश्वरप्रसादादस्य वादिनो जगतश्चित्राकारपरिहारेण सर्वत्रैकाकारं प्रत्यक्षमुदयमासादयति, तच्चासाधारणमिति न व्यवहाराङ्गम्। सशरीराशरीरयोः प्रयत्नवतोर्न कश्चिद्विशेषः कर्मधर्मापेक्षया प्रत्यक्षेण व्याप्तिग्रहणे, यतो जलधरार्थिना कुम्भकारानुसरणेन तत्कृतानुमानविरहानुमाने प्रकारान्तरेणापि संभावनायां जाति-भेदैकनिबन्धनाप्रतिबन्धात् सिद्धसाधनं पुनरप्यासज्येत। ततो जातिभेदकृतस्तत्रानु-मानाभावः संसिध्यन् [48b] प्रतिनियतजातिप्रतिबद्धमनुमानमुपपादयति।

विशिष्टजातिप्रतिबद्धपौरुषेयानुमानासिद्धौ वा अनुभवसिद्धमपि जातिभेदं शाठ्यादपह्नुवानः परलोकस्य जातिभेदनान्तरीयकेण तथा प्रवृत्त्यभावसिद्धेन कुलाला-दिकृतत्वानुमानाभावेन। अन्यथानुमानोदयं प्रसज्य जातिभेदमापाद्यते, यथा स्थाणु-काकाभ्यां भिन्नः संयोगो नाम यदि स्याद् दृश्यो लोकोऽप्येनं तृतीयमीक्षेतेति उच्यते। तथा च यदि यादृशः सन्निवेशो बुद्धिमत्पूर्वको दृष्टस्तादृगेव जलधरादावपि स्यात्, लोकस्यापि पुरुषकृतबुद्धिः स्यात्, घटान्तरवत्।

न चैवं तज्जातिभेदकृतोऽयं विभागोऽन्यनिमित्ताभावादित्युक्तं भवति। ततः कीदृशं पुनः सन्निवेशाद्यधिष्ठातृनान्तरीयकं सिद्धमित्यपेक्षायां यद्दर्शनादक्रियादर्शिनः अपीत्याद्युच्यते, पर्यायपरिकलितानेकप्रकारपरिगणनगौरवपरिहारार्थम्, तत्र पुरुषकृत-बुद्धिरिति प्रयत्नवदनुमानं वा कुम्भकारादिव्यापारानुमानं वेत्युभयस्यापि सङ्गतेः

प्रागुक्तक्रमात्। केवलं प्रयत्नयन्मात्रनिषेधसाधनसामग्रीकतया कुलालानुमानाभाव एव लिङ्गम्, तद्वित्तिसिद्धो वा व्याप्तिग्रहणाभावः। एतच्च परेच्छामनुपाल्य पल्लवितम्।

लोकस्तु यथा दर्शनानुसारी यज्जातिकं पुरुषपूर्वकं पश्यति, तत्तत्तादृशा वनुमतैव कृतमवबुध्यते, न तु शरीरविरतिसन्देहमप्युज्झिखतीति समानमानयानुमानपर्यवसानेव कृतबुद्धिरवतिष्ठत इति। यदापि यदि कस्यचित् सिद्धिवशादासुरीं मायालिम[1] आलोचयतोऽचलेऽपि कश्चिदुल्लेखो जायते, केनापि कैरपि वा कथित् कृतोऽयमपि भवेदिति, तदापि केनापि [2]करचरणाङ्गोपरक्त एवात्यन्तं प्रतिभाति। निश्चयस्तु सुदूर एव। न चैकजातित्वे तदुपपद्यते, धूमकुम्भादेरिवानलकुलालादेः। न च करचरणादिव्यापारविरहिण उल्लेखोऽपि। न च तावता क्षणिकादिवादिनोऽनुमानापलापः शक्यते। अध्यक्षपूर्वव्याप्तिग्रहसहायं तु जातिविशेषापेक्षवृत्तिकमनुमानमुभयोरपि साधारणत्वान्न संभवति लौकिकपरीक्षकयोरिति ब्रूमः।

यद्यपि च द्वितीयमपि लौकिकमेव, तथापि कश्चिद्विषयोऽनभ्यस्ततया तीव्रतराभ्यूहसापेक्षः [सू]क्ष्मधियः सांव्यवहारिकस्यापि संभवति। तत्र प्रत्यक्षाक्षमत्वेऽपि विपक्षबाधकेनानुमानान्तरेण लोकप्रतीतिमेवाश्रित्य गृहीता व्याप्तिरनुमानं प्रयोजयेद् इति न क्षतिः, यथा यत्रार्थापत्तिघोषणाविशेषो लोकस्य। तस्मात् साध्यबुद्धिरूपा कृतबुद्धिर्भावाभावाभ्यां जातिभेदं प्रसाधयतीति युक्तमेव। यदापि कृतमात्रबुद्धिः कृतबुद्धिः, तदापि न दोषः। तथापि कृतत्वं नाम स्वजन्मन्यपेक्षित[49a]परव्यापारत्वम्। तच्च न तावद् घटादिवत् प्रत्यक्षतः क्षितिधरादिषु सिद्धम्। पराभ्युपगममात्रसिद्धं तु स्वतन्त्रसाधनाधिकारेऽनङ्गमेव।

ततोऽनुमानसिद्धमाश्रीयमाणं दृष्टसजातीयं यथा कथञ्चिद् वाश्रीयते? अन्त्यपक्षे यद्यनाद्युपादानशक्तिसंतन्यमानक्षणपरम्परारूपमेव कार्यत्वं नियतदेशतया व्यवस्थाप्यमानं सिध्येत्, तादृशात् कीदृशी पुरुषाधिष्ठानप्रत्याशा? दृष्टसजातीयं तु तदङ्गमुचितम्। चेतनाचेतनाधिष्ठानकृतं विशेषमवधूय वितताऽनेककारणकलापमिलनलभ्योदयं हि पुरुषव्यापारमाकर्षेदपि, मिलनस्य तदधीनाध्यवसायात्। अचेतनोपादानत्वमात्रमपि हि प्राचीनक्रमेण चरितार्थं न प्रकृतं विशेषमाकर्षेत्। एतदेव तु कार्यत्वं लोके विदितम्। तच्च नाचलादौ सिद्धमिति कथमसिद्धिपरिहारः? केवलं न

---

१. मामालिमालचयतो° इति मातृकायाम्। २. कारणाङ्गो रिक्त इति मातृकायाम्।

साक्षादसिद्धिसाधनमिदम्, किं तु विजातीयत्वसाधनार्थम्। न च कार्यत्वमात्रमधिकृत्य, किं तु सर्वम्।

तदयमर्थः, किं तदधिष्ठातृभावाभावानुवृत्तिसन्निवेशादिसिद्धम्, यद्दर्शनादक्रियादर्शिनोऽपि लोकस्य कृतबुद्धिर्भवतीति। ततो यदि सावयवा कृतबुद्धिरपि भवतो भवति, तथापि लोकस्य नास्तीति भिन्नजातीयत्वं व्यवस्थाप्यते। अन्यथा कुम्भकारादिनापि भूधरादिव्याप्यं प्रतीयाल्लोक इति पूर्ववत् प्रसङ्गः। ततो जातिभेदादन्यदेव प्रत्यक्षानुपलम्भाभ्यां पुरुषकृतं प्रतीतमिति सिद्धम्।

यत्तूक्तं कार्यत्वे न कश्चिद्विशेष इति। अत्र सर्वसाधारणधर्मत्वेऽपि कार्यत्वस्य यदि प्रत्यक्षसाधना व्याप्तिरभिमता, तदा सदपि तदुदासीनमेवेत्युक्तप्रायम्। यदि तु विशेषमुत्सृज्याभूत्वाभावमात्रस्य चेतनाव्याप्तिर्विवक्षिता, तदा प्रत्यक्षव्यापारमप्युत्सृज्य प्रमाणान्तरं शरणमस्त्वित्यपि। तदभावे वा न किञ्चित् कार्यत्वेन सतापि।

यदप्याह– नापि कश्चिद्विशेषः क्षित्यादिहेतूनामित्यादि, तदपि ग्राम्यजनधन्धीकरणमात्रोपयोगि न विवक्षितार्थगतेर्गतिर्भवितुमर्हति। यथा पार्थिवत्वेन वज्रोपलानां लोहलेख्यत्वं साधयन् सन्दिहाने प्राह। नापि काष्ठपाषाणादिभ्यो दम्भोलीनां कश्चिद्विशेषो, येनामी पार्थिवाः सन्तो लोहलेख्यताविरहिणः स्युः। न ह्यलोहलेख्यानां कदाचित्पार्थिवत्वमुपलब्धम्। सर्वत्र लोहलेख्यतास्वीकृतेष्वेव घटचिटपादिषु पार्थिवत्वोपलब्धेरिति। तद्वत् प्रकृतमपि वचनरचनामात्रमाभाति।

यथा हि निरभिप्रायत्वेन सामान्यमनु[यन्तः] सर्वे पुरुषापेक्षकार्यारम्भभाजः प्रतीयन्ते, तथा पार्थिवत्वेन लोहलेख्यत्वस्वभावभाजः। यथा च तथा बहुदर्शनं विहाय नान्या गतिस्तथा अत्रापि। यथात्र किमेतल्लोहलेख्यत्वं पार्थिवत्वमात्रानुबन्धि, उत पार्थिवत्वेऽपि किञ्चिद्वि[49b]शेषमपेक्ष्येति शङ्का बहुलदर्शनेऽपि, तथा किम् अचेतनमित्येव कार्यक्रियासु चेतनापेक्षमुत क्रियाविषयापेक्षयैवेति समानम्।

किं च यदि दहनादिष्विव सूक्ष्मावान्तरभेदतिरस्कारेणैकप्रत्यवमर्शयोग्यतापेक्षया नापि कश्चिद्विशेष इति उच्यते, कार्येऽप्यविशेषप्रसक्त्या धूमादिवत् सौधसाधनस्यापि कुलगिरिकरणप्रसङ्गो दुर्वारः। ईश्वरस्वीकारे कदाचिदन्यथापि स्यात्, सर्वदा विपर्यये शालिबीजस्यापि शाल्यङ्कुरकरणनिराकरणप्रसङ्गः, सौधान्तरक्रियानिषेधो वा स्यात्। अथात्यन्तजातिभेदेऽपि निरभिप्रायत्वधर्ममात्रापेक्षया? तदपि विप्लव

एवायम्, न हि क्वचित् साधारणो धर्मो दुर्लभ एव। नापि तावता स्वभावपरभावो भावेषु विषामृतयोरेकक्रियाप्रसङ्गात् किमनिष्टमसंशितान्येव वा सौधादिसाधनानि अशक्यपरिहारनिरभिप्रायत्वं साधारणमवधाय यया स्वभावभेदाधिष्ठानया शक्त्या कार्यभेदमात्यन्तिकमारभन्ते तत्कृतप्रयत्नापेक्षानियमनिषेधोऽपि यदि स्यात् कीदृशो दोष इत्यर्थपदमेतन्नास्ति कश्चिद्विशेष इत्यादि।

तस्माद्विविधविशेषव्याप्तिग्रहणप्रकारस्याभावात् शङ्काया अनिवृत्तेः, स्वहृदयस्यापि संप्रत्ययाक्षमतया संभावनारक्षामात्रमेवंविधः प्रलापः। ततोऽवस्थितमेतदध्यक्षसाध्यप्रतिबन्धापेक्षया यज्जातीयं सन्निवेशादि प्रयत्नवता व्याप्तं सिद्धम्, न तद् भूधरादौ अस्ति, यादृशं चास्ति न तद्व्याप्तं सिद्धमित्यसिद्धिरनेकान्तो वेति।

एतेन यदाह त्रिलोचनः, ननु केयं कृतबुद्धिः किं साधनबुद्धिरथ साध्यबुद्धिः? साधनबुद्धिस्तावद् भवतां सिद्धैव, कर्मजं लोकवैचित्र्यमित्यभ्युपगमादिति। अथोत्तरः पक्षः? तेनायमर्थो भवति, नेदं क्षित्यादिषूपलभ्यमानं साध्यानुमानसमर्थं कार्यत्वम्, किं त्वन्यदेव साध्यबुद्ध्यजननात्। नचैतद् युक्तम्, सर्वानुमानोच्छेदप्रसङ्गात्। धूमादिष्वपि हि शक्यमेवेदं वक्तुं नायं वह्न्यनुमितिसमर्थो धूमः किं त्वन्यदेव साध्यदर्शिनः साध्यबुद्ध्यजननात्। तथा च तावत् साधनं न सिध्यति यावत् साध्यबुद्धिर्न सिध्यति, यावत् साध्यबुद्धिर्न सिध्यति तावत् साधनं न सिध्यतीति स्फुटतरमितरेतराश्रयत्वमिति तन्निरस्तम्।

न हि साक्षादसिद्धिचोदनमिदम्, किं तु यतो न व्यवहारिकस्य कृतबुद्धिः सिन्ध्वादौ घटादिव्याप्तिं स्मरतोऽपि ततो नैकजातित्वमिति जातिभेदमात्रसाधनमिदं स्यात्। ततो विशिष्टजातीयव्याप्तिद्वारेणासिद्धिरनेकान्तो वेति युक्तमेव। तत्र च कृतबुद्ध्यभावो नाम साध्यबुद्ध्यभावः साधनबुद्ध्यभावो वेत्युभयमपि निर्व्यूढम्।

यदपि भूषणकारः, कृतकत्वेन च प्रतीतौ कथं न कृतबुद्धिः? सर्वेषां प्रासादादिषु अपि कृतबुद्धिर्न भवति, यथा चिरन्तनेषु प्रासादादिषु [50a] व्याप्त्यभिज्ञस्यैव कृतबुद्धिर्भवति, व्याप्तिविमूढानामकृतबुद्धिरेव, तथा क्षित्यादिष्वपीति न कश्चिद् विशेषः। पुरुषकृतबुद्धिः प्रासादादिष्विव क्षित्यादिषु न संभवतीति चेत्? किं प्रसिद्धाविनाभावानामुताप्रसिद्धविनाभावानाम्? प्रसिद्धाविनाभावानामपि किं व्याप्तिग्रहस्मृतिविकलानाम्, अथान्येषाम्? अभ्रष्टस्मरणानां तावद् भवत्येव पुरुषकृतबुद्धिः। लोके अपि हि विचित्रं जगत् केनचिद् धात्रा निर्मितमित्यस्ति प्रतीतिः। व्याप्तिग्रहस्मृवि-

विमूढानां तु प्रासादादिष्वपि केषुचिन्न पुरुषकृतबुद्धिर्भवतीति नतावता तेषामपुरुषकृतत्वम्।

अपि चेयं वेदेष्वपि पुरुषकृतबुद्धिर्मीमांसकानां नास्तीत्यतश्च तत्रापि पुरुषकृतत्वसाधनायोक्ता वाक्यत्वादयोऽप्यसिद्धाः स्युः। किं चानित्यत्वसिद्ध्यर्थं यत्कृतकत्वसाधनमुक्तम्, तदप्यसिद्धं स्यात्। न हि यादृशं कृतकत्वादि घटादिषु दृष्टं श्रोत्राग्राह्यत्वरूपम्, तादृशं शब्देऽस्तीति। तस्माद् दृष्टान्तदार्ष्टान्तिकवैधर्म्यमेतत् सर्वानुमानेषु समानं नेश्वरानुमानस्यैव बाधकमिति, तदप्येतेनैव प्रत्युक्तम्।

यत्पुनः साध्यबुद्धिमधिकृत्य विकल्पितं किं प्रसिद्धानुमानभावानामित्यादि। अत्र ब्रूमः। य एकदा सूत्रधारादिव्यापारे देवकुलकलसादिसंभवमुपलभ्य कालान्तरे कलसादिसंदर्शनात् पुरुषकृतिमनुमिमीते स कीदृशो वक्तव्यः, प्रसिद्धाविनाभावस्मरणवान्न वा? आद्ये पक्षे तस्यैव नाचलादौ पुरुषकृतबुद्धिः, कुलालानुमानस्यापि प्रसङ्गादित्युपपादितम्। तत्कथमभ्रष्टदर्शनानां तद्भावनियमः? तत एव विचित्रं जगदित्यादिमतिरपि न व्याप्तिग्रहस्मरणबलात्, किं तु दर्शनान्तरप्रभवप्रवादवशात्, तमशृण्वतामभावात्, विपरीतवादवत्।

व्याप्तिविमूढानां त्वित्यादि सिद्धसाधनं च। उदाहरणमपि पापीयः, कृतबुद्ध्यभावस्य जातिभेदमात्रोपदर्शनपरत्वात्। न च वादिप्रतिवाद्यपेक्षया तद्भावाभावचिन्तेत्युक्तम्, स्वयं वा अभिनिवेशेनान्यथापि संकल्पसंभवात्। प्रत्यक्षापेक्षया तु व्यावहारिकाधिकारेण चिन्तेयम्। तस्य चाविदितवेदादिसंकेतस्य वैदिकवाक्ये तत्प्रतिच्छन्देन च रचितमपरं शृण्वतो निपुणमपि निरूपय[']श्चिन्तय तावत् कीदृशो विशेषावसायः, कलसकुलिशादिवत् सर्वप्रकाराणां पुरुषैः करणदर्शनात्, प्रत्यक्षस्वभावानां शब्दानां प्रत्यक्षभेदकल्पने धूमादिष्वपि प्रसङ्गात्। ततश्च,

यद्भावः पुरुषान्वयव्यतिरिचोस्तद्भावभाजः स्थिता
नान्यस्माद् वचसश्च वैदिकगिरां भेदोऽस्ति शक्यात्मनोः।
तुल्यातीन्द्रियसूचना च नियतं नैकत्र चाश्वासनं
वेदस्तेन न पौरुषेयपदवीमप्राप्य विश्राम्यति॥

यदि तदा कोऽवकाशस्तद्भावस्य प्रत्यक्षमहावैजा[50b]त्येषु शैलादिषु। तदेतदायातम्,

एकः कार्यविशेषमेव कलयन् हेतोर्विशिष्टं निजं
 लब्ध्याग्नेरिव कार्यमात्रममुना व्याप्तं मुधा मन्यते।
तज्जातीयकमेव कार्यमपरो नावैति तद्धेतुकं
 हन्त ध्वान्तविशेष एष विदुषामध्यक्षवस्तुन्यपि ॥

न च लौकिकवैदिकवाक्ययोर्वैजात्यसंभवे समयमात्रेण पराजेतव्यो मीमांसकः। न च प्रत्यक्षाक्षिप्तव्याप्तिकं वाक्यत्वमेव तत्र शरणम्। कृतकत्वे तु यदुक्तं तदपि चिन्तितं चिन्तयिष्यते चानन्तरमिति। ननु तथापि तद्व्याप्तेऽपि कार्ये कार्यत्वादि दृष्टम् इतरत्रापीति यथा घटादि प्रयत्नवन्नान्तरीयकम्, तथा पृथ्वीधराद्यपि स्यादिति चेत्? ननूक्तमत्र कार्यत्वादि विद्यमानमपि तत्राशक्यव्याप्तिग्रहतयोदासीनमेवेति तेनाभिद्यमानादपि कार्यान्तरान्न यत्नवतः स्पर्शोऽपि लभ्यते, केवलं कार्यं कार्यमिति शब्दमात्रमभिद्यमानमवशिष्यते। तद् यदि तदेव द्वारान्तरेण शरणीकृतमायुष्मता तत्र साक्षाद् दूषणाश्रवणात्, तदा तदपि काकभक्षणप्रायमित्यादर्शयन्नाह,–

वस्तुभेदे प्रसिद्धस्य शब्दसाम्यादभेदिनः।
न युक्तानुमितिः पाण्डुद्रव्यादिवद्धुताशने ॥
[प्र. वा. १. १४]

एतेन यदप्युक्तं, नाप्यत्र शब्दसाम्यादचेतनोपादानत्वस्य समारोपेण साध्यसिद्धिः, अनित्यत्वादिना कृतकत्वादिष्विव प्रत्यासत्तेरिहापि वास्तवत्वात्। न च जातिभेदो धर्मिणोर्धर्मयोः सर्वत्र वास्तवीं प्रत्यासत्तिं भिनत्ति, कृतकत्वानित्यत्वयोः शब्दघटजातिभेदेन प्रत्यासत्तेरभावप्रसङ्गादिति। तदप्यनवकाशम्। न हि नगादावचेतनत्वस्य सोपादानत्वस्य समारोपं ब्रूमः। तन्मात्रं तु व्याप्तिबहिर्भावादसत्कल्पमिति।

यदि चान्यदेवाचेतनोपादानत्वं चेतनापेक्षि सिद्धमन्यदेव चाचलादौ दृश्यत इति किंकृतोऽयं विभाग इति चेत्? उपाधिकृतः। किं न भिन्नधर्मिणोर्धर्मयोरपीति चेत्– न, वैषम्यात्। अचेतनोपादानं धूमस्थानीयं कार्यहेत्वभिमानात् न च कश्चित्तस्य धर्मिभेदाद्भेदमाह– यदा त्वचेतनोपादानत्वादचलादौ चेतनापेक्षत्वं विवक्षितम, तदा धूमत्वेन धूमो वह्निमानित्येवंप्राया स्थितिः। एवं च सति धूमद्वये धूमत्वयोर्भेदः प्रसञ्जनीय इति कथं साम्यम्? एवमेवास्त्विति चेत्– न, भिद्यमानो ह्युपाधिरुपाधि-

मन्तमपि भिन्द्यात्। भेदश्चैकप्रत्यवमर्शवद्भिर्भावलक्षणो न धूममुपाधिं स्पृशति, येन स्वगतं भिनत्तु, यथा कुम्भाम्भोधरादिरचेतनत्वोपादानत्वमित्यचोद्यमेतत्।

ननु न दृष्टस्तावद्धर्मिभेदेन धर्मभेद इति चेत्? यद्रूपपुरस्कारेण प्रतिबन्धसाधकप्रमाणवृत्तिस्तस्याभेदे भिद्यमानापि धर्मिजातिरभिन्नवदाभासमाना न बाधिका। तद्भेदे तु तद्गतं धर्मान्तरमभिद्यमा[57a]नमपि भिन्नवदाभासमानं न साधकमिति न्यायः। अन्यथा जलधरार्थिनापि कुम्भकारस्य पर्येषणाप्रसङ्गः। तदपायेऽपि विहायसि वलाहकोदयदर्शनान्नेति चेत्– न, तत्प्रभवस्यैव घटस्येव तस्य मरुतो क्षेपः किं न संभाव्यते? अथ च वारिधारित्वमात्रमुभयत्र दृष्टमिति यथा तत्र संज्ञाभेदमात्रभेदो व्यवस्थाप्यते, तथात्रापीति युक्तम्। प्रतिबन्धनिश्चयो हि प्रमाणविषयस्वभावनियमे सति भवति, तद्विरुद्धानियमरूपं च साधारणत्वम्।

प्रमाणप्रतिबद्धो हि निश्चयस्तद्विषयस्वरूपोल्लङ्घेऽपि भवन् प्रमाणाप्रमाणसाध्यः स्यात्। न चैवम्, तस्मान्नानेकान्तः। नाप्यसिद्धिरध्यक्षव्यापारानुसारात्। तदिह पाण्डुत्वस्याग्निव्यभिचारो दृष्ट इति दृष्टान्तस्य साध्यशून्यतानिषेध एषः। अत एव नानुमानमिति प्रतिबन्धाभावादनिश्चयफलमिदमुभयत्र। न तु सिद्धव्याप्तिकयोर्दहनपाण्डुतयोर्व्यभिचारेण साधनवैधुर्यम्, व्याप्तिसिद्धावनुमानापवादस्याशक्यसाधनत्वात् व्यभिचारस्यैवायोगात्। सर्वोपसंहारवती हि व्याप्तिः, तद्भावे तद्भावः कथं स्यात्?

ततोऽयमर्थः। यथा पाण्डुत्वान्नाग्निमत्त्वेऽनुमानं तस्य तत्राप्रतिबन्धात्। स च व्यभिचारेणाभिव्यक्तः। अन्यथा तत्राप्यनुमानमङ्गीकृत्यैव स्वस्थमासीत्। स च व्यभिचारः प्रमाणविषयस्वरूपेतरसाधारणं धर्मं सर्वमप्रतिबद्धत्वे नियतमादर्शयतीति यथोक्तसाधारणत्वाकृष्टादप्रतिबन्धात्। तथैव यथा कार्यत्वादिमात्रादपि न चेतनाधिष्ठानानुमानमिति। अतो व्यभिचारदर्शनमुपकारकमेव परस्य। तस्मात् प्रमाणविषयस्वरूपपरामर्शात् तथाविधोपाधिकमेव कार्यत्वादिसाधनं धिय इति सिद्धम्। तथाविधस्य च वास्तव एव प्रत्यासत्तिभेद इति संज्ञामात्रं शरणमापतितम्।

तेन धर्मिजातिभेदस्य धर्मभेदकत्वं सिद्धमपीति कथं सर्वत्र तन्निषेधः? अथ सर्वत्रैव यद्भेदकत्वं तन्निषिध्यते क्वचिदभेदकत्वमपीत्यर्थः, तदा सिद्धसाधनम्। उक्तं हि प्रमाणविषयस्वरूपापेक्षया तदुभयव्यवस्थानमिति। तथा च सति भेदस्थितिरेव,

कृतकत्वादिरपशङ्कापरिभावकतया क्रियते। न हि तत्रापि प्रत्यक्षबलाद् व्याप्तिरुपपादयितुं शक्या, किं तु विपर्ययबाधकानुमानात्, तदभावेऽननुमानस्येष्टत्वात्।

ततोऽभूत्वाभवनाभिधानधर्ममात्रस्य भूत्वाभवनेन धर्मेण व्याप्तिसाधकं धर्मिणो यदि जातिभेदमुदासयति धूमस्याग्निना व्याप्तिसा[51b]धकमेव महानसादि, तदा प्रस्तुते किमायातम् यत्र प्रत्यक्षव्यापारापेक्षया जातिभेदनिष्ठैव व्याप्तिगृहीतिरीतिरिति ? यदि तु प्रकृतेऽपि कार्यवस्तुस्तोमगताः कार्यत्वादय एव धर्माः प्रतीतव्याप्तयः स्युः, तदायं न दोषः। केवलमुपायप्रकारद्वयस्याप्ययोगादयुक्तैव व्याप्तिरिति दर्शितम्। तत्र विपर्ययबाधकप्रमाणपरिचयस्तेषामसंभवो, बौद्धगन्धेरेव कस्यचित् तथा यत्नदर्शनात्। न च प्रकृते वक्तुं शक्य इति तत्रास्थामवधूय। प्रदेशान्तरे च,

नित्यं सत्त्वमसत्त्वं वेत्यादिना

[प्र. वा. ३. ३४]

करणमात्रे विशेषत्यागेन कार्यमात्रप्रतिबन्धं विपर्ययबाधकबलेन सूचयतो निर्वृतिं विदधानो भगवान् वार्तिककारः परस्य दर्शनादर्शनमात्रेण व्याप्तिवादिनः तद्योगप्रतिपादने प्रत्यासन्नं प्रत्यक्षानुपलम्भबलावलम्बनमवलोकयन् तदाहत्य दूषयितुं जातिभेदकृतं दूषणमुद्भावयतीति वेदितव्यम्। तस्मात् प्रत्यक्षव्यापारावधेयजातिभेदस्यात्यन्तं व्यक्तत्वात् संज्ञामात्रं शरणीक्रियमाणमप्यकिञ्चित्करमित्युक्तम्॥

अथवा, अस्तु घटाद्यपेक्षया क्षोणीधरादीनां जातिभेदो यतः,–

सिद्धं यादृगित्यादि

उच्येत। क्रीडापर्वतादयस्तु पौरुषेयास्तदेकजातिभवाः, तैः सहैकहेतवः किं न भवन्ति ? ततोऽयमर्थः, यो यः शैलः स सर्वः पौरुषेयो यथा क्रीडाशैलः शैलश्च कैलास इति। एवं कुल्यामहासरोवरप्रभृतयो नदीसमुद्रादीनामुदाहरणान्यूहनीयानीत्याशङ्कयाह,

वस्तुभेदे प्रसिद्धस्येत्यादि,

अयमर्थः,

क्रीडापर्वतकादिनिर्मितिदृशां शैलादिषु ह्यनुमा

नापि न्यायसहा स्खलद्गति यतस्तन्नाममात्रं समम्।

किं चानेकसमानमानवकृताः सिध्यन्त्यमी चेन्नगाः
का वार्तेश्वरसाधनस्य किमिहोपात्तं समाप्तं च किम् ॥

जातिभेदे सिद्धेऽधिकरणसिद्धान्तन्यायानुसारः पूरयेदपि प्रत्याशाम्, अभेदे तु तदपि निरास्पदम्। न हि सजातीयकुम्भान्तरे तद्विजातीयस्य निर्मातुः सिद्धिरित्यनुभवात् अभ्युपगमाद् वा भिन्नैव जातिरनयोर्न समानं हेतुमावहति संज्ञामात्रसाम्येऽपीति।

कः पुनरयं नियमो य उक्तप्रकारद्वयेनैव व्याप्तिग्रहो नान्यथेत्याशंक्याह,

अन्यथा कुम्भकारेण मृद्विकारस्य कस्यचित्।
घटादेः करणात् सिध्येद् वल्मीकस्यापि तत्कृतिः ॥
[प्र. वा. १. १५]

इति। न हि सुदूरमनुसरतापि स कश्चित्प्रतिबन्धसाधनविधिर्लब्धव्यो यः कुम्भकारेण मृन्मयमात्रव्याप्तिप्रसङ्गपरिहारकारी प्रयत्नवता कार्यमात्रव्याप्तिं साधयिष्यतीति भावः। कुम्भकारेण हि कार्यमात्रव्याप्तिसाधनाय प्रभवतस्तद्विशेषमृन्मयस्य साधने कः शक्तिव्याघातः? अस्तु वा प्रकारद्वयेनैव व्याप्तिग्रहः। यत्तूक्तम्,

नो भेदेन विपक्षबाधकवशादित्यादि

ततोऽन्यथा भविष्यतीति आशङ्क्य जलधरार्थिना कुम्भकारपर्यपणाप्रसङ्गमुक्तमेव प्रकारान्तरेण [52a] संभावयन्नाह,

अन्यथेत्यादि।

यदा हि बाधात्मकोद्देशेनापि प्रवर्तमानः सामान्येनैव व्याप्तिं साधयति, तदा कुतो मृन्मयात् कुलालानुमानं कुर्यात् कारणमात्रस्य सिद्धेः? यदापि प्रत्यक्षापेक्षया हेतुविशेषेण कुलालेन करणव्यापारोपधेयविशेषस्य कुम्भादिकार्यविशेषस्य व्याप्तिस्तदापि कुतस्तत्प्रसङ्गः? यदाप्यध्यवसायमात्रापेक्षया सामान्येन विशेषस्य तदाप्ययं दूरतरः। एवं तु व्यवस्थातोऽन्यथाव्याप्तिग्रहणे विशेषेण सामान्यस्य भवतीति कथं मृन्मयात् कुलालानुमानप्रसङ्गि? तत्कार्यकुम्भाद्यपेक्षया अत्यन्तविसदृशादपि प्रसङ्गे कथं कियताप्यंशेन प्रत्यासन्नात् न स्यात्? तथा चैवं सजातीयादप्यवान्तरभेदानुसारिप्रत्यक्षव्यवसायापेक्षया नानुमानं प्रतिबन्धानिश्चयात्तदा कैव वार्ता विजातीयाद्? अत्यन्तविजातीये दृष्टव्याप्तिकस्येति दण्डापूपन्याय एष इति दर्शयितुं मृन्मयग्रहणम्।

ननूभयथा व्याख्यानेऽपि व्यभिचारादेव नानुमानं, तत्कथमतिप्रसङ्ग इति चेत्? उक्तक्रमेणोपकारक एव व्यभिचारोऽस्माकं न बाधकः। तथाहि प्रमाद्वयव्यापारातिक्रमेऽनन्तरप्रकारबहिर्भावे वा प्रतिज्ञातप्रतिबन्धनिश्चयाभावसाधक एव व्यभिचार इति। अपि च, व्यभिचारो नाम सामान्येन गृहीताया व्याप्तेर्नियतविषयापेक्षया विघातमातनोति, अथ व्याप्तिग्रहणमेव तत्र भवतीति विभावयति, अथ सत्यपि व्याप्तिप्रसरेऽनुमानमात्रं खण्डयति, अतएवाबाधितविषयत्वमपि लिङ्गलक्षणम् आख्यातमिति पक्षाः।

तत्र प्रथमपक्षे सर्वत्रानाश्वासः, अन्यत्रापि तद्बलादेव साध्यप्रत्याशा, सा च निश्चितापि खण्डिता क्वचिदिति अन्यत्रापि शङ्कानिवृत्तेः, तत एव तद्ग्रहणवैयर्थ्यात्।

द्वितीये तु न विशेषश्चेतने। यथा हि कुम्भकारेण कार्यसामान्यस्य प्रत्यक्षेण व्याप्तिर्गृहीता व्यभिचारेण दुर्गृहीता व्यवस्थाप्यते, तथा चैतन्यमात्रेणापि, तत्रापि प्रत्यक्षव्यापारे विशेषाभावात्।

तृतीये तु व्याप्तौ सत्यामेव व्यभिचारेणानुमानमपास्यत इति महीयसीयम् अयोगपरम्परा। केवलमत्र पक्षे एतदापतितं यदीदमत्र साधनं साध्यं व्यभिचर्य न स्थितं तदा साध्यं साधयतीति। एतच्च साध्यविधुरं सर्वार्थसाक्षात्कारिणो नान्यः कर्तुं शक्तः। स हि य एव धर्मी तथाविधमध्यमधिशयितो न भवति तमेव वा व्यभिचारगोचरतया अनुमानभाजनीकरोति, सर्वविपक्षानीक्षणे तु तन्मध्य एव कदाचिदेषोऽपि स्यादिति शङ्काऽनिवृत्तेः। तस्मादुक्त एव न्याय आश्रयणयोग्यो व्यभिचारश्च व्याप्तिदुर्ग्रहणमेव साधयतीति कार्यमात्रव्याप्तिः प्रकृतकारणविशेषेणासंभविन्येव साधुरिति।

गृहीतायां व्याप्तौ यदि विहतिराश्वासविरहो
　ग्रहो नासौ व्याप्ते[52b]र्यदि च न विशेषो मतिमति।
अबाधापेक्षायां न सकलविपक्षेक्षणमृते
　निरातङ्कस्तस्मान्न खलु फलमात्रे ग्रहविधिः।

इति संग्रहः।

कि चादाय समस्तवस्तुविषयां व्याप्तिं पुनश्चेन्मता
　वस्तुजातिषु बाधकक्रमवशात्तव्याप्य[तत्तत्]स्थितिः।

तत्तज्जातिषु साधकक्रमवशादुन्नीयते किं न सा
येनायासकशक्तिसंशयपदं सन्तो विशन्तीदृशम् ॥

इत्यन्तरश्लोकः ।

अपरिगणितो नाम वस्तुव्यापारविषयोऽपरिगणिततमस्त्वविषयः । तत्र क एवमनात्मीयकार्यजातिनिकरस्य प्रत्येकं व्यभिचारान् दृष्ट्वा दृष्ट्वा स्वकार्यजातिष्वेव नियन्तुं हेतुमपारव्यापारः पारयते ? तथा च सति यस्यैव साक्षादनीक्षितो व्यभिचारः तदेव तस्य गमकमाशक्तम् । तदा शङ्कासंभवान्नेति चेत्– न, क्वचिदतीन्द्रिये तर्हि निश्चयमयं कुर्यात् । यज्जातीयोद्देशेन प्रवृत्तमध्यक्षं सामान्यविषयमवस्था[पि]तं तत्र कः सन्देह इति चेत् ? एवं तर्हि परापरतदीयव्याप्यजातिषु तथैव संशयप्रवृत्तिप्रत्यनीकप्रमाणवृत्त्यनुसरणे आयातस्तृतीयपादापतितोऽर्थः । तस्मान्न कारणविशेषेण बुद्धिमता कार्यमात्रस्य व्याप्तिः प्रत्येतुं शक्येति,

सिद्धं यादृगित्यादि

सिद्धान्तः ।

अथवा यदुक्तं न शरीरनिरपेक्षप्रयत्नवन्मात्रेण कार्यस्य व्याप्तिः प्रतिपत्तुं पार्यते, प्रत्यक्षेण प्रतिक्षेपात् तादृशस्येत्यादि, तदेवोपसंहरति,–

सिद्धमिति

यादृशोऽसौ शरीरादियोगी अधिष्ठाता चेति । शेषं सुबोधम् । तादृशश्च प्रत्यक्षबाधादिदोषविषय इत्याकूतम् । ननु शरीरवत्यपि चेतनत्वं दृष्टमितरत्रापि संभवति इति यथा शरीरिणा व्याप्तं कार्यादि सिध्यति, तथाभिमतेनापि इत्यत्रापि प्रागुक्तन्यायात् संज्ञामात्रादवशिष्यमानात् साधनमनोरथमुन्मथ्नन्नाह, वस्तुभेदे कुम्भादौ प्रसिद्धस्य कुलालादेर्यो वाचकः शब्दश्चेतन इति तन्मात्रादभिधमानस्याभिमतस्य प्रमाणव्यापारापेक्षया दूरीकृतस्य न युक्तानुमितिरिति व्याप्ताभिमताद् वस्तुन इति प्रकृतमर्थापन्नं वा कथमिवेत्याह,

पाण्डुद्रव्यादिवद्धुताशन इति ।

अयमभिप्रायः, यदि शब्दमात्रसाम्येनाभिधमानस्यानुमानं शब्दसाम्येनाभिधमानादपि पाण्डुनः किं न धूमध्वजस्यानुमानम् ? अथ तत्र विशिष्टकार्यस्वभावापेक्षम्

अध्यक्षमन्यव्याप्तिं प्रतिक्षिपतीति नानुमानमुच्यते, तथा चेतनमात्रप्रतिक्षेपेणापि प्रत्यक्षं किं न तदनुमानं निरस्यति ? एतेन यदा दृश्यमपि कार्यान्तरं तिरस्करोति प्रत्यक्षं तदा कैव कथा दृक्पथातिरिक्तस्य चेतनमात्रस्येति ? अस्तु तावद् व्याप्यापेक्षया विभाग एव, लोके तथैव प्रतीतेः, अन्यथातिप्रसङ्गाच्च ।

व्यापकापेक्षया तु यद्येप नियमो न स्यात् को दोष इत्याशंक्य पूर्वोक्तमेवेति प्रसङ्गं भङ्ग्यन्तरेण तरुणयति, अन्यथेत्यादि । वल्मीकस्येति वल्मीकजन्तोरित्यर्थः । तत्कृतिरिति घटादिकृतिः । [53a] अयमर्थः, यदि विशेषेणापि व्याप्तिमवसाय चेतनमात्रं सामान्यमनुमातव्यम्, तदा कुम्भादिकरणस्य कुलाले नियतस्य चेतनमात्रपर्यवसितत्वात् घटादेरपि वल्मीकजन्तुः कर्तानुमेयः स्यात्, यथाहि कुम्भादेः कुम्भकारेण व्याप्तिग्रहणे चैतन्यमात्रेणाविशेषात् तस्याप्यनुमानमेवं वल्मीकौकसोऽपि चैतन्येनान्याविशेषात् किं नानुमानम् ? यदा च शरीरिणा व्याप्तिग्रहे शरीरिणोऽप्यन्यस्य प्रतिक्षेपः, तदा [1]का वार्तात्यन्तविसदृशस्येति । न चात्र बहुत्वेनोपयोगः, एकात्मनोऽपि चैतन्याद् इति वल्मीकस्येति निर्देशः । एतेन धूमादेरपि जाठरादेरनुमानाक्षेपो व्यक्तः । व्यभिचारचर्चायां च पूर्ववत् सर्वमावर्तनीयमिति ॥

यदुक्तं, प्रयत्नवता यद्व्याप्तं सन्निवेशादि तन्न सिद्धं सिन्धुभूधरादौ, यच्च सिद्धं तन्न व्याप्तमिति तत्रैतत्स्यात्, ननु जात्युत्तरमिदं धर्मभेदविकल्पनात्, ततो यथा यत्कृतकं तदनित्यं घटवदिति कृते कश्चिदाह, यदि घटगतं कृतकत्वं हेतुस्तदसिद्धं शब्दे, शब्दगतं त्वनित्यसंघाते घटपटादावभावाद्विरुद्धम् । अथ सपक्षवद् विपक्षेऽपि नास्तीति मतिः, तदा असाधारणमनैकान्तिकमिति । न च तावता कृतकत्वं तत्त्वतोऽशक्तमेव अनित्यत्वसाधने, तथेदमपि । तथाहि यच्च सिद्धं तन्न व्याप्तमित्यनेन सपक्षावृत्तेर्विरोधः, विपक्षादपि निवृत्तिपक्षे वा असाधारणत्वमाकृष्टमिति । अथ प्रकृतकार्यानुरोधाद् अदूषणमेवेदमुद्भाव्यते ? तथा सति कृतकत्वादेरपि असाधनत्वप्रसङ्गः सूत्रकारविरोधश्च, कार्यसमसंज्ञया अस्य दूषणस्य तेन प्रतिज्ञानात् । यदाह,

कार्यत्वान्यत्वलेशेन यत्साध्यासिद्धिचोदनम् ।
तत्कार्यसममेतच्च त्रिधा वक्त्रभिसन्धितः ॥

[ ]

---

१. कातिरत्यन्तेति मातृकास्थः पाठः ।

इति। उपचारमात्रकृतत्वेनान्यतरस्य लेश उक्तः, वक्त्रभिप्रायेण त्रैविध्यं च दर्शितमिति।

तदेतदुभयमप्यसारम्, प्रथमपक्षस्य तावत् पूर्वमेव प्रतिक्षेपात्। उक्तं हि व्याप्तिसाधकप्रमाणपुरस्कृतस्वरूपस्याभेदे भिद्यमाना अपि संबन्धिनो विवृतभेदा इव भासमाना न बाधकाः। तस्य तु भेदे अभेदिनोऽपि भिन्नवदाभासमानाः कार्यत्वादयो धर्मा न तद्व्यापकस्य साधका इति। व्याप्तिग्रहणप्रक्रमश्च द्विविधो दर्शितः। तत्र यदि नाशेन कृतकत्वस्येव विपर्ययबाधकबलाद् बुद्धिमतापि कार्यत्वादेरविनाभावग्रहः स्यात्, तदा अभूत्वा भवनमात्रमिव सन्निवेशादिमात्रमधिकृत्य प्रवृत्तं प्रमाणमिति कस्तत्र धर्मिभेदेन भिन्दानः साधनं शोभेतेति युज्यते जात्युत्तरमिति।

यदि तु प्रत्यक्षानुपलम्भवशात् सन्निवेशादिकमिव कृतकत्वमपि व्याप्तमवधार्येत तदा शब्देऽपि साधनत्वं कृतकत्वादेः केन निवार्येत, जातिविशेषोल्लेखेनैव प्रत्यक्षानुपलम्भव्यापारस्य परि[53b]निष्ठितत्वात्? अन्यथा धूमगता अपि कार्यत्वादयो जातिविशेषानवच्छेदेन दहनाविनाभाविनः सिध्यन्तो नाशक्यपरिहारमतिप्रसङ्गमनुपनीय स्वास्थ्यमासादयेयुः। कार्यान्तरस्य व्यभिचारोपक्षेपोऽपि क्षोदिष्ठः प्रतिविधिः। तदा हि यत्रैव साक्षाद् व्यभिचारानुपलम्भः तदेव साधनं जातमिति कियल्लाघवं दोषभारस्य?

न च वह्निकार्यान्तरादपि भस्मादेः स्वप्नेप्यलभ्यव्यभिचाराद् धूमैककार्यव्याप्तिं गृहीतपूर्विणस्तदनुमानमभातीत्यपि निवेदितप्रायम्। तस्मादनुक्रान्तप्रमाणापेक्षया धर्मिजातिभेदधर्माणां भेदक एवाभ्युपगन्तव्य इति कथमुच्यते जात्युत्तरमिति? न्यायवादिनस्तु तु सूत्रकारस्य,

साध्येनानुगमात् कार्ये सामान्येनापि साधने।
संबन्धिभेदाद् भेदोक्तिदोषः कार्यसमो मतः॥
[प्र. वा. १. १६]

अयमर्थः। यदा तावद्विशिष्टविषय एव व्याप्तिग्रहः प्रत्यक्षव्यापारापेक्षया तदा संबन्धिभूतजात्यन्तरभेदात् कार्यत्वादेर्भेदोक्तिर्दोषो भवतु, न्यायप्राप्तत्वात्। यदापि विनाशादिना साध्येन विपर्ययबाधकवशात् सामान्येनाभूत्वा भावित्वमात्रमनुगतम् आस्थाय साधनमनुष्ठीयते, तदापि संबन्धिभेदाद् भेदोक्तिदोषः क्वचिद्दर्शनात् प्रमाण-

परिरीतिमनालोच्योच्यते सर्वकार्यसमः संमतोऽस्मद्गुरोः। अन्यदा तु साधनस्य दोष एव इत्यदोषः। ननु तथापि सर्वोपसंहारवती व्याप्तिर्न सिद्धेति सिद्धम्। न तु तावता साध्यासिद्धिरेव, यदि परं परमतानुरोधेन व्याप्तिग्रहो निर्व्यूढः।

अस्माकं तु दृष्टान्तदृष्टमेव रूपं व्याप्तमवधार्यते यथा महानसपरिदृष्टं धूमं [धूम]ध्वजाधीनमवधार्य साध्यधर्मिगतं सामान्येनानुप्रविश्यापि साध्यधर्मिणि धूमम् उपलभ्य यत्र धूमस्तत्राग्निर्दृष्टो यथा महानस इति एवमग्निमनुमीमहे, तथा प्रयत्नवता घटादिजातीयमात्रस्यैव व्याप्तिसिद्धावपि यत्र कार्यत्वं दृष्टं तत्र प्रयत्नवता कृतिरिति वक्तुं शक्तेः। ततश्चैवमपि साध्यसिद्धेरविरोधात् कोऽनुरोधः सर्वोपसंहार-व्याप्तिग्रहणस्य ? मौलसाधनानर्थक्यसाधनस्येति चेत् ? एवं तर्हि व्यक्तमिदमायातं जात्यन्तरे व्याप्तिमादाय जात्यन्तरादेवानुमानमिति। यदि परं व्याप्यलिङ्गयोः संज्ञा-साम्यमपेक्ष्य, तथा च सति न वस्तुलिङ्गमुक्तं भवति। केवलं कार्यादिशब्दवृत्तिमात्र-मेव। तच्चायुक्तमित्यादर्शयन्नाह– प्रयत्नवतो,

जात्यन्तरे प्रसिद्धस्य शब्दसामान्यदर्शनात्।<br>न युक्तं साधनं गोत्वाद्वागादीनां विषाणवत्॥<br>[प्र. वा. १. १७].

इति।

ननु कार्यादीति न शब्दमात्र[म्, अ]भूत्वा भावित्वसामान्यस्यानुगमसंभवात्, गोशब्दस्तु स्वर्गादिषु रुचिमात्रशरणो न कश्चिदर्थमनुगम्य वर्तते इति महान् विशेषः। एतदपि प्लवत एव, न ह्यभूत्वाभावित्वमात्रं [54a] [1][प्रयत्न]वन्नान्तरीयकं सिद्धम्, येन तदनुगमसमाश्रयः फलं स्यात्। सिद्धौ च पुनः स एव सर्वोपसंहार इति किमनेन परिहृतं स्वीकृतं वा ? तस्मात् तदपि सामान्यं कार्यजातिभेदेन भेदमावेशयतो न कश्चिद् वस्त्वनुगम इति शब्दमात्रमेव साधनमाश्रितं भवतीति पश्यामः। ततश्च न कश्चिद् विशेषो गोत्वेन वागादेर्विषाणसाधनादस्येति।

एवं दृष्टान्तेऽप्ययमेव श्लोकः। तदा च जात्यन्तर इत्यन्यधूमजन्मनि प्रसिद्धस्य वह्नेरिति योज्यं, यदि सर्वोपसंहारपरिहारः। यदा तु सर्वमेव धूमरूपमेकाकारप्रत्यव-मर्शवशादेकीकृत्य व्याप्तिमवधारयति, तदा न शब्दमात्रसाम्यम्। स एव व्याप्तः

१ नान्तरवन्नान्तरीयकमिति मातृकायाम्।

अर्थोऽत्रापीति न साध्यसिद्धिविरोधः। नाप्येवं मौलहेतुवैकल्योपलम्भसंभवः। न हि यत्र यत्र साधनं तत्र तत्र साध्यमिति सामान्येन प्रवृत्तापि बुद्धिरभिमतदेशकालादिभेदमास्पदीकर्तुं प्रभुः। अतो विशेषस्य प्रवृत्तिनिवृत्तिविषयीकरणाय न पक्षधर्ममनालम्ब्यासितुं शक्नुयात्। तत् कथमफलं मौलमङ्गम्?

तस्माद् व्याप्तिग्रहे सर्वोपसंहारपरिहारिणोऽपि धूमोऽपि नाग्नेरनुमापक इति लाभमिच्छतो मूलस्यापि नाशः। न हि यत्रैव धूमजन्मनि व्याप्तौ वह्निरुपलब्धस्तदेव देशान्तरेऽपि, केवलं सोऽपि धूमशब्दवाच्योऽयमपीति शब्दसाम्यमवतिष्ठत इति न गोत्वेन वाचः शृङ्गसाधनादस्यापि कश्चिद्विशेषः। ननु तथापि कीदृशो पुनरियं वाचः शृङ्गसिद्धिरध्यक्षक्षिप्तत्वात् स्वयमेव हि,

व्यस्तो हेतोरनाश्रयः

इत्यभिधीयत इति चेत्? सत्यमियानप्यभ्यूहः संभवी भवत इति महान् लाभोऽस्माकम्। कदाचिदेवं प्रतिषेधतः संज्ञामात्रतोऽपि साध्यसिद्धिप्रत्याशा परिगलयतीति चित्रं चात्र यच्छास्त्रपरिश्रमानुरूपम्,

मानमस्ते गिरां शृङ्गे साधनं नेति पश्यतः।
संज्ञामात्रेण साध्यस्य सिद्धिः कस्मात् समीहिता॥
[ ]

यन्न गोपालाङ्गनाजनस्यापि साम्प्रतम, एवं च समीहमानस्तदपि श्रद्दधीतेति तदनुरूपम् उत्तरं परिहासपरमभिदधानो वचसि विषाणानुमानेन सकलमनुचितानुमानमात्रमुपलक्षयति। यदा हि दहनादीनामपि गर्दभादिभ्योऽपि लब्धावकाशमनुमानं तदा कस्य कस्मादप्रतीतिरित्याकूतम्, यदि परं साक्षादध्यक्षबाधा मा भूत्? ननु व्याप्तवस्तुसाधारणाभिधानवृत्तेस्तद्व्यापिनिश्चयप्रसङ्गप्रक्रमे कोऽवकाशो गर्दभाद्दहनानुमानस्य? न हि दहनव्याप्तवस्तुसाधारणा धूमभस्मादिशब्दा गर्दभे संभविन इति चेत्– न, वस्त्वादिशब्देनापि शब्दसाम्यसिद्धेरित्येतच्च,

पाण्डुद्रव्यादिवद्धुताशने

इत्यनेनैव प्रतिवर्णितमन्तर्णीय पक्षान्तरेण तोपयन्नाह,–

विवक्षापरतन्त्रत्वान्न शब्दाः सन्ति कुत्र वा ।
तद्भावादर्थसिद्धौ तु सर्वं सर्वस्य सिध्यति ॥
[ प्र. वा. १. १८ ]

एतेन गर्दभादिष्वपि तावदेव धूमादिशब्दानामसंभवो यावन्न समयसमीहा । ततोऽनुमानाभावोऽपि धूमादि[54b]शब्दाप्रवर्तनावधिक एव । प्रवृत्तौ तु कः साध्यं रुणद्धीत्युक्तम् । न त्वेवं वस्तुनि साधने । तथा हि,

अविनाभावविषयान्न विनाभावसंभवः ।
विवक्षापरतन्त्रत्वान्न शब्दाः सन्ति कुत्र वा ॥
[ ]

वाशब्दो यथार्थे ।

तद्भावादर्थसिद्धौ तु सर्वं सर्वस्य सिध्यति ॥

न तु प्रतिबद्धवस्तुवृत्तितः साध्यसिद्धावभिमतायां शब्दादिवत् सर्वसिद्धिः उल्लण्ठमात्रफला, किं तु तत्त्वत एव व्यापकस्य सर्वसिद्धिरिति भावः । तदेवं दृष्टान्तदृष्टमात्रस्य व्याप्तिवचने वचनसाम्यमात्रपरतन्त्रा सिद्धिरसिद्धिरेवापततीति तात्त्विकसिद्धिनिबन्धनवस्तुसाधनान्वेषिणा सर्वोपसंहारिण्येव व्याप्तिरुपपादयितव्या । सा च द्विधापि न सन्निवेशादिभ्यो बुद्धिमतोऽनुमानं मानभाजनीकरोति । तन्मात्रसिद्धावपि वा नाभिमता विशेषसिद्धिः, यतः श्रेयोऽर्थिभिरस्त्यर्थमभिधीयमानमीश्वराभिधानस्य कोविदैराद्रियेतेति संक्षेपतः प्रकरणार्थः । तस्मात् स्थितमेतत्, तादृशि प्रमाणसंमते अनित्येऽप्यप्रमाणतेति ॥

[ तृतीयः खण्डः ]

॥ ईश्वरवादाधिकारे वार्तिकसप्तश्लोकीव्याख्यानं समाप्तम् ॥

[ समाप्तश्चायमीश्वरवादः ]

## ॥ कार्यकारणभावसिद्धिः ॥

[1]प्रत्यक्षानुपलम्भेन त्रिविधेनापि सिध्यति ।
कार्यकारणयोरात्मा पञ्चकेनेति केचन ॥१॥

प्रत्यक्षानुपलम्भसाधनः कार्यकारणभाव इति न्यायः । तत्र सामान्येन प्राक्प्रवृत्तानुपलम्भसहायमुभयविषयं क्रमि प्रत्यक्षद्वयम् । यदि वा सामान्येनोभयग्राहिप्रत्यक्षसहायं क्रमिकमनुपलम्भद्वयमिति त्रिविधमेव तत्साधनमित्येके । अन्ये तु तत् त्रयमन्त्यद्वयसहायमेवेति पञ्चविधं नियतानुपूर्वीकमित्याहुः । आद्यत्रयसंभवेऽपि हि प्रतिपत्तुर्नासन्दिग्धा बुद्धिरुपजायते, अन्त्यद्वये तु लब्धे सिध्यति । अन्वयव्यतिरेकलक्षणो हि[2] हेतुफलभावः[3], तत्र [4]त्रयेणान्वयः प्रतीयते, [5]द्वयेन व्यतिरेक इति पञ्चकेन साध्यो सिद्धिः । [6]तयोरेकैकानिश्चये तु सन्देहो दुर्निवार इति भावः ।

अत्र चिन्त्यते,

प्राचीनानुपलम्भश्चेदन्यतः[7] सङ्गमादिकम् ।
न निषेधति, किं तेन निषेधे पश्चिमेन किम् ॥२॥

अनुपलम्भद्वयेन व्यतिरेकसाधनार्थमेव ह्यनुपलम्भः प्रार्थ्यते । स चानेन हेत्वभिमताभावे [8]कार्याभिमतस्य भावं बाधमानेन साधनीयः । स च [9]भावस्त्रिधा संभाव्यते । *तत्रैव देशे स्थितिः, अन्यत आगमनम् , तद्विविक्तकलापादेवोत्पत्तिरिति ।* एवंविधबाधावैधुर्य[10] किमत्र कारणमयमपेक्षते[1] ? न व्यतिरेकेऽस्योपयोगः ।

किं त्वन्वयग्राहिणि प्रत्यक्षे साहायकमावहतीत्युपदर्शितमेवेति चेत् ?

अस्मिन् सतीदं भवतीत्यक्षजेन गतं न किम् ।

---

१, इतः पूर्वं नमो मञ्जुश्रीकुमारभूतायेति भोटग्रन्थेऽधिकम् , २. °लक्षणादि° भोटपाठानुसारेण । ३. °भावसिद्धिरिति भोटपाठः । ४. प्रत्यक्षेणेति भोटपाठः । पूर्वानुपलम्भसहकृतप्रत्यक्षद्वयेनेति भोटपाठार्थः। ५. द्वयेनेति अनुपलम्भद्वयेनेत्यर्थः । ६. अन्वयव्यतिरेकयोः । ७. फलेनेति बोध्यम् । ८. कार्यद्वया° भोटपाठः । ९. कार्यस्येत्यध्याहार्यम् । १०. बाधस्याभाव इत्यर्थः । १. अपेक्ष्यत इति मातृका । अयमिति भावस्य परामर्शः ।

न हि भावे भावादन्यो नामान्वयः। स च सिद्धोऽप्यध्यक्षेणेति किमत्रानुपलम्भ-साहाय्येन ? नन्वेवमन्वयो यदृच्छोपनतस्यापि स्यात् प्रत्यक्षमात्रसंभवात्। प्रागभाव-ग्रहणविशेषणं तु प्रत्यक्षं तद्ग्राहीति नातिप्रसङ्गः। [55a] स तर्हि [2]त्रिविध[भेद]-भिन्नभावविपर्ययस्वभावः, प्रागभावोऽनुपलब्धेः, सिद्धोऽभावमात्रं वा ? आद्ये पक्षे एतदायातम्,

अस्मिन् सतीदं भवति,

अन्यथाऽसंभवादिति व्यतिरेकोऽयमेव सः ॥३॥

न स्थितं तत्र नान्यस्माज्जातं नायातमन्यतः।
यस्य भावे भवेत् कार्यं न चेत्तस्य न कस्यचित् ॥४॥

एतच्चानुपलब्धिपूर्वेण सिद्धमध्यक्षेणेति न किञ्चित् पश्चिमद्वयेन। तदपि हि हेत्वभावे फलस्य तत्र स्थितिमन्यत उत्पत्तिमन्ययत्नेनान्यत्र गमनम् बाधमानमेव व्यतिरेकसाधनम्, न पाश्चात्यद्वयमित्येव, तद्व्यापाराभावे शतेनाप्यभावात्। तच्चादि-मेन एकेन कृतमिति नापरस्योपयोगः।

अथ पुनरभावमात्रमादिमोऽनुपलम्भः प्रत्येतीति मतिः,

अभावमात्रबोधेऽपि प्राच्यस्यानुपयोगिता।
अस्यैतद्व्यापृतेः प्रागित्येवं किमवशिष्यते ॥५॥

अभावमात्रप्रतीतौ तावत् कस्य केनान्वयः ? अस्य भावेऽस्य भाव इत्यप्यन्वय-प्रतीतिर्यदृच्छोपनतेनातिप्रसज्यमानोपयोगपरिपन्थिन्येव। एतद्व्यापारात् पूर्वमभावः अस्येति तु प्रतीतौ सैव त्रयी गतिरायातेति किं परिशिष्यते, यतोऽन्तिमद्वयं न वैफल्य-मावहेत् ?

अन्वये व्यभिचाराच्चेद् व्यतिरेकोऽनुगम्यते।
प्रत्यक्षमात्रव्यापारेऽप्येवं किं नाभिधीयते ॥६॥

यदर्थमर्थ्येत प्राक्तनः। अन्वयव्यतिरेकौ हि प्रत्येकं व्यभिचारादेव सहितौ हेतुफलभाव उच्यते। तत एकैकस्यातद्भाविन्यपि संभवोऽबाधक एवेति समानमावयोः।

२. त्रिविधेति तत्रैव स्थितीत्यादिपक्षत्रयं प्रदिष्टम्। भेदशब्दो मातृकायां दुष्पठः भाटपाठ[थ'दद्]-समर्थितः।

स्ततो नान्त्ययोरादिमस्योपयोगः, आद्ये वान्तिमयोरिति सिद्धम् । न सिद्धम् । आदिमेन हि प्रागस्य व्यापारादेतन्नासोदिति प्रतियन्नपि एतद्व्यापाराभावप्रयुक्तोऽस्याभाव इति नावधारितम्, चरमेण त्ववधार्यत इत्ययुक्तम्, आदिमस्य पुनरनुपयोगस्य तादवस्थ्यात्[3] ।

अपि च,

तन्मात्राभावतोऽभावात् पश्चिमेन विनिश्चयः ॥
तन्न्यायस्य समानत्वात् प्राच्येनापि न किं मतः ॥७॥

एतद्व्यापारात् प्राग् नासीदित्यपि हि तन्मात्राभावादेवाभावं ख्यापयति, यथोक्तसत्तात्रैविध्यविधूतेराक्षेपात् । ततस्तेनानिश्चये पश्चिमेनापि मा भूत् । तत्र पूर्वेण द्वयोः अभावस्य सन्निधिमात्रम्, नैकस्यानेन प्रयुक्तिरिति पश्यतः पश्चिमेऽपि क आश्वासः ? तदनायत्तौ[4] तदभावेऽपि उत्पत्तिप्रसङ्गे द्वितीयाभावस्यैवायोगः समानः । अथ वह्निरासभयोरागमनानन्तरजन्मनोऽपि धूमस्य गर्दभाभावेऽप्यभावः प्राच्येनानुभूयत इत्युच्यते । उभयापगमेऽपगच्छतः पश्चात्तेनेनापि, इत्यपरापरोपायपरम्परानुसरणेन पञ्चकव्यवस्था[हा]निः[5] । तथा सति त्रयं, न द्वयमिति चेत् ? पश्चिमेनापि न शक्यत इत्येतावदुच्यते । स तु[6] द्वयोस्त्रयोर्वेति [55b] किमनेन ? अस्त्युपयोगो द्वयस्यान्यस्य अप्यभावे निश्चयायोगादिति चेत् ? यदैव तर्हि केवले हेत्वभावेऽनुपलम्भस्तदैव प्राच्यः अपि समर्थ इति किं नेष्यते ? नो चेत् सर्वथानुपयोगादित्युक्तम्, अन्यथा प्रत्यक्षमपि त्रयं, न द्वयमिति वक्तुं शक्यत्वात् । किं च पञ्चकवादिनः [7]समानसमयतयैवाविभागात् प्राच्योऽनुपलम्भ एक इष्टः । स चाग्निगर्दभापगमेऽस्तीत्यनन्तरधूमानुपलम्भापेक्षयाद्यापि द्वैतमेव ।

अपि च,

प्रागदृष्टौ क्रमात् पश्यन् वेत्ति हेतुफलस्थितिम् ॥
दृष्टौ वा क्रमशोऽपश्यन्नन्यथा त्वनवस्थितिः[8] ॥८॥

---

३. दङ्' पोहि' [आदिमस्य] यङ्' [पुनः] दोगस्' प' ·मेद् [अनुपयोग] दे' जिद्' (ल)' गनस्' पहि' फ्यिर्' रो [तादवस्थ्यात्] । मातृकात्र संदिग्धपाठा । ४. रग्' म' लस्' प [ अनायत्ति ?-] मातृका संदिग्धपाठा । ५. हानिरिति मातृकायां दुष्पठम्, भोटपाठान्निश्चितम् [ञम्स्' प] ६. स त्विति पश्चिमानुपलम्भस्त्वित्यर्थः । ७. समय इति मातृकायां दुष्पठम् । भोटपाठे गशुङ्=समयः=सिद्धान्तः । अत्र तु कालार्थकः समयशब्द इति भाति । ८. मातृका दुष्पठा । भोटपाठे थुग्' प' मेद्' प[अनवस्थितिः] । १६६ पृष्ठेऽप्ययं श्लोकः । तत्राप्येतदनुसारेण पाठः संशोध्यः ।

तत्तदाशङ्कानिराकरणार्थमुत्तरोत्तरपूर्वपूर्वोपलम्भानुपलम्भपर्यपणाप्रसक्तेः। तत्र यथेष्टं त्रयादिव्यवस्था क्रियताम्। न तु [९]प्रत्यक्षं मध्यमधिवारयानुपलम्भयोः कश्चिद् उपयोगः, अन्यशङ्कने द्वयोरप्यनाश्वात्, तद्विवेचने चैकेनैव सिद्धेः।

तस्मात्,

[१०]प्रत्यक्षानुपलम्भाभ्यामन्वयव्यतिरेकयोः।
निश्चये संशयो नाम कीदृक् हेतुफलस्थितौ ॥६॥

अर्थान्तरत्वे तयोरेव तद्भावरूपत्वात्। तयोश्च न प्रतीतिनियमः कश्चित्, द्विधापि सिद्धेः। स्यादेतत्, व्यतिरेकदार्ढ्यादेवं व्यवस्था। अतस्तद्ग्राहिणोऽनुपलम्भस्यान्वयविषयप्रत्यक्षातिवृत्तिरुचितैव। न, नान्तरीयकत्वमेव हि प्रमाणस्य प्रमेये द्रढिमानमारोपयति। न बाहुल्यम्, प्रमाणाभासेष्वपि दर्शनात्। एक एव च दृश्यानुपलम्भस्तदभावेऽत्यन्तमभावसाधनसाधुरिति किमधिकधावनेन? न हि तदा गन्धोऽपि धूमस्य संभावनीयः। ननु भूयसामभावात् कस्याभावे न भूतो धूम इति निश्चेतव्यमिति चेत्? अत एवान्वयग्राहिप्रत्यक्षमपेक्ष्यते अन्याभावप्रयुक्तत्वे ह्येतदभावस्य, नास्य संभवमयमाद्रियेत। एवमन्वयग्रहणपूर्वकेऽपि निश्चये भूयसां संभवात्[१] कस्य भावप्रयुक्तोऽस्य भाव इति जिज्ञासायामनुपलब्धेर्यदभावप्रयुक्तोऽस्याभावः संप्रति तद्भावप्रयुक्तः प्रागप्यस्य भाव इति सिध्यति। तत्र चैकैकस्योपनयेऽपनये वा तथा प्रतिपत्तुं शक्यम्। तथा च सति प्राच्यस्य पश्चिमस्य वा व्यतिरेकसिद्धौ शक्तिः, अनेकोपनयादौ तु द्वितयस्याप्यशक्तिरिति स्थितम्॥

अव्यापिनी चेयं पञ्चकव्यवस्था। भस्मानलकलसकुम्भकारादिषु पश्चिमाभावात्, नीराधारादिषु च प्राच्याभावेऽपि सिद्धेः। तथा हि सति सेतौ पयःपूरस्थेमानमुपलब्धवतस्तद्भावे[२] [३]तद्भावदर्शिनस्तयोर्हेतुफलभावनिश्चयः प्राच्यानपेक्ष एव। तद्वदन्यत्रापि त्रिकापेक्ष एवेति वेदितव्यम्।

अथ प्रागदृष्टा वह्निसन्निधौ धूमदर्शने वह्निमपेक्ष्यान्य एव जनयतीति किं न कल्प्यते? एवमपि वह्नेः कारणत्वमेवेन्धनस्येव। एवं तर्ह्यन्यस्यापि यदृच्छासन्नि-

९. मङोन्' सुम् [प्रत्यक्ष] दबुस् 'सु' [मध्य] वशग्' पहि [अधिष्ठाप्य ?] मि' दमिगस्' प' दग् [अनुपलम्भयोः]। १०. भोटपाठोऽस्य श्लोकस्य गद्यात्मकः। १. म' स्रिद्' प[असंभव] इति भोटपाठः। २, ३. उभयत्र भोटपाठ योद्' प [भाव]; मातृकायां तूभयत्रैव अभाव इति।

हितस्य गर्दभादेः कारणत्वमस्तु, ततश्च तस्यापि धूमादनुमानप्रसङ्ग इति चेत्? तत् किं वह्नेः कारणत्वनिश्चय [56a] इत्येवं गर्दभस्यापि? अथ प्रत्यक्षानुपलम्भयोस्तत्रापि वृत्तेः [४]उभयस्याप्ययोगात्। न चान्यस्य तथा निषेधाय त्वयाश्रयणम्, अपि तु वह्नेर्विधये। स च सिद्ध इत्यन्यस्यानिषेधोऽबाधक एव। अननुमानं तु कारणत्वानिश्चयादेव। न च कदाचिदग्निमपेक्ष्य गर्दभः करोतीति शंकैव निश्चयो विरोधात्, तस्याः संशयरूपत्वात्। तन्निषेधोऽपि तस्यैव परीक्षया नान्यस्येत्यस्थानमेवंविधप्रलापस्य। ननु तथापि वह्निः कारणमित्यवधारणानुपपत्तेर्दुःस्थैव स्थितिः। न हि वह्निरेव कारणम्, अन्यस्याप्यनिराकरणात्, इन्धनस्यापि परमार्थतः कारणत्वाच्च। न च कारणमेव, अनारब्धधूमस्यापि संभवादिति न चोद्यम्, त्रिविधस्यापि व्यवच्छेदस्य सिद्धेः।

तथा हि,

सामग्र्यपेक्षयान्यस्य च्छेदे द्रव्यव्यपेक्षया।
योग्यतायामयोगस्य सिद्धोऽत्यन्तं च कर्मणि ॥१०॥

यदा हि दहनशब्देन तदुपलक्षिता सामग्री समासेनाभिधीयते, तदा स एवेत्यन्ययोगव्यवच्छेदः। यदा तु दहनद्रव्यमेव तदापि कारणत्वं नाम यदि योग्यता, तदा कारणमेवेत्ययोगव्यवच्छेदः। अथ क्रियैव, तदापि भवत्येवेत्यत्यन्तायोगव्यवच्छेदश्च सिद्धः। स चायमियान् व्यापारस्त्रिविधस्यैव प्रत्यक्षानुपलम्भस्य शक्य इति युक्तमत्र भागे भट्टार्चटपादव्याख्यानमेव।

भगवतो वार्तिककारस्यापि स्वयमेव,

कुम्भस्य कुम्भकारेण करणं भस्मनोऽग्निना।
शस्त्रादिना व्रणादेश्च ब्रुवतो मतमेव तत् ॥११॥

कथं पुनः कार्यताविशेषाद्धूमादिव भस्मनोऽपि नाग्नेरनुमानम्? न, देशकालाद्यपेक्षया अभिमतत्वात्। तथा हि,—

किमप्युदयमात्राय कार्यं हेतुमपेक्षते।
प्रबन्धस्थितयेऽप्यन्यत् कालवित्तदपेक्षया ॥१२॥

४. गनिस्' ग' ल [उभयोः] यङ्_[च] मि' रिगस्' पहि' फ्यिर्' [अयुक्तत्वात्]।

तत्र कलसभस्मादिभ्यो जन्मन्येवापेक्षितपरेभ्यः, अत एवार्थान्तरापेक्षप्रबन्धवैधुर्येभ्यः, अतीत एव हेतुसन्निधेः कालः शक्यनिश्चयो, न तु वर्तमान इति न प्रवृत्त्यादिसङ्करः। उत्तरेभ्यश्च धूमालोकादिभ्यो दशाविशेषापेक्षानपेक्षप्रबन्धवैधुर्येभ्य उपादानविकलतया प्रवाहविच्छित्तयेऽनपेक्षितपरेभ्यो वर्तमान एवेति न दोषः। एतदपेक्षया त्वाचार्यधर्मोत्तरस्य पश्चिमद्वयस्य श्रयणयत्नः फलेदपि। न तु पञ्चकनियमः तदापि परभागभाक्। प्रत्यक्षपूर्वकेऽनुपलम्भेऽन्यापेक्षाऽभावादिति प्रथममेव श्रेयः॥

॥ [५]एकादशश्लोकीसंगृहीता त्रिविधप्रत्यक्षानुपलम्भपूर्विका कार्यकारणभावसिद्धिः
[ महापण्डितज्ञानश्रीमित्रपादस्य कृतिः[६] ] समाप्ता[७] ॥



५. मातृकायां ग्रन्थभागे यथाप्रदर्शितं द्वादश श्लोकाः। ६. मखस् प छन् पो श न श्री मि त्र ह्नि शल् स्न नस् क्यिस् मजद् प इति भोटपाठानुसारेणैव कल्पितः कोष्ठकनिहितभागः। ७. भोटपाठ एवानन्तरोक्तमधिकं विवरणं लभ्यते। वर्ग्य गर ग्यि मखन् पो पण्डि त कु मा क्र शु दङ्। लो चा ब दगे स्लोङ् श क्य ह्वोद् ग्यिस् बस्ग्युर्। स्लद् क्यि बल् युल् ग्यि पण्डि त अ न न्त श्री दङ्। लो चा ब दे निद् क्यि गतुगस् शिङ् गतन् ल फब् पो॥ भारतीयोपाध्यायकुमा[र]कशुना[? कलशेन] भोटभाषानुवादकेन भिक्षुशाक्यप्रभेण चानूदिता। ततश्च नेपालपण्डितानन्तश्रिया तेनैव च भोटभाषानुवादकेन स्पृष्ट्वा [पाठो] निर्णीत इति भावः॥

६

## ॥ योगिनिर्णयप्रकरणम् ॥

यद् यद् भाव्यते तत् तद् भावनाप्रकर्षपर्यन्ते स्फुटाभं संभवति। यथा कामुकस्य कामिन्याकारः। भाव्यन्ते च परमपुरुषार्थिना क्षणिकत्वे नैरात्म्यादयो वस्तुधर्मा इति। अत्रेदं चिन्त्यते भवतु भावनया मानसी स्फुटाभता, केवलं भूताभूतार्थसाधारणत्वाद् भावनोद्भूतवै[56b]शद्यस्यापि संवादनियमानुपपत्तेः कुतः प्रामाण्यमिति कथं प्रत्यक्षता योगिज्ञानस्येति ?

अथानुमानव्यवस्थापितवस्तुभावनायास्तद्व्यभिचारशंकाविरहात् तज्जस्यापि ज्ञानस्य कुतः शंकावकाश इति चेत् ? आस्तां तावदनुमानपौरुषप्रत्याशा, प्रत्यक्षेणापि विद्युद्दहनादिकं गृहीत्वा भावनाप्रकर्षपर्यन्तजातं स्थिरतरतदाकारं च ज्ञानं भवेद् यावन्न विपरीतभावनाभियोगपर्यन्तः। अस्तं गतश्च तद्विषय इति कथं प्रमाणोपनीतवस्तुगोचरत्वेऽपि संवादाश्वासः ? अनस्तंगमेऽपि वा तावत्कालमनलस्य नावस्थानियमः। समुद्रादेरप्येवम्। महीरुहादीनां चाल्पाल्पकालेन वैसदृश्यं दृश्यते। महीधरादीनां च दहनाशनिप्रभृतिभिः। भावना तु यामवस्थामभिनिविश्य भवति तदेकावस्थानियतः स्फुटीभाव इति तद्विषयापेक्षया भ्रान्तिराकारभेदादिति न प्रामाण्यं न च प्रत्यक्षता। यदा च ह्यालिक एव हव्याशनमनुमाय भावनया स्फुटयेत्, तदा न तद् योगिज्ञानं परमार्थविषयत्वाभावादिति प्रत्यक्षान्तरप्रसङ्गः।

अत्रोच्यते। न हि तावदियमनन्तराशंका संभविनी। भावना हि रागशोकाद्यावेशाद् वा स्वयमुपनमेत्, प्रयोजनानुरोधाद् वा प्रेक्षावता संचिन्त्यारभ्येत ? तत्र परमप्रयोजनवार्ताविरहाद्दाहपाकादिमात्रमनुमितेनैव हुतभुजा तद्देशोपसर्पणात् सिद्धम्, अनुपमृष्टदेशेऽपि भावनावैफल्यम्। पुरस्तात्तु भाविते परिस्फुरति तदर्थापेक्षया भ्रान्तिः। एवं शोकाद्युपनतायामपि भावनायाम्। तत् कथं प्रत्यक्षान्तरप्रसङ्गसङ्गतिः ?

अस्तु वा यथा कथञ्चित् तादृगर्थभावना, शिरसि शृङ्गभावनावत्। अथाप्यभ्रमपक्षे योगिज्ञान एवान्तर्भावः। योगो हि समाधिर्मनस एकाग्रतालक्षण इति न दोषः। शृङ्गाकारस्फुटीभावे तु पृथ्वी कृत्स्नेत्यादिवदप्रत्यक्षतैव निरालम्बनत्वात्। यद् वार्तिकम्,

तत्र प्रमाणं संवादि यत्प्राग्निर्णीतवस्तुवत् ।
तद् भावनाजं प्रत्यक्षमिष्टं शेषा उपप्लवाः ॥
[ प्र. वा. २. २८६ ]

यत् पुनरस्तं गतेऽपि वस्तुन्याकारान्तरभाजि वा स्थिराकारतया भावना, यस्य निरालम्बनत्वमापादितं सर्वस्य, तदपि वस्तुभावनापक्षे शोभते, न वस्तुधर्मभावनापक्षे। वस्तुधर्माश्च क्षणिकत्वादयः संसारवैराग्यात् स्फुटीभावभाजो भावयितुमुपक्रान्ताः। अथैकत्र प्रमाणपरिशुद्धेऽपि भावनाजनितवैशद्यस्य वस्तुनि विसंवादसंदर्शनादन्यत्रापि क आश्वासः, प्रमाणपरिशुद्धिमन्तरेणाश्वासहेतोरप्यरयाभावात्, तस्याश्च संवादनियतावसामर्थ्यात् ? तन्न, स्थिरास्थिरविषयत्वेन विशेषात्। अस्थिरं हि वस्तु प्रध्वंसविकाराभ्यां ग्रस्यत इति तत्र न संवादः, [57a] वस्तुधर्मास्तु क्षणिकत्वादयो न कदाचिद्विच्छिद्यन्त इति तद्विषयः स्फुटीभावः सर्वदा सालम्बन एव।

नन्वेतदपि न युक्तम्। न हि क्षणिकत्वादिकं नाम किञ्चिदस्ति वस्तु, सत्त्वे वा तदेव नित्यमासक्तमिति सर्वमयत्नशीर्णम्। अवस्तुत्वे च तदेव निरालम्बनत्वम्। तस्माद् भवन्मतेऽपि क्षणिकत्वं नाम क्षणिका एव भावराशयोऽपरामृष्टभेदाः भेदान्तरतिरस्कारेणोच्यन्ते। तथा च सति क्षणिकत्वभावनेत्यपि क्षणिकपदार्थसार्थभावनेत्येवार्थः। तावता तान्येव वस्तूनि भाव्यमानानि स्फुटीभवन्तीति स एव दोषः। अथाभिन्नान्यपि क्षणिकत्वादीनि भिन्नानीव तावत्प्रतिभान्ति ? तथाप्यध्यवसायाद् वस्तुगतान्येव भाव्यन्त इति न तद्दोषान्मुक्तिः, तटस्थतया भावयितुमशक्यत्वात्। तथा च त्रुट्यद्रूपमेतद् वस्तुजातमित्ययमेवाकारो भावनायाः।

तत्कथं वस्तुतत्त्वभावनापक्षेऽपि वस्तुसंस्पर्शपरिहारः ? परिहारे चावस्त्वन्तरभावनैव स्यान्न धर्मभावना। सत्यम्। यद्यपि वस्तुतत्त्वभावनयापि सामान्येनाक्षिप्तं वस्तु, तथापि न तस्य स्फुटीभावः, तत्त्वमात्रतात्पर्यपर्यवसानात्। तत्त्वभावनैव हि स्फुटीभवन्ती संसारापसारणसरणिः। न हि कामिनीकलेवरं साक्षात्कृतं रागसंकोचमाचरति, किं त्वनित्यदुःखादित्वमेव। अतस्तत्रैव तात्पर्यात् तदेव वैशद्यमापद्यते भावनया, न वस्तु। ननु तत्र तात्पर्येऽपि वस्तुधर्मः स्फुटीभवति न वस्त्विति का सङ्गतिः, भावनया द्वयोरपि क्रोडीकरणात् ? कीदृशो वा धर्मिणमस्पृशतो धर्ममात्रस्य स्फुटीभावः ? तदेतदाकाशचित्रणम् न खलु हालिकस्यापि प्रत्ययमातनोति।

नैष दोषः, धर्मिणः स्फुटीभावमस्पृशतोऽपि धर्ममात्रस्य स्फुटीभावदर्शनात्। केवलं वस्तुप्रत्यासत्त्यनपेक्ष्य न स्फुटस्फुरणमिति स्यात्। स्फुटीभावोऽपि तस्य तद्विषयसन्निधौ यत्नमनपेक्ष्य झगिति तज्ज्ञाने तत्तदाकारस्फुरणं नाम, वस्तुप्रत्यासत्त्यपेक्षा तु न चोद्यते, धर्मत्वादेव, प्रियत्वादिवत्। तथा हि निम्बरसादौ तावत् प्रियत्वमभ्यस्यमानं स्फुटीभवद्दृष्टम्। न च निम्बादेः स धर्म इति तद्भावनया निम्बाद्यपि स्वजन्मदेशस्थं रसनाप्रसङ्गि वा स्फुटं स्फुरदस्ति यावन्न विपर्ययभावनाभियोगप्रकर्षः। न च स्फुटीभूतं प्रियत्वमपि तटस्थमुपलभ्यते निम्बाद्यनुभवमनपेक्ष्य, किं तु यदा यदा निम्बाद्यनुभवः तदा तदा झगिति प्रियत्वमनुभवविषयः, न प्रागिवोद्वेजकमनुभयं वेत्येष एव धर्मस्फुटीभावार्थः।

यथा हि कामिन्यादिवस्तुनि स्फुटीभूतेऽपि न यथा समयसिद्धस्तत्त्वस्फुटीभावः, तथा तत्त्वभावनयापि न वस्तुस्फुटीभाव उभयोः परस्पराव्यभिचारेऽपीति कीदृशो दोषः? अथ न बाह्यधर्मः प्रियत्वमसाधारणत्वाद् भावनाधेयत्वाच्चेति चेत्? कस्य पुनरयं धर्मोऽस्तु प्रियत्वादिः प्रत्यात्मवेद्यत्वेनापह्नोतुमशक्यः? ज्ञानस्य [57b] चेत्? बाह्यस्य प्रियत्वमभ्यस्यमानं ज्ञानस्य स्फुटीभवतीति क एष न्यायः? उत्कृष्टमिदं निम्बादिति भावनाकारोऽपि न तज्ज्ञानमुत्कृष्टमिति। अथापि ज्ञानस्यैव प्रियतया स्फुटीभावे न जातु कश्चिदप्रियमनुभवेत्। न हि बहिरिव ज्ञानमपि कादाचित्कसन्निधानम्। ज्ञानस्यापि कस्यचिदेव प्रियत्वव्यक्तिरिति चेत्? किंकृतः पुनरयं विभागः? यद्यभ्यासकृतः, यत्रैवाभ्यासो बाह्ये तत्रैव भवतु। तदनपेक्षायां कस्यचिदपि प्रत्यासत्तिविप्रकर्षाभावान्मनोमात्रमधिष्ठानीभूतमिति न कश्चिद्विशेषः।

बाह्ये तु विशिष्टजातिनिम्बादिकमभ्यासविषयीकृतमिति नातिप्रसङ्गः। ज्ञानमपि तर्हि भावितनिम्बगोचरमेव प्रत्यासन्नमिति विशेषः। एवं तर्हीदमायातम्, यद्वस्तु केनचिद् रूपेण भाव्यते तद्वस्तु विहाय तत्प्रत्यासन्नस्य स्फुटीभाव इति कामिनीं भावयतस्तत्प्रत्यासन्नस्य पित्रादेरेव स्फुटीभावप्रसङ्गो न कामिन्याः। अथ विषयस्य विषयिणा ज्ञानेन सह विशिष्टैव काचित्प्रत्यासत्तिः? एवमपि निम्बे प्रियतया अभ्यस्यमाने तज्ज्ञानं प्रियतया स्फुरतीति निम्बादिकं प्राग्वदप्रियमेव भवेत्। ततो यथा सर्पादावप्रिये परिहाराङ्गतया तन्निश्चयः प्रिय एव न सर्पादिस्तथेदमपीति कृतं भावनया।

अथ भावनाबलात् प्रियाकारमेव तद्विषयं ज्ञानमुपजायत इति कल्पना? एवं सति निम्बरसः प्रियो भाव्यत इति तद्विषयज्ञानमेव प्रियाकारं भाव्यत इत्यापन्नम्।

स्फुटाभतापि तस्य तद्विषयोपनिधौ तद्ग्राहिज्ञानस्य झगिति यत्नमनपेक्ष्य प्रियाकार-स्फुरणम्, न विषयस्यैवासन्निहितस्य साक्षाद्भावः। एवं क्षोणीधरादयोऽपि क्षणिनो भाव्यन्त इति तद्विषयज्ञानमेव क्षणिकाकारं भाव्यत इति। तस्यापि स्फुटीभावो भूधरादिसन्निधौ तद्ग्राहकस्य क्षणिकाकारोदयो न भूधरादेरसन्निहितस्यापि स्फुटी-भावः। इयमेव धर्मभावना शब्दार्थनिष्ठेति न प्रस्तुतवस्तुक्षतिः।

वस्तुतस्तु प्रियत्वं नाम सुखकरत्वम्। तत्र यद्विषये यस्य प्रियत्वभावना तच्चित्तसन्तानं भावनापरिष्कृतमुपादानमुपादाय स विषयः सहकारी सुखमुत्पादयतीति स्थितौ न सर्वं प्रति प्रियत्वम्। तत्र प्रीणकत्वं तु तस्यैव धर्मः, सर्वं च प्रतीति न दोषः। स चाभ्यासादेव। एवं कृपादिष्वपि मानसेषु धर्मेषु योज्यम्। दुःखिनमुद्धरामीति दुःखिपरोद्धरणभावनायाः स्फुटीभावस्तद्विषयसन्निधौ झगिति तत् ज्ञानं तदनुरूपा-नुष्ठानप्रसवहेतुः। एवं शुचिकपालभावनायामपि नैर्घृण्यस्फुटीभावो नाम कर्परोप-सर्पणे वेदितव्यः। न तु संबन्धिनैव प्रत्यासन्नेनेतरेण वा सहस्फु[58a]रत्ता। यथोक्तं सर्वज्ञसिद्धौ,

लब्धो बोधदयादिभिस्त्वतिशयस्तद्गोचरोपस्थितौ
नैवं यत्नमपेक्षते स्वरसतः प्रत्यात्ममुन्मीलति।

तस्मात् क्षणिकत्वधर्माभ्यासेऽपि प्रकर्षगामिनि यावदनुभवितव्यमनेन, तावत् त्रुट्यद्रूपमस्मदादिदर्शनविलक्षणमेव। यथास्माकमत्यन्तसदृशेऽपि भिन्नदेशपटुतर-भेदानुकारि दर्शनं विकल्पश्च झगित्येव तथा स्यात्, अनुष्ठानं वा तदनुरूपम्, एवं योगिनः क्षणभेदिनि भावद्वये दर्शनविकल्पौ। स्थैर्यादिभ्रमोद्भवरागादिकलङ्काङ्कितं चास्य चेत इति इयती तस्य स्फुटाभता।

ननु परिभाषामात्रमेतत् इयत्येव तस्य प्रकर्षगतिरिति। तथादृष्टत्वादिति नोत्तरम्। यद्यपि दृष्टमेवं तथापि तावतैव स्थितिरिति न शक्यं प्रस्तुते। कदाचिदति-रिच्यमानः प्रकर्षो विषयेणैव सहस्फुटयेदिति न पूर्वदोषशोषः। प्रियत्वादावपि च कदाचिदन्यैव निष्ठेति चेत्? भवत्विति भावनया अभिमतां स्थितिमुल्लङ्घ्य स्फुटी-भावशङ्का। यस्तु प्रेक्षापूर्वकारी स्वार्थं परार्थं वा भावनाभियुक्तः, तस्य तावतैव कृतार्थत्वं जातमिति किमिति श्रमान्तरमाविशेत्, अनर्थकत्वादनर्थकरत्वाच्च? यथा भोज्यभैषज्यादिष्वभिमतपाकप्राप्तौ। यथा चात्र संभवत्यपि पाकान्तरेऽभिमते ताव-

तैव पाकप्रकर्षपर्यन्तव्यवहारः, तथा प्रस्तुतेऽपीति न कश्चिद्दोषः। तदेवं यद्यपि धर्मिविषयभावनायाः स्फुटीभावो विसंवादसंवासी स्थैर्यविपर्ययाद्विषयस्य, तथापि न यथोक्तधर्मगोचरायास्तदाशङ्केति स्थितम्। यद्येवमनुचितः कामिनीदृष्टान्त इति न चोद्यम्, भावनाया वैशद्यमात्रनिदर्शनस्य विवक्षितत्वात्। अत एव वार्तिकम्,

घृणावैराग्यरागवत्
[ ]

इत्याह।

तत्तर्हि योगिज्ञानमिन्द्रियज्ञानाद्भिन्नमभिन्नं वा? किं चातः? अभेदपक्षे न योगिज्ञानं नाम प्रत्यक्षभेदः, इन्द्रियज्ञानेनैव संग्रहात्। न च भावनोपस्कृतसन्तानस्य तथोदयाद् भेदव्यवस्था, रसायनादिसंस्कारापेक्षयापि प्रत्यक्षान्तरव्यवस्थाप्रसङ्गात्। भेदपक्षे च भावनासंभवं क्षणिकत्वसाक्षात्कारिज्ञानमन्यदन्यथेति साध्वी शुद्धिः, इन्द्रियज्ञानस्यापि तदवस्थायामस्थैर्यसाक्षात्करणे कृतं योगिज्ञानेन। न च तस्याकस्मिकः क्षणिकत्वबोधः। भावनोद्भूतवैशद्यस्य हि तद्बोधः। न चेन्द्रियज्ञाने भावना, अपि तु मनसः। तामन्तरेणापि साक्षात् क्रियालाभे च भावनावैयर्थ्यम्।

किं च भिन्नकालं वा तद्द्वयमभिन्नकालं वा? तत्राभिन्नकालत्वमनुपपन्नम्। इन्द्रियज्ञानोपनीतस्य हि धर्मिणः क्षणिकता साक्षात्कर्तव्या भावनाभाविनाऽनुभवेन। अन्यथा धर्मिणं धर्मं च स्वातन्त्र्येण [58b] साक्षात्कुर्वतो धर्मिद्वारकं दूषणमनिवार्यम्। न च धर्मभावनाया वस्तुसाक्षात्कारव्यापारो निम्बादिवदिति निवेदितमेतत्। तस्मादिन्द्रियज्ञानगोचरादधिक एव तत्त्वसाक्षात्कार इति प्रथममिन्द्रियज्ञानं धर्मिग्राहि, पश्चान्मानसं क्षणिकताग्राहीति नियतः कालभेदः। कालभेदे च प्राचीनापेक्षया पश्चिमस्य गृहीतग्राहित्वादप्रामाण्यमेकार्थत्वे। भिन्नार्थत्वे त्विन्द्रियज्ञानगोचरादन्यत्र प्रवर्तमानं स्वातन्त्र्येण धर्मिणमुपस्थापयतीति न प्राच्यदोषान्मुक्तिरिति।

अत्र ब्रूमः। प्रथमपक्षे तावन्न वस्तुदूषणम्, तादृक्पुरुषविशेषस्य साध्यस्य सिद्धत्वात्। व्यवस्थादूषणमपि नास्ति, साध्यतयैव तादृशादशाविशेषस्य लोकातिक्रान्तरूपत्वे तत्साधनविशेषप्रतिपादनाय पृथग्जनसाधारणेन्द्रियज्ञानाद् भेदेन निर्देशात्। न चेन्द्रियज्ञानशब्देन कोष्ठशुद्ध्या रसायनादिजनितविशेषस्यैव संग्रहमात्रेण शास्त्रसाफल्यम्। अत एवाञ्जनादिकृतविशेषापेक्षयापि न भेदनिर्देशः, लोकातिक्रान्त-

रूपस्य विशेषस्याभावात्। प्रयोजनापेक्षया हि बहुलमेकप्रकारसंग्राह्यस्यापि प्रकारभेदनिर्देश इष्यत एव, यथा संप्रयुक्तसंस्कारस्कन्धसंगृहीतयोरपि वेदनासंज्ञयोः, विकल्पसंगृहीतस्यापि क्लिष्टमनोज्ञानस्य। तस्मान्नेन्द्रिययोगिज्ञानयोरभेदपक्षे तावद्दोषः। तदेव धर्मिरूपापेक्षयेन्द्रियज्ञानं धर्मापेक्षया योगिज्ञानं, यथा धर्मिप्रत्यक्षमेव निषेधापेक्षयानुपलब्धिः।

भेदकपक्षेऽपि न तावत् स्थैर्येतरस्फुरणकृतोपालम्भसंभवः, इन्द्रियज्ञानेनापि वस्तु सर्वात्मना गृह्णता त्रुट्यद्रूपस्यैव ग्रहणात्। अध्यवसायोऽपि पूर्वं दुर्लभः स संप्रति भावनाबलावलम्बिना मनसा आसादितपाटवेन घटित इति विशेषः। नन्विन्द्रियस्यापि तद्दशायां निरतिशयविशेषलाभाद् दूरसूक्ष्माद्यनुभवं को निवारयति बाह्ययोगिवत्, तिरश्चामपि कुतश्चित् कर्माक्षेपान्मात्रया तथोपलब्धेः? भिद्यमानानां च क्षणानामवश्यं वैसदृश्यमणीयोऽपि संभवि, अन्यथा सर्वात्मना सादृश्ये तत्त्वप्रसङ्गात्। तत् तथाविधसूक्ष्मभेदावधारणधूर्येणाक्षविज्ञानेनैव साध्यसिद्धेरनर्थकं योगिज्ञानम्।

एतेन दुःखानात्मादिसाक्षात्कारो व्याख्यातः। पुरुषवपुषा चेन्द्रियमन्तरेण भवितुमशक्यमिति योगिज्ञानमनुत्पादनीयमस्तु। तदप्ययुक्तम्। न हि संभावनामात्रोपनीतं नेत्रबलमवलम्ब्य संव्यवहारिणा प्रेक्षेण प्रमाणपरायणो मार्गः परिहर्तुं शक्यः। तदभ्याससहकारिकमेव वा तथाविधेन्द्रियशक्तिसाधनमित्यपरिहार्येण योगिज्ञानेन समानकक्षतायामपि इन्द्रियज्ञानस्य न कश्चिद् दोषः। वैयर्थ्य[59a]मेकस्येति चेत्? कतरेण पुनः स्वकारणोपनिधानधर्मणोरनयोः स्वव्यापारवैयर्थ्यभयान्निवर्तितव्यम्, बीजादिष्विवान्यक्षणप्राप्तेषु।

अप्रामाण्यमेकस्यास्त्विति चेत्? बीजादिष्वप्येकस्याकारणत्वमस्तु। सर्वेषां समानसामर्थ्यानां कतमदेकमकारणमवस्थापयितुं शक्यमिति चेत्? परिच्छेदबलवतोर्ज्ञानयोरपि किमेकमप्रमाणीक्रियताम्। परस्परापेक्षया मा भूदुभयमपि प्रमाणमिति चेत्? बीजादिष्वपि नैकमपि कारणत्वमस्त्विति समानम्। गृहीतग्राहित्वं नाम नास्त्येव। तर्हि दोष इति चेत्– न, कालभेदेन तस्य स्वीकारात्। गृहीतग्रहणं हि तदुच्यते, न गृह्यमाणस्य, यथा कृतस्य करणस्वीकारेऽकारकत्वम्, न तु क्रियमाणकरणे बीजादिवदेव। तस्मादभिन्नकालपक्षे नैष दोषः।

ननु तथाप्याकारद्वयस्फुरणप्रसङ्ग इति चेत् ? सत्यम्, सत्यज्ञानाकारस्तावद्भन्त समानदेशः, अन्यथा भ्रमत्वप्रसङ्गात्। अतस्तावाकारावप्रतिघौ कया रीत्या स्फुरत इति को निर्णेतुं क्षमः, यदाह,

अचिन्त्या योगिनां गतिः

[ प्र. वा. २. ५३२. ]

इति ? तस्माद् दृष्टान्ताभावात् किमिवानिष्टं किमिव वा न दोष इत्युभयोरपि नावसरः। समसमयतया तर्हीन्द्रियज्ञानानपेक्षायां स्वातन्त्र्यदोष उक्तः कथं परिहर्तव्यः ? इन्द्रियापेक्षयैव परिहरिष्यत इति नोत्तरम्। तदा हि तदपीन्द्रियज्ञानमेव स्यात्, तद्व्यापारानुविधानात्। न योगिज्ञानं नाम किञ्चित्।

तद्वरमेकमेव स्वीकृतमिति न भेदपक्षः क्षमः। नैवम्, तथा हि मा भूदिन्द्रियापेक्षा। वीक्षणं तु यथा स्वसामर्थ्यानुरूपां योग्यदेशावस्थितिमपेक्ष्य स्वविज्ञानजनने प्रवर्तते तथा मनइन्द्रियमपि प्रवर्तिष्यते, अप्राप्यकारिताया उभयोः साधारणत्वात्, अर्थवत्तायाश्च मनसोऽपि तदानीमिष्टत्वात्। पृथग्जनसन्तानस्य तु न तादृशी शक्तिः यतो नेत्रश्रोत्रवन्मनोऽपि तादृङ्मर्यादया योग्यदेशस्थमर्थसहकारिणमासाद्य वेदनम् उत्पादयेदिति नातिप्रसङ्गः। तद्दशायां तु श्रुतिनयनयोरिव मनसोऽपि कियद्दूरेण विषयसन्निधिव्यवस्थेति क एवं प्रमातुं क्षमः ? केवलमेतावदुच्यते, यावत्तेन शक्यम् अधिगन्तुं स्वाकारार्पणसहं सहकारि वस्तु तावदितरजनासाधारणत्रुट्यरूपतया तस्य गोचरीभवति। तथा च सति वस्त्वाकारो वस्तुकृत एव न भावनाजनित इति न विसंवादशङ्का।

ननु चक्षुरादेस्ताव द्दूरतरगोचरीकरणे दृष्टा शक्तिः, मनसस्तु नेन्द्रियातिक्रमेण सर्वविषयस्येति चेत्- न, परचित्तज्ञानादीनां संभवात्। तदपि नेष्टमेकेषामिति चेत् ? अदृष्टमात्रेण प्रतिक्षेपायोगात्। उपायाभावादिति चेत् ? उपायाभावेऽपि नानुपलम्भमात्रादन्य उपायः। तस्माद् यद्येवं स्यात् तदा योगि[59b]नामिन्द्रियमनोज्ञानयोर्भेदपक्षेऽपि न निर्वाह इत्युपक्षेपार्थः। निर्वाहस्त्वन्यथाऽपि दर्शित एव। एवं च सति कालभेदपक्षेऽपि न दोषः, यदि [सा] प्रथमं मनोज्ञानवृत्तिः, यदि चेन्द्रियपथातिक्रमेण वृत्तिः। इन्द्रियज्ञानं तु तस्य तदपेक्षया प्रामाण्यविरहेऽपि न व्यथयतीत्यलं विस्तरेण।

तदेवं योगिज्ञाने तत्त्वभावनाधिकारादर्थाकारोऽर्थकृत एव। भावनया पुनस्तदीयसन्ताने नेत्र इवाञ्जनविशेषेण शक्तिरतिशयवती काचिदर्पिता ययेतरजनासाधारणं दर्शनमस्य। यथोक्तं प्राक्। यदि तर्हि विषयजन्यमेव योगिज्ञानमतीतानागतपरिज्ञानस्य का वार्ता? तदेतत्प्रस्तावानवगाहनस्य फलम्। उपयुक्तसर्वज्ञाधिकारेण हि वस्तुधर्मभावनोपक्षेपः कृतः। न सर्वसर्वज्ञपक्षापेक्षया ततोऽतीतानागतमप्रतीयमानमपि न बाधकम्। तावतैव दुःखनिरोधसिद्धेः, परस्मै च निष्कम्पदेशनावतारात्।

यत् पुनः कणिकायां क्षणिकादितत्त्वभावनाद्वारेण तद्धर्मिणां समस्तवस्तूनामेव भावनया तदाकारज्ञानोत्पादनात्साक्षात्करणमुत्थाप्य दूषणमभिधीयते योगिज्ञानस्य, तदवधीरणीयमेव, वार्तिकभाष्यादिवादबहिर्भावात्। अन्यथारब्धैव नित्यदुःखादिभावना, सा च सर्वसर्वज्ञत्वमेवार्पयतीति यद्यभिप्रेतं स्यात्, कथं यत्नेनोत्थाप्य तत्परिहारो वार्तिके,

नास्माभिः शक्यते ज्ञातुमिति सन्तोष इष्यते
[ ]

इत्यादिना भाष्ये च? यदि पुनस्तदवस्थाप्राप्तौ निरावरणान्तःकरणस्य कारुण्यातिशयात् सर्वाकारपरार्थप्रार्थनपरतया सकलगोचरचारिणि चेतसि चिरविरूढोत्साहस्य तादृगुपायविशेषाधिगमो भविष्यति, यमनुतिष्ठतः प्रतिपरमाणु सर्ववस्तुविषयं यथादेशकालं प्रत्यवस्थानुकारि स्फुटतरं ज्ञानमुदीयात्। तदा न तावद्वस्तुव्यभिचारकृतं विसंवादित्वम्, नापि निरालम्बनत्वम्, वस्तूनामेव प्रतिभासनात्।

*अथोत्पत्तिसारूप्याभ्यामालम्बनव्यवस्था,*

[भिन्नकालं कथं ग्राह्यमिति चेद्] ग्राह्यतां विदुः।
हेतुत्वमेव युक्तिज्ञा ज्ञानाकारार्पणक्षमम्॥
[प्र. वा. २. २४७.]

इति वचनात्, ततः सारूप्यमेकमकिञ्चित्करमिति कथमनालम्बनत्वपरिहारः?

तदयुक्तम्, तत् खलु लक्षणं पृथग्जनापेक्षया बहिरर्थं प्रति समसमयभाविनानुपकार्येण ज्ञानेन ग्रहणनिषेधपरम्, तथा प्रस्तावात्। तत्त्वतस्तु यदेव यत्र प्रतिभासते तदेव तस्यालम्बनमुच्यते। यथेन्द्रियप्रत्यक्षे ग्राह्यमन्यत्र स्वाकारः, प्रतिभासवशात्

प्रत्यक्षस्य ग्रहणाग्रहणे इति हि प्रथमपरिच्छेदवृत्तिः। तत्र वाह्यस्य प्रतिभासो नाम तदाकारोत्पत्तिमात्रम्। तथा हि वहिर्विच्छिन्नाकारोदयसंवेदनमात्रादिदं दृष्टमिति भवति। न खलु तत्संकल्पकाले उत्पत्तिरपरापेक्ष्यते, [60a] तस्याः पश्चान्निश्चेयत्वात् फलप्राप्त्या वा अभ्यासेन वा। स च तदाकारोदय इन्द्रियप्रत्यक्षेऽर्थाद् भ्रमे विसंवात्। विकल्पे वासनातः। तत्रार्थजन्ये संवादोऽन्यत्र विपर्ययो वहिरपेक्षया, स्वरूपे सर्वत्र संवादनियमात्। ततोऽभिप्रेतसंवादे वेदने तदुत्पत्तिमन्तरेण [न] संवादो नापि ताद्रूप्यमिति तत्र तदुत्पत्तिप्रार्थना। अतएव तदाकारतैव प्रामाण्यम्, सारूप्यतदुत्पत्ती च संवेद्यलक्षणमित्युभयमविरोधि।

यत्र तु भावनाविशेषबलादेव देवताधिपत्यात् सत्यस्वप्नवदर्थाकारमर्थयाथात्म्यनान्तरीयकं ज्ञानम्, तत्र न किञ्चित् तदुत्पत्त्या। यद् वार्तिकम्—

[ रूपादेश्चेतसश्चैवम् ] अविशुद्धधियं प्रति।
ग्राह्यग्राहकचिन्तेयमचिन्त्या योगिनां गतिः॥
[ प्र. वा. २. ५३२. ]

इति। तस्माद् वाह्ये पृथग्जनस्य सारूप्योत्पत्तिभ्यां वेद्यस्थितिः योगिनः सारूप्यमात्रेणापि। स्वरूपे योग्यतामात्रेणैवेति न्यायः। [1]भाविभूतयोस्तर्हि यदि स्वरूपस्फुरणं वर्तमानतैव स्यात्।

अथ स्वरूपमसन्निहितं ज्ञानमेव तदाकारमिति निरालम्बनं नियमेन, तदपि नास्ति। यस्मादसन्निहितेऽप्यर्थे भावनाबलाच्चेत् तद्देशकालानुकारि विज्ञानं कथमनालम्बनम्? स्फुरणरीतिविशेषेण तु कालभेदविकल्पोदयात् तदनुरूपानुष्ठाने नियतत्वात् तत्प्राप्तेः। यद्भाष्यम्,

यथा स दृष्टः शरदादिकालयुक्तस्तथा तस्य न वाधितत्वम्।
[प्र. वा. भा. २. ६१५]

इति। यद्वा संचित्यैव कालभेदभागिवस्तुरूपप्रतीतये समाधिसमापत्तेर्व्युत्थाने काल भेदाध्यवसायः। यथोक्तम्,

यद् यदिच्छति वै वोद्धुम्[2]

इत्यादि। क्रमेण त्वनाभोगमपि ज्ञानमविरोधि। ज्ञानमात्रस्य तत्त्वतः स्फुरणाच्च न

१. तुल० रत्न० निब० पृः ११ २ त. स. ३६२८ (?)

वर्तमानताप्रसङ्गः, यथा निराकारवादे वस्तुस्वरूपस्यैव स्फुरणादिति। यद्यपि च वर्तमानेऽपि ज्ञानाकारस्यैव स्फुरणं तथापि वर्तमानतयैवाध्यवसायस्तत्र। एवं दूरासन्नादिभेदेऽपि वेदितव्यम्। तत्र यथाध्यवसायप्राप्तौ नियमेन संवादात् प्रामाण्यम् अन्यदा विपर्ययः, यथा स्वप्नकामिन्यादौ। प्रतिभास्वर्गसाधनाग्निष्टोमादिविकल्पे च भाविनः स्पष्टरूपस्य प्रतिभासाभावादेव न चिन्ता। न च तत्र प्रेक्षव्यावहारिकस्य प्राप्तिनियमनिश्चयोऽस्ति।

प्रस्तुतेऽपि को निश्चय इति चेत्? कस्य पुनरत्र निश्चयश्चिन्त्यते, तस्य तदन्यस्य वा? यदि तस्य, तदा यथाभ्यासात् परितो निरस्तविभ्रमाशङ्के साधनज्ञाने पृथग्जनस्य तथा योगिनोऽप्यत्यन्ताभ्यासाद् भाविभूतादिप्रतिभासः केन वार्यते? अथान्यस्य, तदेदमायातम्। यावदन्यस्य न प्रामाण्यबोधस्तावन्न प्रमाणम्। यावच्च न प्रमाणं तावन्नान्यस्य प्रामाण्यबोधोऽभ्रान्त इति न किञ्चित्प्रमाणं स्यात्। तन्नाभिवेशपारवश्येन किञ्चित्। तस्मादुपायविशेष[60b]सचिवभावनाभेदस्याहृत्यास्फुरणात् तादृक्सिद्धावेव संशयो, न तु सिद्धेऽपि निरालम्बनत्वादिदोषैरुपद्रवः शक्यः।

यच्च विकल्पेन बाह्यस्याग्रहणेऽप्यध्यवसेयतया स्फुटीभावमाशंक्य, यदनुमानेन गृह्यते यच्चाध्यवसीयते ते द्वेऽन्यनिवृत्ती न वस्तुनी, स्वलक्षणावगाहित्वेऽभिलापसंसर्गयोग्यप्रतिभासानुपपत्तेरित्याह, तदप्यसंबद्धम्। तथा हि, यथा तथा वा बौद्धसिद्धान्तगन्धेन व्यवहारः, कामिन्याकारविकल्पभावनवत् क्षणिकाकारस्यापि पर्यन्ते विशदोपादेयक्षणप्रसवस्तु दुर्निवारः। यदि पुनरीदृगपोहस्थितिः क्षणिकविकल्पैकतल्पशायिनी न कामिन्यादिविकल्पमन्वेतीत्युपपादयिष्यसि तथैव ग्रहीष्यामः। न चाध्यवसेयमवस्तुनिवृत्तिमात्रं वा। धर्मोत्तरेऽपि हि मते स्वलक्षणमध्यवसेयमिति स्थितिः।

ननु बहिः प्रतीतो मयेत्यध्यवसायाकारः। तत्र च स्वलक्षणस्फुरणमिति साहसम्, विकल्पाध्यवसाययोरेकार्थत्वात्। सत्यम्, न तु तत्र स्फुरतीति तावता स्वलक्षणमध्यवसितमुच्यते। अस्फुरणे तद्बोधात् कथमवसायः? स्फुरणेऽपि प्रतिभास एवासौ, कथमध्यवसायः? न च प्रतिभासाध्यवसायावप्येकार्थौ। प्रतिभासो हि साक्षात् स्फुरणमस्फुरणेऽपि प्रवृत्तिविषयीकरणमेकव्यावृत्त्युल्लेखसामर्थ्यादध्यवसायो भाष्यमतः। अतो यदनुरूपमनुष्ठानं तदध्यवसेयम्, प्रतिभासमानरूपाननुप्रविष्टमेव। तच्च क्वचिदारोपितमात्रम्। क्वचिद्वस्तुरूपम्। प्रकृतं तु प्रमाणव्यापारस्वीकाराद् वस्तुरूपमेवेति कथमुच्यते निवृत्तिमात्रमवस्तु चाध्यवसेयमित्यास्तां तावदनारब्धनिर्बन्धः।

प्रतिभासोऽपि विकल्पे व्यावृत्ताकारस्य, न व्यावृत्तिमात्रस्य, यद्यनुभवानुसारः। सर्वदा यद् वा तद् वा राक्षसादि प्रतिभासेत। भावनया पुनरध्यवसिताकारेण परिणतिः अबाध्या तत्रारोपितमात्रेऽध्यवसेये निरालम्बनत्वम्। सति तु तदेवालम्बनं यथानन्तरमुक्तम्॥

यत्त्वाह, अर्थस्यालम्बनप्रत्ययत्वं विज्ञानं प्रतीन्द्रियापेक्षत्वेन व्याप्तम्। तथास्मात् स्वविरुद्धोपलब्ध्या निवर्तमानमालम्बनप्रत्यय[त्व]मप्यर्थस्य निवर्तयतीति, तत्रालम्बनप्रत्ययत्वेन्द्रियापेक्षत्वयोर्व्याप्यव्यापकभावमप्रसाध्य प्रमाणेन व्यापकविरुद्धोपलब्धिं स्फुटयतीति महद्वैदग्ध्यम्। तथा दर्शनादिति चेत्? दर्शनादर्शनमेव तर्हि प्रमाणीकृत्य स्थीयताम्, किमेवंविधप्रमाणोपन्यासव्यसनेन? तस्मादिन्द्रियमनपेक्ष्यापि यद्यालम्बनभावं भावः स्वीकुर्यात् न बाधकमुत्पश्यामः। अथात्रोक्तमेव न खल्विन्धनविशेषो धूमहेतुरिति विनापि दहनं सहस्रेणापि संस्कारैर्धूममाधत्ते। तदाधाने वा समस्तकार्यहेत्वनुमानोच्छेदप्रसङ्गः। तस्मात् ज्ञानमपीन्द्रियसापेक्षादर्थाद् उत्पत्तिधर्मकम्।

इन्द्रियव्यापारविरहे च समस्ता[61a]परकारणसन्निधावसन्निधीयमानसत्ताकं तत्प्रतिबद्धं सिद्धमिति कथमिन्द्रियानपेक्ष्यस्यार्थस्य स्वविज्ञानं प्रत्यालम्बनभाव इति चेत्? एतदपि परचित्तज्ञानसंभवेन प्रतिव्यूढम्। इष्टाश्च परचित्तवेदिनश्चार्वाकमीमांसकव्यतिरिक्तैः। चार्वाकादेरपि सन्देहान्नापरा गतिः। सन्देहे च विपक्षादेकान्तव्यावृत्तेरयोगः। ननु ज्ञानकार्यस्येन्द्रियापेक्षानियमादेव नान्यत्र सन्देहो दहनापेक्षधूमवत्। यद्येवं रूपज्ञानस्य वीक्षणापेक्षणे यादृशी सामग्री सा न संचरणविशेषस्य चरणापेक्षणे कलयापि हीयते, तत् कथं न धूमदृष्टान्तश्चरणविरहिणामुरगादीनां गमननिषेधाय प्रभुरभूत्? कथं वा करादिव्यापारसङ्गि सावेगमन्त्रोद्धारपरम्परासाध्यमेकेषां विषशमनादिकार्यं समाधिमात्रादन्यस्य? न चैवं धूमोऽपि क्वचिदिन्धने दहनानपेक्षोदयो दृष्टो यतोऽत्रापि तथा शङ्क्येत।

तस्माद् बहिर्मुखो भावा यथा हेतुफलभावेनोपलम्भभाजः ते तथैव नियतवृत्तयः। चित्तसन्तानस्य तु विचित्रकर्माभिसंस्कारसामर्थ्याद् विचित्र एव विवर्तः। अतस्तदाश्रयकार्यमेकत्र यावदपेक्षं तावदपेक्षमन्यत्रापीति न नियन्तुं शक्यम्। तत् कथं परचित्तवेदनादेरभाव एव? यदि च धूमवदनलमनपेक्ष्य नेन्द्रियं बुद्धिः, तदा स्वविषयेऽप्युत्कर्षघोषणाचोक्षणादीनां दीनैव स्यात्। तथा हि यावद्देशं दहनेन्धनादि

वर्तमानताप्रसङ्गः, यथा निराकारवादे वस्तुस्वरूपस्यैव स्फुरणादिति। यद्यपि च वर्तमानेऽपि ज्ञानाकारस्यैव स्फुरणं तथापि वर्तमानतयैवाध्यवसायस्तत्र। एवं दूरासन्नादिभेदेऽपि वेदितव्यम्। तत्र यथाध्यवसायप्राप्तौ नियमेन संवादात् प्रामाण्यम् अन्यदा विपर्ययः, यथा स्वप्नकामिन्यादौ। प्रतिभास्वर्गसाधनाग्निष्टोमादिविकल्पे च भाविनः स्पष्टरूपस्य प्रतिभासाभावादेव न चिन्ता। न च तत्र प्रेक्षव्यावहारिकस्य प्राप्तिनियमनिश्चयोऽस्ति।

प्रस्तुतेऽपि को निश्चय इति चेत्? कस्य पुनरत्र निश्चयश्चिन्त्यते, तस्य तदन्यस्य वा? यदि तस्य, तदा यथाभ्यासात् परितो निरस्तविभ्रमाशङ्के साधनज्ञाने पृथग्जनस्य तथा योगिनोऽप्यत्यन्ताभ्यासाद् भाविभूतादिप्रतिभासः केन वार्यते? अथान्यस्य, तदेदमायातम्। यावदन्यस्य न प्रामाण्यबोधस्तावन्न प्रमाणम्। यावच्च न प्रमाणं तावन्नान्यस्य प्रामाण्यबोधोऽभ्रान्त इति न किञ्चित्प्रमाणं स्यात्। तन्नाभिवेशपारवश्येन किञ्चित्। तस्मादुपायविशेष[60b]सचिवभावनाभेदस्याहत्यास्फुरणात् तादृक्सिद्धावेव संशयो, न तु सिद्धेऽपि निरालम्बनत्वादिदोषैरुपद्रवः शक्यः।

यच्च विकल्पेन बाह्यस्याग्रहणेऽप्यध्यवसेयतया स्फुटीभावमाशंक्य, यदनुमानेन गृह्यते यच्चाध्यवसीयते ते द्वेऽन्यनिवृत्ती न वस्तुनी, स्वलक्षणावगाहित्वेऽभिलापसंसर्गयोग्यप्रतिभासानुपपत्तेरित्याह, तदप्यसंबद्धम्। तथा हि, यथा तथा वा बौद्धसिद्धान्तगन्धेन व्यवहारः, कामिन्याकारविकल्पभावनवत् क्षणिकाकारस्यापि पर्यन्ते विशदोपादेयक्षणप्रसवस्तु दुर्निवारः। यदि पुनरीदृगपोहस्थितिः क्षणिकविकल्पैकतल्पशायिनी न कामिन्यादिविकल्पमन्वेतीत्युपपादयिष्यसि तथैव ग्रहीष्यामः। न चाध्यवसेयमवस्तुनिवृत्तिमात्रं वा। धर्मोत्तरेऽपि हि मते स्वलक्षणमध्यवसेयमिति स्थितिः।

ननु बहिः प्रतीतो मयेत्यध्यवसायाकारः। तत्र च स्वलक्षणस्फुरणमिति साहसम्, विकल्पाध्यवसाययोरेकार्थत्वात्। सत्यम्, न तु तत्र स्फुरतीति तावता स्वलक्षणमध्यवसितमुच्यते। अस्फुरणे तद्बोधात् कथमवसायः? स्फुरणेऽपि प्रतिभास एवासौ, कथमध्यवसायः? न च प्रतिभासाध्यवसायावप्येकार्थौ। प्रतिभासो हि साक्षात् स्फुरणमस्फुरणेऽपि प्रवृत्तिविषयीकरणमेकव्यावृत्त्युल्लेखसामर्थ्यादध्यवसायो भाष्यमतः। अतो यदनुरूपमनुष्ठानं तदध्यवसेयम्, प्रतिभासमानरूपाननुप्रविष्टमेव। तच्च क्वचिदारोपितमात्रम्। क्वचिद्वस्तुरूपम्। प्रकृतं तु प्रमाणव्यापारस्वीकाराद् वस्तुरूपमेवेति कथमुच्यते निवृत्तिमात्रमवस्तु वाध्यवसेयमित्यास्तां तावदनारब्धनिर्बन्धः।

प्रतिभासोऽपि विकल्पे व्यावृत्ताकारस्य, न व्यावृत्तिमात्रस्य, यदनुभवानुसारः। सर्वदा यद् वा तद् वा राक्षसादि प्रतिभासेत। भावनया पुनरध्यवसिताकारेण परिणतिः अबाध्या तत्रारोपितमात्रेऽध्यवसेये निरालम्बनत्वम्। सति तु तदेवालम्बनं यथानन्तरमुक्तम्॥

यत्त्वाह, अर्थस्यालम्बनप्रत्ययत्वं विज्ञानं प्रतीन्द्रियापेक्षत्वेन व्याप्तम्। तस्मात् स्वविरुद्धोपलब्ध्या निवर्तमानमालम्बनप्रत्यय[त्व]मप्यर्थस्य निवर्तयतीति, तत्रालम्बनप्रत्ययत्वेन्द्रियापेक्षत्वयोर्व्याप्यव्यापकभावमप्रसाध्य प्रमाणेन व्यापकविरुद्धोपलब्धिं स्फुटयतीति महद्वैदग्ध्यम्। तथा दर्शनादिति चेत्? दर्शनादर्शनमेव तर्हि प्रमाणीकृत्य स्थीयताम्, किमेवंविधप्रमाणोपन्यासव्यसनेन? तस्मादिन्द्रियमनपेक्ष्यापि यद्यालम्बनभावं भावः स्वीकुर्यात् न बाधकमुत्पश्यामः। अथात्रोक्तमेव न खल्विन्धनविशेषो धूमहेतुरिति विनापि दहनं सहस्रेणापि संस्कारैर्धूममाधत्ते। तदाधाने वा समस्तकार्यहेत्वनुमानोच्छेदप्रसङ्गः। तस्मात् ज्ञानमपीन्द्रियसापेक्षादर्थाद् उत्पत्तिधर्मकम्।

इन्द्रियव्यापारविरहे च समस्ता[61a]परकारणसन्निधावसन्निधीयमानसत्ताकं तत्प्रतिबद्धं सिद्धमिति कथमिन्द्रियानपेक्षस्यार्थस्य स्वविज्ञानं प्रत्यालम्बनभाव इति चेत्? एतदपि परचित्तज्ञानसंभवेन प्रतिव्यूढम्। इष्टाश्च परचित्तवेदिनश्चार्वाकमीमांसकव्यतिरिक्तैः। चार्वाकादेरपि सन्देहान्नापरा गतिः। सन्देहे च विपक्षादेकान्तव्यावृत्तेरयोगः। ननु ज्ञानकार्यस्येन्द्रियापेक्षानियमादेव नान्यत्र सन्देहो दहनापेक्षधूमवत्। यद्येवं रूपज्ञानस्य वीक्षणापेक्षणे यादृशी सामग्री सा न संचरणविशेषस्य चरणापेक्षणे कलयापि हीयते, तत् कथं न धूमदृष्टान्तश्चरणविरहिणामुरगादीनां गमननिषेधाय प्रभुरभूत्? कथं वा करादिव्यापारसङ्गि सावेगमन्त्रोद्गारपरम्परासाध्यमेकेषां विषशमनादिकार्यं समाधिमात्रादन्यस्य? न चैवं धूमोऽपि क्वचिदिन्धने दहनानपेक्षोदयो दृष्टो यतोऽत्रापि तथा शङ्क्येत।

तस्माद् बहिर्मुवो भावा यथा हेतुफलभावेनोपलम्भभाजः ते तथैव नियतवृत्तयः। चित्तसन्तानस्य तु विचित्रकर्माभिसंस्कारसामर्थ्याद् विचित्र एव विवर्तः। अतस्तदाश्रयकार्यमेकत्र यावदपेक्षं तावदपेक्षमन्यत्रापीति न नियन्तुं शक्यम्। तत् कथं परचित्तवेदनादेरभाव एव? यदि च धूमवदनलमनपेक्ष्य नेन्द्रियं बुद्धिः, तदा स्वविषयेऽप्युत्कर्षघोषणावीक्षणादीनां दीनैव स्यात्। तथा हि यावद्देशं दहनेन्धनादि

धूमादिसाधनमुपलब्धं न तावद्देशातिक्रमे समर्थम्। एवं यावद्देशोऽस्माकं विषयेन्द्रियादिवेदनमुत्पादितवत् कथं तदतिक्रमे गृध्रादीनामुत्पादयेत्? उत्पादने वा नेन्धनदहनादिकर्त्तां लभते चित्तसन्तानाश्रया सामग्री। नापि धूमकर्त्तां बुद्धिः।

अतः सहकारिणोऽतिव्यवधानवद्वैकल्येऽपि किं न कुतश्चित् विशेषात् संभाव्यते? जातिकृतोऽसौ विभागः, न चित्तसन्तानाश्रयादिति चेत्– न, जातिरपि हि विचित्रकर्माधिपत्यादेव विचित्रस्वरूपोपसंहारस्वभावा, कर्म च न चित्तादन्यदिति न चित्ताश्रयत्वपरिहारः। अथेन्द्रियस्य प्राप्यकारितया सर्वैव विज्ञानजननसामग्री साधारणदेशेत्युच्यते। तथापि कस्मात् पुनस्तावद् दूरदेशस्थितिमति क्वचिल्लोचनरुद्रांशश्लेषः क्वचिदर्वागेव विश्राम इति किमत्र वक्तव्यं कर्माधिपत्यादन्यत्र? तस्मात् तदाश्रयस्य चित्तसन्तानस्य चित्रैव शक्तिः।

न हि बहिरपि शक्यमेवम्। अन्यथा सदृशप्रदेशस्थायिनोः प्रदीपयोरल्पकस्य कस्यचिद् दूरसारिणी किरणसंहतिरितरस्य पुनरर्वाचीनचारिणी स्यात्। अथ मन्त्रप्रभावादेवमपि स्यात्, सरीसृपदृशा च मान्द्यमादधातीति चेत्? स तर्हि चित्तसन्ततेरेव प्रभावः। मन्त्रेऽपि पुरुषमाहात्म्यकृत एव। यथा वार्तिके निर्णीतम्, अपौरुषेयत्वेऽपि मन्त्राणां न पुरुषनिरपेक्षाणां [61b] शक्तिः। ततश्च पुरुष एव मन्त्राद्युपायेन बाह्यवस्तुशक्तिव्यवस्थां दुस्थयतीति आयातमिति प्रस्तुते किमसंभावनम्? यथा च लोचनापेक्षः पदार्थस्यालम्बनभावो दृष्ट इति तन्नियत इष्टः, तथालोकापेक्षोऽपि दृष्ट इति न संतमसे पश्येयुरुलूकादयः। तथा दृष्टत्वान्न दोष इति चेत्? तथा दृष्टत्वादेव हतोऽसि। तथा हि नेत्रालोकयोः समानेऽप्यपेक्षासाधनन्याये चित्तस्याचिन्त्यशक्तितया अन्यतरोल्लङ्घनदर्शनमन्यदपि शंकया कलङ्कयति। न त्वदर्शने शक्यमेवम्। अथ तादृशि ज्ञानत्वसामान्यवन्त्यपि कार्याणीतरजातिभेदभाञ्जीति नानपेक्ष्य साधनसामग्रीभेदमुदियुरित्युच्यते।

केन पुनः प्रकृष्टज्ञानस्याप्यलौकिकस्य पृथग्जनज्ञानेन सहैकजातितायां प्रतारितोऽसि? असत्त्वादेव तर्हि तस्य न जातिभेद इति चेत्? असत्त्वमिति जातिभेदाभावादेवेन्द्रियापेक्षया नियमसंभवादितीतरेतराश्रयः। तस्मात् साधारणकर्मनिर्जातानामरमदादीनामनुभवभेदं प्रतीन्द्रियापेक्षत्वमालम्बनत्वस्य व्यापकमपि न स्वनिवृत्त्या अनुभवमात्रं प्रति निवर्तकं भवितुमर्हति, विशेषोद्देशेनैव व्याप्तिसिद्धेः। अथानुभवमात्रमेकीकृत्य व्याप्तिरिष्यते? तदा विपर्ययबाधकाभावात् व्याप्तिरेव न

सिध्यति हेतुफलनियमाश्रयात्तु ध्वस्तो धूमादिसाधारण्यानुपपत्तेर्विचित्रकर्माभिसंस्कारादचिन्त्यशक्तिस्वान्तसन्तानसंभविनोऽनुभवमात्रस्य। विशेषाश्रये च न सर्वोपसंहारवती व्याप्तिरिति स एव दोषो विशेषवत्त्वं नाम।

यदप्ययमाह[3], भावनायाश्चाभूतार्थाया अर्थानपेक्षाया एव विशदज्ञानजननसामर्थ्यमुपलब्धं कामातुरादिवर्तिन्या इति भूतार्थापि तन्निरपेक्षैव समर्थेति नार्थस्य आलम्बनप्रत्ययत्वं शक्यावगममिति। तत्रापि केयमर्थनिरपेक्षता ? किमर्थाविषयत्वं साक्षादर्थाप्रतिभासो वा, यद् वा अर्थाहेतुत्वमथार्थव्यभिचार इति पक्षाः। प्रथमपक्षे भूतार्थत्वमविषयत्वं चेति व्याहतम्, तत्प्रभवानुमानस्येव तस्याप्यध्यवसायापेक्षया तद्विषयत्वात्। प्रतिभासापेक्षया तु मा भूत् तद्विषयत्वं तस्यास्तज्जनितज्ञानस्यैव तद्दृष्टेरिति न द्वितीयोऽपि पक्षः। तृतीयोऽसंभवी, स्वप्रभवानुमानद्वारेण तस्यापि भूतार्थकार्यत्वात्। अतएव व्यभिचारोऽपि सिद्ध इति न चतुर्थः। अतस्तज्जविशदज्ञानस्य संवादनियमादर्थस्य कथमालम्बनत्वमशक्यावगमम् ? तस्मात् प्राचीनरीत्यैव चोद्यं चारु, परिहारश्चोक्त एव।

यच्चानेन [4]पुरस्तात्तना एवास्य विषयक्षणा ग्राह्या युज्यन्ते न पूर्वतरा इत्यादिना भूतानागतबोधनिषेधाय प्रयत्तं, तत् प्रागेव प्रत्यादिष्टम्। प्रकृतसर्वज्ञपक्षे तु यावन्तो ज्ञानमुपजनयन्तः स्वज्ञानगोचरतामनुभवन्ति [62a] तावन्तः क्षणिकदुःखानात्माकारेणैवेत्येतावतैव साध्यसिद्धिः। प्रतीतातीतेषु स्मरणं भाविनि संभावनैवेति। यद्यतीते स्मरणमेव, तत् कथं समुदयाकाराणां स्फुटीभाव इति चेत् ? पञ्चस्कन्धा एवोत्तरापेक्षया समुदयः। तत्रायमेव समुदयाकारस्फुटीभावो यदभिमुखीभूतेषु परापेक्षया झगिति तदनुरूपविकल्पानुष्ठानादिप्रसवहेतुः स्फुरणरीतिः काचित्, यया पृथग्जनाद्विभागभागी भवति पूर्ववत्। अतीतेषु च तथैव पटुतरस्मरणोदयः। परानपेक्षस्वरूपमात्रेण तु क्षणिकाद्याकारैर्दुःखसत्यप्रतीतिः। ननु विकल्पानामसहसंभवस्वभावत्वाद् यदा दुःखाकाराणामवसायः, तदा न समुदयाकाराणाम्, पश्चाच्च निर्विषयः अवसाय इति चेत् ? सत्यमेतदेकैकसत्यस्यापि नाकारचतुष्टयविकल्पनमेककालम्। न च काचिदेवं क्षतिः। ग्रहणरीतिविशेष एव हि स्फुटीभूतसकलाकारः साक्षात्करणम्। यतो बीजविकल्पावकीर्णाभिमतविकल्पक्रमाविर्भावः। यथा हि नीलचलविकचादिविशेषणमुत्पलं पश्यतो जनस्य न विकल्पक्रमेण तद्विषयसकलाकारसाक्षात्क्रिया-

३. वाचस्पतिर्न्यायकणिकायाम्, पृः १४६; तुल० रत्न० निब० पृः १० ४. न्या० क० पृः १४४; तुल० रत्न० निब० पृः १०-१

व्याघातः, तथा प्रस्तुतेऽप्युन्नेयः। अपरस्पराश्च क्षणास्तथैवापरापरैरनुभवैः साक्षात्क्रियन्ते। विकल्पाश्च यथाभिमतं प्रवर्तन्ते गृहीतानुसन्धानरूपाः। अनुभवेनैव च सार्वज्ञस्थितिरिति वेदितव्यम्। एवं निरोधधर्ममार्गसत्ययोरपि स्वसंवेदनेन वेदने सकलमूह्यम्॥

यच्च सर्ववस्तुनो मिथः कथञ्चित् साक्षात् पारम्पर्येण च संबन्धद्वारकं कतिपयदर्शने सर्वदर्शनस्य दूषणं तदनभ्युपगमेनैव गतम्। संबन्धद्वारकस्तु विशेषणतया समस्तवस्तुविषयः सङ्कल्पो यदि तदवस्थायां जन्मपरम्परास्मरणसंभवे भवेत्, न दोषमुत्पश्यामः। यथाभ्यासवतो हुताशादिदर्शने झगित्येव एधस्य कार्यं हेतुश्च पावकस्यायमिति विकल्पः, तथा विकल्पगृहीतानां भावनाप्रकर्षे वैशद्यमप्यस्तु। न तु संबन्धमात्रेणैकदर्शनादन्यदर्शनं सङ्गिरामहे। मा भूद् वा वैशद्यमपि सर्वविषयविकल्पमात्रेणैव संवादिना; सार्वज्ञ्यकार्यपर्याप्तेस्तदवस्थस्य। अथवा [५]स्वालम्बनप्रत्ययमात्रगोचरमेवाविकल्पकं समस्तवस्तुविशिष्टालम्बनाध्यवसायहेतुः। तेनावसायानुगतव्यापारमविकल्पमपि समस्तवस्तुविषयं भवति। यदाह,

व्यवस्यन्तीक्षणादेव सर्वाकारान् महाधियः॥

[प्र. वा. २. १०७]

एतत्त्वाशङ्क्य यदाह, अथ कतिपयवस्त्ववलम्बनस्यानुभवस्य कुतस्त्य एष महिमा यतः समस्तवस्त्ववसायः? रागाद्यावरणविगमादिति चेत्? तर्हि यथावद् वस्तूनि [62b]पश्येत्, न तु पुनरस्मादशेषवस्तुव्यवसायनिर्माणकौशलमस्य युज्यते। तत्त्वावरकता हि सुलभा मलानां न पुनर्विकल्पनिर्माणप्रतिबन्धतेति।

अत्र पर्यनुयोगः, किं तावद् वस्तुनि दृश्यमाने विकल्पप्रतिबन्ध एव न दृष्ट उत क्लेशकृतो वेति? तच्च द्वयं नास्ति। न ह्यनुभववत् सर्वाकारकल्पनं क्वचित्। न च तद्विकल्पवैकल्यं क्लेशानन्तरेण। यदा हि प्रिये वस्तुनि दृष्टे दोषवत्यपि दोषाविकल्पनं, तदा व्यक्तं रागो हेतुः। यदा पुनरप्रिये गुणवत्यपि गुणाविकल्पनं, तदा द्वेषः। अनभ्यासे तु सर्वसद्रूपाविकल्पनं मोहकृतमेव। न च कम्बलादिवदावरणम्, किं तु सन्तानवैगुण्याधानेन। ततो यथा यथा मोहादिपराजयः तथा तथा यत्नेन वैगुण्यव्यावृत्त्या तावत्सु आकारेषु यदा धियो व्यवसायभाजः पर्यन्ते सर्वाकारेषु सर्ववस्तुषु यदि स्युर्न कश्चिद्विरोधः। बुद्धिपाटवपरम्परया दृष्टेषु स्मृतेष्वपि

५. न्या° क° पृ: १२०; तुल° रत्न° निब° पृ: ११

स्मरणसंभवादीक्षमाणेषु च गाढतरस्मरणसंस्काराधानादनाद्यनन्तत्वाज्जन्मनः, एकप्रकारनिश्चयस्य च तज्जातीयाशेषनिश्चयस्वभावत्वान्न सर्वविषयसङ्कल्पानुदयकृतो दोषः।

यच्चेदमूचे, [6]अप्रमाणं च तन्नितान्तविशदाभत्वे सति भावनाजनितत्वात्। यन्नितान्तविशदाभत्वे सति भावनाजं विज्ञानं तदप्रमाणम्, यथा अनुमितभावितविषयविशदं ज्ञानमिति। तत्र वह्नेरनुमाय भावनैव नास्तीति दर्शितत्वात् दृष्टान्ताभावः।

यच्चानेन[7] काव्यायितम्, अस्ति चेह शिशिरभरसंभृतजड़िममन्थरतरकायकाण्डस्यानुमितवह्निभावनाभियोग इति। तत्र यदि जाड्यातुरतया स्वयं चित्तावेशाद् भावनोपनतिः, तदा क्वानुमानवार्ता ? अनुमानं हि प्रवृत्तिपाटवभृता प्रार्थ्यते। तदवस्थस्य तथा अशक्तौ च किं भावनया ? स्फुटीभाव एव वा पुरस्तादस्तु क्वानुमानावकाशः ? न हि कामुको यावन्न कामिनीमनुमिमीते, तावन्न भावनायामभियुज्यत इत्यस्ति संभवः। तस्मात् जाड्यातुरस्य भावनाजनितवैशद्यमग्निज्ञानमात्रमस्तु दृष्टान्तः। तदपि कामिनीदृष्टान्तेन स्वकाव्यालंकृतेन गतम्। न चैकस्य भावनाभुवो ज्ञानस्य विसंवादादप्रामाण्येऽप्रामाण्यमन्यस्य संवादिनोऽपीति न्यायः, इन्द्रियोदयस्यापि सर्वस्य केशादिविप्लववदप्रामाण्यप्रसङ्गात्।

यच्च भावनाप्रकर्षलक्षणस्य कारणस्य साम्येन फलयोरपि दृष्टान्तदार्ष्टान्तिकयोः साम्यनियमाय प्रपञ्चितम्, तत्रापि किं न चक्षुरेव द्विचन्द्रैकचन्द्रदर्शनयोः समानं कारणमुत्पश्यसि ? तिमिरोपघातानुपघातकृतो विशेषश्चक्षुषोरिति चेत् ? भावनयोरपि भूताभूतविषयत्वेन किं न भेदः ? चक्षुषि तिमिरकृतो विकार एव कश्चिद् भेदकः, भावनाया तद्वैशद्ये वा कश्चित् स्वरूपभेदोऽभेदेऽपि विषयस्येति चेत्– न, संवादेतरकारणत्वेन शक्ति[63a]भेदस्यैव बलीयसः संभवे किमपरेण ? सविषेतरयोरिव अन्नयोरूपरसदृष्टीनामभेदेन हेतुहेत्वाभासभाविन्योरिव वा साध्यबुद्ध्योस्तत्कृतप्रवृत्त्योश्च किं च लोचनेऽपि न विकार इत्येव दोषः, अञ्जनजनितेऽपि विकारे दोषव्यवस्थाप्रसङ्गात्। किं तु भ्रान्तिहेतुतयेति शक्तिकृत एव तत्रापि भेदः। तदेवं भावनाप्रकर्षेण स्फुटाभत्वमेव साध्यते न प्रामाण्यम्, यतो दृष्टान्तासिद्ध्यादिदोषावकाशः। प्रामाण्यं तु भूतार्थत्वेन संवादात्। प्रत्यक्षत्वं च कल्पनापोढाभ्रान्तत्वेनेति तावतैवास्याशेषोऽप्यविद्यादुष्टनयः प्रतिहतो वेदितव्यः॥

६. न्या० क०, पृ: १४२; तुल० रत्न० निब० पृ: १२. ७. न्या० क० पृ: १४२; तुल० रत्न० निब० पृ: १२

न्यायप्रकीर्णककारस्याप्यभूतविषयतोपलम्भस्तावत् क्षणभङ्गादिसाधनादेव प्रतिव्यूढः। यच्चानुमानस्य विकल्पतां प्रस्तुत्याह, 'तत्र यावद्विकल्पैरुपदर्शितं तत् सर्वमसत्, शब्दसंसृष्टत्वात्। तस्मिंश्च भाव्यमाने असत्ये तावकस्य विकल्पस्य भावनयोपहिते विशदभावे शब्दसंसृष्टग्राह्यत्वनिमित्तं विकल्पकत्वं व्यावर्तते। तद्व्यावृत्तौ च ग्राह्यसर्वशब्दसंसृष्टं निवर्तते। अतो निर्विकल्पकमपि योगिज्ञानं निर्विषयं प्रसक्तमिति।

तत्र किमिदं निर्विषयत्वं नाम? ग्राह्याकारभ्रंशादनाकारता वा, यद् वान्याकारता, अथ तदाकारत्वेऽपि तद्वस्तुरूपासंसर्गितेति? प्रथमपक्षस्तावदसंभवी, ज्ञानस्य निराकारत्वानुपपत्तेः, कामिन्यादौ भावनया तदाकारस्यैव वैशद्यदर्शनात्। अतएव न द्वितीयोऽपि पक्षः। यदयमेवाह शोकातुरस्यापि निरुद्धेन्द्रियव्यापारस्य तनयभावनया पित्रादिप्रतिभासप्रसङ्गादिति। केवलं न चास्मिन् संसृष्टे भाव्यमाने स्फुटमन्यद्रूपं भवतीति प्रस्तुत्याकुलः प्रलाप एषः। अनेन हि भावनया सर्वथा स्फुटीभाव एव निषिद्धः, विकल्पमन्तरेण भावनानुपपत्तेः। विकल्पस्य च शब्दसंसर्गमन्तरेणेति क्व स्फुटीभावः? तनयभावनायां च पित्रादिप्रतिभासप्रसङ्गवादिना तनयप्रतिभासोऽनुज्ञात एव। अन्यथा तनयाभावनयापि तनयप्रतिभासप्रसङ्गादित्यभिदधीत। न चानिष्टिमात्रं दृष्टापलापाय प्रभवति।

तथा च कणिकाकार एव कामिन्याकारवैशद्यं कामुकस्य वचनचेष्टाविशेषकाव्यरचनया[९] द्रढयति स्म। स्वयं चायं भावनयोपहिते विशदभावे इत्यादिवचनं केनाकारेण चरितार्थीकुर्यात्? तस्मादन्यभावनया नान्यस्फुटीभाव इत्यध्यवसेयापेक्षया अन्यत्वव्यवस्थापनं साधु। न विकल्परूपस्य गोचराभिमतस्य च परस्परम्, तयोरेकताध्यासात्। स्पष्टीभावोऽपि हि बहिरभिमतस्य पर्यन्ते विकल्पोपादेयक्षणस्यैव स्फुटस्योदयः। तावतैव स विषयस्तेन साक्षात्कृत इति व्यवहारः। केवलं सति वस्तुनि तदाकारज्ञानं संवादि, विसंवादि त्वसतीति चिन्तितप्रायम्।

[63b] अत एव तृतीयोऽपि विकल्पः प्रत्युक्तः। संवादसाक्षात्क्रियाभ्यामन्यस्य ज्ञानेन वस्तुरूपसंस्पर्शस्य निर्वक्तुमशक्तेः। अपि च तनयभावनायामित्यत्र कस्तनयभावनार्थः? तनयस्य पुनः पुनश्चेतसि निवेशनमिति चेत्? चेतसि निवेशनार्थोऽपि तदाकारविकल्पनमेव। एवं तर्हि यदयं प्रलपति क्षणिकत्वे भाव्ये समारोपिते वास्तवं

८. तुल° रत्न° निब° पृ: १३ ९. न्या° कं° पृ: १४८; तुल° रत्न° निब° पृ: ६-१०

क्षणिकत्वमेव योगिज्ञानप्रतिभासीति चेत्- न, सत्त्वासत्त्वयोरेकत्वाभावात्मके हि भेदे [सत्य]सत्यभावनेऽपि यदि सत्यप्रतिभासः, स तर्हि सत्यतनयाभ्यासेऽपि शब्दसाम्यादभेदिनस्तनयसंज्ञकस्य कस्यचिदपरस्य स्वरूपप्रतिभासप्रसङ्गः । तस्मादभूतविषयादभ्यासान्निर्विकल्पकमपि संवादान्न प्रमाणमिति, तदपि ध्वस्तम्, समारोपितभावनाया एवाभावात् ।

यथा हि, तनयस्तनय इति विकल्पाभ्यासस्तथा यदि समारोपितं क्षणिकत्वं समारोपितं क्षणिकत्वमिति विकल्पः, तदा समारोपितक्षणिकभावना भवेत्, न चैवम् । किं तु क्षणिकाः संस्कारा इति । ततः सत्यतनयवद् वास्तवमेव क्षणिकत्वं भाव्यते । सत्यतनयभावनाया वा अन्य आकारो वक्तव्यः । क्षणिकविकल्पेन क्षणिकस्वलक्षणास्पर्शात् कथं तद्विकल्पो भावना वेति तनयविकल्पेऽपि समानम् । अध्यवसेयापेक्षया तद्विकल्पत्वव्यवस्था च समानैव । न हि तनयविकल्पेऽप्यारोपिताद् अन्यस्य प्रतिभासः । तदयं तनयभावनायामारोपितशब्दसंसृष्टप्रतिभासेऽपि सत्यतनयस्फुटीभावमिच्छन् प्रस्तुतं प्रतिक्षिपतीति किमन्यन्मोहमहाग्रहग्रासीभावात् ।

एतच्च विकल्पस्फुरदारोपितापेक्षया बाह्यत्वमात्रेण सत्यभावनासाम्यमुक्तम् । बाह्यापेक्षया तु शोकातुरस्य तनयभावनमभूतभावनैव । अत एव तदभूतं पुरः स्फुरत्तनयाकारं तदा तादृक्तनयाभावादप्रमाणम् । क्षणिकभावना तु सदा तत्प्रकृतित्वाद् धर्माणां भूतविषयैवेति, तज्जनितवैशद्यमविसंवादात् प्रमाणम् । अथ विकल्पस्यावस्तुविषयता तनये तनयभावनेऽपि भिन्नमेव वैशद्यमापद्यते नास्मन्मत इति हृदिस्थम् । तदपि हृद[य] एव जीर्यतु । योगिनिर्णयो हि प्रारब्ध एषः, तस्य चोभयथापि न क्षतिः । अपोहस्यापि प्रमाणेन परिशुद्धावध्यवसेयस्यैव वैशद्यं दृष्टमिति किमत्र क्रियताम् ? अनुमाने वस्तुनिर्भासाभावात् कथं तदपेक्षया प्रमाणपरिशुद्धिरिति चेत् ? प्रस्तावान्तरमेतत् ।

यच्चेदम्[1], अपि च भाव्यस्य वस्तुनः पुनः पुनश्चेतसि निवेशनमभ्यासः । स च ब्रह्मचर्येण तपसा सादरदीर्घकालनिरन्तरमासेवितो दृढभूमिरस्फुटाकारस्य विकल्पस्य स्फुटाभत्वजनन इष्टः । स च क्षणिकनैरात्म्यवादिना द्रढयितुमशक्यः । तथा हि, भाव्यग्राही [64a] यादृशो विकल्प उत्पन्नस्तादृश एव निरन्वयं निरुध्यते । तस्मिंश्च निरुद्धे पुनरुत्पद्यमानः प्रत्ययस्तादृश एवापूर्व उत्पद्यते । तदनेन पर्यायेण कल्पसहस्रे

१. पुल॰ रत्न॰ निब॰ पृ॰ १३-४,

अप्यपूर्वोत्पत्तेरविशेषान्न तज्जन्यः संस्कारोऽभ्यास उत्पद्यते। एतेन विशिष्टविज्ञानोत्पादोऽभ्यासो व्याख्यातः। निरन्वयनिरुद्धं हि पूर्वविज्ञानं कथमुत्तरोत्तरावस्थान्तरं विशिष्टं जनयेत्? सर्वथा क्रमभाविभिः प्रत्ययैरवस्थितमेव रूपं शक्यं संस्कर्तुमिति।

तदेतदसंगतम्। [10]न हि यादृश [एव] भाव्यग्राही प्रत्ययः प्रथमो निरन्वयनिरुद्धः, तादृश एवापर उत्पद्यत इति नियमनिश्चयकारणं किञ्चिदस्ति चण्डदेवतास्पर्शादन्यत्। क्षणिकत्वादिति चेत्? ननु क्षणिकत्वं स्थायितया विरुध्यते, न विसदृशोत्पादेन। तद्धि प्राचीनं निरन्वयनिरोधि यथा सदृशं क्षणान्त[र]मारभते, तथा यदि सामग्रीभेदलेशतो विशेषलेशनिवेशिक्षणान्तरमुत्पादयति तदा का क्षतिः? न हि भवत इव भावस्यापि क्षणिकतायां प्रद्वेषः। अस्ति चेहापि लेशेन सामग्रीभेदः। तथा हि क्षणिकाः सर्वसंस्कारा इत्यनुवादमात्रापेक्षया संसारदुःखक्षयार्थितया भावनायामभिप्रयुज्यमानस्य विशिष्ट एव संकल्पः, सोऽपि विशिष्टमणुमात्रयातिरिक्तं जनयति यावत्तरतमादिक्रमेणान्तिमात् फललाभः, बीजादिवत्। यदि तु व्यासङ्गादयो मध्यमध्यासीरन् मन्दतादितारतम्यमेव स्यात्। यद् भाष्यम्,

संस्कारस्य बलीयस्त्वे व्याक्षेपस्य निवर्तनम्।
व्याक्षेपस्य बलीयस्त्वे संस्कारः स्यात् पराङ्मुखः॥

/ [प्र. वा. भा. २. ५००]

इति। निरन्वयविनाशे तर्हि प्राचीनविशेषासंक्रमणाद् द्वितीयस्य कुतो विशेषलाभः? एवं तर्हि सामग्र्यन्तरेऽपि तादृशा विशेषेण भवितव्यम्, अस्य तत्रासंक्रमणात्। तस्मादसन्नपि स विशेषः कारणबलादुदपादि यथा, तथायमपि। समानस्तर्हि तेनायमिति चेत्— न, हेतुविशेषात् फलविशेषस्य दुर्निवारत्वात्।

तथा हि प्रथमो विशेषस्तादृग्विशेषविनाकृतादुत्पन्नः। अयं तु तादृशविशेषसचिवादिति कथं समानः स्यात्? अन्वयस्तु विचारासह एव। यो हि हेतुतः संक्रान्तो भागस्तत्र नापरस्य हेतोर्व्यापारः, य एव व्यापारः स पूर्वमसन्नेव। एवं यदङ्गस्य निरोधो न तस्य स्थितिः, स्थितिमतश्च न निरोधः। तत्कथं सान्वये निरोधजन्मनी? तेन सहवृत्तेरिति चेत्? आकाशेनापि सान्वयत्वकल्पनाप्रसङ्गात्। उभयकालानुवृत्तिमात्रजन्यस्य सहार्थस्याभावात्। तच कलसकपालयोर्निधनसंभवकालेऽन्तरालस्य न

१०. द्रष्ट° रत्न° निय° पृ: ११.

वार्यते। शेषं तु प्रक्रियामात्रघोषणं प्रमाणपरिपन्थीति किं तेन ? हरिपदवदवस्थिते त्वात्मन्युत्कर्षापकर्षायोग इति बहुशश्चर्वितमास्तां तावत्।

यथाह, [1]किं च चित्तमेकाग्रमवस्थापयितुं विक्षेपत्यागार्थमभ्यासोऽनुष्ठीयते, न च [64b] क्षणिकवादिनां विक्षिप्तं चित्तमस्ति, प्रत्यर्थं नियततया सर्वस्यैकाग्रत्वादिति। तदप्यसंबद्धम्। अनुभवसिद्धं हि चेतसः कस्यचित् तत्त्वसंमुखीकरणम्, कस्यचिद् विपर्ययः, कार्यादिमात्रपरामर्शोऽपरस्येति। [2]तत्र नैरात्म्यादितत्त्वपराङ्मुखं सर्वमेव चित्तं विक्षिप्तमुच्यते। उक्तक्रमेण तु तत्त्वैकनिष्ठं समाहितमित्येतावता किं न पर्याप्तम्? यदवश्यमेकस्यैव विचित्रगोचरचारित्वमन्वेषितव्यम्। अथ च तत्त्वसाक्षात्क्रियाकालात् प्रागहमित्येकाकारावग्रहसंभवाद् व्यावहारिकं तदप्यस्ति, यतो ममैव क्षेपक्षयो भावीति मार्गाभ्यासप्रवृत्तिरव्याहता भवति। प्राप्यसंकल्पो हि सर्वत्र प्रवर्तकः। स चेदस्ति वस्तुतथाभावव्यतिरेकेऽपि कः प्रवृत्तिं निवर्तयति? येन हि तर्हि तथानुमानेन निश्चितं क्षणिकतादि तस्य प्रवृत्तिरिति चेत्? निश्चयस्य सात्मीभावाभावादनाद्यविद्यावासनावशीकृतेन चेतसा निश्चयानुचितस्यैव व्यवहारस्य प्रवर्तनात्। अतएव दर्शनमार्गेऽपि लब्धे भावनामार्गापेक्षणमुक्तं वार्तिकेऽन्वेषणीयम्। तस्मात् तत्फललाभादर्वागभ्यासोऽविद्ययैव संपाद्यते। अभ्यासाच्च सिद्धः सर्वज्ञ इति॥

[3]न्यायभूषणस्य च योगाचारपक्षापेक्षया दूषणमप्रस्तुतम्, बहिरर्थमभ्युपगम्यैव साधनप्रक्रमात्। तत्रापि सर्वसर्वज्ञपक्षोपक्षिप्तो बाधस्तदनभ्युपगमादेव निरस्तः। न चासौ बाध एव, संशयमात्रसाधनत्वात्। तथा हि, यत्तावदतीतानागतविषयत्वनिषेधार्थमुक्तम्, न ह्यसतः कश्चिदाकारोऽस्तीति, सत्यमिदानीमेवमेतत्। ततस्तज्जन्यज्ञानेनाग्रहणमपि सत्यम्। सत्यस्वप्नादिवदन्यथापि तु संभावना न शक्यनिषेधेति दर्शितम्। न च यथेदानीं न कश्चिदाकारस्तथा कालान्तरेऽपि भूतभाविनोः। तथा सति भूतभावित्वमपि न स्यात्, करिकेसरवत्। अभ्रमाविसंवादौ च प्रागेव चिन्तितौ॥

यत्पुनराह, [4]न चाविसंवादित्वमपि त्वन्मते युक्तम्, यतः प्राप्यार्थदर्शकत्वं वा प्रवृत्तिविषयोपदर्शकत्वं वावभातार्थक्रियानिष्पत्तिर्वा भवतामविसंवादित्वमभिप्रेतम्। न चैतदतीताद्यर्थज्ञानस्य संभवति, वर्तमानार्थज्ञानस्यापि क्षणिकत्वपक्षे नोपपद्यत

१. तुल० रत्न० निब० पृ: १४. २. तुल० सैव, पृ: १६, ३. तुल० सैव, पृ: १६, ४. तुल० सैव, पृ: १४

एवेति। तदपीर्ष्यापारवश्यमात्रम्, उपपत्तिविधुरत्वात्। यदि तावद् भाविभूतयोः कालव्यवधानेन तथोच्यते, तदा देशव्यवधानेऽपि एष प्रसङ्ग इति प्रवृत्तियोग्यदेशेऽपि प्रदर्शकमप्रमाणं स्यात्। तदस्ति तावदिति चेत्? अन्यदपि, भावि भूतं वा तत्काले नास्तीति चेत्? तद्देशे वर्तमानमपि नास्तीति समानम्। अर्थक्रियापि यथा तद्देशसन्निधौ तथा तत्कालसन्निधाविति न कश्चिद् विशेषः। वर्तमानस्य क्षणिकत्वेऽपि एकत्वारोपसामर्थ्यान्न व्यावहारिकं प्रति प्रमाणतायाः क्षतिः, तदभिप्रायात् संवादस्य व्यवस्थितत्वादिति ॥

यच्च कौमारिलैः [65a] सर्वसर्वविदि कारणानुपलब्धिमुपक्रम्य तस्य कारणम् इन्द्रियज्ञानं वा मानसं वा भावनाबलजं वा, भावनाबलजमपि चाक्षुषं मानसं वेति विकल्प्य दूषणमारब्धम्, तत् संभावनादौर्बल्याविष्करणमात्रं नाभावनिश्चयफलम्। यथेन्द्रियापेक्षालम्बनत्वचिन्तायां चर्चितम्। न च कारणानुपलब्धेरनिश्चयः फलम्, तत एव धर्माधर्मविषयेऽपि भावनाबलजस्य बलमपलपितुमशक्यम्। ततः काशिकाकारस्यापि "योगिनां धर्माधर्मयोरपरोक्षप्रतिभासं ज्ञानं नास्ति, इन्द्रियसन्निकर्षाभावादस्मदादिवदित्यनुमानमनैकान्तिकम्, विपक्षव्यावृत्तेरेकान्तेन प्रतिपत्तुमशक्यत्वात्। किं च धर्माधर्मज्ञानमिति कर्मफलसंबन्धमात्रपरिज्ञानमेतत्। तच्च जातिस्मरत्वसंभवे दुर्निवारम्। ततः परिज्ञानसंभवात् भावनापरिनिष्पत्तौ इदं सुवर्णाद्येवं प्रयुज्यमानमेतत् साधनमिति झगिति विकल्पोत्पादनपटीयः प्रत्यक्षमुदयमासादयेदिति किमनुपपन्नम्? केवलं जातिस्मृतौ प्रतिपत्तव्यम्। तत्र चादर्शनमात्रमप्रमाणमिति न सर्वथा निषेधाभिधानं साधु। यथा हि सन्निपातादिभिरभ्यस्तविस्मरणसंभवेऽपि स्मरणमपि केषाञ्चिद् दृष्टम्, तथा गर्भावासपीडयापि कस्यचित् प्रज्ञातैक्ष्ण्यात् पुण्योदयात् पीडामान्द्याच्च समनन्तरजातिस्मरणमपि भवत् सर्वथा निषेद्धुमशक्यम् अचार्वाकेण।

संभवे चास्यानेकजन्मान्तरगोचरीकरणस्यापि संभवात् क्रमेण सर्वविषयसंकल्पसंभवाविरोधाद् विषयानवगमकृतो भावनानुदयदोषः परिहृतः, आगमाच्च लोकसन्निवेशं यथावत् परिगृह्य भावनासंभवात्। यद्यपि नागमः प्रमाणम्, तथापि गम्भीरप्रमाणान्तरसंवादसंदर्शिनः श्रद्धावतः किं न संभवेत्? तत्प्रमेयस्यावैतथ्ये च सिद्धं साध्यम्। समुदायविकल्पाभ्यामेवावयवस्यापि स्फुटीभावो दृष्ट एव। क्रमेण सूदगाद्यभिव्यक्तिश्चेति।

१. श्लो° वा° कारिका, १ मसंपुटे पृ॰ ३१८

एतेन तदपि निरस्तं यदभ्यस्तैकशास्त्रस्यान्यत्राशक्तिरुभया वा बहु बहुधाप्रतिरूपते परमपुरुषार्था पदादिभिः[१] । न ह्यत्र विमतिः । इदं पुनरस्ति, प्रथमशास्त्राभ्यासे प्रयासो यावान् न तावान् विजातीयाभिधेयेऽप्यन्यत्र । एवं पाटवप्रकर्षपरम्परायाम् अश्रुतेऽपि कस्यचित् तथा प्रकर्षो यथा नान्यस्य श्रुतेऽपि । ततो जन्मान्तरस्मृतिसंभवे भूयोऽभ्यासादनभ्यस्तेष्वपि वस्तुरूपेषूहापोहसंभवान्न निःक्लेशावस्थः परार्थसमर्थतया तावतैव स्थास्यति । यद् वा सर्वसंकल्पसंभवाद् भावनाभियुक्ता व्यक्तीकरिष्यन्ति सर्वं स्वेच्छातो योगिनः । अत एव सर्वावगतिपक्षे भावनानर्थक्योद्भावनमप्यनर्थकम्, निष्पन्नावश्यकार्य[65b]चतुरार्यसत्यभावनस्य सर्वविषयानुमानसंभवे स्वेच्छायाः प्रतिपादनात् ।

अथ सर्ववस्तुसाक्षात्कारेऽन्यदेव सुखं परार्थसाधनं वेति पश्येन्न भावनया परिखेदः कश्चित्तदवस्थस्य सुकरश्च सर्वस्फुटीभावः संभवतीति महोदधिनापि नाधिकं किञ्चिदुक्तम् । उक्तं च तावतैव प्रत्युक्तम् । तस्माद् यथा यथा चिन्त्यते संशयमात्रफलः सर्वविदि दूषणोपन्यासो नैकान्तेन बाधे विकल्पः । प्रकृतसर्वज्ञस्य तु साधनमेकान्तेनैव । तत्रापि न देशकालपुरुष नियम इति चेत्– न, तदपेक्षायां साधनस्य अप्रयुक्तत्वात् । सर्वथापवादिनं प्रति हि साधनमेतत् । तच्च देशाद्यनियमेऽपि कृतार्थम् । तथा चैवंविधमुद्भेदितमस्माभिः सर्वज्ञसिद्धाविति ॥

॥ योगिनिर्णयो नाम प्रकरणं समाप्तम् ॥



१. वाक्येऽत्र पाठाशुद्धिः ।

# ॥ अद्वैतविन्दुप्रकरणम् ॥

इह वहिरर्थाभिनिवेशिनो मनोरथो यद् यथा प्रतीयते तत् तथा सदिति व्यवस्थाप्यते, यथा कुवलयं नीलरूपतया। विज्ञानाद् व्यतिरिक्तरूपतया च प्रतीयन्ते घटादय इति स्वभावहेतुः। नात्रासिद्धिः, ग्राहकाङ्गाद् विच्छिन्नेन तर्जनीनिर्देशयोग्येन पुरोऽवस्थायिना रूपेण घटाद्याकारस्य प्रतिभासाध्यवसायाभ्यां क्रोडीकरणात्। तथा ह्ययं घटो नाहं घट इति प्रतीतिः प्रत्यात्मवेद्या सर्वपुरुषाणामव्युत्पन्नसंकेतानामपि संज्ञाविशेषोल्लेखविमुखस्तदनुरूप एवान्तर्जन्यः। वालोऽपि सुखसाधनं स्तनमवलोक्य तदभिमुखे करमुखे प्रहिण्वन् वहिरवसायसचिवमात्मानमातनोति। ततश्च व्यतिरिक्तेन रूपेण घटाद्याकारस्य प्रतीतिर्नासिद्धिपथप्रस्थायिनी। नापि विरोधिनी साध्येन, सपक्षे संभवस्य दर्शितत्वात्। विपर्ययव्याप्तस्य च विरुद्धस्य तदसंभवात्।

अतएव च नासाधारणत्वम्, नापि सन्दिग्धान्वयत्वम्, विपक्षेऽदर्शनाच्च न साधारणानेकान्तः। न च वक्तव्यं कामलिनः पीतशंखप्रतीतावपि न तथैव व्यवस्था केशोण्डूकप्रतीतौ वा तैमिरिकस्य, अतः साधारणत्वमेवेति, वाधकग्रस्तत्वेन तत्प्रतीतेः भ्रान्तत्वेन प्रत्यक्षव्यापारविरहात्। प्रस्तुतस्तु वाधकाभावाद्भ्रान्त्यसिद्धेरध्यक्षव्यापार एव। न च कदाचिदत्रापि स्याद् वाधकमित्यनाश्वासः, सर्वत्र प्रत्यक्षव्यापारोच्छेदप्रसङ्गात्। तस्मात्,

देशकालनरान्यत्वे वाधके सति नाक्षजम्।
घटादिभेदबोधस्तु प्रत्यक्षस्तदभावतः ॥

[ ]

एवं तर्हि प्रत्यक्षव्यापारे किमनुमानेनेत्यपि न चोद्यम्, व्यवहारसाधनस्य विवक्षितत्वात्। प्रत्यक्षगोचरे हि विवादसंभवो नानुमानमप्रयोज्य विश्राम्यति। तत्र यथा प्रत्यक्षेऽपि गवि कुतश्चिदारोपात् मूढस्तद्व्यवहारमप्रवर्तयन् सास्नादिसमुदायात्मकत्वेन प्रवर्त्यते, अभावव्यवहारं वानुपलब्ध्या, तथा प्रत्यक्षेऽपि ग्राह्यग्राहकयोर्भेद आगमान्तरानुसारी तथाप्रतीत्या व्यवहार्यत इति न दोषः। स चायं व्यवहारः तन्मात्रनिवन्धनः [66a] सकृत्प्रवर्तनादेव सिद्धः। न हि कुवलयादावपि नीलादि-

व्यवहारे तथा प्रतिभासाध्यवसायाभ्यामन्यदधिकं वा किञ्चित् निमित्तमस्ति, तन्मात्रतोऽप्रवृत्तिप्रसङ्गात्। अर्थक्रियासंवादोऽपि हि प्रथमायां प्रवृत्तौ गवेष्यते। अभ्यासवतस्तु तन्मात्रनिबन्धन एवासौ व्यवहारः। प्रस्तुते तु भेदव्यवहारे सर्वत्र एवानादिकालिकाभ्यासपाटवभृतो लक्ष्यन्ते। उक्तं हि,

बालोऽपि हि

[ ]

इत्यादि।

तस्माद् व्यवहारप्रगल्भस्य तथा प्रतीतिमात्रप्रतिबद्धस्तथाव्यवहारः। तस्मिन् साध्ये तथा प्रतीयमानत्वं तदन्यानपेक्षत्वेन व्याप्यते। यदि च कचित् तथा प्रतीतावपि तथा व्यवहारविरहः स्यात्, तदा तदन्यापेक्षं स्यादिति साध्यस्य तद्व्यवहारयोग्यत्वस्य अभावे व्यापकविरुद्धोपलब्ध्या अवधूयमानं तथा प्रतीयमानत्वमपेतबाधके विषये तथा व्यवस्थायोग्यतयैव व्याप्यत इति व्याप्तिसिद्धेः सन्दिग्धविपक्षव्यावृत्तिकत्वमपि नोपन्यस्तस्य हेतोरन्तिकमुपसर्पतीति सिद्धमध्यक्षविषयस्यापि ज्ञानज्ञेयभेदस्योक्तानुमानव्यवहार्यत्वमहार्यमिति।

अत्रोच्यते। किमिदं विज्ञानं नाम यतो भेदेन प्रतीतिः तथा व्यवहारं साधयेत्? यदि हि ज्ञायतेऽनेनेति ज्ञानं जानातीति वा उभयथापि ज्ञेयापेक्षं लक्षणमेतत्। न च बाह्यापलापिनो ज्ञेयं नाम किञ्चिदस्ति सिद्धं, यतस्तदधिगतिसाधनं ज्ञानं स्यात्। तथा हि, इदं ज्ञानमिदं ज्ञेयमिति व्यवहारो व्यापारविशेषकृतो वा स्यात् द्वैतवादिनो जातिनियतो वा? प्रथमपक्षे ज्ञानस्य वा ज्ञेये ज्ञेयस्य वा ज्ञाने व्यापारः, परस्परं वोभयोः? अत्रापि प्रथमपक्षे निर्वर्तको विकारको वेति विकल्पाः।

तत्र न तावत् ज्ञेये ज्ञानव्यापारो निर्वर्तकः शक्योऽभिधातुम्, अदृश्यविषयव्यालोपप्रसङ्गात्। न च तथैवाभ्युपगमो युक्तः, तदैव केनचित् दृष्टेः। तज्ज्ञानेन निर्वर्तनाभ्युपगमे च परोक्षस्यापि स्थितेरनपह्नवः। स च तेन पश्चाद् दृश्यमानः तज्ज्ञानस्यैव निर्वर्तको जात इति न विषयः स्यात्। स न तस्य दृश्यः तज्ज्ञानजन्यस्त्वन्य एवेति चेत्? एकस्थानानुपपत्तिः। अप्रतिघत्वे प्रकाशरूपस्य प्रत्यात्मवेद्यस्य परागोचरस्य विज्ञानरूपतैव मुखान्तरेण समर्थिता स्यात्। नीलरूपत्वान्नैवमिति चेत्?

केन पुनर्विज्ञानस्य नीलाकारोत्पत्तिनिषेधः सिद्धः, तत्साधनाय साधनानवधानप्रसङ्गात्? तस्मान्न परोक्षमसदेवेति द्वयवादिनो युक्तम्।

न चायमभ्युपगमोऽप्यस्येति नात्र निर्बन्धः। प्रमाणाभावे प्रमेयाभावमिच्छतोऽपि हि न परोक्षस्य सर्वथाभाव एवाभिमतः, अपि तु सन्नवश्यं कस्यचित्प्रमाणस्य विषयः स्यात् स्तोकान्तरेणेति। [66b] अन्यथा [1]सत्संप्रयोगे सतीन्द्रियाणां पुरुषस्य बुद्धिजन्मेत्यवाच्यं स्यात्, ज्ञानात् प्राक् सतो विरहात्। स पुनरभ्युपगमो न न्याय्य इति किमनेन, तन्मात्रस्य विवक्षितत्वादित्यलं विस्तरेण।

विकार्यपक्षे तु यस्य ज्ञानस्य यो विकार्योऽर्थः स ग्राह्य इति व्यवस्थायां शोकादिनोपहताया बुद्धेर्विकार्यमिन्द्रियमपि ग्राह्यं स्यात्, मलिनमुखच्छायादयो वा? दुःखजनितोऽसौ विकार इति चेत्– न, उपहताकारसंवेदनादन्यस्य तस्यानुपलब्धेः। निर्लोठितं चैतच्छास्त्र इत्यलं प्रयासेन। अथ नैतादृशोऽतिशयः प्रमेयस्य ज्ञानात्, किं तर्हि प्रकाशरूपस्योत्पत्तिरिति चेत्? अत्रापि पक्षे एकगोचरः सर्वगोचरः स्यात्। तदीयज्ञाननिवृत्तौ तद्रूपनिवृत्तेरन्यस्याप्यदर्शनप्रसङ्गः।

अन्यस्यापि तदुपाययोगान्नैवमिति चेत्? तस्यापि निवृत्तज्ञानस्य तत्प्रकाशप्रसङ्गः। तज्ज्ञाननिवृत्तौ तद्रूपानिवृत्तावप्येष एव दोषः। न हि कुलालप्रयत्नपरिहृताया मृदस्तमेव प्रति घटीभावः। दहनाद्वा दहनोपधायकमेव प्रति घटस्य गौरभावः। एवं तर्हि उपकारित्वमपि स्वरूपमस्य सर्वसाधारणं स्यात्, न चैवम्। ततो यथा घटत्वेन साधारणोऽप्येष नार्थकारिणा रूपेण, तथा प्रकाशरूपेणापि न स्यादिति कोऽयं प्रसङ्गः? अथोपकार्यविशेषोपकारितास्य साधारणी? पुरुषविशेषापेक्षप्रकाशताप्यस्य सर्वसाधारणीति समानम्।

न समानम्। उपकारित्वं हि नाम साक्षादुपकारः, प्रवृत्तियोग्यतामात्रं वा अभिमतं स्यात्? तत्र योग्यतामात्रं सर्वसाधारणमिति न तत्र विवादः। प्रथमपक्षे तु उपकारलक्षणकार्यकर्मणि सहकारिभावोऽस्य यथैकत्र तथान्यत्रापि किं न स्यादिति चोद्यार्थः। न चायं न्यायः, अव्यवधानाद्यपेक्षत्वात्। ततो यत्सन्तानवर्तिनः उपादानस्योपनिधिः, तत्रैव साहाय्यकमस्येति कथं व्यवहितादौ पुष्टिः? तथा यदि प्रकाश इत्यपि कार्यान्तरजननद्वारेण व्यवहार इष्टः स्यात्, तदा स्यादप्येवम्। अथाहुरेके,

---

१. तुल॰ जैमिनिसू॰ १.१.४

बुद्धिलक्षणव्यक्तिजनकत्वमेव तस्य व्यक्तत्वमिति । तदा हि यस्यैव बुद्धेरुपादानं समनन्तरसंख्यातं नोपनिपातभागि साधनान्तरं वा, तस्यैव नासौ सहकारदानविरहाद् व्यक्तो युक्तः । दूषणान्तरं च तत्रापि वक्ष्यामः ।

न चैवं युज्यते, ज्ञानात् प्रकाशरूपस्यैव विषयस्योत्पत्तिरित्येतस्य पक्षस्य विचिन्त्यमानत्वात् । कार्यान्तरद्वारेण तु व्यक्तव्यवहारे न ततस्तथोत्पन्न इति प्रकृतक्षतिः । तथोत्पत्तौ दुर्वारः साधारणत्वप्रसङ्गः । उपकारकत्वमपि हि यावदेव भिन्नसन्तानवर्ति सुखादिजनकत्वं तावदेव तदपेक्षया [67a] साधारणम् । यदा तु सुखादिरूपत्वमेवाभ्युपगम्येत, तदा कः साधारणत्वनिषेधाय प्रभुः ? ननु तथापि यदेकस्य सुखं न तदन्यस्येति चेत् ? अर्थस्य धर्मः साधारणत्वमसाधारणत्वं ज्ञानस्य । ततः तदात्मनियतं सुखादि न परसाधारणमनुग्रहादिरूपत्वेनेति युक्तम् । बाह्यरूपं तु स्वीक्रियमाणं साधारणमेव तत्कार्यत्वेऽपि ह्यनुग्रहस्य, सुखसंविदुपादेयक्षणान्तररूपत्वात् । तद्वदेव साधारणत्वमसाधारणत्वं चेति ।

एवं न चैत्रजनितं मैत्रस्य तत्पुत्रत्वं नाम किञ्चिद् गौरत्वमिव यत् साधारणं स्यात्, अपि तु तज्जनितत्वमेवास्य तत्पुत्रत्वं व्यवह्रियते । स च जननव्यापारश्चैत्रस्य नान्यसाधारणः । तथा तन्निमित्तोऽपि व्यपदेशः, तज्जनितव्यपदेशवत् । गौरत्वं तु तत्कृतमपि न तत्कृतमेव गुणान्तरत्वादिति साधारणं युक्तम् । न ह्यसौ पितुरेव गौरः किं तु परस्यापि । एवं न ज्ञानकृतत्वमेवार्थस्य व्यक्तत्वं व्यवहिताद्यविशिष्टरूपस्य, किं तु तदतिशायिनः प्रकाशरूपस्योत्पत्तिरित्यभ्युपगमः । अन्यथा न व्यक्त उक्तो विषयः स्यात् । तथाव्यवहारमात्रं तु तन्निमित्तं स्यात्, यथा गौरत्वमेव तज्जन्यतामात्रेण व्यवहरतः, सौत्रान्तिकस्य वा तज्जनकत्वेन । यथा च तस्य जनकज्ञानान्तरस्य विषयताप्रसङ्गः, तथास्यापि जन्यज्ञानस्येति ज्ञानार्थयोर्हेतुफलभावसमयातिक्रममात्रमतिरिच्यते । साधारणत्वपरिहारस्तूभयोरपि । न तु व्यक्तिरूपार्थोत्पत्तिनिर्वाह इतोऽस्य सिद्धः ।

प्रकाशोत्पादने सर्वं प्रति प्राकाश्यसंभवः ।<br>
उत्पादनात्प्रकाशत्वस्थितौ नैकमपि प्रति ॥

इति संग्रहः ।

यथा हि निविडान्धकारपिहितयोरामपक्वपटयोरेकत्र वह्निजनितत्वमेव व्यक्तत्वमभिदधानो नाक्षयोग्यतां तत्त्वतः समाधातुमीशः, तथायमपि ज्ञानजनितत्व

मेव दृश्यतामिति। यदि तु प्रदीपादिव प्रकाशरूपस्योत्पत्तिर्विज्ञानादपि स्वीक्रियते, तदा परोक्षघटादस्य विपर्ययः पर्यवस्यति। साधारणदोषस्तु दुस्त्यजः।

प्रदीपव्यक्तोऽपि तर्हि घटः सर्वस्य प्रकाशः स्यादिति चेत्? यादृशी प्रदीपकृता प्रकाशता अनन्धकारावस्था योग्यदेशस्थत्वाद्यपेक्षज्ञानजननयोग्यतारूपा सा साधारणी एव। ज्ञानकृतैव तु विकल्पस्मृत्यभिलाषादिना प्रवृत्त्यादिसाधनी नियता। सापि यदि भासुरतेव तस्य निष्पन्ना ख्यायते, हन्त साधारणी प्रवृत्त्यादेस्तत्कालसातादिना वा साधनी सर्वस्य स्यादित्युक्तप्रायम्। तस्मात्,

उत्पादमात्रेऽतिशयान्तरे वा
ज्ञानात्प्रकाशो न हि बाह्यराशेः।
प्रकाशरूपस्य समुद्भवे तु
प्रसह्य साधारणताप्रसङ्गः॥

[67b] तस्मात् ज्ञानव्यापारो न ग्राह्यग्राहकलक्षणव्यवस्थानिबन्धनमिति॥

अस्तु तर्हि ज्ञेयस्य ज्ञाने व्यापाराद् ग्राह्यत्वमिति चेत्- न, इन्द्रियस्यापि प्रसङ्गात्। सरूपजनकस्य वा तत्त्वे समनन्तरप्रत्ययविशेषेण व्यभिचारात्। बाह्यत्वे सतीति विशेषणस्य च तद्वादिन्येव शोभासंभवादिति नायमपि पक्षः क्षमः। मा भूत् सारूप्यमर्थादुत्पद्यमानं ज्ञानं तदधिगतिव्यापारेण ग्राहकमित्युभयव्यापारपक्षोऽस्तु। तत्रार्थव्यापारान्नाव्यापृतानां ग्रहणं ज्ञानव्यापाराश्रयान्नेन्द्रियस्यापि।

न हि ज्ञानस्य तत्राधिगतिव्यापार इति चेत्? नायमपि न्यायः। सा हि अधिगतिर्विषयस्वरूपा ज्ञानरूपार्थान्तरं ज्ञानान्तरं वा स्यात्? प्रथमे पक्षे विषयात्मवत् तस्या अपि सिद्धेर्ज्ञानव्यापारविरहः। तद्वद् वा विषयस्यापि ज्ञानव्यापारापेक्षणे प्राचीनो दोषः। द्वितीये तु ज्ञानस्यात्मन्येव व्यापार इति व्याहतम्, व्यापार एवाधिगतिरित्यत्राप्येतदेव दूषणम्, व्यापारतद्वतोरभेदसिद्धेः। एवमेव ज्ञानज्ञेयधर्मत्वपरिकल्पनमपास्तं द्रष्टव्यम्।

अर्थान्तरत्वे च विषयस्य किमायातम्, यथेन्द्रियस्य? यतो नीलं दृष्टं नेन्द्रियमिति स्यात्, तस्य साधिगतिरिति चेत्? ज्ञानजन्यायाः किंकृतस्तत्संबन्धः? तस्यापि व्यापारादिति चेत्? एवं तर्हि उभयोरुभयव्यापारसिद्धा साधिगतिरिति परस्परं ग्राह्यत्वं ग्राहकत्वं वा स्यात्। न चैवमिन्द्रियग्रहणप्रसङ्गपरिहारः। न हि चक्षुर्व्यापारम् अन्तरेण रूपेऽधिगतिः।

अथेन्द्रियस्य ज्ञान एव व्यापारो नाधिगतौ, रूपस्य तु तत्रापीति चेत्? को नाम विभागमीदृशं कर्तुं समर्थोऽन्यत्र जाड्यात्? न हि ज्ञानज्ञेयाभ्यां भिन्नमर्थान्तरम् अधिगमरूपमेव किञ्चिदुपलभ्यते, यत्र यावत् ज्ञानस्यैव व्यापारः परिकल्प्येत, तत्र च विषयस्याप्यस्ति नेन्द्रियस्य, कल्याणकामतामात्रमेतत्। अधिगतेरर्थस्य च विषयविषयीभावलक्षण एव संबन्ध इति चेत्? ननु स एवायं विषयविषयीभावो व्यापारविकल्पेन परीक्ष्यते। स च यस्य न ज्ञानज्ञेययोः सिद्धः तस्याधिगमविषययोरपि कथं सिध्येत्? अधिगतेर्वा विषयित्वमकस्मादिच्छन् ज्ञानस्य कथं प्रतिक्षिपेत्? अस्ति तावदयं व्यवहार इति चेत्? अस्ति, केवलं किमस्य मूलमिति चिन्त्यते– असंकीर्णलक्षणस्वरूपव्यवस्था वा, अनादिवितथविकल्पाभ्यासवासना वेति।

किमस्या बीजमिति चेत्? किमनेन? न हि परेण तदपरिज्ञाने अस्माभिरभिमतासंकीर्णमनयोर्लक्षणमुपदर्शितं भवति। एतेन ज्ञानान्तरत्वपरिकल्पनमधिगतेरपास्तम्, तस्यापि तद्वदेव तद्विष[68a]यत्वस्यासिद्धेः। अतद्विषयया चाधिगत्या सोऽर्थो ज्ञात इति महती प्रेक्षा। एतेन ज्ञानव्यापारं वादकाले नार्थं कुर्वती विकुर्वती वा बुद्धिस्तद्विषयोच्यते, किं तु तदधिगतिमात्रमातन्वतीति कल्पनमपास्तम्। तस्मान्न व्यापारद्वारेणायं ज्ञानज्ञेयव्यवहार इति स्थितम्।

नापि जातिनियतः, क्वचित् कदाचित् कस्यचित् केनचित् ज्ञेयतया व्यवस्थापनात्। न हि निसर्गनियतानां गोत्वादीनामीदृशी व्यवस्था। अद्यापि वावश्यवाच्यो लक्षणभेदो न च शक्य इति तदभावे तु सत्तामात्रं ज्ञानस्य ज्ञेयस्य वा तत्त्वनिमित्तमिति सर्वैः सर्वार्थबोधः सिध्येत्। न वा कश्चिदपि, विप्रकर्षाभावात्। ननु चास्ति प्रत्यासत्तिरिन्द्रियाणामर्थैः संयोगसमवायादिलक्षणा, तद्बलादुपजायमानं ज्ञानं तत्तदर्थनियतं षोढासन्निकर्षविरहविप्रकृष्टार्थव्यावृत्तं च सिध्यतीति कथमतिप्रसङ्गः? एतदपि यत्किञ्चित्। उत्पत्तिनियमो ह्यनेन सिध्येत्, न तु कञ्चित् प्रति ग्राहकत्वनियमो विज्ञानस्य। तथा हि संयोगादिसन्निकर्षबलादर्थेन ज्ञानं जन्यते न तद्विरहिणा व्यवहितादिनेति भवतु, कस्य पुनस्तद्ग्राहकमिति न निश्चयः? येनैव तज्जनितमिति चेत्? आत्ममनोऽक्षसंयोगादयोऽपि ग्राह्या इति नातिप्रसङ्गनिवृत्तिः। न हि विषयाभिमतेऽन्यस्य कश्चिदुपयोग इन्द्रियादिषु संभवी, येन ग्रहणविभागः स्यात्। परिच्छित्तिजननं व्यापारान्तरं वा अनन्तरमेव चिन्तितम्।

तत्र तस्यैव प्रकाशनं, तेन नातिप्रसङ्ग इति चेत् ? ग्राह्यग्राहकाभिमतभागयोः अशक्यापह्नवः प्रकाशोऽस्ति, करणाधिकरणशक्तिनिबन्धनं तु यदि किञ्चिदस्ति, तद् उच्यताम्। न च सहप्रकाशनमात्रमेव निबन्धनं चन्द्रद्वयस्य, तयोरेव वा परस्परग्रहण-प्रसङ्गः। नीलपीतयोर्वा। एकश्चन्द्रो मृषा, द्वितीयभागो जड़ः। मनसश्च द्वयोरेकदा वृत्त्यभावादित्यादि तु बाह्यार्थवादस्थितौ युक्तम्। तदर्थश्चायं विचार इति। यदा तु भागयोरपि न सहप्रकाशनं ज्ञानस्य ज्ञानान्तरेण सहभुवाननुभवेष्टेः, तदेयमपि गतिर्नास्ति। यदि तु दुर्नीतसमयानुरोधो न बाधकस्तदान्तःपरिस्फुरत्प्रीतिपरितापा-द्याकारस्तुपारकराद्याकारश्च समसमयमेव वेद्यत इति तदपि निबन्धनमनुचिन्त्यते, न च क्षमत इति स्थितम्।

किं च घटेनेन्द्रियसन्निकर्षो नोष्ट्रेणेति तदनुभवादेव निश्चेयम्। तदनुभवत्वं चास्य तत्सन्निकर्षेणोत्पत्तेरितीतरेतराश्रयदोषः, प्रकारान्तरेण तदनुभवसिद्धौ वा सन्निकर्षोत्तरस्य वैयर्थ्यात्। अपि च तत्सन्निकर्षेणोत्पत्तेस्तदनुभवत्वे विकल्पमात्र-व्यवस्थापितोऽस्पष्टप्रतिभासोऽर्थस्यानुभवः स्यात् न स्पष्टः, मैत्रस्य चैत्रपुत्रत्वतद्गौरत्व-वचेति दृष्टक्षतिः। तदयंःस्पष्टतया प्रतिभास[68b]मानोऽर्थाभिमतो भागः कारकान्तर-व्यापारचिन्तावैधुर्यात् प्रीतिपरितापादिवत् स्वयं विदितमेवात्मानमाकलयति।

योऽपि मन्यते,

पूर्विकैव तु सामग्री सज्ञानं विषयक्षणम्।
सालोकरूपवत् कुर्याद् येन स्यात् सहवेदनम्॥

इति। तस्यापि,

सामग्र्या यदि निष्पन्नो व्यक्तोऽर्थो वेदनेन किम्।
साधारणत्वदोषश्च नाव्यक्तौ च स्फुटाभता॥

एकसामग्र्यधीनत्वमात्रेणैवं व्यवस्थितेः।
किं चैवमिन्द्रियस्यापि प्रकाशत्वं प्रसज्यते॥

स्थैर्यं तु विषयोऽप्येकसामग्रीजनितः कथम्।
विषयेण च विज्ञानं संवेद्येत सहस्फुरत्॥

अथ वित्तिरसंवित्तिः सर्वमेव सुभाषितम्।
स्वसंवेद्यत्वपक्षेऽद्य दुःसंवेद्यमिदं बहिः॥

सामग्र्या एव शक्तेश्चेद्विभक्तौ वेद्यवेदकौ ।
रसरूपवदुत्पन्नौ स्वभावे कोऽनुयुज्यताम् ॥

वेद्यवेदकयो रूपं नियतं यदि लक्षितम् ।
तदुत्पादनपर्यन्तैः सामग्री शक्तिरुच्यताम् ॥

नैरोग्ये तु स्वरूपेण सिद्धे वाच्यं भिषग्बलम् ।
वेद्यवेदकयोरूपं न चाद्यापि निरूप्यते ॥

ततः स्वरूपे वक्तव्ये सामग्रीपरिवर्तनम् ।
अप्रस्तुताभिधानं वा डिण्डिकाचार एव वा ॥

तस्मान्न वेदकं किञ्चिन्न वेद्यं न च वेदनम् ।
यदपेक्ष्य तदा स्थेयं स्वप्रकाशमिदं जगत् ॥

प्रकाशते हि नीलादिर्न चान्यत् तत्प्रकाशकम् ।
तत्स्वप्रकाशता सिद्धा विज्ञानत्वं तदेव नः ॥

इत्यन्तरश्लोकाः ॥

एवं सति न विज्ञानं नाम किञ्चित् नियतमस्ति, यतो भेदेन प्रतीयमानत्वं घटाद्याकारस्य तद्भेदं साधयेदित्यप्रसिद्धविशेषणो हेतुरसिद्धिदोषग्रस्तः । साध्यश्च ततो भेदव्यवहारो विशेषणासिद्धेरेव न प्रकृतोपयोगं पुष्णाति । विज्ञानरूपत्वेऽपि हि घटस्य यतः कुतश्चिद्विज्ञानान्तरादपि भेदसिद्धेर्न भेदमात्रसिद्धयोपयोगः । तस्माद् विशिष्टावधित्वेन साध्यो भेदो न च तमवधिं स्फुटयितुं शक्त इति व्यर्थ उपन्यासः ।

ननु विज्ञानवादिनोऽपि विज्ञानव्यवहारोऽस्ति । स यथा तथा वा भवन्नस्माकमपि तदुपाधिसाधने शरणीभविष्यति । लोके च किञ्चिद् विज्ञानमिति प्रतीतमस्ति । तत एव भेदं वक्ष्यामः । नात्रास्मल्लक्षणेन किञ्चित् ।

न च वस्तुबलप्रवृत्तानुमाने समयानुरोध इति चेत् ?

विज्ञानवादिनस्तावद् विज्ञानत्वं प्रकाशता ।
ग्राह्यग्राहकसंख्यातभागयोः सदृशी च सा ॥

ज्ञानान्नाम ततो भेदः प्रकाशत्वाद्विभिन्नता।
सा प्रतिज्ञायमानैव व्यस्तामीषु घटादिषु ॥

हेत्वसिद्धिश्च न हि न प्रकाशन्ते घटादयः।
एभ्यस्त्वन्यो यदा धर्मी धर्मासिद्धिस्तदा स्फुटा ॥

भेदेन ज्ञायमानत्वस्वरूपासिद्धिरेव च।
पुनः प्रकाशमास्थातुर्हेत्वसिद्ध्यादयः पुनः ॥

तन्न प्रतिवादिमतापेक्षया क्षमः।

लोके चान्तःस्फुरदिदं विज्ञानमिति गीयते।
तदज्ञेयात्मनस्तस्माद्भेदसि[69a]द्ध्यापि किं फलम् ॥

वेद्यवेदकरूपेण सिद्धयोर्यदि साध्यते।
भेदव्यवहृतिर्नीलज्ञानयोः पौरुषं भवेत् ॥

अवेद्यवेदकाकारस्वप्रकाशस्वभावयोः।
असाधारणयोरन्तर्बहिर्व्यवसितिस्पृशोः ॥

अहंकाराङ्गघटयोर्भेदेन यदि तुष्यसि।
भिन्नसन्तानयोः किं न भेदसिद्धिर्मुदे तव ॥

अथ न स्फुरणं भिन्नसन्तानपथवर्तिनः।
वेद्यवेदकताहानिर्भानेऽपि न किमीक्ष्यते ॥

भिन्नसन्तानयोरैक्यं न कश्चिन्मन्यते यदि।
यदि मन्येत तत्रापि भेदसाधनसाधुना ॥

अहो महत्पराक्रान्तं स्थाने बाह्यापवादिना ॥

सन्तानभेदेऽपि यदा तु बुद्ध्यो-
र्वेदान्तिकादिः प्रवदत्यभेदम्।
न नीलबुद्ध्योरपि चैक्यमन्य-
स्तदा क एष व्यसनाभियोगः ॥

सन्ति हि विज्ञानवादिनोऽपि विचित्रस्थितयः। तथा हि,

ग्राह्यग्राहकभागभागिव जगत्येकं मनो भासते
भिन्नं वा द्वयमात्मवेदनमिदं शीतादि शातादि च।
शातादिः परमोऽथवेह निहितं नीलाद्यविद्यावशा-
च्चित्राकारकमेकमेव यदि वानाकारमेवाथवा ॥

तेषां च बलाबलचिन्तायाः क इदानीमुपयोगो बहिरर्थसाधनाभिनिवेशेन प्रयुक्तसाधनस्य ? तस्मात् प्रत्यात्मवेद्यत्वादिसिद्धयथोक्तविज्ञानरूपस्य घटाकारस्य विज्ञानान्तरसंमताद् भेदसाधने न किञ्चित्फलमिति व्यर्थः प्रयासः। ननु न प्रत्यात्मवेद्यो घटाकारः सर्वसाधारणत्वात्, ततः स्वप्रकाशः सन्नपि साधारणत्वादर्थ एवायं ततोऽप्यभेदेन प्रतीतिर्व्यवहारसाधनी प्रयुक्तेति चेत्– न, साधारणत्वस्यापि प्रागेव प्रतिक्षिप्तत्वात्। न हि तत् प्रकाशमानं रूपमविकलकारणादीनां सन्निहितानामिव व्यवहितानामपि प्रवृत्तिनिवृत्ती अप्रयोज्य स्थातुमर्हतीति निवेदनात्। असाधारणत्वे तर्हि सन्निहितानामपि न स्यात्। न वै सन्निहितानामपि तदेकमेव रूपम्, किं तु तादृशम्।

भेदे तर्हि एकसंप्रतिपत्तिः कथम् ? नैष दोषो, भिन्नेऽपि केशादौ तस्या दर्शनात्। तत्र बाधकदर्शनान्न प्रमेति चेत् ? इहापि व्यवहितस्यापि प्रवृत्त्यादिप्रसङ्गः किं नोपलभ्यते बाधकः ? तादृशत्वेऽपि प्रवृत्त्यादिरेव हेतुः, केवलं तादृशस्यैव प्रकाशस्य केषाञ्चित् संभवो नान्येषामिति किमत्र बीजमिति प्रश्ने वासनेति ब्रूमः। केयं वासना ? तदुपादानशक्तिमात्रं पूर्वपूर्वानादिकालिकविज्ञानपरम्परायातमभिन्नं भिन्नमिव कयाचिदपेक्षया दृश्यं कल्प्यत इति निर्लोठितमन्यत्र। तादृग्बीजपरिणतिसाम्यात् केषाञ्चित् तादृक् ज्ञानं नान्येषामिति नात्र कश्चिदुपालम्भः, नियतत्वादुपादानोपादेयभावपरम्परायाः, तैमिरिकद्वयदृश्यकेशादिवत्। तद्वदेव वा प्रतिघत्वादेकदेशा[69b]वसायोऽपीत्यलं विस्तरेण।

एकं कस्माद् व्यवसितिवशाद् भिन्नभिन्नेऽपि नेयं
बाधातश्चेन्न मितिरधुना किं न बाधोपलब्धिः।
सादृश्यं तु स्फुरितुमुचितं वासनाबीजसाम्याद्
विज्ञानानां प्रतिघविरहादेकदेशोऽप्यदोषः ॥

इति संग्रहः।

तस्मात् सिद्धं प्रत्यात्मवेद्यत्वमपि। तथापि काठिन्यादयो न ज्ञानधर्मा इति चेत्- न, प्रकाशरूपतया सर्वेषां ज्ञानत्वात्। नीलिमानं च नाम ज्ञानधर्मं सहते न काठिन्यमिति सुकुमारप्रज्ञः। ननु यदेव नीलमालोकितं तदेव कठिनमनुभूयते, न चैवं विज्ञाने युज्यत इति चेत्? वहिरपि भ्रमोप[ल]म्भवतः नीलं हि रूपमात्रं, कठिनश्च स्पर्शः। न च ताभ्यामन्यः कश्चिदुपलब्धिगोचरः। गुणस्य द्रव्यपारतन्त्र्यादिति चेत्? किमिदं गुणतत्त्वम्। यदि पारतन्त्र्यमेव, तदा साध्याविशिष्टो हेतुः। अथ व्यावृत्तिभेदेनान्यदेव ततः, तथापि विपर्ययबाधकप्रमाणस्योपपादयितुमशक्यत्वात् सन्दिग्धविपक्षव्यावृत्तिकत्वम्। यदप्ययं,

द्रव्याश्रय्यगुणवान् संयोगविभागेष्वकारणमनपेक्षः[1]

इति पठति। तत्रापि,

द्रव्याश्रयत्वेन गुणत्वसिद्धिः,
गुणत्वसिद्धौ च तदाश्रयत्वम्।
परस्परापेक्षमतो द्वयं स्यात्
स्वनीतिमात्रं शरणं तदस्य॥

न तामप्रमाणयता विवादे सोपयोगमित्यलं चर्वितचर्वणेन। अस्तु वा बाह्यो गुणद्वयाधारः कश्चिदन्यः, सोऽपि यदि प्रकाशस्तदा न ज्ञानेऽनन्तर्भूय स्थातुं शक्तः। अप्रकाशत्वे हेतोरसिद्धिस्तदवस्था। नीलकठिनयोश्चैकदाध्यवसायो भ्रान्तिरेव। बाधकश्चास्य परस्परं ज्ञाने अनन्तर्भाव एव यथोक्तक्रमेण। बीजं च नीलनिर्भासज्ञानस्य प्रवृत्त्यपेक्षकठिननिर्भासज्ञानवासनाप्रबोधसाधनत्वनियम इति नैवंविधा जम्बुकविक्रोशा योगाचारकेशरिणमभिद्रवतीति।

यदप्युक्तं नाहं घट इति प्रवीविरिति, तत्रापि येषामियमहंप्रतीतिरात्मविषया तेषां घटादावभवन्तीति आत्मत्वमेव निवर्तयेन्न ज्ञानत्वम्। विज्ञानविषयत्वाश्रयेऽपि न विज्ञानमात्रे मैत्रस्याहंप्रत्ययः, तस्य चैत्रचित्तेऽपि प्रसङ्गात्। चैत्रस्य तत्रास्त्येव स इति चेत्? मैत्रस्यापि किं नेति चिन्तायामन्यसन्तानेऽनभ्यास एवोत्तरीकर्तव्यः। स चानभ्यासो बहिर्मुखनिर्भासिनि घटाद्याकारेऽपि समस्त्येव। तदियमहंकारव्यावृत्तिः अन्यथाप्युपपद्यमाना न विज्ञानरूपतोपतापाय प्रभवति।

---

१. द्रः वैशेषिकसूत्रम् १. १. १६

अथापि स्याद् यद्विज्ञानं तदवश्यं स्वस्य परस्य वाहंकारस्य गोचरीभवति, न चैवं घटाकार इति चेत्- न, विषयिणा ज्ञानेन विषयस्य व्याप्त्यसिद्धेः। भिन्नो हि विषय इष्टो, न कार्यः, कारणं तु स्यात्। न च कारणस्य कार्यसत्तानियम इति विपक्षव्यावृत्तिसन्देहादनेकान्तः। तदयमाकारस्य [70a] बाह्यतामभिवाञ्छ बाह्यवादव्यसनिनो भेदसाधनविधिस्तपनीयमपनीय ग्रन्थिकरणवृत्तान्तमनुहरति। न चोक्तमात्रं साध्यम्, अपि तु प्रकरणापन्नमिष्टमप्रकाशस्य प्रकाशकव्यापारेण प्रकाशस्य सतो घटादेः प्रकाशकाद् भिन्नत्वम्, न च तथा सिद्धिरिति साधनवैयर्थ्यादसाधनाङ्गवचनं वादिनो निग्रहस्थानम्। नैवं वा, तथापि सुप्ततैमिरिकादिप्रतिभासैरनेकान्तं को निवारयति ?

सर्वत्रालम्बनं बाह्यं देशकालान्यथात्मकम्।

इति चेत् ?

सर्वत्रालम्बनं ज्ञानं देशरूपान्यथात्मकम् ॥

इत्यपि तर्हि वक्तुं शक्यम्।

कथं ग्रहः स्वरूपस्य परस्यापि कथं ग्रहः।
बुद्धेरात्मनि भिन्ने वा व्यापारविरहः समः ॥

सव्यापारे च निर्भाति यथान्यत्र तथात्मनि।
दीपवद् व्यवहारोऽयमशक्यापह्नवो धियः ॥

इत्यन्तरश्लोकौ।

तस्माद् यथान्यथाख्यातीति मतिः, तथा,

अबहिर्बहिराकारमनीलं नीलरूपतः।
ज्ञानमेव न भातीति सपर्थैर्यदि निर्णयः ॥

किमत्र बीजं व्यसने ज्ञानस्यार्थात्मनोऽपि किम्।
प्रदेशनियतख्यातौ चोद्यमेतद् द्वयोः समम् ॥

आन्तरोपप्लवस्तत्र शक्तिभेदयुतो यदि।
ख्यायते हेतुरत्रापि स यक्तुं किं न शक्यते ॥

किं च,

सदन्यथा विभातीति देशभेदेऽस्तु सा गतिः ।
कालभेदे स्वसत्त्वेन प्रथनं कथमन्यथा ॥

जीवन्नटोऽन्यथा नाम ख्यातीति न मृतोऽप्यलम् ।
चित्तमेव ततः सर्वत्रान्यथा ख्यातुमर्हति ॥

ततोऽन्यथाख्यातिपक्षेऽपि नानेकान्तपरिहारः । कालभेदेऽपि नात्यन्तमसन्नेव, स्वकाले सत्त्वादिति चेत् ? प्रतिभासकालेऽसतस्तस्य कालान्तरसत्तामात्रं क्वोपयोगि ? यत्र यस्य स्वसत्तोपधानेनोपयोगो न स तत्र चिरातीतः क्षमः, यथा दग्धं बीजमम्बरं वा, अङ्कुरे कालिम्नि वा । स्वसत्तोपधानेन चोपपद्यतेऽर्थः प्रतिभास इति विरुद्धोपलब्धिः, यतो विनष्टस्यापि शक्तिसंभवः । स्वसत्तोपधानेन चोपयोग इति विरुद्धौ धर्मौ । इहातीतमपि कुशूलस्थं बीजमङ्कुरे परम्परयोपयुज्यते, न तु स्वसत्तोपधानेनेति विशेषणं तदर्थम् । प्रतिभासमानश्चार्थः प्रतिभासे स्वसत्तोपधानेनैव उपयुक्तो वक्तव्यः, न परम्परया । प्रतिभासो हि तस्य धर्मो वा कार्यं वा स्यात् । तत्र धर्मत्वे सहभावः । कार्यत्वे स्वसत्तानन्तर्यनियम इति न क्षणेनापि व्यवधिस्तद्भावं सहत इति स्वसत्तोपधानेनैव प्रतिभासे अर्थस्योपयोगः सिद्धः । तदभावाच्चातीतः प्रकाशितुमशक्यः ।

ततः प्रकाशमानोऽयमसन्नेव प्रकाशते ।
अतीतत्वात् स्वसत्ताया उपधानविधूतितः ॥

तदभावेऽपि भासे च भासः प्राप्तोऽसतः पुनः ।
स्ववाचैव यतः सत्त्वस्याभावे भानमिच्छति ॥

तदवश्यं बहिरर्थपक्षेऽपि भ्रान्तिज्ञाने [70b] दुष्परिहरोऽसत्ख्यातिपक्षः । अस्तु वान्यथाख्यातिरुभयथापि ज्ञानविवर्त एव सदृशास्तस्य सत्त्वादनिष्टिमात्रेण निवारयितुं न शक्यते इति व्याप्तेरभावादनेकान्त एव भेदेन प्रतीयमानत्वहेतुर्भेदव्यवहारसिद्धाविति स्थितम् । ननु भ्रान्तेष्वेवंभावेऽप्यनुभवे किमायातम् ? ततः अभ्रान्तत्वे सतीति विशेषणस्याभिमतत्वात् नानेकान्त इति चेत्– न, बाधकाधीना हि भ्रान्तिस्थितिः, तस्य चोक्तेनैव क्रमेणात्रापि सिद्धत्वात् । तथा हि,

स्वयं प्रकाशाद्विज्ञानादसाधारणरूपतः ।
भिन्नत्वे परवेद्यः स्यादर्थः साधारणस्तथा ॥

न चैवमुपपन्नोऽयं नियमः प्रोक्तयुक्तितः ।
ततः केशादिवत् कुम्भो ज्ञानाद्भिन्नः कथं भवेत् ॥

यद्धर्मव्यतिरेके न यतो धर्मव्यवस्थितिः ।
अन्वयस्तस्य धर्मस्य ततो भेदं निरस्यति ॥

तदयं बाह्यत्वलक्षणसाधारणास्वप्रकाशरूपत्वविरुद्धोऽसाधारणस्वप्रकाशतारूपो धर्म उपलभ्यमानो घटादिषु तद्भावमपाकरोतीति बाधकसामर्थ्यात्तथाप्रतीतिर्भ्रान्तिरेव, वृत्तमेव चेदं बाधकं प्रमाणं नोत्प्रेक्षामात्रेणेति नातिप्रसङ्गोपालम्भः, यदपि विज्ञानवादी प्रमाणयति,

यद् यत् प्रकाशते तत् तद् विज्ञानं स्वप्नदृष्टवत् ।
प्रकाशते च नीलादिः स्वभावो हेतुरित्ययम् ॥

तदाप्ययं प्रबन्धोऽस्तु प्रतिबन्धस्य सिद्धये ।
ज्ञानान्वयविकल्पानामवकाशश्च दूरतः ॥

स्वप्रकाशमसामान्यं विज्ञानमिति संमतम् ।
तद्रूपेण प्रकाशस्य व्याप्तिश्चान्यैरतत्कृते ॥

प्रकाशते च नीलादि नान्येनेति स्वयं यदि ।
प्रकाशते स्वयं नातः परेणेति न किं मतिः ॥

दृष्टोऽपि भेदव्यापारः प्रस्तुते यदि नोचितः ।
अदृष्टः स्वाप्यभेदे तु भवद्भिः कल्प्यते कथम् ॥

ननु प्रकाशभेदी यः स्वयमित्यादि दृश्यते ।
तत्रापि नात्मनि व्याप्तस्वभावस्तु तथोच्यते ॥

एवं प्रकाशते बुद्धिः स्वयमित्यपि गम्यताम् ।
खे स्वयं शून्यता यद्वत् परव्यापारवारणात् ॥

तथात्मव्याप्तिभ्रान्तिभ्रंशनाय परश्रुतिः।
न व्यापारवशा वृत्तिस्तद्रूपं तु तथा तदा॥

यथा निर्लेपमाकाशं प्रकाशं च स्वयं तथा।
असाधारणमेतच्च पूर्वमेव समर्थितम्॥

ततः प्रकाशता नाम साधारण्यपरक्रिये।
सर्वत्र तुल्यदोषत्वान्निराकृत्य व्यवस्थिता॥

ताभ्यां विरोधो युक्त्यातो लब्धस्ताद्रूप्यनिर्णयः।
तस्माद्विपर्यये हेतोर्विरोधादेव न स्थितिः॥

प्रकाशता च सिद्धेति ज्ञानरूपाः शितादयः।
तद्बाह्यरूपप्रत्याशा प्रत्याशैव हि केवला॥

यदि स्वरूपमाकाराश्चित्रतैकधियः कथम्।
भेदः प्रत्यणु वा बुद्धेः तथा नान्योन्यवेदनम्॥

मिथस्तथापि वा वित्तौ बाह्यवल्लक्षणक्षतिः।
भेदेऽप्येवं धियस्तेषां प्रकाशघटना कथम्॥

अथैवमेव निर्भासः स्वसन्तानधियो धिया।
अलीकाकारराशेर्वा कोऽपराधो बहि[71a]र्भुवः॥

अलीकवेदने किं च प्रकाशं च न चापरम्।
अतो विपक्षसामान्यो हेतुः संशयसाधनः॥

अलीकमन्यत्वेतीदं [?] व्यावृत्त्यन्तरमीरितम्।
तस्य सन्देहवत्त्वेऽपि प्रकाशे ज्ञानता स्थिता॥

एवं प्रकाशमानस्य ज्ञानत्वे प्रतिपादिते।
क्वचित् सर्वत्र वा वादादलीकत्वेऽपि बोधता॥

ज्ञानमेव ततः सत्यमलीकं वा बहिर्न तु।
बहिरप्यस्तु वा वस्तु प्रकाशस्यास्तु बोधता॥

भेदाभेदविकल्पोऽपि न प्रकाशस्य बाधकः ।
न वा यथोक्तसाध्येन व्याप्तेरिति किमर्थकः ॥

परेण परसंवित्तिं योऽभिमन्येत तं प्रति ।
शेषं स्यादपि दोषाय ब्रूमः स्वप्नेऽपि न त्विदम् ॥

एकानेकत्वविरहात् निःस्वभावमिदं जड़म् ।
यथा तथा न किञ्चित्तं सत्तैकस्य कथं ततः ॥

प्रकाशमानं नीलादि जड़ं वाजड़मेव वा ।
इति प्रकरणेऽस्माभिर्बुद्धित्वे हेतुरुच्यते ॥

तत्रैकानेकविरहो यदि धर्मान्तरार्पकः ।
किं नश्छिन्नं तावतापि नीलादेर्जड़ता न हि ॥

सत्तायां ननु सिद्धायां जड़ं वाजड़मेव वा ।
असत्तुरङ्गशृङ्गादि न हि वस्त्वेऽनुमीयते ॥

तथाप्यप्रस्तुतमिदं सत्ताचिन्तावियोगतः ।
सिद्धायामेव सत्तायां विशेषश्चिन्त्यते यतः ॥

सत्तायां संशयेऽप्यस्मात् सच्चेद् विज्ञानमेव तत् ।
ततश्चादूषणाख्यातिरसत्तासिद्धिबाधयोः ॥

प्रसिद्धिमात्ररूपेण धर्मित्वान्नाप्यनाश्रयः ।
अन्यथा निःस्वभावत्वहेतोरप्याश्रयः कथम् ॥

तस्मिन्न भावमात्रं चेत् ज्ञानतामात्रमत्र च ।
बाह्यवस्तुत्वसिद्धिस्तु द्वयोरपि विरोधिनी ॥

वस्तुतोपाधिबोधत्वं साध्यमत्र त्वयेति चेत् ।
बोधत्वमात्रप्रस्तावे विशेषः कुत ईदृशः ॥

ज्ञानत्वं वस्तुताव्याप्तं तदभावे भवेन्न चेत् ।
विरुद्धाव्यभिचारः क दोषो यद्वास्तु वस्तुता ॥

किं च प्रकाशमात्रात्मव्यतिरिक्तान्यथाथवा ।
सत्ता निषेद्धयाभिमता निःस्वभावत्वहेतुना ॥

निषेधे व्यतिरिक्ताया न प्रकाशात्मवारणम् ।
अस्यैव वारणे केन वारणाध्यक्षभासिनः ॥

अनुमानं प्रमाणत्वाद् बाधकं यदि कस्यचित् ।
प्रत्यक्षमपि तद्भावात् साधकं किं न कस्यचित् ॥

अवश्यमन्तेऽध्यक्षस्य प्रामाण्यमनुमाश्रयेत् ।
प्रकाशमात्ररूपे च नानुमापेक्षमक्षजम् ॥

अथायमनुमानस्य विषयोऽक्षधियोऽपरः ।
प्रकाशरूपेऽध्यक्षत्वादनुमावसरः कुतः ॥

अथ प्रत्यक्षसिद्धं यत्र तस्यैव निराक्रिया ।
व्यावृत्तिभेदः कश्चात्र विचारासहता यदि ॥

विज्ञानस्यैव धर्मोऽस्तु शशशृङ्गसमं बहिः ।
अर्थशक्तिवियोगे वा धर्मोऽस्तु धिय एव सः ॥

अर्थशक्तिवियोगश्च विचारासहता च सा ।
ज्ञानस्यैव न बाह्यस्येत्यर्थ्यते किमतः परम् ॥

प्रकाशस्यैव चिन्तेयं तद्गन्धोऽपि बहिर्न हि ।
तन्नागशृङ्गसाम्येऽस्य सिद्धे किं न कृतार्थता ॥

बहिर्वदवभासेषु प्रज्ञप्ता रूपराशिता ।
संस्काराद्वेदनासंज्ञे [71b] अभिन्ने किं न भेदि ते ॥

मूलमेवाप्रकाशस्य दुःस्थं सत्ताव्यवस्थितेः ।
प्रकाशरूपस्य सतो धर्मान्तरमबाधकम् ॥

प्रकाशस्यापि तद्दोषाद् यदि सत्ता दवीयसी ।
अप्रकाशोऽप्यसत्तायाः किमन्यत् साधयिष्यति ॥

असत्त्वैवाप्रकाशस्य प्रकाशस्य तु नात्मना ।
तेनैवासत्त्वमित्युक्तं कल्पिते न तु युज्यते ॥

प्रकाशमानस्य पुनः प्रकाशादेव सत्यता ।
अभावोऽवसितेनैव केशस्यापि जडात्मना ॥

प्रकाशसंमतस्यापि नीलादेरत एव हि ।
सत्यमर्थक्रियैवोक्ता तां विना न भिदा द्वयोः ॥

क्रियामात्रानुबन्धाच्च विज्ञानस्याप्यनित्यता ।
क्रियाऽभावो यदा त्वस्मिन् सत्ता मुख्यैव भासनात् ॥

न क्षणित्वं तदा तस्य सत्त्वं च व्यभिचार्यतः ।
सत्त्वमर्थक्रियारूपं साधनं तन्न दुष्यति ॥

न वा तस्याप्यनित्यत्वं परिहृत्य दशान्तरम् ।
तत्क्षणस्यैव संवित्तेरन्यथा न भिदा क्वचित् ॥

कार्यकारणभावोऽयमायातस्तर्हि चेन्नतु ।
सांवृतस्यानिषेधोऽत्र क्षणिताप्यस्य सांवृती ॥

तत्त्वतो नित्यरूपं चेत् संवृतावपि यन्न सत् ।
अनित्यप्रतिषेधाच्चेत् तथाप्यस्यागतिः कुतः ॥

भावं कञ्चित् पुरस्कृत्य भेदाभेदावुदीरयेत् ।
देशकालादिभेदेन स्वविन्मात्रे तु कः क्रमः ॥

स्वरूपं बुद्धिरपरैर्न यौति न भिनत्ति च ।
स्वपरप्रविभागो हि धियो याचितमण्डनम् ॥

अन्यस्यावाच्यता नाम स्वभावभावशंसिनी ।
तदेव रूपं तत्त्वस्य तत्राद्वैते प्रतिष्ठितम् ॥

परं हि विद्वन् नियतं नियतं प्रतिपद्यते ।
अन्यथावित्तिमात्रेण न प्रवृत्तिनिवर्तने ॥

प्रथमं ग्राहकाकारो भिनत्ति ग्राह्यमात्मनः ।
देशरूपादिभेदेन तथा ग्राह्यान्तरादपि ॥

अद्वैतमेवेतरथा तदभावे भिदां यति ।
भेदाभेदौ ततो द्वैते नियतौ नाद्वये तथा ॥

यावच्च स्वप्नबोधाय कालभेदं परामृशेत् ।
धीर्विकल्पान्तरेणेयं क्षयेण ग्रस्यतेऽन्यवत् ॥

तस्माच्च नित्यता नाम तत्त्वतो न च संवृतिः ।
क्षणितातत्त्वयोगेऽपि गृह्यतामनुमानवत् ॥

चित्रैकव्यवहारोऽपि भेदापोहपरो मतः ।
एकानेकवियुक्तो हि प्रकाशः केवलोऽत्र सन् ॥

सर्वशक्तिवियुक्तेन प्रकाशेन सतापि किम् ।
शक्त्यभावान्न कार्यं स्यात् स्वरूपं तु क्व गच्छतु ॥

प्रकाशस्यापि रूपं चेत् विचारेण न लभ्यते ।
विचारमनुमां विद्मो न सा प्रत्यक्षबाधनी ॥

गुञ्जानलविपर्यासौ बाध्यतेऽक्षकृतोऽपि चेत् ।
पररूपे भ्रमान्नाक्षं स्वरूपे भ्रान्तता कुतः ॥

[1]प्रमाणमप्रमाणं चेद् विचारावसरो हतः ।
ब्रुवता नियतं किञ्चित् साध्यं वा बाध्यमेव वा ॥

तत्रायुक्ति ब्रुवाणस्य श्लाघा सदसि कीदृशी ।
नानुमायाः परा युक्तिः किं सिद्धं तदनादरे ॥

स्वीकृता तेन सेत्यस्मात् तन्मत्या बोधनं यदि ।
अबाधनेऽस्याः स्वीकारात्तद्धिया [72a] बोधनं कथम् ॥

साध्यं न किञ्चिदिति चेत् बाधाया अपि साध्यता ।
सापि नेति वचो व्यर्थं प्रश्नमात्रेऽपि किं फलम् ॥

---

१. तुल० रत्न० निब० पृ: ८६

फलं यदि गिरः क्वापि नान्यत् तथावबोधनात् ।
वाचः प्रत्यायनेऽशक्ता नाद्यधूमादि सुन्दरम् ॥

यदि हेतुफले संवृत्तद्भावः केन गृह्यताम् ।
फलाच्च हेतुधीर्नूनं न चेद् व्यर्था व्रतादयः ॥

योऽपि तापार्दितोऽभ्येति चन्दनं न हुताशनम् ।
वक्तुं किञ्चिदनाश्रित्य सद्ज्ञानं तु न वर्तते ॥

वस्तु किञ्चिदुपन्यस्य न्यस्यन्ते यदि युक्तयः ।
शास्त्रे पक्षग्रहः किं न न चेत्तत् केन गृह्यताम् ॥

मोक्षमार्गं यदा पृष्टो व्याकुर्यात् शून्यभावनाम् ।
बोधयन् शून्यतां तर्हि गर्हेत्पक्षग्रहं कथम् ॥

तस्मात् संवृतिमाश्रित्य साध्यं साधनमस्य वा ।
दुर्वारमिति दुर्वारः प्रमाणस्य परिग्रहः ॥

[1]संवृत्तौ मानमिष्टं चेत् विचारोऽप्येष संवृतिः ।
संवृतावपि नेष्टं चेद् ब्रवन् जेता यथा तथा ॥

यथा हेतुफले संवृत्तथा संवादिधीरपि । -
अनुमामिच्छतोऽध्यक्षं नेति कोऽप्येष निश्चयः ॥

स्ववेदने विवादश्चेत् न संवृत्यैव साधनात् ।
तस्मादपरमार्थत्वेऽप्यात्ता वित्तिः प्रबाधिका ॥

संवृतिश्चेत् क्व निष्कर्षः परमार्थोऽस्तु तावता ।
ततश्च संवृतावेव सांवृतं त्यज्यते कथम् ॥

तत्प्रकाशान्वयः सत्ताव्यवहारोऽस्तु चेतसः ।
न प्रकाशो न वा शक्तिर्यस्य तेन तुला कथम् ॥

ततो विचारासहतादिधर्मः
प्रकाशमानत्वमबाधमानः ।

---

१. तुल० रत्न० निब० पृ: ८३

यदीप्यते चेतस एव सोऽस्तु
स्थिता प्रकाशान्मनसः प्रसिद्धिः ॥

प्रकाशमूर्तेर्यदसत्त्वमुच्यते
स्वकल्पितं सत्त्वमपेक्ष्य न क्षतिः ।
प्रकाशमेवैति परस्तु वस्तुसत्
समं द्वयं लौकिकसिद्धबाधने ।

नासत्प्रकाशवपुषी न च सत्तदन्यै-
रेकेन न द्वितयमद्वितयं न ताभ्याम् ।
इत्थं जगद् यदि चतुःशिखरीवियुक्तं
को भाष्यकारमतमध्यमयोर्विशेषः ॥

अर्थक्रियापि परमार्थत एव येषां
येषां प्रकाशवपुषोऽपि निषेध एव ।
तेषां भिदा भवतु किं तु निसर्गदुर्गो
मार्गोऽयमात्मविदि साहसभारसारः ॥

तदेतत् परस्योत्तरप्रबन्धानुरोधेन प्रासङ्गिकं किञ्चिदायातमित्यलं विस्तरेण । स्थितमेतत् प्रकाशमानत्वेन विज्ञानमात्रं त्रिभुवनमिति ॥

॥ समाप्तमिदमद्वैतबिन्दुप्रकरणम् ॥



## ११

# ॥ साकारसिद्धिशास्त्रम् ॥

[ प्रथमः परिच्छेदः ]

विधूतकल्पनाजालगम्भीरोदारमूर्तये ।
नमः समन्तभद्राय समन्तस्फरणत्विषे[1] ॥

जीयान्मुनीन्द्रमतवार्तिकभाष्यकारः
साकारसिद्धिनयनाटकसूत्रधारः ।
संसारनिर्वृतिपथप्रथमानगर्व-
सर्वारिवीरदुरतिक्रमविक्रमश्रीः ॥

विज्ञप्तिमात्रमखिलं स्थितमेतज्जगत्त्रयम् ।
तत्रावान्तरभेदस्य बलाबलमिहोच्यते ॥

तथा हि बहिरर्थदूषणादिक्रमेण,

बाह्यं न तावदिदमेव यतः प्रकाश-
रूपं स्वतो नियमतश्च सहोपलब्धेः ।
युक्त्या न चान्यदिह संभवि संभवेऽपि
न ग्राह्यलक्षणमतो मतिमात्र[72b]मेतत् ॥

गौरगान्धारमधुरसुरभिसुकुमारशातेतरादिचित्राकारं जगत् । तथा च सूत्रम्, विज्ञप्तिमात्रं भो जिनपुत्रा यदुत त्रैधातुकमिति, यदर्थं वार्तिककारः प्रयत्नपरम्परया बहिरर्थ एव साकारवादमुद्दीपयति । कथं तर्हि भाष्यकारोपज्ञमिदमुच्यत इति चेत् ? निराकारदिशान्यैर्योजितत्वात्, सत्तामात्रस्थित इवानेन प्रसाधित इत्युच्यते, न पुनस्तस्यैवोपज्ञेति ।

तत्रापरे प्राहुः । भवन्तु सितशातादयः प्रकाशैकस्वभावाः, स्वभावशून्यतां तु नातिवर्तितुमीशते । यदि युक्तिरेकानेकविरहलक्षणा बाह्यमसंभवि संभावयितुमुप-

१. प्र. वा. १. १.

नीयते, सा न विज्ञानस्वभावतामाविभ्राणेभ्यः शुभ्रादिभ्यो बिभेति। तस्मात् सर्वधर्मशून्यतैव ज्यायसी यथा प्रथितमागमे बहुशः। वार्तिकेऽपि,

यथा यथार्थाश्चिन्त्यन्ते विशीर्यन्ते तथा तथा ॥
[प्र. वा. २. २०६]

इति। संवृतिमात्रं तु विज्ञाननीतिरिति।

अत्रापरे समादधति। भवत्वाकाराणां बाधनादलीकत्वं प्रकाशमात्रं तु सत्यमाम्नायः, तदात्मवेदनस्य भ्रान्तत्वायोगेन प्रत्यक्षत्वात्। प्रकाशस्य प्रकाश एव निजं रूपमिति न तत् तस्य विप्लवोपनीतम्, येन तद्वेदनं भ्रान्तिः स्यात्। नीलं तु रूपान्तरत्वात् विप्लवोपनीतमपि स्यादिति स्यात्तद्वेदनं भ्रान्तिः। ततोऽस्ति नीलादौ बाधकस्यावतारो न प्रकाशे। कल्पितालोकयोस्तु निषेधो बोद्धव्यः सर्वत्रेति ॥

अत्र चिन्त्यते। कोऽयं प्रकाशो नाम नीलादिभ्यो व्यतिरिक्तः, अव्यतिरेके बाधाभयनिवृत्तेः? न च व्यतिरिक्ते किञ्चित् प्रमाणमस्ति। न तावत् प्रत्यक्षम्, प्रकाशमानरूपान्नीलादपरस्योपलम्भासंभवात्। न चानुमानम्, कदाचिदपि प्रत्यक्षतामननुभवतः केनचित् संबन्धग्रहणानुपपत्तेः।

किं च,

प्रकाश आत्मसन्तानेऽनुमानेन प्रतीयते।
परोक्षविषयेणेति का धिक्कृतिरतः परम् ॥

व्यक्तमिदं शवरस्वामिदर्शनं शरणीकृतमिति किमत्र वक्तव्यम्? तदयं दृश्यात्मा कुम्भादिभ्यो व्यतिरेकेणानुपलभ्यमानः सामान्यादिवन्न सद्व्यवहारगोचरीभवितुमर्हति। अन्यथा तेषामप्यनिषेधः,

नित्यत्वाङ्गीकृतेस्तच्चेत् क्रमादिविरहादसत्।
न प्रमाव्यापकाभावो दृश्यादृष्टेरनादरे ॥

कथं वा विषाणगुणकर्मादेर्निषेध इति यत्किञ्चिदेतत्। अथ नीले बोधरूपे प्रतीयमाने नीलबोधात्मनोः प्रतीतिरशक्यापह्नवेति न सिद्धानुपलब्धिरिति चेत्? तर्हि गवि शाबलेये प्रतीयमाने उभयात्मप्रतीत्या प्रत्यवतिष्ठमानः कथं निषेध्यः? पृथक्प्रतीत्य-

भायस्तु साधारणः। अविद्यावशात् प्रकाशनीलयोरपृथक्कथनमिति चेत्? गुणद्रव्ययोरप्येवं भविष्यति। यदि समवायनिषेधे निर्बन्धः, किमविद्यावशात् पृथगदर्शनमथाभावादेवेति सन्देह उभयोरपि शक्यः। तदेव तस्य दर्शनमिति कर्मादे[73a]रपि शक्यम्। तृणाग्रे करिशतस्य वा,

यद्रूपं दृश्यताप्राप्तं पृथक् तच्चेन्न दृश्यते।
शतधा विप्रकीर्णेऽपि नीले तद्दृश्यते कथम्॥

तस्मात्,

न सन्ति सामान्यगुणादयो यथा
सितादिभेदेषु निरंशभासिषु।
तथा प्रकाशान्तरमप्यसत्ततः
सितादिबाधे किमबाधसंभवः॥

किं च,

देशस्यापि भिदा यदि स्वतनुवद् भिद्येत भासो द्वयो-
रत्यन्तं तुलयैकधीविषययोरप्येवमालोकनात्।

मायागोलकयोर्ह्यत्यन्तसादृश्येनैकबुद्धिर्भिन्नकाल एव, एकदा तु भिन्नदेशयोर्भेदनिश्चयनान्तरीयक एव पटुराभासभेदः। तस्माद् देशभेदे निर्विबन्धः प्रतिभासभेदस्तन्निश्चयश्च।

देशे वा भिदिरूपमेव न परं रूपं न देशोऽपरः।

ननु वातातपयोर्देशाभेदेऽपि स्वभावभेद इति चेत्- न, तयोरवयविरूपतया उत्पत्तेः, एकघनाकारयोः सप्रतिघयोरन्योऽन्यदेशनिवेशः। परमाणुनिकरस्तु व्यतिकरमासादयति। तथा च सति,

भिन्नात्मा मरुदातपाणुनिचयो भिन्नप्रदेशो न किम्॥

ततो यथा स्वभावभेदस्तथा देशभेदोऽपीति न देशो नामान्यः स्वरूपात्। ततस्तद्भेदे स्वरूपाभेद एव प्रकाशस्यापि।

तद्वद् यद्यणुसंहतेरुपगमो दोषोऽपि तद्वद् भवेत्
स्थूले वा प्रतिघेऽपि देशभिदया दोषस्तथैव स्थितः ।
किं च व्याप्तिरिहान्यथाप्युपरता खण्डेऽन्यथा भासन-
प्राप्तेस्तद्वशतः सितादिनि ततो यावत् प्रकाशस्थितिः ॥

यावद्देशो हि नीलाद्याकारस्तावद् व्याप्तिविरहे खण्डप्रतिभासनप्रसङ्गो नीलादौ तद्वशतः पृथगिष्टप्रकाशवशात् । ततो यावत् प्रकाशनं सितादेस्तावत्तस्य प्रकाशाख्यस्य स्थित्या भाव्यम् । ततस्तावद्देशव्यापिनस्तस्यापि नीलस्येवावयविपरमाणुरूपचिन्तायां पुनः साधारणदोषान्न मुक्तिः । तस्मान्न नीलादिनिषेधे कस्यचित् स्थितिर्भेदस्यैवाभावात् प्रतिभासभेदाभावादिति ॥

अथ क्षणयोरभेदभासनेऽपि यथा भेदसिद्धिर्बाधकात्, एवमिहापि । यथा हि कार्यविशेषस्य भावाभावावन्यथानुपपद्यमानौ तयोर्भेदसाधनौ तथा बाधकस्य भेदेन वृत्तिः प्रकाशनीलयोरपि । ततो बाध्यान्नीलादबाध्यः प्रकाशो भिन्न एवेति चेत्? उच्यते, अबाध्यता नाम पर्युदासप्रसज्यभेदेन द्विधा । पर्युदासोऽपि प्रकृतव्यक्तिविषयः अस्पृश्यादिवद्बाधान्तरमेवोपनयेदिति, अब्राह्मणक्षत्रियवज्जातिपर्युदासात् ।

अबाधा नामेयं प्रमितिबलसिद्धिर्यदि मता
प्रमित्योर्नैकापि स्वविदि भिदुरायां प्रभवति ।
अभावो बाधायाः पुनरसति साधारणतया
पदे संदेहस्य प्रथयतु कथं भेदममुतः ॥

प्रसज्यप्रतिषेधपक्षे हि बाधास्फुरणमात्रमबाधार्थः । [73b] तच्च सन्दिग्धसत्ताकेऽसत्यपि समानम्, कथं ततो नीलादेर्भिन्नवस्तुरूपतां प्रकाशस्य साधयेत्? नीलादिबाध्यमबाध्यस्तु प्रकाश इति भिन्नरूपसिद्धौ कः सन्देह इति चेत्? नैवम्, अबाधाया बाधकास्फुरणमात्रत्वात्, सत्तासन्देहे बाधितादपि नीलाद्भिन्नरूपसिद्धेरयोगात् । अतएव पदे सन्देहस्येत्युक्तम् ।

क्षणभङ्गे तु बाधकान्तरबलादशक्यस्तत्परिहारः । नैतादृशासारसाधनप्रत्याशा । न च तद्वदत्रापि शक्यमभिधातुम् । तत्र हि कदाचिन्मधूदकाहरणादिवत् स्थूलकालापेक्षयाध्यक्षेण व्यवहृतोऽर्थक्रियाशक्तिक्रमः कदाचिदशक्योऽपि क्षणापेक्षया सामर्थ्या-

यातः स्वभावभेदं वेदयेत्। सकलक्रियाचयिणि क्षणेऽभावप्रसङ्गात्, कृतस्य कर्तुं न शक्यत्वात्।

सोऽयं कार्यक्रमो न कारणक्रममतिक्रमितुं क्रमत इति युक्तम्। न च तथेह प्रकाशमात्रसाध्यं किञ्चित् सिद्धमध्यक्षतः, सामर्थ्यायातं वेति। न चापोद्धारेण कार्यभेदव्यवस्थापितोऽप्यात्मभेदः सकृदभेदभासिनि तात्त्विको भवितुमर्हति विकल्पमात्रनिवेशिनोऽन्यत्र, प्रदीपे तमःच्छायावकाशपिञ्जरणोपयोगिप्रकाशपिशङ्गरूपवत्। अभिन्नावभासिनि चेयं चिन्ता। न च क्षणानामभेदावभासनम्, सकलकालकलाव्यापिरूपप्रतिभासस्य सकृदेव पर्यवसाने सर्वस्य त्रिकालालोकप्रसङ्गात्। न चैवमध्यक्षव्यवहार्योऽपि कार्यभेदो भावाभावदशाभ्यां कारणभेदाय प्रभवेत्। एकीकृत्य ग्रहणे हि य एवैकक्षणे भावोऽभावो वा कार्यस्य स एव क्षणान्तरेऽपि, विवेकाभावात्।

तस्मात् क्षणमात्रस्थायिनैव रूपेण यथास्य विषयो जनकस्तथेदमिन्द्रियज्ञानमपि तदनुकारि तेनैव रूपेण ग्राहकम्। अवसायस्तु तद्व्यापारं तिरयति। अत्र तु प्रतिभास एवाभेदेन स्फुटतरोऽनुभूयते। तथापि भेदकल्पने किमपराद्धमुपाधिसहस्रेण? न चानुपलब्धेरन्यद् बाधकं नामेत्युक्तप्रायम्। तदियमबाधा दृश्यानुपलब्धिसंभवे प्रतिज्ञायमाना स्वयमेव विशीर्यते, नोत्तरान्तरमपेक्षत इति।

किं च बाधात्र नात्रेति पृथग्भासे द्वयोर्भवेत्।
अनिर्भासे तदङ्गस्य तत्रासिद्धिस्थितिः कुतः॥

सिद्धोऽपि तत्र हेतुश्चेन्न समर्थः प्रकल्पते।
नूनं न साध्यसंबद्धो नाकारेऽपि ततः क्षमः॥

स्वभावं कारणं वार्थोऽव्यभिचारेण साधयन्।
कस्यचिद् बाढबाधायां स्वभावान्न निवर्तते॥

ननु प्रकाशो नीलादौ प्रतिभात्येव देहिनः।
तन्मात्रे बाधकाभावः ख्याप्यमानः क्षमो न किम्॥

नीलस्वभावाभिदुरप्रकाशकथनेन किम्।
न हि तस्यैव बाधाया विरहं वक्तुमुद्यमः॥

नीलस्य [ स्यात् ] प्रकाश[74a][श्चेत्प्रकाशः] किमतः परम् ।
परतोऽपि भवन्नस्य प्रकाशः शक्यवारणः ॥

नान्यतोऽपि प्रकाशोऽस्य प्रकाशोऽस्यान्य एव चेत् ।
न तन्नीलं प्रकाश्येत प्रकाशेऽन्यस्य तस्य किम् ॥

संबन्धस्य च बाध्यत्वात्तस्येति न समन्वयः ।
षष्ठ्या लाभेऽपि कथमप्यशक्यो रूपसंकरः ॥

यतः कुतोऽपि वा तस्मात् प्रकाशोऽस्यानपह्नवः ।
तदबाधे च न फलं न तन्मात्रं च किञ्चन ॥

प्रत्याशाया स्वभिमतं प्रसिद्धमभिधीयताम् ।
आश्रयासिद्धिनिर्धूता हेतवोऽप्यत एव च ॥

अबाध्यत्वप्रसिद्धार्थाः संकल्पकलितेऽथ चेत् ।
तस्यामर्थसमानत्वाद् विधिसिद्धौ न साधुता ॥

अबाधयैव सत्त्वं चेत् सत्त्वे हेतुस्ततश्च सा ।
इति चक्रकमायातं मायामेतामपोहति ॥

अथाप्यबाधा बाधायाः स्फुरणे सत्यपोद्यते ।
तदभावे तु सिद्धैव संदेहपदमीदृशी ॥

व[र्ग]धर्मस्त्वाश्रीयमाणो न चक्रकमतिक्रामति ।

आश्रयोऽप्यस्तु हेतुस्तु कथ्यतां बाधबाधनः ।
स्वयंवेदनमेवाथ पृथग् नास्तीति दर्शितम् ॥

न च स्ववित्तिरित्येव युक्तः संप्रत्ययोऽपि वः ।
स्ववित्तावपि नीलादेर्यदा बाधाभिधावति ॥

स्वसंवित्तिर्न नीलस्य यदि किं न प्रकाशते ।
प्रकाश्यन्तां परेणेति न शक्यमिदमीदृशम् ॥

परेण परसंविदोऽन्यत्र विस्तरेण निरस्तत्वात् । असत्त्वान्न परमिति चेत् ? मा भूत् परत्वम्, स्वत्त्वं संभवतीत्येवाबाधतैव तेन वेदनसिद्धेर्नापरमुपयोगि, स्वविन्मात्र-

रूपत्वात्तस्य। कल्पिततादात्म्यान्न दोष इति चेत्? बालप्रतारणमेतत्। प्रतिभासादेव हि तादात्म्यकल्पनम्, तत्कृतश्च प्रतिभास इति व्यक्तमितरेतराश्रयत्वम्।

न प्रतिभासनात् कल्पनम्, अपि तु प्रतिभासावसायादिति चेत्? सोऽपि प्रतिभासावसायः प्रतिभासादिति चक्रकमस्तु, तादात्म्यकल्पनातः प्रतिभासस्ततस्तदवसायस्ततस्तत्कल्प[नमिति। तत्कल्प]नमपि न तादात्म्यकल्पनातः, किं तु कल्पनाविषयीकृतं यत्तादात्म्यं तत इति चेत्–न, तस्य कल्पनातः प्रागभावात्, अन्यथा कल्पितत्वानुपपत्तेः। न च कल्पितं क्वचिदर्थक्रियायामुपयुज्यमानमुपलब्धम्, तथात्वे सत्यताया एव प्रसक्तेः।

एतेनालीकतादात्म्यकीर्तनमपि प्रत्युक्तम्, क्वचिदुपयोगेऽलीकत्वस्याप्यनुपपत्तेः। अन्यथा नाममात्रक्रियायां निषेधानिर्बन्धात्। क्वचिदुपयोगिनः प्रकाशमानस्यापि बाधनादलीकत्वमविरुद्धमिति चेत्? प्रकाशस्य न [तर्हि] बाधितुमशक्यत्वात् क्वचिद् उपयोगमपि यदि न बाधते बाधकं किमवश्यं बाधकमभिधेयमिति कुतोऽलीकतादात्म्यस्य? अथ सामर्थ्यादर्थशक्तिं बाधते न साक्षात्? भवतु किमत्र निर्बन्धेन शक्तिबाधायाः सिद्धत्वान्नालीकमुपयोगितादात्म्यमिति स्थितम्।

यदप्युच्यते। विज्ञानमेव प्रकाशरूपत्वात् प्रकाशमा[74b]नमनादिभ्रान्तिवासनोपप्लवत्वाद् भ्रान्तमलीकैर्नीलादिभिराकारैः प्रख्याति स्वप्नादिवदिति, तदपि एतेन प्रतिव्यूढम्।

नीलादिव्यतिरिक्तस्य विज्ञाननाम्नोऽनुपलब्धेः प्रक्रियाघोषणामात्रमेतत्। साध्यशून्यः स्वप्नदृष्टान्तश्च। अपि चैवमलीकतया कारकशक्तेरभावान्नीलादिभिरिति इत्थंभूतविवक्षायामपि सहप्रख्यानमात्रमर्थ इति व्यक्तमुक्तस्तत्प्रकाश्यताविरहः। तत् कथं स्वसंवेदनातिक्रमः? अथाविद्यावासनावशात् तथा ख्यातीति तत्प्रकाश्यतैव भविष्यतीति चेत्? एवं सत्यविद्याहेतुरेव स्यान्न प्रकाशिका। प्रकाशरूपस्य तु तस्य तस्याः सकाशादुदयः, प्रदीपस्येव स्वहेतोरिति कुतः स्वप्रकाशनाशः?

एवमपि परप्रकाश्यताव्यवस्थायां चानुभवस्यापि प्रसङ्ग इति न किंचित् स्वप्रकाशं नाम। तथाप्यसंभवादेव स्वसंवेदनान्न क्वचित् सत्तासिद्धिः। तत्रायं न्यायः, प्रकाशरूपजनकापेक्षया द्वयः स्वसंवित्तेरिति, एवं नीलादेरपीति सिद्धा स्वसंवित्तिः। अथानील[स्याली]कत्वान्न कार्यता ततः प्रकाशनमात्रमविषया प्रकाशेन वा, अनुभवस्य

तु वस्तुत्वात् समनन्तरप्रत्ययेन जननमेवोच्यत इति चेत् ? तदपि यत्किञ्चित्। अनुभवोऽपि हि स्वसंवेदनादेव वस्तु ततो नीलस्यालीकत्वं नाम तदभावात्, तदभावश्चालीकत्वात् कार्यतापरिपन्थिन इति ॥

अपि च, नीलमलीकमस्तु न वा, कार्यता तु कथं वार्यते ? अपेक्षितपरव्यापारो हि स्वभावनिष्पत्तौ भावः कार्यं उक्तः।

कादाचित्कतया सिद्धा नीलस्यास्य सहेतुता।
नित्यं सत्त्वमसत्त्वं वा हेतोरन्यानपेक्षणात्[1] ॥

एवं देशाद्यनियमोऽप्युपलक्षणीयः। न चान्यस्यापि कार्यताव्यवहारनिबन्धनम् अन्यदस्ति देशकालप्रतिनियमसिद्धां परायत्ततामवधूय। अन्यथा ह्यनुभवस्यापि मा भूत्। तदयं श्रद्धामात्रविषयस्य तादृशादेव जन्मजल्पनं दृष्टात् कुतश्चिदाकारान्तरस्य दृष्टानुत्पत्तिं प्रतिक्षिपतीति किमत्र ब्रूमः ? एतेनाभूत्वाभावेऽपि शक्त्यभावान्न कार्यत्वमिति निरस्तम्, उक्तक्रमेण शक्तिव्यवस्थानात्। श्रद्धाविषयस्य तु चिन्त्यतामदर्शनात्। मा भूत् शक्तिः, परापेक्षोदयतया कार्यत्वं तु किं निवर्तते, अतद्व्यावृत्तेरनपायात् ?

अथ वस्तुधर्मः कार्यत्वम्, न च शक्तिमन्तरेण वस्तुत्वम्। तर्हि शक्तिरप्यस्तु, तद्व्याप्तवस्तुधर्मकार्यत्वस्य दर्शनात्। शक्त्यभावात् तदेव नास्तीति चेत्– न, असिद्धत्वात्। कार्यत्वे तु न सन्देहः कार्यान्तरवत्। तस्माद् यदि शक्तिकार्यत्वयोः प्रतिबन्धः शक्तिरनुमीयमाना क्वचिदस्तु नानूहमात्रेण प्रतिक्षेपः। प्रतिबन्धाभावे तु सिद्धं कार्यत्वम्। अतः कथमुच्यते नीलस्याकार्यत्वात् [75a] प्रकाशमात्रहेतुभिः यतो न स्वसंवेदनमिति।

किं च प्रकाशनमात्रं कस्यचित् केनचिदित्यप्रतीतोपादानान्तरसंभवे पूर्वापरक्षणानामभेदाध्यवसायाद् घटादिवदालोकेन स्यादपि वक्तुम्, अलीकाभिमते तु कीदृशी दुर्गृहीतिरियम् ? अपूर्वोत्पत्तिस्तु न विरुध्यते केवलं नीलतयेव प्रकाशतयापीति। मा भूद् वा सर्वथा कार्यत्वम्, तदापि परापेक्षानियमे परप्रकाश्यताशङ्कापि स्यात्। सर्वथा निरपेक्षत्वे निःसंशयः स्वयं वेदनाभावः सर्वाकाराणाम्। तत्र च बाधसन्दर्शनेऽन्यत्रापि सिद्धः सत्ताश्वासविरहः। अथवा,

१. तुल० प्र. वा. १. १८१–२.

नीलाद्भिन्नमबाधया यदि मतं बाधाविधूतिः कुतो-
ऽनारोपादिति यद्यबाधनफलादन्योऽन्यभावाश्रयः ।

बाध्यमानमेव नीलमारोपितमाहुः । तदा बाध्यतायाः एव फलमनारोपितत्वं कथमबाधसिद्धये प्रभवेत् ?

विज्ञानस्य तदेव रूपमिति चेन्नीलात्मनस्तन्न किम् ।

यथा हि प्रकाशस्य प्रकाश एव रूपम् न तु तस्य विप्लवोपनीतमित्युच्यते, तथा नीलस्यापि नीलतैव रूपं न तत् तस्य विप्लवोपनीतमित्युच्यमानमपि न वक्रं वक्री-करोति । न च न्यायस्य विभागेन वृत्तिः, यतः एकमुपादेयं हेयमन्यदिति स्यात् । अथ प्रकाशमन्तरेण न नीलस्थितिः, नीलमन्तरेणापि न प्रकाशस्थितिः । पीतेऽस्तीति चेत् ? अस्तु, न तु नीलधर्मः । प्रकाशशब्दसाम्याचेत् ? तर्हि पीतधर्मप्रकाशापेक्षया प्रकाश-विनाकृतस्यापि नीलस्य स्थितिरपह्नवस्य विषयः ।

ततस्तस्य तदेव रूपमिति नेयं प्रकाशैकनियता कल्पना, यतस्तस्यैवानारोपित-त्वेन बाधावैधुर्याश्वासः । उभयोस्तर्हि परस्परं व्यभिचारादनायाससिद्धो भेदः सिध्यतु । नीलोत्पलं च निदर्शनं स्मारयामः, वस्त्रोदकस्य निदर्शयितुमशक्यत्वात् । स्थिति-प्रच्युतिलक्षणयोरिव विरुद्धयोर्धर्मयोरुद्दिष्टाधारयोरनुपलब्धेरेवेति भवन्त एवात्र प्रमाणम् । तदलमभिनिवेशवशतया । तस्य तदेव रूपमिति श्रद्धेयस्य,

संकल्पैकनिवेशिनो यदि तथा निर्भासिनः किं न तत् ॥

सत्यत्वं नीलस्य, केवलं स्वरूपनिर्भास एवास्य सत्तासिद्धावधिकोऽपराधः । किं चापूर्वोऽयमुपायस्तस्य तदेव तत्त्वमिति बाधाविधूतये । बाध्यमपि हि प्रधान-सामान्यादि,

यद् येन रूपेण विकल्पितं वा विभाति वा तस्य तदेव तत्त्वं
प्रमाणतस्तत्तु सदन्यथा वा बाधावकाशो द्वितयेऽपि तस्मात् ।

नीले प्रकाशे वा । यदि परमसिद्ध्यादिदोषस्य विभागेन वृत्तौ विभागः, न तु तदेव तत्त्वमिति कृत्वा । किं च,

आरोपितं कल्पितमेव बाध्यं प्रकाशभृद् बाध्यमलीकमाहुः
तत्त्वं ततः कल्पितनिष्ठमेव मा वास्तु दृश्यैकगतं कथं स्यात् ॥

आरोपितत्वं जलवत् कल्पित एव व्यवह्रियते केवलं बाध्ये। प्रकाशमानं तु बाधितमलीकमपि व्यपदिशन्ति, द्विचन्द्रवत्। ततो यदि दृश्यमप्यारोपितमिति वक्त[75b]व्यम्, उच्यताम्। दृश्यमेवारोपितमिति तु कुत एतत्? तस्मान्न कल्पितमारोपपरिहारेण व्यवस्थितं प्रमाणसिद्धादन्यत्र। अतः प्रमाणेन सिद्धिर्बाधा वा निरूपणमर्हति। न तु तस्य तदेव तत्त्वमित्येव बाधोद्भूतिः सिद्धिर्वा।

तदयमपि विभागः क्रियमाणो नीलादयः संवृतिसन्तः प्रतीयमानत्वेऽपि बाध्यमानत्वात्। नीलादिप्रतिभासं तु प्रकाशशरीरं विज्ञानं परमार्थसत्, बाधकायोगात्, प्रमाणसिद्धशक्तियोगाच्चेति हस्तसमारचित एव प्रतिभाति। नीलव्यतिरिक्ते हि प्रकाशे नीलवद् व्यापकानुपलम्भस्य पक्षधर्मोपसंहारो नानिच्छामात्रेण निवर्तेत इत्याद्युक्तम्। बाधा च प्रकाशाभिमतस्याप्रकाशात् कीदृशी परेत्यपि। तथा शक्तिरप्याकारगोचरैव इत्यनन्तरम्।

व्यतिरेकश्चायं कृतकानित्यत्ववत् कल्पनामात्रोपनीतः प्रतिभाति, न साक्षान्निर्भासी। यमलकवत्, द्विचन्द्रवद् वा। भिन्ने च प्रतिभासमाने धर्मिणि शक्यमधिगन्तुमत्र धर्मोऽयं संभवी, न संभवी चात्रेति। विशेषतो व्यापकानुपलम्भस्य विपर्ययेण वस्तुधर्मस्यैवोपनेयत्वात्। सर्वश्च भेदसाधनो व्यवहारसाधन एव, विरुद्धधर्मसंसर्गमन्तरेण क्वचिदपि भेदासिद्धेः। अन्यथा न क्वचिदभेदो नाम विरुद्धौ च धर्मौ न कल्पनामात्रेण भिन्नः। प्रमाणतश्च भिन्नाधिकरणावेव प्रत्येतव्यौ, निराधारयोः भिन्नाधारयोर्वा प्रतीतौ न [प्रमाण]प्रमाणयोरन्यतरव्यापारो विरोधसिद्धिर्वा। भिन्नधर्मिणोश्च तयोः सिद्धौ कोऽपरो धर्मिभेदसाधनव्यवसायः?

अतएव व्यवहारसिद्धिमुखं प्रतीतिनिर्णयः। तत्र धर्मिभेदसिद्धिः क्वचिद् देशभेदेन गोलकवत्, क्वचित् कालभेदेन। यदधिकारेणोच्यते, अत एव तयोरवस्थयोः वस्तुभेदो निश्चेय इति। न हि तत्रापीयं कुशूलावस्था, इयं क्षेत्रावस्था चेति। कालभेदेनानुपदर्शने करणाकरणाभ्यां भेदः शक्यदर्शनः।

तावता च भेदसिद्धिरवसितेति क्रियाक्रियोपन्यासो व्यवहारसाधन एव। यत्र तु न देशकालाभ्यां भेदोल्लेखः, तत्र प्रतिभासभेद एव शरणमिन्द्रियभेदो वा। पानकस्य रूपरसादिवत्, चार्वाकस्य स्वाभ्युपगम इव बुद्धिशरीरयोः। स हि शैलादिविकल्पं करचरणाद्याकाराच्छरीराद्विसदृशमनुदाहरणे फेनाकारेण शैलादिविकल्पतां

स्फुटयेत् ? यत्र तु प्रतिभासभेदगन्धोऽपि नास्ति कल्पनाकारादन्यस्तत्र नीलोत्पलादिवदभेद एव तात्त्विकः।

अभिन्नवेदनस्यैक्ये यन्नैवं तद्धि भेदवत्।
सिध्येदसाधनत्वस्य भेदाभेदौ किमाश्रयौ ॥

इत्यन्तरश्लोकः।

तस्माद् बाधाबाधलक्षणविरुद्धधर्माध्यासो धर्मिणः प्रतिभासभेदमन्तरेण न भेदव्यवहाराय प्रभवति। केवलं भेद[76a]साधनं सत्तासाधनरूपत्वान्न त्रयीं दोषजातिमतिपतति। यदप्युच्यते, यद्येन रूपेण नैकं नानेकं, न तत् तेन सत्। तद् यथा दुःखं सुखरूपेण। नैकं नानेकं च विज्ञानं नीलादिरूपेणेति व्यापकानुपलब्धिरिति, तदपि हृदयपरितोषमात्रमेतेनैव निरस्तम्। तथाहि न विज्ञायते न विजानातीति वा व्यापारनिबन्धनं विज्ञानत्वमिष्टमन्यत्र निषेधात्, किं तु स्वप्रकाशतास्वभावम्। स च प्रकाशस्तेनात्मना असन्निति न तादात्म्यनिषेधमात्रमभिमतम्, किं तु स्वेनात्मना सन्नेवेति।

अनेन तद्वद् दोषानवतारादित्यप्याक्षिप्तम्। अन्यथा न व्यतिरेकसिद्धिर्वन्ध्यासुतेऽपि व्यवच्छेदमात्रेण प्रसङ्गात्। ततश्च बाधाबाधाभ्यामेव भेदसिद्धिरित्यस्मान्न कश्चिदतिरिक्तोऽर्थ उपात्त इति तेनैव गतमेतत्। तथापि किञ्चिदुच्यते। इहाकारव्यतिरिक्तप्रकाशसाधनप्रकरणेऽप्रतिभासमान एव वा प्रकाशोऽनुमानेन साधयितव्यः, प्रतिभासमान एव वा आकाराद् व्यतिरिक्तो विधातव्यः, उभयथापि तु विधिसाधनाधिकारे कः प्रस्तावो व्यापकानुपलम्भस्य ? तदाहितेन रूपेण सत्त्वेऽपि स्वरूपेण यदि असत्त्वशङ्काया न निवृत्तिः शृङ्गस्येव कुतो भेदसिद्धिः ?

अथ तयोरभावो भावान्तरस्वभाव एवाभिमतः, तदा स्वभावहेतुरेव प्रयोक्तव्यः, विधिविषयत्वाद् विवादस्य। यदा तु तदभावेऽपि तत् स्यादिति संशयीत कश्चित्, तन्मात्रे युक्तो व्यापकानुपलम्भः। न चैकानेकवियोगेऽपि सत्त्वशंकायाः प्रस्तावः। न च विपर्ययविवक्षायां क्षेमः। तदा हि यद् येन रूपेण सत्, तत् तेन एकमनेकं वेति दर्शनीयम्। न चात्र दृष्टान्तः पक्षधर्मोपसंहारो वा शक्यनिर्वाहः। न हि प्रकाशमात्रं क्वचित् सिद्धमन्यस्य चासत्त्वादिति कुतो दृष्टान्तः, क्व पक्षधर्मोपसंहारो वा, अन्यसाधनाभावात्, तत्साधनत्वे वा अनवस्थाप्रसङ्गात् ?

प्रकाशश्च प्रकाशरूपेण सन्निति पक्षधर्मोपसंहारकाले [वा] नाप्रकृतोपालम्भपरिहारः। न हि स्वरूपेणैकानेकत्वे विवादः। किं त्वाकारेण सह भेदाभेदे। एकानेकत्वविवादिनो वा सत्त्वसिद्धिरिति कुतः ? शक्त्यभावादेव तर्हि नीलादिरसन्नेकानेकत्वेऽपीति किं तदुपन्यासप्रयासेन, तदभावेऽपि प्रसज्यशक्त्या सत्त्वव्यवस्थापनात् ? अन्यथा तत्संशये च कथमवस्थापयेत् ? सा च चिन्तयिष्यते।

अथ तेनैकानेकभाव इति स्वरूपेण एकानेकभावः, ततस्तेनैव सत्त्वमित्यभिमतम् ? तदापि किं पुनरस्य तत्स्वरूपं येनैकानेकतायोग इति प्रश्ने यदीदमेव तर्जनीनिर्देशयोग्यमिति उच्यते, तदा नीलमेतदिति न तेनैकानेकं विज्ञानमिति ध्रुवत एतत्। अथान्यत् ? तन्न सिद्धम्। सिद्धौ वा किमनेन ? स चोपालम्भस्त[76b]दवस्थः। भिन्नस्य हि सिद्धावेव विवादः, न तु तस्मिन् सिद्धेऽपि किं पररूपेणापि तस्य सत्त्वम् इति प्रस्तावः।

अथ सिद्ध एवायं प्रकाशो धर्मी, तस्य नीलादिरूपेणासत्त्वसिद्धौ सामर्थ्यलब्धो भेदः, तावता च सिद्धमभिमतमतो न विधेरनुरोध इति व्यापकानुपलम्भ एव प्रकृतोपयोगीति चेत् ? महतीयं वैदग्धी, केवलमविद्यापि नीलादिना असन् प्रकाशो यदि स्वेनापि रूपेण तथा, तदा का भेदसिद्धिः ? ननु तस्यासत्त्वाशंका नास्त्येव, स्वसंवेदनप्रत्यक्षसिद्धत्वात्, स्वभावे भ्रान्त्यभावात्। भेदे एव हि विवादः। तादृशी तर्हि सिद्धिः नीलस्यापि कथं बाधा ? प्रकाशस्य प्रकाश एव रूपमित्यादावुक्तमेव। शक्यं च नीलप्रकाशस्य नीलप्रकाश एव रूपमित्यादि वक्तुम्। ततो भेदाधिक्षेपेऽपि[1] यदि स्वानुभवो बाधकमनवकाशीकुर्वन् प्रकाशसत्तां साधयेत्, तथापि किमनेन ? तथा अशक्तावपि किमनेन, नीलवत्तत्रापि हस्तकत्यागावर्जनात् भेदासिद्धेः ?

अथ परस्य परमार्थसत्त्वेन सिद्धः प्रकाशो भेद एव विवादस्ततः सन्नेव प्रकाशो न नीलात्मनेति साध्यसिद्धिः। सर्वोपायपरिक्षीणन्यायपर्यवसाना तर्हि वैदग्धी। तदेतदात्मवादिनो घटनैरात्म्यसिद्धिन्यायेन हेलामर्हति। किं चास्मिन् साधनेऽभेदावभासिनोरनुभवाकारयोर्भेदः प्रतिज्ञार्थः, तद्रूपेण एकानेकविरहो हेतुः। न चास्य यथोक्तसाध्येनान्वयो दृष्टान्ते दर्शयितुं शक्यः। तत्रापि दुःखाद्याकारव्यतिरेकिणः प्रकाशस्य असिद्धेः। सिद्धावपि यथा शातमशातेनेति न वक्तव्यम्। यथा दुःखानुभवो दुःखाद्याकारेणेति युक्तम्।

1. °धिमोक्षेऽपीति मातृकायाम्।

अन्यथा ह्याकारान्तरपरिगृहीतप्रकाशस्याकारान्तरेणासत्त्वख्यापने तदपेक्षयैव भेदः स्यात्। ततश्च साध्यकाले नीलाकारस्य पीतानुभवाद् भेदः सिध्येत्। ततो यदि स्वप्रकाशापेक्षो भेदो दृष्टान्ते नोपदर्शयितुं शक्यः साध्योऽपि कथं भविष्यति, अन्वयस्य एवाभावात् ?

यद् येन नैकानेकमिति सामान्येनान्वयोऽत्रोक्त इति चेत् ? तदसत्। यतः,

अनुक्तोऽपीच्छया व्याप्तः साध्य आत्मार्थवन्मतः।

तदेतदपि चक्षुरादिपारार्थ्यसाधनादिना समानम्। अथवा यद् येन नैकानेकम् इत्यत्र यदभिन्नाभासि येनावभासिनेति विवक्षितम्, अथ सामान्येनेति विकल्प्य,

विशेषेऽनुगमाभावः सामान्ये सिद्धसाधनम्।
[ ]

सुखदुःखयोरिव नीलपीतानुभवयोरपरस्पररूपतया तेनात्मनासत्त्वाकृष्टभेद-सिद्धेः, अभेदग्राहिणस्तु प्रत्यक्षस्योभयत्रापि न क्षतिः। शेषमस्मद् बृहदीश्वरवादवत्। अपि च यदा प्रकाशश्च नैकानेको नीलादिनेति पक्षे हेतोरुपनयः, तत्र कोऽयं प्रकाशो नाम, प्रकाशनम्, प्रकाशत इति वा ? अथार्थान्तरमेव किञ्चित् प्रकाशशब्दाभिधेयं प्रकाशयतीत्यादिव्यापारापेक्षया व्यवस्थितेर्निरस्त[77a]त्वात् ?

प्रथमपक्षे प्रकाशमानानां नीलपीतादीनां प्रकाशो नाम धर्ममात्रमेतत्, भेदान्तरप्रतिक्षेपेण भिन्नवदाभासमानमपि कल्पनाबुद्धौ न धर्मिरूपविघटने तटस्थम् आसितुं शक्तम्, तत् कुतस्तत्त्वतो भेदसिद्धिः ? न हि धर्मिरूपमुद्धूय धर्माणां क्वचिदपि सत्त्वमस्ति, गुणकर्मादिवत्। कर्तृसाधनपक्षे तु नीलादिरेव प्रकाशत इति तस्यैव तेन रूपेण शून्यतेति पूर्ववत्।

अर्थान्तरपक्षे च यदि प्रकाशत इति सान्वयपदं, तदा नीलादिव्यतिरिक्तस्य तस्य दृश्यानुपलब्धिबाधितस्य तेनात्मनासत्त्वेऽपि न साध्यसिद्धिः। निरन्वयनाश-पक्षेऽपि न प्रमाणसिद्धिः, तत्र च व्यवच्छेदमात्रयोः साध्यसाधनभावाश्रयादाश्रया-सिद्धिपरिहारेऽपि न प्रकृतोपयोगः। अथायमेव प्रतिविदितः प्रकाशो धर्मी। ननु प्रतिविदित इति प्रतिभासमानः स च नील एव, न तद्व्यतिरिक्तः कश्चित्।

ननु तद्व्यतिरिक्तसाधनायैव यत्न एषः, कथं प्रथमतस्तत्प्रार्थनमिति चेत् ? किमपि साध्यमस्तु भवतः, साधनाधारस्तु निश्चितस्वरूपो दर्शनीयो यदि प्रकाशो नाम

वस्तुरूपो धर्मी संमतः। यदि तु साध्यसाधनयोर्व्यवच्छेदमात्रतानुरोधात् अवस्तु संदिग्धवस्तुभावो वा धर्मी, तदा नायं नियमः। प्रकृतसिद्धिस्तु दूरे। अथ प्रकृतसिद्ध्यनुरोधाद् वस्तुभूतः प्रकाशो धर्मी, तदा निष्ठितस्वरूपः स्वीक्रियमाणो नील एव स्यात्। तत्र रूपं रूपस्वभावेन शून्यमित्यायातम्, तथापि न प्रकृतसिद्धिः। न च तेन शून्यतयान्येन स्थितिरित्यनाकारप्रत्याशा। मा भूदन्यरूपेणान्यस्य शून्यतया सिद्धसाधनशंकेति तावतापि तेनेत्यस्य चरितार्थत्वात्।

साकारनये वा तैमिरिकदृष्टचन्द्रद्वये चन्द्रद्वयरूपशून्यतावदध्यवसितबाह्यनिषेध एषः। सर्वत्र चारोपितस्यैव निषेधात् सर्वत्र च स्वाकारे बहिरारोप एव पृथग्जनस्य, अन्यथा तत्त्वहानेरिति। तस्मान्न नीले धर्मिणि प्रकृतसिद्धिः। अथ किमनया विशेषनिष्ठया, प्रकाशो नाम सामान्येन धर्मी मतः। विशेषनिष्ठया च साध्यावधूतेः साधनोपन्यासप्रतिबन्धप्रसङ्गात्। न च साध्यमनभिसन्धाय साधनप्रयोगः कस्यचित्। नापि निरस्तसाध्यो धर्मी कचित् क्रियते, सिद्धसाध्यवत्। अतो न विशेषनिष्ठायां भरः। भवतु वा सापि।

अयमेवासौ पुरःप्रकाशो नाम नीलेन सह यस्य पृथग्भावे सांशयिकोऽसीति भवतु दोहदोपरमः। दृष्टश्च व्यावृत्तिभेदेन धर्मधर्मिभावो यथा स्वभावहेतौ तदेका व्यावृत्तिर्धर्मिणी, अन्यया सह पृथग्भावः साध्य इति न कश्चिद्दोषः। तदप्यसंगतम्। यतः,

युक्ता व्यावृत्तिमात्रेण साध्यसाधनसंस्थितिः।<br>धर्मिरूपं तु भेदेन दृष्टमेवोपयुज्यते ॥

सामान्याकारमन्तरेण हि प्रतिबन्धबोधस्याशक्यत्वात् [77b] प्लवमानरूपयोः साध्यसाधनयोर्धर्मिस्वरूपनिष्ठयैव तत्त्वस्थितिः, न तु धर्मिरूपस्यापि लवमानतायां, व्यावृत्तिमात्रेण, इदं च तथेति शाखिशब्दादेः स्वलक्षणानुपदर्शनेऽप्रतीतेः। व्यावृत्तिभेदस्तु भेदव्यवहारार्थमपेक्ष्यते, न धर्मिसत्तार्थं, व्यक्तिविशेषनिष्ठतयाप्रतीतौ तस्या एवासिद्धिप्रसङ्गात्। यथा चायं शाखादिमान् श्रवणग्राह्यो घटादिशब्दो वाधर्मीति, स्वलक्षणे धर्मिणि प्रतीतेऽपि विरोधाभावात् वृक्षक्षणिकत्वादिसंदेहे साधनानुसारः, तथा न प्रस्तुतेऽस्त्यवकाशः।

तथा हि यावदेवायमिति तर्जनीनिर्देशयोग्यो धर्मी नीलतया उपनीतस्तावतैव भेदसन्देहप्रच्युतेर्न साधनावतारः, तन्नीलरूपमन्तरेण प्रकाशस्य रूपविशेषनिष्ठानुपपत्तेः। अप्रकाशव्यावृत्तिमात्रस्य हि क्वचिद् व्यक्तौ निष्ठायामात्मलाभः, अशब्दव्यावृत्तेरिव, न प्रत्येकापोहे। ततोऽभावशंकावशान्न वस्तुसन् धर्मीष्टः सिद्धः। ततो वस्त्वपेक्षायां सर्वस्य सामान्यस्य विशेषरूपेणैवार्थकारितया वस्तुत्वान्नीलस्यैव धर्मिण उपनये पर्यवसितो भेदाभेदनिरूपणप्रक्रमः। क्षणिकादिरूपता तु सन्देहविषयः स्यात्, अप्रतिक्षेपात्।

इह पुनरयमेव स धर्मी प्रकाशत इति नीलरूपतया वादिनैव दर्शिते किमिदानीं सभ्यैर्वेदितव्यम्? अथ पश्चात् पक्षधर्मोपसंहारे न दोषः? दोष एव, प्रकाशश्च नीलेन नैको नानेक इति पश्चादुक्तोऽपि, कोऽसौ प्रकाश इति नीलरूपतायामेव निष्ठानात्, भेदान्तरस्य दर्शयितुमशक्यत्वात्, विशेषादर्शने च धर्मिणः सद्रूपस्याशक्यनिर्वाहत्वात्। यद्यपि च स्वभावहेतावतद्रूपपरावृत्तमुभयमपि वस्तु, तथापि नैतदेव कृतकत्वादि किं त्वेतदपि। ततो दृष्टान्तसाधारणतया सामान्यमुच्यते न धर्मीरूपम्। एतदेवमिति असाधारणेनैव रूपेण प्रवृत्तिनिवृत्त्यर्थितयापेक्षणीयत्वात्।

अतएव साध्येऽपि दृष्टान्तद्वारेण विशेषजिज्ञासोच्छेदः। मा भूत् सर्वव्यक्तिवियुक्तावसत्त्वमेव। अन्ततः पक्षेऽपि तल्लक्षणान्न व्यक्तिविरहः। क्षणिकत्वादेरप्येत एव व्यक्तिभेदाः। काल्पनिकं तु भेदमास्थाय तत्त्वतो व्यतिरेकविवेकेऽपि साध्यसाधनभावः। तथा यदि काल्पनिकेन भेदेन धर्मिभावोऽपि स्यात्, अस्तु तेनैव रूपेण तस्य वस्तुत्वमिति स्वयमुपगमे कस्तन्निषेधाय योगः? परो वा कथमन्यदाद्रियेत यद्धर्मिरूपनिरूपणेनैव प्रतिहतम्? अतएव यथा तस्य साध्यार्थो यत्नस्तथा परस्यापि साध्यार्थिन एव धर्मिरूपगवेषणम्। सोऽयं तदनादरोदारवत् प्रसवार्थिनो न प्रेक्षां लक्षयति। ततो यस्य साध्यस्य धर्मिस्वरूपविशेषनिष्ठयैव प्रतिहतिस्तदनुमानेनालम्।

सिद्धे धर्मिणि संदिग्धो धर्मः साधनमर्हति।
धर्मिरूपविशेषस्य निष्ठायां [78a] तु हतो हतः॥

अत एव,

समयाहितभेदस्य परिहारोऽपि धर्मिणः।
प्रमासिद्धविशेषे हि धर्मिण्येवमसंभवः॥

न खलु स्वयमप्रकाशं परेण नाम प्रकाशीभवति, यो हि यस्य स्वभाव इत्यादिवचनात्। अथालोकाभिमानिनः स्वभावान्तराभावान्नैवमिति मतिः? स्वभावान्तरविरहादेव तर्हि प्रकाशमात्रमस्य स्वभाव इति किं प्रकाशान्तरेण? क्वारूढं तदलीकम् आभासतामिति तु ज्ञानादिसमाश्रयात्मवादेन तुल्यम्। अयं तु विशेषः, प्रमेयस्यात्मनोऽप्रकाशतया स्थितिरविरुद्धेति प्रहारान्तरमपेक्षते, प्रकाशात्मनस्तूच्चारणमपि न क्षमत इति किं विफलगुरुभिरायासैः। मा भूद् वालीकत्वे स्वप्रकाशावर्जनम्। तेन तस्यानात्मभूतस्य प्रकाशने बाह्येन कीदृशः कृतोऽपराध ?

अलीके तस्य शक्तिश्चेद् वस्तुन्यस्तमयेत् कथम्।
निर्विबन्धमतः सिद्धो धर्मोत्तरमनोरथः॥

यदि साहायकापेक्षा वस्तुन्येव स्फुरत्यसौ।
तादात्म्यकल्पनायाश्च पात्रं वस्त्वेव युज्यते॥

अलीकभेदस्फूर्तौ च नाकारस्य यथाश्रयः।
बाह्यभेदप्रकाशे च तथाकारेण किं फलम्॥

अथ बाह्यान्ययोर्नैकयोगक्षेमत्वमिष्यते।
बाधापि बाह्यस्यैवास्तामलीकत्वमतः कुतः॥

बाह्यस्य सिद्धिरिव बुद्धिकृतास्तु बाधा-
प्यौचित्यमेतदसकृद् व्यवलोकितं च।
सिद्धिर्धियः परधियो न यथा तथा न
बाधापि न स्वमुपहन्ति बहिर्मतोऽपि॥

इत्यन्तरश्लोकः।

न चालीकस्यासद्रूपत्वात् क्वचिच्छक्तिरिति साधकतमत्वापेक्षः करणभावोऽपि यत्नसाधितोऽयत्नशीर्णः। विज्ञाननयावतारणार्थश्चायं क्रमः संमतः। अतश्चैवं यत् द्वैतरूपसिद्धौ पुनरसाधारणो निर्बन्धः प्रमाणवार्तिके, ततो यदि निराकारमेव तत्त्वतो ज्ञानमभिमतम्, आस्तां तावदाकारस्य कारणतास्थितिः, आकारवद् बाह्यस्यापि वेदनानपह्नवत्वात् कुतो विज्ञानमात्रतासिद्धिरित्यलीकाकारसाधनं स्ववधाय कृत्योत्थापनं यत्नेनेत्यायातम्। अभिन्ने त्वाकारे स्वरूपविशेषान्नीलं दृष्टं न पीतमित्यवसाय-

साधनसामर्थ्याद् बहिरभावेऽप्याभि[79a]मानिकी प्रमाणव्यवस्था तावत् सिध्यति। ततः प्रारब्धविचारस्य ग्राह्यलक्षणाभावात् स्ववेदनमात्रसिद्धेरप्रतिबन्धः। अतएव तदन्ते,

नीलादिरूपस्तस्यासौ स्वभावोऽनुभवश्च सः

[प्र. वा. २. ३२८]

इत्यादि ब्रुवाणः शोभेत। अथैवमपि पश्चाद्व्यापकाभावाद् बाह्यस्याकारस्य वा वस्तुतां निरस्य प्रकाशमात्रं स्थापयिष्याम इत्यभिप्रायः? तर्हि किमादितः प्रभृत्याकाराराक्षस-प्रसाधनप्रबन्धेन? यथैव निराकारेयं बुद्धिराकारवान् संवादो बाह्य इति स्वपरमतिः, तथैव व्यवस्थानुपलम्भमवतार्य कार्यसिद्धिरस्तु। ततः कुतो ग्राह्यलक्षणचिन्ता? न वा प्रकाशमानसहोपलब्धौ हेतू वक्तव्यौ, आकारसाधनद्वारेण दोषात्, व्यापकानुप-लम्भस्यावश्यमपेक्षणाच्चेति साधु सिद्धं धर्मोत्तरसमीहितेन।

एतदेव च प्रकारत्रयमाचार्यस्य सर्वत्र विज्ञप्तिमात्रतासाधनमाञ्जसं पश्यामः, समर्थनतात्पर्यं चात्रैव, व्यापकानुपलम्भे तु पूर्वाचार्यचर्चितेऽनुमतिमात्रम्, स्थूलवत् परमाणुदूषणाभावात्। ततो यदि धार्मोत्तरे परमाणुप्रतिविधावनवधानम्, एकमनेकं च रूपं तेषां नेति वचनादयत्नो मुख्यतया चानुपश्यामः सिद्ध एवेति सकलमाकुल-माचार्यमतमत्र मते। न च तावता क्षतिः काचिद्, यदि न्यायगन्धः स्यात्। तत्र किञ्चिदुक्तमेव। किं च मा वेदि बाह्यं प्रकाशवेद्यमलीकमित्यपि प्रकारान्तरेण ग्राह्य-ग्राहकस्थितिरुपनता। तेनाप्रकाशने च प्रसज्य स्वप्रकाशतावकाशिनीति किं प्रकाशा-न्तरेण? तस्मात् सिद्धाः स्वसंवेदनत्वेन ज्ञानरूपा रूपशब्दादयः, असाधारणत्व-स्यापि बहिरर्थदूषणेऽस्माभिः प्रसाधनात्। अत्रापि स्वसंवेदनमात्रमनैकान्तिकं तात्त्विकं चासिद्धमिति बालविभीषिकातो न भेतव्यम्। काल्पितस्यानुपपत्तेः तात्त्विकस्यैव साधितत्वात् न विकल्पद्वयावकाशः।

अत एव विज्ञानस्याप्याकारानतिरेकादलीकतां साधयतो नासिद्धिरनेकान्तो वा शक्यः। यदपि विपर्ययेणोच्यते, यस्य यदबाध्यं रूपं तस्यासौ प्रकृतिः, तद्यथा सर्वधर्माणां बोधात्मा। अबाध्यं च रूपं बोधात्मनः सत्त्वमिति स्वभावहेतुरिति, तदप्यनेनैव निरस्तम्। भिन्नस्य धर्मिणोऽसिद्धेर्नीलस्य च बाधनादिति॥

तस्मात्,

अनुमानप्रसिद्धेऽपि संबन्धविदपेक्षया ः।
रूपं तदनुसारेण विशिष्टमुपकल्पितम् ॥

तथासंभवेऽपि पुनरयं च प्रकाशस्तथेति वक्तुमशक्तेः पुनस्तदवस्थः प्रकृतहानिदोषः ।

नीले धर्मिण्यभ्युपेतस्य बाधा
सिद्धो नान्यः सत्य इष्टो वृथा च ।
रूपानिष्ठा संभवे तत्त्व एवा-
रेकः केकासाधने यद्वदुक्तः ॥

किं च यद् येन रूपेणेत्यादिप्रयोगे यदि नैकं नानेकं च नीलादिविज्ञानेनेति पक्षधर्मोपसंहारस्तदा को दोषः ? ततश्च शक्यमेवं पठितुम् ,

येन रूपेण यन्नैकं नानेकं तेन तन्न सत् ।
यथा ज्ञातमज्ञातेन प्रकाशेनासितं तथा ॥

तावद्देशव्यापिनो नीलस्येव प्रकाशस्यापि स्थूलाणुरूपविरहः केन वार्यते ? ततोऽस्ति नीलं न तु प्रकाशरूपेणेति । ततो भिन्नजडरूपसिद्धिः । अलीकस्तु प्रकाशात्मा । युक्तं चैतत् ,

विद्युदुद्योतसंकाशः प्रकाशः कस्यचित् क्वचित्
तमपेक्ष्य स्थिरो बाह्यः प्रकाशोऽलीकता ततः ॥

अलीकनीलजनने यथा शक्तिर्मता धियः ।
अलीकबोधजनने तथा शक्तिर्मता बहिः ॥

नैवं त्वयाप्यनिष्टेरित्येतद् वक्तुं न लभ्यते ।
ईदृक्साधनमज्ञात्वा ममानिष्टिर्यतोऽभवत् ॥

प्रकाशः केवलो नापि क्वचित् केनचिदीक्षितः ।
सुखादिरपि विज्ञेयाकारो बुद्धिस्ततः परा ॥

प्रतिभासाद्यभिज्ञानं सुखं सोऽस्ति शितेरपि ।
प्रतिभासेऽप्यभेदेन प्रतिभासः शितेरपि ॥

अथ व्यापकानुपलम्भस्तस्य तत्रावतारयितुमशक्तिः ? एवं तर्हि दुःखमपि प्रकाशात्मैवेति न कदाचित् प्रहीयेत। अपि चैवमवयव्यादेः प्रत्युज्जीवनप्रसङ्गात् सर्वमादितः प्रभृति शीर्णम्। तस्मान्न क्वचिदभेदप्रतिभासे भेदसिद्धिः। अतएव सर्वो भेदहेतुर्व्यवहारसाधन इत्युक्तम्।

येऽप्याहुः द्वैताभासो धर्मी भ्रान्तत्वात् सत्यसंगतोऽवश्यं तैमिरिकचन्द्रविम्बद्वयनिर्भासो यथादृष्ट इति, तेषामप्यसत्प्रकाशो भ्रान्तिरभिमतेत्येषा प्रत्याशा। सा च नित्यस्येत एव [निरस्ता]। एवं मायाख्यातिरसत्येत्याद्यपि निरस्तम्। न च मायाकारो नाम स्वप्रकाशाकारव्यतिरिक्तः सिद्धः। ज्ञानान्तरभवं च ज्ञानान्तरमिष्टम् इति।

येऽप्यनुवृत्तव्यावृत्तरूपतया भेदमाहुः, तेषामपि कल्पनामात्रमेतत्, सामान्यवत् प्रमाणसिद्धेरभावादित्युक्तप्रायं वस्त्रोदकप्रस्तावे। तदयम्,

प्रकाशं नीलमित्येतद् भिन्नोपाधिनिबन्धनम्।
विशिष्टप्रत्ययत्वेन कुण्डलीप्रत्ययो यथा॥

इत्येतत्पर्यवसानो वादः। तस्माद् यथास्वं समनन्तरप्रत्ययप्रभवेषु नीलपीतादिषु प्रकाशभेदेषु [78b] परापोहमात्रव्यवस्थापितशरीरः प्रकाशो नाम कल्पितं धर्ममात्रमेतत्, तेषामपायेऽप्यनुपहतमिति स्थवीयसी भ्रान्तिः।

अथ विपरीतो धर्मधर्मिभावः प्रसिद्धः, तत्रापि न प्रमाणव्यापारः, विपर्ययस्त्वस्ति।

भेदोऽनुभूतिमान् धर्मी धर्मो जात्यादिकल्पितम्।
विपर्ययः पुनः कस्मादिष्टः श्रद्धेयनीलयोः॥

केवलमन्वयव्यतिरेकाभ्यां भेदमास्थाय विवेकदुर्बलो लोक एष मृदि संस्थानादिवत् भेदं धर्मधर्मिताविपर्ययं च व्यवहरतीति नात्राभिनिवेशः। न च पृथग्धर्मित्वमनयोरुपगमक्षमः,

यदि प्रकाशो नीलादिः किं प्रकाशान्तरेण वः।
अथाप्रकाशो नीलादिः किं प्रकाशान्तरेण वः॥

[1]नाकारभेदमवधूय धियोऽस्ति वृत्ति-
स्तद्बाधके बलिनि मध्यनये जयश्रीः।
नोचेदनिन्द्यमिदमद्वयमेव चित्रं
चेतो निराकृतिमतस्य तु कोऽवकाशः॥

महापण्डितज्ञानश्रीमित्रविरचितायां साकारसिद्धौ निराकारनिराकरणपरिच्छेदः प्रथमः॥



१. तुल० आ. त. वि. पृ: २२१

## [ द्वितीयः परिच्छेदः ]

यदि तर्हि निराकारस्य चेतसोऽसत्त्वं तत्त्वत इति संक्लेशव्यवदानव्यवस्थाविलोपः, उपप्लुतो ह्याकारकलापोऽतस्मिंस्तद्ग्रहाद् भ्रान्तिरेव संसारस्तत्प्रभववासनासंघातसमुद्घाते चोपप्लवविगमादनाभासममलं प्रकाशमात्रमवशि[79b]ष्यमाणं निर्वाणमिति न क्षतिः। अन्यथा तु,

साकारबुद्धेर्बाधायां व्यवदानमसंगतम्।
अबाधायां तु संक्लेशव्यवस्थादौस्थ्यमागतम्॥

[1]तथा हि सत्त्वैरेव प्रकाशैरविपरीतस्वरूपसंवेदनात् भ्रान्तेरत्यन्तमभावः स्यात्। ततश्च सर्वसत्त्वाः सदैव मुक्ताः सदैव सम्यक्संबुद्धा भवेयुः। विकल्पिका बुद्धिर्भ्रान्तिः, स्वप्रतिभासेऽनर्थे अर्थाध्यवसायादिति चेत्? कथमवसीयमानस्तयां सोऽर्थो न प्रकाशते? प्रकाश्यमाने वा कथमसौ तस्यां न प्रकाशते? अथ प्रकाशत एव, तदा अर्थस्य तादात्म्यप्रसङ्गः। असति चार्थे सा न स्यात्। अभून्मान्धाता, भविष्यति शङ्खोऽस्त्यात्मा, नित्यः शब्दः इति सर्वात्मना च निश्चयः स्यात्। गौरिति स्पष्टेन च स्वेन लक्षणेन प्रकाशेत। स्वलक्षणे च संकेतायोगाद् विकल्पिकैव सा बुद्धिर्न स्यात्।

तस्मादशेषगोव्यक्तिसाधारणेन गोत्वेन गोबुद्धिरलीकेन साभिलापेन विप्लवात् प्रख्यातीति तथा प्रकाशनमस्या गवार्थावसाय इत्येष्टव्यम्। एवं ह्येते दोषा न स्युः, अप्रतिभासमानस्यापि स्वलक्षणस्य भ्रान्त्यावसायात्। यथा चालीकस्य गोत्वस्य गोबुद्धौ प्रकाशस्तादात्म्यं च, तद्व्यतिरेकाद् वस्तुत्वमनारोपितत्वं वा, तथा नीलादिप्रकाशे नीलादीनामलीकानां प्रकाशसिद्धयैव तादात्म्यसिद्धिः, नानारूपनिष्ठयोरलीकत्वानलीकत्वयोरेकत्रापि वस्तुन्यविरोधात्। यदि च वस्तुत्वेऽनारोपितत्वे वा साध्ये तादात्म्यमात्रं हेतुस्तदा गोत्वादिभिरनेकान्तः। अथानारोपितं तादात्म्यं हेतुस्तदसिद्धमिति। अत्राभिधीयते,

अतस्मिंस्तद्ग्रहो नाम भ्रमश्चेत् सर्वसंमतः।
अलीकेऽपि तदाकारे सत्यवन्न समञ्जसः॥

---

१. तुल० रत्न० निब० पृ: २६

मरीचावजले जलग्रहो भ्रम इति लोके, शास्त्रे च स्वप्रतिभासेऽनर्थेऽर्थाध्यवसायेन प्रवृत्तेर्भ्रान्तमनुमानमित्यादि बहुधाभिधानात्। अतस्मिंस्तद्ग्रहो नाम भ्रान्तिर्विदिता। तस्या यदि साकारनयेऽनुपपत्तिरलीकाकार एव कथमुपपत्तिरिति चिन्त्यताम्। ज्ञानं हि केनचिदाकारेण सत्येन वालीकेन वोपजातं नाम, बाह्यारोपस्तु तदाकारे तत्कृतोऽन्यकृतो वा स्यात्, तत्कृतत्वेन तावत्तत्काल एव व्यापारान्तरमनुभूयत इति कुतस्तदारोपः? कालान्तरे च स्वयमेवासन् कस्य व्यापारः स्यात्?

द्वितीयपक्षे ज्ञानान्तरमपि नाकारोपरागसङ्गिनीमुत्पत्तिमन्तरेण व्यापारान्तरेण कचित् किञ्चित्करं नाम। तदेतदर्वाचीनं प्राचीनज्ञानाकारगोचरीकरणेऽपि न बाह्यारोपव्यापारमपरं स्पृशति तदाकारलेशानुकारमपहाय, शब्दाकारस्यापि स्वरूपेऽन्तर्गतत्वात्। यदि च व्यापारान्तरमपि संभवेद् बाह्यारोपाय, नाकारम्; अनुमानेऽपि साधनमभिदध्यात्। अधिगतये तत्साधनं नारोपायेति चेत्- न, स्वरूपनिर्भासस्य अनुमाने [80a] प्रतिक्षेपादारोप एवासौ। आरोप इति ह्यसत्यविषय इति चेत्? ननु रूपाधिगतिरेव तर्हि वह्नेरनुमानसिद्धस्य स्यात्। तस्मादारोपोऽवसायोऽभिमानम् इत्यनर्थान्तरमेतत्। संवादेतराभ्यां तु विशेषः, यतो न विकल्पमात्रं प्रमाणमिति स्यात्।

तस्मान्नाकारादन्यो ज्ञानस्य व्यापारः, आरोप्यमानश्चासावर्थो बाह्यस्तत्र बुद्धौ यदि स्वरूपेण परिस्फुरति सत्यप्रतीतिरेवासौ क आरोपार्थः? स्फुरणे च द्वितीयाकारवेदनप्रसङ्गः। तदाकारस्फुरणमेव तस्य स्फुरणमिति चेत्- न, तस्यारोपविषयत्वात्। न हि मरीचिविस्फुरणमेव जलस्फुरणम्, तेन सहैकीकरणादिति चेत्? कोऽयमेकीकरणार्थः? यद्येकतापत्तौ प्रयोजकत्वम्, तदारोप्यारोपविषययोः कदाचिदेकीभावाभावादसंभवमेव। न हि शशविषाणे कारणं किञ्चित्। न च पूर्वमनेकमेकतामेतीति क्षणिकवादिनः साम्प्रतम्। अर्थान्तरोत्पत्तिमात्रं तु स्यात्, न च तदप्युपलब्धिगोचरः अन्यथारोपविषयात्। न च तावताप्यर्थस्य किञ्चिदिति कुतस्तस्यारोपः? अर्थैकप्रतीतिः एकीकरणम्? तथापि न द्वयोः, आरोप्यानुभवाभावात्। न च द्वयोः प्रतीतिरित्येवारोपः, नीलपीतवत्, आरोप्यबोधगन्धाभावाद्येकत्वेन प्रतीतिरित्यपि निरसनीयम्। यदि हि ग्राह्यं प्रतिभासेत, एकत्वेनानेकत्वेन वा सतासता वा प्रतीतिरिति युक्तम्।

सर्वाकारतत्स्वरूपतिरस्कारेण सा प्रतीतिरित्येकप्रतीतिरिति चेत्? तत्स्वरूपतिरस्कारे तर्हि तदप्रतिभासनमेव। कस्यचिदंशस्य प्रतिभासनादिति चेत्- न, निरंश-

त्वाद् वस्तुनः सर्वात्मना प्रतिभासोऽप्रतिभासो वेति शास्त्रमेवात्र परमते विस्तरेण। अध्यवसायादिति चेत् ? सोऽपि विकल्पापरनामा स्वाकारमन्तरेण वार्तामपि बाह्यस्य न जानातीति उक्तप्रायम्। अथाभेदेन प्रतीतिः ? अत्रापि पर्युदासपक्षे ऐक्यप्रतीतिरेवोक्ता भवति प्रत्युक्ता च। भेदेन प्रतीतिनिषेधमात्रेऽपि न बाह्यस्य प्रतीतिरुक्तेति कुतस्तदारोपः ? भेदेन नेति च निरुपयोगम्, अभेदेनैक्येन प्रतीतिव्यवस्थाविरहात्, आरोपविषयमात्रप्रतीतेश्चापह्नोतुमशक्यत्वात्। तन्मात्रानुवादिना न कश्चिद् विशेष उक्तो भवति।

तस्माद् यावच्चिन्त्यते तावदारोप्यस्पर्शाभावान्नारोपो नाम। यथा कथञ्चित् तत्प्रतिभासपरिभाषया च तदारोपेण भ्रमव्यवस्थायामलीक इव सत्येऽप्याकारे उपरोधः, न तु तावता तात्त्विकत्वमुक्तं भवति। एवं तर्हि तस्य स्वरूपनिर्भासेऽपि सुतरां न भ्रम इति कथं भ्रान्तिस्थितिः ? न कथञ्चित्, यदि विचारे आदरः। अविचाररमणीयमाबालसिद्धं व्यवहारमुपादाय पुद्गलादिवदा[80b]रोपमपि व्यवहरामः। विचार्यमाणस्तु विशीर्यत एव॥

आत्मा यथा यथा बाह्यं यथा संवादतः प्रमा।
तथानेकविपर्यासौ व्यवहारपरायणौ॥

तत्र यावदविचारस्तावत् संसारो यावच्च स्वरूपपरिच्छेदनिष्ठा तावन्निर्वाणम्।

परिज्ञानं भवस्यैव निर्वाणमिति कथ्यते।

[ ]

इति न्यायः। कथं तर्हि भवपरिज्ञानम्, कथं वा तत्त्वतोऽसतो भ्रमात् प्रवृत्त्यादिरिति वक्ष्यामः। यथा तु निराकारवादी तत्त्वतो भ्रमव्यवस्थामुपस्थापयति तथा प्रतीमः तावत्। तस्यापि तर्हि परारोपरूपा भ्रान्तिर्मा भूत्। अलीकाकारयोग एव भ्रान्तिः। तत्क्षेपः क्षेमश्चेति किमयुक्तम् ? प्रथममिदमेव तावत् यल्लोकशास्त्रयोरतिक्रमः, रज्जौ हि जनः सर्पारोपाद् भ्रमं व्यवहरति, न तु ज्ञानं केनचिदाकारेण [जनं] स्पृशति। स च सर्पारोपो निरूप्यमाणः कियतीं कोटिमाटीकत इति नोद्यमः, नापि पर्यन्तनयनशक्तिरितरस्य। तल्लक्षणां तावद् भ्रान्तिमयं व्यवहरतीति सिद्धम्।

शास्त्रेऽपि स्वप्रतिभासेऽर्थाध्यवसायेन प्रवृत्तिर्भ्रान्तिरुच्यते। न तु स्वप्रतिभासोऽनर्थक इत्येव। तथा दृश्यविकल्पयोरेकीकरणादेरप्ययमेवार्थः। न त्वत्रापि

विकल्प्यमलीकमित्येव, किं तु दृश्यारोपादिति। निर्विकल्पेऽपि चन्द्रद्वयमिद्धं दृश्यत इति विकल्पेन स्वव्यापारस्य तत्रैवारोपादविचारितर[मणीयं] स्यात्।

भ्रमत्वमविकल्पेऽपि विकल्पान्न ततः परम्।
अतो विकल्पे विश्रान्तमविकल्पेऽपि कथ्यते॥

तस्मात् सर्वत्र परारोपादेव भ्रमस्थितिरिति। तदसमाधाय परिभाषान्तरं नामेति किमप्रयुक्तमतः? अथायोगादेव परिहार इति क एष दोषः, समर्थनासामर्थ्यस्य स्वीकृतत्वादिति चेत्? यद्येवम्,

समस्ति तावद् व्यवहारसिद्धो
भ्रमो विचारश्च विरोधकोऽस्य।
एतावतैवाभिमतप्रसिद्धेः
शेषो विशेषोऽभिनिवेशलेशः॥

स हि सांवृतो भ्रमः सत्यालीकपक्षयोरविशिष्टः केवलमाकारस्यापि मया अलीकत्वमभ्युपेतमिति तस्यापि पर्यन्ते स्थितिर्माभूदिति भ्रमत्वापादनमभिनिवेशमात्रं संक्लेशव्यवदानयोरन्यथापि सिद्धेः।

यावदेव विचारेण भ्रमभ्रंशोऽस्तु शोभनम्।
सर्वथासन्निति पुनः सुन्दरादपि सुन्दरम्॥

अत एव प्रयत्नेन विचार उचितश्रमः।
सतोऽपनयने जातु शंका स्यादपि धीमताम्॥

इत्यन्तरश्लोकौ॥

तस्मादलीकसंभवो भ्रम इति किमनेन? तदस्वीकारिणोऽपि परमतानुपगममात्रमेतत्, न दृष्टन्यायातिक्रमः। यदप्युच्यते, अयोगात् तत् परि[हार] इति तदयोगदर्शिनोऽसत्यप्रकाशो भ्रान्तिरिति कीदृशी योगदृष्टिः? तथा हि असत्प्रतिभास इति असदीश्वरादेः ख्यातिः, भासमानो वा आकारोऽसन्, सन् वा कश्चित् न ख्यातीति विवक्षितम्? तत्र,

[1]यस्य स्वरूपनिर्भासस्तदेवासत् [81a] कथं भवेत् ।
बाधातो यदि साप्येका प्रत्यक्षानुमयोर्ननु ॥

प्रत्यक्षे यद्यविश्वास एकत्रान्यत्र का गतिः ।
तत्पूर्वमनुमानं वा कथमाश्वासगोचरः ॥

[2]स्वरूपसाक्षात्करणादध्यक्षत्वं न चापरम् ।
विकल्पभ्रमभूमित्वमत एव हि बाधितम् ॥

यदि नाध्यक्षता तस्य रूपनिर्भास एव न ।
ततस्तदसदीशादि प्रतिभातीत्यसङ्गतम् ॥

यदि तु प्रतिभासेत रूपमस्य सदेव तत् ।
तदसत्प्रतिभातीति प्रतिभात्यसदेव वः ॥

एतेन द्वितीयोऽपि पक्षः प्रतिक्षिप्तो वेदितव्यः । प्रतिभासादेव सत्तासिद्धेर्बाधकावकाशाभावात् । ननु,

[3]दृष्टमेव द्विचन्द्रादिप्रतिभासेऽपि बाधितम् ।
न दृष्टेऽनुपपन्नत्वं तत्पूर्वोदितमप्यसत् ॥

तदप्यसत् । बाध्यस्याप्रतिभासनात्, प्रतिभासिनश्चाबाध्यत्वात् । तथा हि,

[4]बुद्ध्याकारस्य निर्भासो बाधा बाह्यस्य वस्तुनः ।
रूपस्यैव हि निर्भासः स्पर्शादेरपि बाधनम् ॥

स हि रूपमात्रप्रतिभासो रूपरसगन्धस्पर्शसमुदायविशेषतया अध्यवसीयते । अतएव केशादौ करपरामर्शोद्यमादिसंभवः । ततो बाधापि तत्सहचरितस्यैव रूपस्य, न रूपमात्रस्य । तथाविधार्थक्रियार्थी हि सर्वस्तत्साधनस्यैव सिद्धिबाधयोरवधत्ते, न यस्य कस्यचित् ।

पण्डस्य रूपवैरूप्ये कामिन्याः किं परीक्षया ॥

---

१. द्रः रत्न॰ निब॰ पृः १२५ २. द्रः सैव पृः १२६ ३. द्रः सैव पृः १२५, तज्ज्ञातमपि-बाध्यत इत्यन्तिमपादपाठस्तत्रत्यः । ४. द्रः सैव पृः १२५

तत्त्वचिन्तका एव तु प्रयोजनान्तरापेक्षया सामान्यादिकमपि परीक्षन्ते। तत्र यद्रूपमात्रमाभाति ये च सहचारिणश्चत्वारः समुदायरूपतयाध्यवसीयन्ते तदुभयेषाम् अभेदाभिमानी जनो विवेचनाभावादिदमसदलीकं वेति व्यवहरति। अतस्तदभिमानादेव यावानत्र विधिः प्रतिषेधो वा स सर्वोऽध्यवसितपर्यवसान एव, अन्यारोपेण तद्रूपस्य प्रच्छादितत्वात्। ततो न तत्त्वतस्तस्य बाधा, शब्दार्थवत्। यस्य च कलापस्य बाधा न तस्य प्रतिभास इति सिद्धम्।

ततोऽभिमानमात्रकृता बाधाऽपि प्रतिभासिनो यदि स्यात् तत्त्वतस्तु माभूदिति न क्षतिः। सांवृतमुच्चावचमीदृशमनुभूयत एव जगति। अतएव तत्त्वचिन्तावतारः। केवलमुक्तप्रक्रमेण तदस्फुरणे कथं तदवसाय इत्यायातमसत्प्रकाशनम्। तथा अभेदाभिमाने अभेदस्यासतः ख्यातिः, प्रच्छादनमन्यारोपेणेत्यपि नान्यप्रतिभासनं विनेति स्फारगलमुत्थानं स्यात्। तत्राक्षिणी निमील्य यदि चिन्तयेत् स्वयमात्मानमुपहसेत्। तथा शुक्तमेतदध्यवसायस्यापि नाकारविशेषोल्लेखमुद्धूयापरः परारोपप्रकारो नाम। न चानात्मनः संवेदनम्। न च स्वाकारनिषेधोऽभिमतो जनस्य, शक्यो वा, स्वरूपनिर्भासिनो निषेधविरोधात्। न च तदेवासतामीश्वरादीनां रूपम्, असत्त्वस्यैवाभावप्रसङ्गात्। ततो यत् साकारवादे जल्पितं, नित्यादयः सन्त एव स्युरिति तदात्मन एवापतितम्।

[1]प्रतिभासेऽपि बाधा चेन्न सत्त्वमसतां मतम्।
[81b] नानिषिद्धोपलब्धीनां निषेधस्य निषेधतः॥

यस्य स्वरूपनिर्भासो बाधकाद् यदि तन्न सत्।
बाधकेऽपि क आश्वासः स्वरूपान्तरभासिनि॥

अन्यस्वरूपोपनयात् तत्स्वरूपनिवारणम्।
तत्रापि संशयो जातः पूर्वबाधोपलब्धितः॥

इयमेवाग्रहे बाधा नाक्षजस्यापरा यदि।
अस्याः पूर्वैव भवतु रूपनिर्भासनं समम्॥

नान्याग्रभासिनीत्यत्र प्रमाणं किञ्चिदस्ति वः।
अपि स्वरूपनिर्भासे यदा बाधकसंभवः॥

---

१. द्रष्ट॰ रत्न॰ निब॰ १२१

तस्मात्,

[1]अनिर्भासे स्वरूपस्य हेतुशोधनविप्लवे ।
बाधशंकाविनिर्भासेऽप्येवं चेद् विप्लवो महान् ॥

इत्यन्तरश्लोकाः ॥

ततः सर्वथा निरस्तमसत्प्रकाशनमनवधारितार्थव्यवसाये शब्दश्रवणमात्रेण प्रत्युज्जीवयितुं संरम्भ इति किमपरमुपहासकारणम् ?

प्रमाणेन निरस्तस्य शब्दादुज्जीवनं पुनः ।
दष्टस्य फणिना मन्त्रप्रभावादिव कौतुकम् ॥

तस्मादात्मगोत्वादिशब्दप्रयोगवत् व्यवस्थातद्बीजयोरन्वेषणमात्रं स्वतः परतो वा आद्रियन्ते सन्त इत्येव साधुः । तदयमत्र परमार्थः, विविधानादिवासनावशात् प्रबोधकप्रत्ययविशेषापेक्षया विकल्पः केनचिदाकारेणोपजायमान एव बहिर्मुखप्रवृत्त्यनुकूलमर्थक्रियास्मरणाभिलापादिप्रबन्धमाधत्ते । ततः पुरुषस्यार्थक्रियार्थिनो बहिर्यथानुरूपाणि प्रवृत्तिनिवृत्त्यवधीरणानि भवन्ति । पृथग्जनसन्तानज्ञानक्षणानां तादृशो हेतुभावस्य नियतत्वात् । अनिश्चितार्थसंबन्धविकल्पकालेऽपि सदसत्तादिनिर्णयादिप्रवृत्तिप्रसवः ।

तत्र यदुभयथाप्रवृत्ते साधनसामर्थ्यमस्य स्वहेतुबलायातमयमेव प्रवृत्तिविषयवस्त्वारोपोऽध्यवसायापरनामा, यथा चन्द्रादिज्ञानस्य भ्रान्तस्याभ्रान्तस्य वा तद्दर्शनावसायजननमेव ग्रहणव्यापारः । क्वचिदपीयमर्थविदेव कार्यतो द्रष्टव्येति न्यायात्, तथा विकल्पस्याप्यग्निरत्रेत्यादिनाकारेणोत्पद्यमानस्य प्रवृत्त्याक्षेपकत्वमेव बाह्याध्यवसानम् । यथा च निर्विकल्पस्य चन्द्राद्याकारतैव तथावसायसाधनी, एवमवसायस्य अपि तादृशाकारतैव विषयान्तरविमुखप्रवृत्तिसाधनी । ततस्तदाकारावभासोऽस्यानधिगतार्थकारणभावोऽप्यारोपविषयत्वेन पृथगिव व्यवस्थाप्यते, आरोप्यज्ञानं च ।

एवं तर्हि तदेव त्रयमसद्व्यवस्थाप्यते, व्यवस्था च प्रतीतिरिति नासत्प्रतीतेर्मुक्तिरिति चेत् ? सोऽयं प्रवाहेऽङ्गन्यासः । उक्तं हि तदनुरूपप्रवृत्त्याक्षेप एव तदारोपो न परप्रतीतिर्नामेति । ततोऽयापि त्रयस्यासतोऽध्यवसाय इति तदनुरूपव्यवहारमात्रम्

१. द्रः रत्न° निब° पृः १२६

असत्प्रतीतिविवादानादराद्यवस्थालक्षणमसदिदमित्याकारं ज्ञानं च फलमिति न कश्चित् दोषः।

एवमन्यत्रापीदृशि क्षुद्रोपद्रवेऽभ्यूह्यम्। इयमीदृशी सर्वविकल्पानामतस्मिंस्तद्ग्रहरूपा भ्रान्तिरनुभवानुसारिणी। एतदेव दृश्यविकल्प्ययोरेकीकरणं व्यवह्रियते। स्वप्र[82a]तिभासवेदनमात्रात् परत्र प्रवर्तनशक्तिर्या तदपेक्षा च पररूपेण स्वप्रच्छादनस्थितिः। प्रतिभासापेक्षया तु पररूपं स्वरूपेण संव्रियते इत्युच्यते, तस्यैव प्रकाशात्। सतोऽपि बाह्यस्य प्रकाशादेव तत्त्वतो निर्विषयत्वम्। आकारस्य चात्मरूपत्वात्, अनध्यवसायाच्च। अतएव यथाध्यवसायम्, यथा प्रतिभासम्, यथातत्त्वं च त्रिधापोहस्थितिः॥

विजातिव्यावृत्तं ध्वनिभिरभिधेयं यदि बहि-
विकल्पे तत्कल्पो भवतु पुनरङ्गः कृत इति।
निदानेनेदानीमुभयमपि भासाध्यव[सिते]-
रपोहेन

अभावेन बाह्यस्य हि प्रतिभासाभावः। ध्वनिजनितविजातिव्यावृत्तवस्तुसदृशस्याकारस्य चाध्यवसायाभावो यदि तर्हि न किञ्चिद् वाच्यमिति कस्तत्त्वतः अपोहार्थ इति चेत्?

अपोहः सूक्ष्मयमसौ यत्र किमपि॥

अभिधेयमिति संबन्धः पूर्ववाक्यवत्। अयमर्थः, अपोहो वाच्य इति तत्त्वतो वाच्यस्यैवापोहनिषेध इत्यर्थः। यथा अभावो भवतीति भावो न भवतीत्यर्थः। तस्मात् शब्दविषयः स्वलक्षणमिति सिद्धम्।

यत्सूत्रम्,

येन येन हि धर्मेणेत्यादि।

एतावति मूले कियन्तः पल्लवाः प्रादुर्भवन्त्यपोहवादिनां नात्र निर्बन्धः। यतश्च विकल्पस्य ग्राह्यनिश्चयनं नाम धर्मो बहिर्मुखप्रवृत्तिहेतुत्वलक्षणो निश्चितस्तत एव सर्वाकारनिश्चयोऽपि प्रसज्यमानस्तदनुरूपप्रवृत्त्युपयोगनिष्ठितात्मा स्यात्। न चैकाकारोल्लेखिनो विकल्पस्याकारान्तरेण प्रवर्तनशक्तिरनुभवविषय इति कुतः शब्दप्रमाणान्तरा-

पेक्षेति युक्तम् । तत्र निर्विकल्पकं भ्रान्तमपि स्पष्टप्रतिभासवशात् ग्राहकमवस्थाप्यते । विकल्पस्तु विमर्शाकारतया स्वयमन्यानपेक्षप्रवर्तकत्वेऽप्यस्पष्टैकव्यावृत्त्युल्लेखादारोपकादिव्यवहारभाजनम् । सर्व एव विकल्पो बहिरस्पृशन्नेव सत्यसति बाह्ये प्रवृत्तिप्रयोजकतया भ्रान्त उच्यते । असति तु तादृग्विकल्पोत्पादनशक्तिगर्भाकारयोगो निर्विकल्पकस्य भ्रम इति स्थितम् ।

सर्वा निर्विषयैव कल्पनमतिर्व्यावृत्तिभेदानुग-
स्वाकारोत्कलिता तु वीक्षितफलस्मृत्यादिमातन्वती ।
लोकस्याक्षिपति प्रवृत्तिमनपेक्षैवान्यदध्यक्षवद्
वस्त्वारोप इतीरितोऽर्चिषि जलारोपो जलानामिव ॥

इति संग्रहः ॥

एवं च सति यदध्यवसितं बहिःकलापरूपमिति प्रवृत्तियोग्यतां नीतमुक्तक्रमेण बाध्यं च तस्य न प्रतिभासः । प्रतिभासिनश्चाकारस्य न बाधक इति स्थितम् ॥

न हि तदर्थक्रियायां कश्चिद्विवादः । अर्थक्रियापिहितस्य पृष्ठजोऽध्यवसाय एव न च तस्याः क्षतिः । क्षतिस्तु कलापविशेषसाध्याया एवेति तस्यैवाभावः । तत्कथं प्रतिभासमानस्य बाधा दृष्टेत्युच्यते, व्यापकानुपलम्भापेक्षायां च सर्वं पूर्वमावर्तत इति ॥

व्यापकाभावचिन्तायां न पीतो न च पिप्पली ।
दोषा[82b]न्तरेण साकारे संक्लेशादिपरीक्षणम् ॥

आरब्धम् । तत्र सत्यस्वाकारसंवेदनेऽपि सर्वज्ञानानां व्यवहारप्रसिद्धमनन्तकालबीजनिर्जातव्यवस्थं भ्रमत्वमाश्रित्य न संक्लेशक्षतिः । यथा च बाह्ये सति क्वचिद् भ्रमव्यवस्था, तथा निर्णये सर्वत्र । केवलं बहिर्मुखप्रवृत्त्यपेक्षया क्रियमाणो नात्मनि कश्चिद् भ्रम इत्युक्तं भवति ।

यद् यथा भासते ज्ञानं रूपं तस्य तदेव हि ।

एवं शब्दयोजनायां बहिरवसायात् तत्रैव विकल्पकत्वमस्पष्टत्वं च, ज्ञानान्तरापेक्षया तस्यैवार्थस्य केवलस्य स्पष्टस्य चावस्थानात् । आत्मरूपे तु तादृशाकाराव्यभिचारात् तस्या बुद्धेः सामग्रीविशेषजन्मनः कुतस्तथाव्यवस्था ? यदाप्यनयैव

अन्याविषयीकृत्य योजयितुमिष्यते शब्देन, तदापि परत्रैव योजना नात्मनीति शास्त्रमत्र चिन्त्यम्। तस्माद् विकल्पिकैव न स्यादिति स्वापेक्षया सिद्धसाधनम्। परत्र तु विकल्पकत्वमेवाध्यवसायव्यवस्थाबलात्।

अथ वस्तुस्वरूपनिर्भासबलादेवमुच्यते, तदेतत् साकारपक्षेऽभिधातुमपि महत् साहसम्। 'अध्यवसायेन तदाकृष्टेरिति चेत्– न, *तस्यान्यथाव्यवस्थापितत्वात्।* न हि तत्स्फुरणेऽवसायो नाम, प्रतिभासस्यैव प्राप्तेः। अतएवाप्रतिभासमानस्यापि स्वलक्षणस्य भ्रान्त्या तत्रावसायादिति न युक्तम्। अवसायेन तद्वित्तिस्पर्शे प्रतिभासः कोऽपरः? अस्पष्टत्वादिति न युक्तम्। तद्रूपवित्तौ तस्यैवासिद्धेः।

जातो नामाश्रयोऽन्योन्यः

[प्र. वा. २. २३५]

इत्यादि स्मर्यताम्।

न च तदा भ्रान्तिर्भवितुमर्हति, वस्तुरूपस्यैव निर्भासात्, अलीकवित्तेरिति चेत्? सैवास्त्वर्थाध्यवसायः कथम्? सैव स इति चेत्– न, अलीकमिदमिति विदुषो बाह्याध्यवसायव्यवस्थाभावात्। नालीकविकल्पनमपि तु तत्संवेदनं बाह्याध्यवसाय इति चेत्? एवमपि पर्यायतामात्रं स्यात्, नाभिमतार्थव्यक्तिः। बहिःस्वरूपस्पर्शविरहे हि यावदुक्तमलीकाकारज्ञानमिति तावदुक्तमवसाय इति। ततो न विशेषः कश्चिदुक्तः। तथा च सति यथालीकाकारज्ञानं न बाह्यस्येति संबन्धमर्हति, तथावसायो बाह्यस्येति न सम्बन्धी भवेत्। तद्बोधाभिमानद्वारिका हि षष्ठी तदभावे भवेत् कथम्॥

ततः परम्परायातमलीकं यदि तस्य तत्।
तावता च भ्रमो नैवमनलीकेऽपि दुष्यति॥

ततो यदुच्यते, तदयमभिलापसंसर्गयोग्यः प्रतिभासविशेष एव बुद्धेरर्थाध्यवसाय इति तन्निरस्तम्, अर्थस्येति सम्बन्धानुपपत्तेः, बोधे च भ्रमाभावात्। अपि चालीकः प्रतिभास इत्येवावसायोऽस्तु किमभिलापसंसर्गयोग्यविशेषणेन? निर्विकल्पव्यवच्छेदार्थमिति चेत्? यद्येवमनलीकवादेऽपि तद्विशेषणविशिष्टमेव ज्ञानं भ्रमो न सर्वमिति न सर्वथा संक्लेशविशुद्धिवैधु[83a]र्यम्, भ्रमभ्रंशेऽपि ज्ञानजातिविशेषस्यैव विश्लेषात्। उभयमतेऽपि चाभिलापसंसर्गयोगः परापेक्ष इति न क्षतिः। केवलं तदप्रतीतौ तदवसायव्यवस्था दुस्थेति दोषः। स चावयोः साधारण इति।

तस्मात् सुदूरमपि धावता प्रतीतिमन्तरेणापि शक्तिविशेषादेव वहिर्ग्रां धृत्तिम् आक्षिपंस्तद्ग्रहोपचारादवसायो वाह्यस्येति संवन्धयद्वृत्तिमध्यास्त इत्युपगन्तव्यम्। तदा चालोकः सत्यो वा आकार इति न विशेषः। एवं चावसायार्थेऽवसीयमानत्वेन प्रकाश्यतामासञ्ज्यार्थस्य तादात्म्यमसत्यर्थेऽभावादिकं च यदुक्तम्, तत्सर्वमनुपपन्नम्। अदृष्ट्वा बुद्धिरर्थं प्रवर्तयतीति अयमेव विप्लवः। अतएव विकल्पाकारेऽप्यपोहे वाच्ये अर्थस्य स्पर्शाभावात् क सर्वाकारपरिच्छेदप्रसङ्गदोष इत्याह,

उपप्लवश्च सामान्यधियस्तेनाप्यदूषणा।
[ प्र. वा. ३. १६६ ]

इति, एकव्यावृत्त्याकारतया तत्रैव प्रवृत्त्याक्षेपात्। तावता च पुरुषः परितोषलाभात् नापरं विवेचयति। तन्मात्रस्यालाभे तु विसंवादमाह-यस्य च सतोऽपि न विकल्पबुद्धौ कस्यचित् प्रकाशः, तस्यासतो नामेति युक्तिदूरमेतत्। न च प्रकाशमानस्यासत्त्वमिति। तत् कथं गोत्वदृष्टान्तेन नीलस्यासतः प्रकाशनं, तादात्म्यकल्पनं च। एतेन नानारूपनिष्ठयोरित्याद्यपि निरस्तम्। असत्प्रकाशयोर्विरोधसाधनादेकवस्तुनीति चायुक्तम्, प्रकाशस्य नीलव्यतिरिक्तस्य वस्तुनोऽभावात् भेदकल्पने च न प्रयोजनम्, द्वयोरेकनिषेधमात्रस्य विवक्षितत्वात्। स चैकत्र प्रतिभासिन्यन्यत्र कल्पिते स्यात्, घट इव पटत्वस्य, भिन्नप्रतिभासयोरपि वा शशकमशकयोरिव। अभिन्नप्रतिभासयोः पुनरतद्व्यावृत्तिमात्रव्यवस्थापितभेदयोर्न क्वचिदयं न्यायः सिद्धः।

वर्णसंस्थानयोरभिन्नप्रतिभासनेऽपि संस्थानमसदिति चेत्-न, व्यतिरिक्तस्यैव अवयवसंयोगाख्यस्य कल्पितस्य संस्थानस्य तत्रापि निषेधः, परिमण्डलादिव्यवहारगोचरदशाव्यावृत्तोदयश्चतुरस्रशब्दाभिधेयो वर्णात्मा कथं निषेध्यः? तथेहापि भिन्नस्य कल्पितस्यैव निषेधः प्रकाशस्य नीलस्य वा नीलात्मा प्रकाशात्मा वा नीलो न निषेद्धुं शक्यः, अव्यतिरेकप्रतिभासादेव। ततश्च वस्तुत्वेऽनारोपितत्वे वा साध्ये नीलस्य प्रकाशात्मकत्वहेतोर्गोत्वादिभिरनेकान्तो, न वाह्यकल्पितासदपेक्षया, तेषां प्रकाशाभावात्।

प्रकाशभूतबुद्ध्याकारापेक्षया च न साध्याभावः। न हि गोत्वाकारप्रकाशस्य केनचिदारोपः तद्व्यतिरिक्तस्यारोपकस्याभावात्, स्वयं च स्वहेतोर्गोत्वाकारस्यैव प्रकाशस्य निष्पत्तेः। न चात्मनैवात्मन आरोपः, नाप्यन्येनान्यस्यारोपो, नामकरणं

तु स्यात् [83b] ततश्च प्रकाशात्मकत्वं सर्वत्रानारोपितमेवेति नासिद्धिगन्धः। किं च, आरोपितं जलादिवदस्फुटमेव भवितुमर्हति। नीलस्य च प्रकाशता स्फुटतरैव वेद्यते। न तु भिन्नप्रकाशस्य तु भिन्ननीलत्वस्येव, स्फुटत्वे वा नीलवत् प्रकाशस्य सतः ख्यातिरायातेति।

एवं यत्र यत्र तर्कागमयोरसदलीकं वा प्रतिभातीति प्रतीतिः भाष्यकारव्याख्यानादन्यत्र तत्राध्यवसितापेक्षयैव व्यावहारिकाभिप्रायाद् वा। स हि तदाकृतिकल्पितबाह्यसाध्यार्थक्रियाभावमात्रादलीकादि व्यवहरति। तदनुवादेन बाह्यनिषेधमात्रमेतत्। तत्त्वतस्तु सदन्तरमेवासत्, इष्टादन्यतया चालीकमुच्यते। अथापि स्यात्। यदा नित्याकारा बुद्धिः, तदानेककालव्यापितयोदयादाकारवन्नित्यं सदेव स्यादित्यपि यत्किञ्चित्। अनुकारमात्रेण हि तदाकारता, न तु तादात्म्येन, अग्निविकल्पमात्रेण दाहप्रसङ्गात्। ततो यथा तावद्देशव्यापको वटविटपी पत्रमात्रपिधेयेनापि दर्पणतलप्रतिबिम्बेनानुकृतः कुतोऽप्याकारभेदात्तथा क्षणिकेनाप्याकारेण नित्यः। अनुभवश्चात्र, नित्यात्मादिविकल्पनकाले बुद्ध्यन्तरावकाशपरिपन्थिनीं सकलकालव्याप्तिमन्तरेणैव तदनुकारः।

अलीकत्वेऽपि हि न तावत्कालव्यापिनैवालीकेन भवितव्यं नित्याकारेण, अन्यथा तदनुरूपसदसत्ताविचारादिप्रवृत्त्याक्षेपकत्वाभावात्। अतो लेशेन तदनुकारः कालव्याप्तिं विनापीति युक्तम्। यथा चोर्ध्वदण्डादिप्रतिकृति[र्यदा]कदाद्रियते। अधऊर्ध्वमध्यभागैरतीतानागतप्रत्युत्पन्नरूपोपलक्षणपरैर्नित्यस्य सर्वावस्थाजन्यमेकस्यामेव स्यादिति दर्शयितुम्, तथा बुद्धेरपि क्षणमेव तदाकाराया नोदयविरोध इति। तस्मात् यदसत् तन्न प्रकाशते, अध्यवसितमात्रं तु स्यात्। यथोक्तं प्राक्। यश्च प्रकाशते स्वात्मनासावसन्निति सिद्धम्। ततश्च नासतः ख्यातिर्नाम भ्रमलक्षणमसंभवात्। अत एव सन्न प्रकाशत इति न तृतीयोऽपि प्रकारः, प्रकाशव्याप्तत्वात् सत्तायाः, अप्रकाशस्यासत्तया प्राप्तेः[१]।

[२]ननु प्रकाशो नाम वस्तुनः साधकं प्रमाणम्। न च प्रमाणनिवृत्तावर्थाभावः। अर्थक्रियाशक्तिश्च वस्तुसत्त्वम्। तच्च नाप्रकाशस्यापि विरुध्यत इति चेत्? सत्यमेतद् बहिरर्थवादेऽप्रकाशस्यापि तस्याभ्युपगमात्। केशादिप्रतिभासेऽध्यवसितस्यार्थशक्ति-

१. व्याप्तेरित्यर्थः। २. तुल० रत्न० निब० पृ: १२४

वियोगादेवाभावसिद्धेः। सर्वथा बहिरर्थाभावे तु ज्ञानस्य प्रकाशाव्यभिचारात् तावतैव सत्त्वे किमर्थक्रियया ?

[1]कथमन्यहृदः सत्त्वं प्रकाशादेव नास्य चेत्।
नार्थक्रियापि सर्वस्मै क्वचिच्चेद् भासनं न किम् ॥

अपि च,

बाह्येऽप्यर्थे प्रकाशेन सत्त्वं तत्त्वत इष्यते।
प्रतिपत्तुरभिप्रायात् शक्त्या सत्त्वव्यवस्थितिः ॥

शक्तेरपि प्रकाशेन विना [84a] सत्ताप्रसिद्धितः।
शक्त्यन्तरबलेनेति कथायामनवस्थितिः ॥

कार्येण ज्ञायते शक्तिः परापेक्षा च कार्यता।
शक्तेरनिश्चयेऽप्यस्ति भिन्नव्यावृत्तितो यदि ॥

शक्तेरनिश्चये तस्य कार्यतापि कथं ननु।
वस्तुस्वभावः कार्यत्वं भिन्नव्यावृत्तिभागपि ॥

अन्यथा किं न केशादेः कार्यताकार्यतैव चेत्।
तर्हि प्रकाश एवास्तु सत्त्वमव्यभिचारतः ॥

नारोपितानां कार्यं चेत् प्रकाशोऽपि न किं तथा।
एकीकारात् प्रकाशश्चेत् कार्यतापि कथं तथा ॥

फलाभावाद् यथा नाङ्गं नाङ्गाभावात् फलं तथा।
ततो वस्तुत्वसन्देहे सन्देहः कार्यतादिषु ॥

तस्मादभ्याससामर्थ्यात् सामर्थ्यस्य विनिश्चयः।
प्रकाश एव सत्त्वं तत्कार्यं धीरेव तस्य वा ॥

न च कार्यान्तरेणास्याः सत्त्वं किं तु स्वसंविदः।
गोचरं हि व्यभिचरेन्न स्वं बुद्धिः कदाचन ॥

कस्यचित् तत्र संदेहे कार्येऽभ्यासाद् विनिश्चयः।
सत्त्वं ततो बहिरपि प्रकाशादेव तत्त्वतः ॥

---

१. वुल० रत्न० निब० पृ० १२१

यदेव तर्हि नीलस्य बाह्यस्य फलमीक्षितम् ।
तदभावान्न केशादिज्ञानदृष्टस्य वस्तुता ॥

तत्क्रियाविरहात्तर्हि तत्त्वमेव निषिध्यताम् ।
न क्रियान्तरयुक्तस्य वस्तुतामात्रवारणम् ॥

अहेर्गिरिगुहागर्भान्निर्यतो निर्झरभ्रमे ।
तत्क्रियातिक्रमादस्तु वस्तुतो वस्तुतैव किम् ॥

अवसेयक्रियाहानेस्तदर्थार्थी जनः पुनः ।
तत्रैव सत्ताभ्यासेन बुद्धिरूपमसद् वदेत् ॥

अतस्तदनुरोधेन निर्भ्रमाभिमते ग्रहे ।
कल्पितस्य निषेधार्थमसद्ख्यात्यादिभाषणम् ॥

तद्धिया न स्ववेद्यं तत् किं त्वन्यत् तच्च नैव सत् ।
अतोऽसदेव गोत्वादि नाकार[स्या]प्रकाशतः ॥

यथा वा चन्द्रयुगलं तथैकोऽपि न चन्द्रमाः ।
अवसेयात्मनाभावस्तत्रात्रापि तथेति दिक् ॥

इयं यथाध्यवसितिव्यवस्था तत्त्वतः पुनः ।
केशादयो न सामान्यमनर्थाभिनिवेशतः ॥

इत्याह न त्वनर्थत्वादित्यन्यच्च स्फुटाभता ।
ज्ञानरूपतयार्थत्वात् केशादीति मतिः पुनः ॥

सामान्यविषयं केशप्रतिभासमनर्थकम् ।
इन्द्रियज्ञानसंख्यातमसद् बाह्यावसायतः ॥

यथा

ज्ञानरूपतयार्थत्वे सामान्ये चेत् प्रसज्यते ।
तथेष्टत्वाददोषोऽर्थरूपत्वेन समानता ॥
अप्रतिक्षेपभाग् धर्मी शब्दार्थ इति घासकृत् ।

तस्मात्,

यथाप्रतीति कथितः शब्दार्थोऽसावसन्निति ॥

स्वयं विभक्तमुक्ता च भाष्ये ज्ञानात्मभूतता ।
यथाप्रतीति सत्त्वं चेत् प्रतीतिर्यदि भासनम् ॥

सैव सत्ता बहिरिव ज्ञानत्वे च न बाधकम् ।
न बाधा व्यापकाभावोऽशक्त्यादिस्तु बहिर्मतौ ॥

युक्तः प्रतीत्या शब्दार्थः शाब्दे तद्रूपभासनात् ।
स्वाकारेऽध्यवसायश्च बाह्यत्वेनैव देहिनाम् ॥

तेनासत्त्वे च सत्त्वोक्तिर्यथा तत्त्वमिति स्थिरम् ।
तथा त्रिधातुधीमात्रमिति चित्रैव सा मता ॥

सर्वशून्यादिशब्देषु तुल्य एव परिश्रमः ।
साकारमेव तच्चित्तमर्था[85a]भासमितीरितम् ॥

विकल्पितस्य बाह्यस्य निषेधो हि स्वयं कृतः ।
वासनोपहतत्वं चानिष्टे रूपोदयान्मतम् ॥

प्रवृत्त्याद्येपिसंकल्पसूतिसामर्थ्यगर्भतः ।
अद्वैतशिखरारोहे न प्रवृत्तिनिवृत्तयः ॥

ता एव संसार इति तद्धेतुः कथमिष्यताम् ।
दर्पणे दृश्यते रूपमिति बालाभिमानतः ॥

अनूद्य वेदनाकारे तदारोपनिवारणम् ।
तथा भावेषु भावत्वं ज्ञानाकारेषु बाह्यता ॥

यथा तिमिरिणा दृष्टचन्द्रयोश्चन्द्रतासती ।
निम्नाच्च विरहाद् बाह्येनैकत्वं दर्पणेऽस्ति न ॥

नान्तःप्रविष्टनिर्भासात् पृथक्त्वं प्रतिघातिना ।
भावैराकारसंज्ञैर्वा लक्ष्यते बोधरूपता ॥

सामान्यं ज्ञानसंख्यातमत एवं पृथग्वचः ।
लोके रूढं पृथगिव ज्ञानमादर्शसन्निभम् ॥'

न क्षणित्वक्षतिश्चैवं ज्ञानेनैकक्षणग्रहात् ।
कादाचित्कं च तज्ज्ञानं लिङ्गं नित्यवलव्यये ॥

उक्ता च शास्त्रे धीः सत्ता दृश्यस्यासत्त्वमप्यधीः ।
व्यपदेशार्थकृत्यादिहान्यपेक्षा विनाकृता ॥

अशक्तिरपि तत्रेति न बाधकमियान् पुनः ।
विशेषो दृष्टयदृष्टी च सत्त्वासत्त्वे उदीरिते ॥

कदाचित् कस्यचित् क्वापि प्रकाशोऽस्त्यनुमानतः ।
मृषा प्रकाशाभावस्तु विभाव्यो बहिरादरे ॥

विकल्प एवानुमितेरभावेऽपि प्रकाशनम् ।
तादृशां यादृशी सत्ता प्रकाशोऽप्यस्तु तादृशः ॥

अर्थक्रियार्थी सकलः फलेनैवैति वस्तुताम् ।
प्रतिभासं च तत्रैव न्यस्यतीति क्रियाश्रयः ॥

न चैवं क्षतिरारब्धं मानं च व्यवहारिकम् ।
शक्तिरुक्ता ततः सत्ता स्वभावः शुद्ध एव च ॥

तस्माद् बाह्यार्थवादेऽपि यद्यपि व्यवहारतः ।
शक्तिः सत्ताप्रकाशस्तु तात्त्विकीति द्विधा स्थितिः ॥

इत्यन्तरश्लोकाः ॥

अथाकारस्य प्रतिभासिनोऽपि शक्तिवियुक्तेः सत्त्वं माभूदित्यमुना मनोरथेन शक्तिः सत्त्वमुच्यते, तदपि तद्व्यतिरिक्ते प्रमाणाभावात् कीदृशी इष्टसिद्धिः ? न चाकारस्यार्थकारित्वनिषेधोऽपि शक्यः, उपादेयक्षणस्याध्यवसायस्य तदारब्धप्रबन्धस्य च सदसदादिनिर्णयरूपस्याद्याप्यनुच्छिद्यमानस्य जन्मनि नियतप्राग्भावित्वस्य दर्शितत्वात्, अन्यथा न कचिदपि हेतुफलभावसिद्धिः स्यात्। व्यतिरिक्तं प्रकाशमात्रं तत्र हेतुरिति चेत् ?

अन्वयव्यतिरेकाभ्यामाकारो दृष्टशक्तिकः ।
हेतुत्वमन्यो लभत इति राजकुलस्थितिः ॥

यदि तस्यापि हेतुत्वमाकारस्य न वारणम् ।
न हीन्धनस्य हेतुत्वं धूमे वह्निरपह्नुते ॥

एकापेक्षं परस्याथ कर्तृत्वं तद्द्वयोरपि ।
भावानुवृत्तिसामर्थ्याद् दहनेन्धनयोरिव ॥

नीलापेक्षः प्रकाशोऽन्यः करोतीति विनिश्चये ।
पिशाचो वह्निसापेक्षो धूमाङ्कमिति चागतम् ॥

अविद्याप्यत[84b]एवाङ्गं केवला न प्रकल्पते ।
दृष्टसामग्र्यपेक्षा हि न कश्चिद् विनिवार्यते ॥

अन्यथा चित्रमखिलं कर्मणैवोपजन्यते ।
अन्यहेतुविलोपः स्यान्न च स्यात् पौरुषं फलम् ॥

भावाभावाननुकृतौ न हेतुफलता क्वचित् ।
भावाभावानुकारे च नाहेतुफलता क्वचित् ॥

नीलदृष्ट्यवसायश्च नानीलाकारदर्शनात् ।
शुक्तौ हि रजतारोपो न वर्णस्य व्यतिक्रमे ॥

रूपे समानजातीयाद् भेदग्रहणविप्लवे ।
रूप्यारोपणमङ्गारदर्शने तददर्शनात् ॥

अस्तु वा दैवतोऽकस्मादन्यथापि समीक्षणम् ।
जातिभेदस्तदोन्नेयो योगिनिर्मितधूमवत् ॥

यथा बाह्यस्य बीजस्य सत्त्वहेतुत्वसंगरे ।
बीजाकारधियस्तद्वदंकुराकारजन्मनि ॥

तथा चा[र्थं] क्षिपन् बाह्यं तत्स्थाने ज्ञानमादिशन् ।
उत्पद्यन्ते निरुध्यन्ते प्रत्यया इत्यवोचत ॥

व्यापकस्तस्य धर्मश्चेत् पार्थिवत्वादिकारणम् ।
प्रकाशोऽप्यस्तु न व्यक्तिरिति साध्वी व्यवस्थितिः ॥

आकाराः प्रतिबिम्बाभा उभयोः कल्पितं न सत् ।
बोधस्य नैकता बाह्यैः स्वरूपविरहात्मितः ॥

नान्यत्वमग्रहप्राप्तेर्न सत्ता चाप्रकाशिनः ।
राजक्रमेण चादर्शे एकानेकत्ववर्जितम् ॥

इति युक्तं न वा भावा युज्यन्ते दर्पणोपमाः ।
निराभासे स्थितो योगीत्याभासः कल्पना मता ॥

एकापोहेन यत्तस्यामीषदाभासते बहिः ।
समन्तभासादाभासः प्रपञ्चो वा कदम्बवत् ॥

विचित्रकल्पनारूढो हेयश्चित्रेऽपि चेतसि ॥

शेषं समानम् । अथवा,

बाह्यग्राह्यस्य हानेऽपि ग्रहणस्थितिवारणम् ।
तथतारक्षणे स्थित्वा चित्तमात्रव्यतिक्रमः ॥

यदाह,

तत्रैकस्याप्यभावेन[1]

इत्यादि ॥

आरोप्यहानावारोपविषयस्यापि मास्म भूत् ।
चित्रस्योच्छेददृक्पात इत्यनाभासवारणम् ॥

तथा च,

तिष्ठन्ति चित्राणि तथैव लोक
[एवं हि] धीरा विनयन्ति [ तत्त्वम् ]

इत्यादि ।

आर्यनागार्जुनपादाश्च,

---

1. प्र. वा. २. २१३.

महाभूतादिविज्ञाने प्रोक्तं समवरुध्यते ।
तज्ज्ञाने विगमं यान्ति ननु मिथ्या विकल्पितम् ॥

तत्रासत्त्वाधिमोक्षोऽर्थरोधश्चिन्तामये हृदि ।
तज्ज्ञान इति च ज्ञानरूपसाक्षात्कृतौ क्षयः ॥

बाधे नामनिमित्तानामाकारस्य च न क्षतिः ।
नाममात्रं मुनेर्धर्माः सन्तु वा कल्पितात्मना ॥

एवमन्यदप्यूह्यम् ॥

तदागन्तुमलध्वंसात् तदाकाशतलोपमम् ।
ज्ञेयेनाभितुला ज्ञेयनिर्विशिष्टतया स्फुटा ॥

प्रकाशमात्रं तदिदं दीपसन्तानसन्निभम् ।
अप्रकाशाङ्गविरहान्न स्वाकाराप्रकाशनात् ॥

अप्रकाशकणस्यापि न पूर्वमपि संभवः ।
भ्रमव्यवस्थापेक्षा तु समलामलतास्थितिः ॥

तत्रैव हेतुपरतन्त्रविचित्ररूपे
यत् कल्पितं ग्रहणकर्म च कर्तृ चासत् ।
तस्यैव त[द्] द्वयविवेकिविदेकरूपं
निष्पन्नमाह परितो युवराजराजः ॥

तस्मान्न मुख्यप्रमाणागमशास्त्रबाधा काचित् साकारनये । नाप्यलीकत्वमाकाराणामर्थसामर्थ्यस्य समर्थितत्वादिति । अस्तु वा अलीकतापि, भ्रमनाममात्रं वा । न तु तत्त्वतः संक्ले[85b]शसङ्गतिः, स्वसंवेदनप्रच्युतेरभावात् , परारोपव्यवस्थाविरहात् । सर्वदा मुक्ता एव सर्वदेहिन इति दीर्घाभ्यासप्रबन्धप्रतिबन्धः । स्वहेतोर्हि स्वसंवेदनरूपस्योत्पन्नस्य न परेण शक्तिमताप्यन्यथाकर्तुं शक्यम् , किं पुनरलीकाभिमतेन ? स्वहेतोरेकीभूयोत्पत्तौ च [भवतु] तस्य रूपमभिन्नवेदनम् । किमत्र गात्राम्रेडपरिग्रहेण ?

स्वहेतोश्च तथोत्पत्तिर्वेदनं च तदात्मना ।
भावैः स्वीकृतमेकत्वं वादिनां महती व्यथा ॥

अविद्यातस्तथोत्पत्तिप्रतिभासाविति न तत्त्वमिति चेत्? नैतदपि सारम्, यतः,

हेतोः कुतोऽपि जन्मास्तु हेतुना चिन्तितेन किम्।
अनिष्टजातोऽनिष्टोऽपि यादृशस्तादृगेव सः॥

इत्यनाकारवादाय देयो यत्नाज्जलाञ्जलिः।
कदापि भेदो भावीति श्रद्धागम्यं परं यदि॥

क्षीरनीरवदेकत्वग्रहो भिन्नोदयेऽपि चेत्।
न भिन्नेन ग्रहाभावान्नात्मनैवान्यथाग्रहः॥

आत्मना हि यथैवात्मग्रहः स्वात्मा तथैव सः।
परापेक्षं धियो व्यक्तिभ्रमारेकविकल्पनम्॥

बाधाभावे परत्रापि न भव्यो भ्रमसंभवः।
किं पुनः स्वात्मसंवित्तौ बाधागन्धोऽपि यत्र न॥

अभेदाध्यवसायश्चेत् पश्चात्तेनापि न क्षतिः।
निर्विकल्पवदस्यापि स्वविदोऽलीकमात्रतः॥

न च तत्र परारोपः स चालीकः स्ववेदनः।
तत्प्रवृत्तिनिवृत्तीनां व्यावृत्तेः कोऽपरः शमः॥

अलीकमात्रं सदपि न हि क्वापि विबन्धकृत्।
विबन्धकत्वेऽलीकत्वमेवालीकं प्रसज्यते॥

किं च,

गोचरान्तरसञ्चारो नेष्ट एव क्व बन्धकृत्।
स्वसंवित्तौ पुनस्तस्य शतेनापि न बन्धनम्॥

स्ववित्तिबन्धे हि जड़ः प्रकाशश्च स्वहेतुतः।
इत्ययुक्तमतेऽशक्यं स्वाभेदेनापि वेदनम्॥

न हि स्वहेतोः सकाशात् प्रकाशात्मनो जायमानस्य स्ववित्तिर्विबन्धोपनीतं जाड्यमस्य युक्तमलीकाकारबलात्। अत एव सोऽलीकः स्वाभेदेन तदात्मानं वेदयेद्

-इत्यपि न शक्यम्, विरोधादेव। स्वविन्मात्रस्य हि निष्पाद्यमानस्य तदन्यथाभावो विरुद्धः तदतद्बोधस्वभावोत्पत्तौ ॥

अतन्मात्रस्य बोधे चेद् विबन्धो गुण एव सः।
अथासौ स्वयमेवासन् शिष्यतामाकृतिमहः ॥

यद्यभिन्नेन रूपेण तदा तादात्म्यमच्युतम्।
विभिन्नेनाप्यलीकेन यदि नास्ति क्षतिः क्वचित् ॥

अलीकमनलीकं च द्वयं भेदेन गृह्णतः।
अलीकमनलीकेन रूपेण यदि पश्यति ॥

नालीकबोधवार्तेति नात्मालीकेन बोधितः।
यथा तथा वा चिन्तायां बाह्यारोपो न चेन्मतः ॥

बाह्यार्थकर्मकामस्य न प्रवृत्त्यादिसंभवः ॥

स्वविदि नियतं चेतस्तस्मादलीकमलीकता-
कलितमितरानारोपान्न प्रवृत्तिनिवृत्तयः।
इति तनुभृतां साक्षान्मोक्षे किमङ्ग परिश्रमैः
श्रवण[86b]तनुजाकाराकारस्थितावपि का क्षतिः ॥

ततः सर्वप्राणिनां सर्वदा निर्वृतत्वात् सम्यक्संबुद्धत्वेनापि नोपयोग इति न कश्चिदुपायाभ्यासमारभेत। तदयमतस्मिंस्तद्ग्रहलक्षणो भ्रमः स्वरूपेण विचारविधुरो यदि तथा प्रवृत्त्याक्षेपसामर्थ्यव्यवस्थापितो न स्यात्, नालीकमात्रसंभवेऽपि दोष इति नोक्तोपालम्भपरिहारः।

न प्रवृत्तिमनाक्षिप्य सोऽलीको यदि वर्तते।
अशक्तिः कानलीकस्य पश्य धाष्टर्यविजृम्भितम् ॥

प्रवृत्तिरस्यालीकेन सदाकारगुणैर्न तु।
विपरीततः सोऽयं योगाचारो न तात्त्विकः ॥

-तस्मात्,

नालोकमात्रमुपयोगि भवे भ्रमात्मा
नान्यत्र तद्व्यवसितिश्च विचारचारुः ।
बाह्योचितव्यवहृतिव्यवकल्पितस्तु
साकृत्यनाकृतिमते द्वितयेऽपि तुल्यः ॥

तत् कथं संक्लेशव्यवदानव्यवस्थाभ्रंशभयात् साकारपरिहारेण निराकार एवात्राभिनिवेशवासिता मतिर्मतिमतामिति ?

यदि तु परामर्शेऽभियोगः,

सत्याकारमते युक्ता शक्तियोगादिसंस्थितिः ।
निराकारमते त्वन्तःसंक्लेशव्यवदानयोः ॥

इति महदन्तरम् । तथा हि, आकारस्य हि वस्तुत्वे तादात्म्यात्तद्योगाद्वा विशेपमनुभवन्ननुभवस्तथाविधमध्यवसायं प्रसुवीत, सोऽध्यवसायो विषयविशेषाचितां प्रवृत्तिम् इति न प्रवृत्तिसङ्करः । यदार्थो हि कश्चित् स्वभावभूतविशेषोपयोगात् क्रियाभेदम् आदधीत नीलपीतवत्, कश्चित् सहकारिविशेषयोगात्, उत्पलोपलपाणिवत् । ततस्तादात्म्यसहकारौ वस्तुप्रतिबद्धौ सिद्धौ । आकारस्य चावस्तुत्वे न कश्चिद्विशेषो जलज्वलनमनसोरिति जलानुभवादपि ज्वलनविकल्पप्रसङ्गः ।

एवं ज्वलनविकल्पात् पानावगाहनार्थिनः प्रवृत्तिः स्यात् । न चाग्निरत्रेति मन्यमानः पानकामः प्रवर्तते । स्वच्छतया स्फटिकर्माणिकिरणपरिभविन्यनुभवेऽभूतेन आकारेण को विशेषः ? न हि स्फटिक एव नीलपीतादिवस्तुसाहायकं विहाय प्रतिपत्तिक्रियाभेदहेतुः । असतोऽप्याकारस्य प्रतिभासादलीकव्यपदेशभाजः संसर्गाच्छक्तिभेद इति चेत् ? तदयुक्तम् । यतः,

प्रतिभासेऽप्यसत्त्वं चेत् संसर्गार्थोऽत्र कीदृशः ।
अलीकव्यापदेशोऽपि न सत्त्वापह्नवक्षमः ॥

तस्मादभिन्नरूपमेव वस्तु नभस्तामरसयोगादवगाहनादिक्षममकाण्डकुद्धवन्ध्यासुतसन्निधेर्दाहदायकमित्यपि श्रद्धेयमेवंवादिनः । असत्त्वेऽपि तयोरदृष्टेराकारस्य तु दृष्टेरस्ति विशेष इति चेत् न, दर्शनेऽपि साहाय्यसमीहाविरोधिनोऽसत्त्वस्यानयनयनाद् इत्युक्तेः । न चासतोऽनाधेयातिशयस्य कुतश्चित् कश्चिद् विशेषः । [86b] न तस्य

कुतश्चिद्विशेषो नापि ततः प्रकाशस्य, उपलक्षणमात्रं त्वाकार इत्यपि न संबद्धम्, उपलक्षकत्वस्यापि वस्तुन्येवोपपत्तेः शिखादिवत्। न च तथोपलक्षितोऽपि प्रकाशः स्वयम् अविशेषात् क्रियाभेदोपयोगी भवितुमर्हति।

कर्मसामर्थ्यात् तस्य तादृशी शक्तिरिति चेत्– न, कर्मणो दृष्टसाधनमनपेक्ष्य शक्तेरदृष्टेः। न चाकारभेदमन्तरेण तादृक्क्रियाभेदो दृष्टः, तथापि तस्य साक्षित्वमात्रकल्पने पाकादिषु पाचकादेरपि तत्कल्पनाप्रसङ्गः। ततो दुरपह्नवा तत्र शक्तिराकारस्य। न च भिन्नानुभवव्यवस्थाबीजं किञ्चित्। ततः प्रकाशत इति प्रकाश आकार एव। प्रकाशनं प्रकाश इति तु तद्धर्ममात्रं भेदान्तरप्रतिक्षेपेणेति स्थितिः॥

आकार एव नियता हि बहिः प्रवृत्ति-
स्तस्यां भ्रमस्थितिरदो विरहे कथं स्यात्।
तस्मान्निराकृतिमते सुनिराकृतेय-
मारब्धसिद्धिरिति साकृतिवाद एव॥

एवं तर्हि यावद्बोधस्तावदाकारो यावच्चाकारस्तावद्बहिष्टा वृत्तिकृता भ्रान्तिस्थितिरिति न कदाचिद् व्यवदानम्, अलीकत्वे त्वाकाराणां स्वप्रभववासनासमूहसमुद्घातादत्यन्तमत्यये निराभासमाकाशसंकाशं प्रकाशमात्रमवशिष्यत इति व्यवदानमुच्यते। आकारसत्यतामते तु दुर्लभमेतदिति चेद्? भवतु किं तादृशा तेन कर्तव्यम्? महाप्रारम्भसंभोगकायविलोपलोलुपेनासद्वासनासमुद्घाते हि प्रकृतिवितथः संकल्प एव मा भूद् बहिः प्रवृत्तिर्वा। यद्वा आकारोऽप्यनिष्टो मा भूत्। चित्ताकारविशेषभावनायाः शुभसंभाराभियोगस्य च सामर्थ्यात् अभिमताकारविशेषस्य समुदये कीदृशो दोषः? न च कदाचिदाकारे दोषदर्शनात् सर्वदा तन्नियमः, सामग्रीभेदस्यात्यन्तिकस्य संभवात्, अन्यथालीकसंभवोऽपि सदातनः स्यात्। तस्मात्,

यातं काञ्चित् परिणतिशिखां लक्षणव्यञ्जनश्री-
चित्रं चेतः शुभशतसमुल्लासताभ्यासभूम्नः।
संबद्धात्मा गुणनिधिरसद्वासनासन्निबद्धा
शुद्धाकारप्रकररहितं न त्वनाकारमेव॥

संवृत्तिविनिवृत्तौ स्याद्धर्मकायविलोपनम्।
आकारविनिवृत्तौ च संभोगस्य पराभवः॥

दशभूमिभुजां बुद्धेस्तदाकारात्तथा स्थितिः ।
पिण्डं विहाय हस्तस्य लेहनं स्फुटमीदृशम् ॥

संबुद्धकल्पा दशभूभुजोऽपि
यदा निराकारतरान्तरङ्गाः ।
तदा क्रशीयः करलेहनं च
वरं च निर्माणदृशो वराकाः ॥

बुद्धाधिपत्येन तथा प्रबोधे
दशावनीनां परमः स लाभः ।
अणुभ्रमाणां भ्रमभारयोगः
सुखं न चामेध्यविशेषतोऽपि ॥

तद्धर्मसाक्षात्करणादिति चेद्धर्मकायदृक् ।
प्रसक्ता न तु संभोगकायदृक् तस्य सिध्यति ॥

तदाकारतया तस्य तदाकारोदयो धियः ।
तद्भोगः सार्व[87a]भौमानां शुभसंभारसंभवी ॥

शुद्धलौकिक विकल्पसंमुखी-
भावभावि पटुधर्मदेशनम् ।
उद्धरप्रणिधिपाकतोऽथवा
सर्ववित्तिरपि तत्तदर्थतः ॥

मात्राद्यभावेऽपि तत्तदर्थिनां तत्तदर्थसंवादसंभवात्, सर्वज्ञताव्यवस्थापि सर्व-स्वबुद्ध्याकारविलास इति । अथवा,

यथा सकलदेहिनामनुभवस्य चित्रा स्थितिः
समन्तसमयत्रये तदनुकारिसर्वाकृतेः ।
धियः प्रणिधिपाकतः समुदये स्वरूपश्रिया
सहैव विविधाकृतिव्यतिकरैकरूपो विभुः ॥

सूक्ष्मतराभ्रपत्रापिहितोऽयमरूपदृशः
सर्वमिदं स्वरूपमधियन्ति दशावनयः ।

तत्र च निश्चलाप्रतिमभागमुशन्ति वपु-
गोंचरभाग एष इति शेषमशेषमपि ॥
चित्रमनेकमेकमिति किंकृत एष विधिः
पार्थिव एक एष इति किंकृत एष विधिः ।
संवृतिसत्यमेत्य यदि सा स्थितिरेवमियं
ज्ञानशुभोरुभारजनितस्तु महातिशयः ॥

अस्य च चित्राकारराशेः,

निरुपद्रवभूतार्थस्वभावस्य विपर्ययैः ।
न बाधा यत्नवत्त्वेऽपि बुद्धेस्तत्पक्षपाततः ॥
[ प्र. वा. १. २१२-३ ]

तथा हि,

संभाराभ्यासजन्मा निरतिशयरुचेर्गोचरस्यैकवित्ति-
स्थित्यागन्तुप्रपञ्चापचयपरिचिताकाशकल्पाप्रभाभूः ।
नानानिर्माणवृन्दैरनुपरतजगत्कृत्यराशिर्दशेयं
हेया केनास्तु यस्या यदि परमुचिता व्युत्थितिः कल्पनैव ॥

इति महापण्डितज्ञानश्रीमित्रविरचितायां साकारसिद्धौ
संक्लेशव्यवदानव्यवस्थापरिच्छेदो
द्वितीयः समाप्तः ।

## [ तृतीयः परिच्छेदः ]

कथं पुनः स्वसंवेदनमात्रस्थितौ हेतुफलभावसिद्धिः, यतः प्रकृतफलहेतुपद्धतिरवधानभाजनीभवतु ? तथा हि, न पूर्वो न परा नापि तदुभयवासनाप्रसूतानुसन्धानरूपा बुद्धिरस्मादिदमिति भेदग्रहणानान्तरीयकं हेतुफलभावानुभवव्यवहारमवतरीतुं शक्नोति, सर्वासां स्वविन्मात्रमयतयान्यदीयवार्तापरिचयानुपपत्तेः । यद्यपि चाद्य धियावधिमात्रमधिगतं तथापि नावधिमत्, परया चावधिमदेव नावधिः । अनुसन्धानधिया तु नैकमपीति कोऽपरः प्रतिपत्ता ? अवधिरवधिमदित्यपि तद्बलादेव यस्मान्नैकमपि विषयः । ततश्च तयोरपि शुद्धस्वरूपमेव विषयः ।

एतेन पूर्वापरभावः प्रत्याख्यातः, पूर्वापरतयापि कयाचिदग्रहात्, येन तदात्मक एव हेतुफलभाव इति मनोरथसिद्धिः । न हि प्रत्यक्षस्यात्र व्यापारः, भिन्नप्रतीत्यभावे पूर्वापरत्वादेर्दूरीकृतत्वात् । अथापि स्यात्, क्रमेणोदयात् पूर्वापरीभावस्तावदस्ति, ततः पूर्वापरा बुद्धिरात्मानं पूर्वापररूपमेवानुभूतिगोचरीकरोति । विमर्शाकारविरहात्तु शब्द एव परमप्रवर्तितः । न च तावता वस्त्वनुभवहानिः, न हि नाम रूपं वस्तूनाम्, तदपि पश्चादनुसन्धानबुद्धया प्रवर्तते । न च [87b] तावता तस्याः स्ववेदनक्षतिः । स्वसंविदितैव हि परत्र बाधकमुपस्थापयति, पूर्वपूर्वाहितविशिष्टसंस्कारद्वारेण नियतपूर्वापरभावबोध एव च हेतुफलबोध इति ।

अत्रोच्यते,

अनात्मसंवित्त्यभिमानकाले
समस्तमेतद् व्यवहारयोग्यम् ।
स्वरूपसंवित्तिपरायणत्वे
क्व भेदपूर्वापरभावयोगः ॥

बहिर्यथा भिन्नधिया ग्रहाद्
परस्परं तस्य तथा भिदापि ।
तथैव पूर्वापरतापि नोचे-
न्न ग्राह्यमस्त्येव च ग्राह्यमान. ॥

बाह्यस्य पूर्वापरता यथैव
तथा धियोऽपि ग्रहणं स्वयं तु ।
स्मृतिश्च संवादवती द्वयेऽपि
किञ्चित्करो नानुभवोऽन्यथा हि ॥

ततोऽनुसन्धानधिया व्यधायि यत्
स्वसिद्धमेवाप्रमयापि तत् किल ।
प्रमावतारे तु पराप्रवेदने
स्फुटं वियचित्रणमीदृशी स्थितिः ॥

न कोष्ठशुद्धयापि तथोचिता स्थितिः
यतो न जातु प्रतिपत्तिगोचरः ।
कदापि केनापि हि दृष्टमन्यदा
सहेत सन्देहमबाधितं यदि ॥

क्रमोऽपि तस्मादवसाय पद्धतिं
विना न सोऽप्यन्ध इवान्यवेदने ।
ततो बहिर्विसत एव न प्रमा
न विप्लुतः स्वात्मनि तत्र न क्रमः ॥

तथा ध्वनेरेव न सिद्धिरित्यसत्
परापरीभूतमपीक्षितं न हि ।
परस्य वित्तिर्न न चात्मनो भ्रमः
भ्रमेऽपि न स्वस्य तथा विवक्षितम् ॥

ननु हेतुफलभावविलोपस्त्वयापि कथं साध्य, प्रमाणाभावात्? न हि प्रत्यक्षं निश्चायकम्, अविकल्पकत्वात्। नापि विकल्पमात्रम्, अतिप्रसङ्गात्। प्रत्यक्षजे लिङ्गजे वावसायः स्वकारणस्यार्थस्य निश्चायकः प्रतिबन्धादिति चेत्? प्रमाणसिद्ध एव तर्हि हेतुफलभावः कथं बाध्यः स्यात्?

तदयुक्तम्। न ह्येवं प्रमाणसिद्धिरुपपादिता भवति, प्रत्यक्षस्य हेतुफलभावग्रहनिषेधेऽप्रवृत्तिनिषेधाक्षेपात्। परोपगमापेक्षायां च न स्वतन्त्रसिद्धिः, प्रसङ्गस्यासाधनत्वात्। केवलं परस्य प्रतिषेधप्रतिबन्धमात्रमुपसंहरेदयमुपन्यासः।

यदि हेतोः कुतोऽपि स्याद् बाधा हेतुफलस्थितेः ।
स एव हेतुरथ न सिद्धा हेतुफलस्थितिः ॥

तथा च,

न हेतुरस्तीति वदन् सहेतुकम्
[ ]

इत्यादि । न च परस्य निषेधप्रतिबन्धे कृते स्वयं सद्व्यवहारसिद्धिः । अथ परस्यापि परामर्शसिद्धिप्रतिबन्ध एव, न केनचित् प्रमाणेन हेतुफलभावसिद्धिरिति नासद्व्यवहारसिद्धिरिति चेत्– न, परेण तन्मात्रस्यैवारब्धत्वात् । सत्ताव्यवहारोऽपि हि प्रसाधकप्रमाणाधीनः सिद्धः, तद्यदि हेतुफलभावेऽपि किञ्चित् प्रमाणं स्यात्, स्यात् तद्भावः । तदभावे कथमेष इति ? तदयं हेतुफलभावः क्वचित् कदाचिदुपलम्भसंभावनाविनाकृतो बहिरर्थेन सार्धं निरत्ययां मैत्रीमावहति ॥

बाह्ये दोषान्तरस्यापि संभवान्न तुलेति चेत् ।
दूषणान्तरमत्रापि यथाभाष्यकृतोदितम् ॥

चिन्मात्रानवतारेऽपि सूत्रवार्तिकयोर्गिरः ।
तथैव बल[88a]नाद् भाष्ये स्वकस्वातन्त्र्यबिम्बनम् ॥

नैवं वा किं न बाह्येऽपि दोषोऽयं केवलो मतः ।
यदि बाह्योऽनुभूयेतेत्यादि यत्नोऽन्यथा कथम् ॥

तदस्य तन्मैत्रीकृतो विधिः प्रतिषेधो वावधेयो धीमतामस्तु, किमपरेण ? ननु तथाप्यत उपपत्तेरेतदायातमिति निगमयतोऽपगत एव हेतुः, अवश्यं चान्ततोऽनुपलम्भोऽपि समाश्रेयः, तत् कथं हेतुपरिहारेण कश्चिद् युक्तिन्यासः ? न हि तादृक्प्रस्तावे शक्यं मूकेन स्थातुम् ॥

ब्रुवता नियतं किञ्चित् साध्यं वा बाध्यमेव वा ।
तत्राहेतुं ब्रुवाणस्य स्वस्यापि प्रत्ययः कथम् ॥

ततो दुस्त्यज एवायं सता हेतुपरिग्रहः ।

किं च स्ववचनव्याहतमप्येतत्, अतो हि वचनादर्थप्रतीतिरस्य स्यादिति वचनोच्चारणमञ्जसा हेतुफलभावाभ्युपगमनान्तरीयकमिति कथमपवदेत्? अपि च, हेतुफलभावप्रभावितत्वात् सर्वव्यवस्थानां प्राणप्रयाणमायातमेतस्मिन् मत इति। एतदप्यसङ्गतम्। न हि सर्वथाध्यवसायसिद्धोऽपि नास्ति हेतुफलभाव इति, किं तु तत्त्वतः। ततो,

यावत् प्रकृत्या भ्रान्तस्य व्यवहारस्य न त्रुटिः।
तावत्तथा तथा हेतोरुपादानं न दुष्यति॥

स्ववित्तिमात्रसिध्यर्थं यथा हेतुपरिग्रहः।
तथा तन्नान्तरीयौ च कार्यकारणनिह्नवे॥

व्यवहारप्रसिद्धा चेदस्तु हेतुफलस्थितिः।
अध्यक्षसिद्धा यदि तु मुच्यतामात्मवेदनम्॥

न खलु पूर्वापरभावव्यापिभेदग्रहणविरोधिनि स्वसंवेदने च स्थितिः पूर्वापरीभूतहेतुफलस्वभाववेदनं चेति सचेतसामादरविषयः, तद्वरं हेतुफलग्रहणमाञ्जसं मृष्यतां विज्ञानवादव्यसनपरित्याग एव युक्तः। ततो यथा प्रकाशादिहेतवो निरालम्बनसाधनाः संवृतिमाश्रित्य व्यवहारस्मारणोपयोगिनः, तथा शक्तिसाधनान्यपि प्रमाणवचनानि न विरुध्यन्ते। भेदग्रहणपूर्वकश्च हेतुफलभावो विदितः सांव्यवहारिकस्य। अभेदग्राहिणि प्रत्यक्षे उपजाते स्वयमेव परिगलति, कदाचिदभेदमेव न गृह्णीयात्। तत्र द्वयोरपि वादिनोर्यावद्[द्धेतु]व्यापारपरिस्फुरणं तावत् साधु, संवृतिस्थितयोरेव विवादात्। तत्र च हेतुमन्तरेण क सिद्धिवार्ता? तर्हि हेतुना हेत्वभावः साध्य इति हेतुरात्मानमपाकरोतीत्यर्थः स्यात्। नायं विरोधः, परमार्थे तावद्धेतोरेवाभावात्।

एवं सर्वव्यवस्थानां विलोपोऽपि न बाधकः।
क्रमात् सर्वप्रपञ्चोपशम एव शिवं यतः[1]॥

सर्वे हि वस्तुसंबन्धाः फलहेतुतया गताः।
प्रतीत्योत्पन्नतामात्रं निरंशं स्वविदागतम्॥

संवृतौ तु हेतुरपि सन् साध्यमपि साधयति, व्यवस्था अपि स्वस्थाः। क्वात्मवधोपालम्भः?

---

१. तुल० म० वृ० पृ० ४, ११; म० का० २५. २४

यथा बाह्यं ग्राह्यं सहितपरपूर्वस्थिति तथा
यथान्यत् तद्ग्राहिस्मृतिमपि तथा संप्रथयति ।
यदा मूलान्वेषे प्रयसि विधुराणां स्थितिरियं
प्रपञ्चोऽयं चित्रः कथमिव तदापह्नवसहः ॥

इति संग्रहः ॥

कथं तर्हि हेतुना हेत्वभावसिद्धिरिति ? अयमस्यार्थः । हेतुद्वारायातपरमार्थरूपानुकारिणि [88b] विकल्पे यः पूर्वापराकारविरहप्रतिभासः स एव हेतुफलभावग्रहाभावः, ततः सव्यापारप्रतीततामुपादाय निर्व्यापारोऽपि स्वप्रतिभास एतस्मिन् सव्यापार इव लक्ष्यते । ततः स हेतुर्हेत्वभावहेतुरिति प्रख्यातिः । न च कल्पनाकारविवर्तविशेषादन्यस्तत्त्वाभ्यधिगमोपायः । न तु स्वविदेकलक्षणपरमार्थनिष्ठायां कस्यचित् क्वचिद् विवादः, साधनदूषणावतारो वा । संवृतौ च तस्य दूरभावेऽपि कथञ्चित् तथा तदाकारस्फुरणमेव शरणम् ।

अतएव च वचनादर्थप्रतीतिः स्यादिति जानानस्य हेतुर्नास्तीति प्रयोगस्तत्त्वत इति विशेषणापेक्ष एव । तथा च न विरोधः । सर्वथापह्नवे तु स्यादेष दोषः, यथा अवाचकः शब्दः, नानुमानं प्रमाणमिति, तत्रापि तत्त्वत इति विशेषणान्न कचिद् व्याघातः । अनुमानमपीन्द्रियप्रत्यक्षवत् संव्यवहारत एव प्रमाणं, न तत्त्वतः, संबन्धग्रहणाद्यपेक्षत्वात् । न च स्वविन्मात्रमग्रेन तच्च शक्यम्, स्वभावहेतावप्यन्वयव्यतिरेकयोः प्रतीतिभेदसाध्यत्वात् । संवादाच्च प्रामाण्यं, न च क्वचिद् भिन्ने वस्तुनि संवादः । तस्मात् स्ववेदनातिरिक्तस्य प्रामाण्यं सांवृतमेव, तथा हेतुफलव्यवहारोऽपि सांवृत एव, एकप्रतीतिकत्वादुभयोः,

न परत्र यथा मानं तथा हेतुफले च न ।
यथा च हेतुफलते परत्रापि तथा प्रमा ॥

तत् कस्मिन् भरमाधाय मानसिद्धिरिहोच्यते ।
तत्त्वतोऽन्यग्रहासिद्धेः संवृतौ सिद्धसाधनम् ॥

अविचारितरम्या धीः संवृतिर्यावदन्यवित् ।
उत्तरोत्तरधीमाद्यं तत्त्वं स्याद् यावदद्वयम् ॥

इदमितो जातमिति च,

लिङ्गात् परविदो वास्य विकल्पस्य समुद्भवः ।
इति संवृतिरेवेयं व्यापारः स्वविदोऽत्र न ॥

तथाभिमानमात्रं स्यादनुसन्धानधीरपि ।
ततोऽभिमानमात्राद् यत् सिद्धं सांवृतमेव तत् ॥

यावच्च संवृतिस्तावद्धेत्वादिनियमः स्थिरः ।
अनिष्टपरिहारेण प्रवृत्तिश्च न दुष्यति ॥

अथ शक्तिं विना न स्यात् सैव शक्तेस्तु संभवे ।
सांवृतत्वकथा मिथ्या शब्दभेदेन किं फलम् ॥

केवलं हेतुफलयोः सह्यं बाह्यत्वमेव न ।
बीजाकारधियस्तु स्यादङ्कुराकारधीरियम् ॥

तयोस्तर्हि धियोर्हेतुफलभावविदो धियः ।
भेदबाह्यविदेवासौ शब्दभेदेन किं फलम् ॥

अभेदे द्वैतविरहान्न हेतुफलतास्थितिः ।
ते एव वा धियौ स्यातां व्यतिरोधविरोधिके ॥

न पूर्वा न परा बुद्धिर्नात्मा तद्ग्राहकोऽपरः ।
पश्चाद् विकल्पो ग्राहीति शल्यो जेष्यति पाण्डवान् ॥

यदि शक्तिग्रहो बाह्यग्रहोऽप्यस्तु ह्रियात्र किम् ।
अथ न्यायरुचो रुच्या मुक्तिः शक्तिग्रहस्य च ॥

दृष्टमित्यवसायश्चेद्बहिरप्येष विद्यते ।
स्वविन्निष्ठैव बाह्यस्य बाधा सैव फलाङ्गयोः ॥

तथा च सूत्रम्,

हेतुप्रत्ययव्यावृत्तिं कारणस्य निषेधनम् ।
चित्तमात्रव्यवस्थानमनुत्पादं वदाम्यहम् ॥
[ ]

अनुत्पादमिति फलनिषेधः । चित्तमात्रस्थिति[89a]रेव हेतुफलनिषेधो व्यक्तः ।

हेतुनैव भवतो यदि वृत्ति-
यविदेव बहिरध्यवसायः ।
यावदात्मसमतिरप्रतिभावद्
व्यापृतिं न परतो न तु यद्वत् ॥

नानुमानमपहाय निर्णयो
नानुमा च परमां विदं विना ।
स्वं परं च विनिहन्ति सा यथा
स्वं परं च मम हेतवस्तथा ॥

रूपत्रयनिरूपणविशुद्धसाधनप्रभवं प्रकृत्या बहिर्मुखप्रवृत्तिकमनुमानमन्यवित्ति-नान्तरीयकमपि परबोधसाधनाय साधनीकुर्वन्तः क्वचित् प्रकरणे तदर्थानुवादिनमेव विरोधदूषणेन चोदयन्तीति क एष न्यायः ? केवलं यथा पृथग्जनो नानुमानप्रामाण्यं परिहृत्य जीवितुं शक्तो द्वैताभिनिवेशात्, तथा तदवस्थापितसत्याधिमोक्षमपि । य एव च तत्सिद्धस्वबोधमात्रतायां सत्याधिमोक्षः स एव बाह्यानुमानयोरुपमानः । न च तथा स्थातुं शक्यम्, अन्यथा तदैव साध्यसिद्धेरभ्यासलक्षणप्रयासनिरासप्रसङ्गात्। ततस्तत एव विसवमहिम्न आत्माधिमोक्षादिव प्रवृत्तौ साक्षात्क्रियालाभे प्रतिषिद्धः सर्वत्रगो धर्मधातुरिति नानुमानस्यापलापे पुनः प्रत्यावृत्तिः क्षीणेन्धनशिखिनः क्षयेऽपि भस्मवत् । अत एव,

निरालम्बा प्रशाम्यतीति

संवृतिसंज्ञिता विकल्पबुद्धिरित्यर्थः । अयमेव चार्थो हेतुफलविचारप्रस्तावे अनुद्यते, नाधिकं विधीयते । यावदेव बहिर्मनोऽनुमानमाननं च, अयमेव हेतुफल-स्वीकारः, तदैव तदाश्रयस्यैव लिङ्गस्य, परोक्षे ज्ञापकत्वात्, तत्प्रतीतौ कारकत्वात्। यश्च पश्चादात्मवेदनमात्रस्थितौ तत्परिभवः स एव हेतुफलभावस्येति किमत्राभिनि-वेशेन ? कथं तर्हि विज्ञानवादे वार्तिककारस्य कारकज्ञापकव्यवस्था ? सत्यमवान्तर-व्यवस्थामात्रमेतत् । अतएव बुद्धिराश्रित्य कल्प्येतेति वचनरीतिः । तत्त्वनिष्कर्षे तु,

अशक्तं सर्वम्
[ प्र. वा. २. ४ ]

इत्यादि ।

तदयमर्थः, अद्वैतादर्वाक् प्रतिपाद्यजनस्य मृदुमध्याधिमात्रबुद्धिभेदाद् यथा तथा वा व्यवस्था क्रियेत, क्रमेण मतिपाटवात् तत्र तत्रानवस्थितावद्वैते विश्वासः। अत एवोत्तरोत्तरपरमार्थवत्संवृतेर्नानात्वेऽपि तदपेक्षो हेतुफलभावावतारस्त्रिविधप्रत्यक्षानुपलम्भसंभव एव तत्त्वम्। स्वाभिप्रेतेऽपि वञ्चना मा भूदिति ततः संवृत्यन्तरादियमेव संवृतिरुपादेया, न पुनरपरमार्थाभिनिवेशाविशेषेऽप्यधमा, अभिप्रायसंवादेतराभ्यां विशेषात्। तदयमपर्यनुयोग एव कथमप्रमाणात् प्रतीतिमात्रादर्थसिद्धिः किं पुनर्विचारबाधितादिति ? न हि तत्र काचिदर्थसिद्धिः पुरुषपरितोषमात्रादन्यत्र। यादृशी साप्रतीतिरेव प्रतीतिः, तथानर्थसिद्धिरेवार्थसिद्धिरिति यक्षानुरूपो बलिः। यद्यार्यहृदयानुरोधः, अस्मदीयहृदयेन तु सर्वमस्ति, निपुणेन तु प्रतिपत्त्रा तथा प्रतिपत्तव्यम्, यथा परितोषमात्रेऽपि विप्रलभ्येत। अत एवाह,

सांव्य[89b]वहारिकस्य चेदं प्रमाणस्य रूपमुक्तमित्यादि।

तस्मान्न सांव्यवहारिकस्य प्रतिनियतसाधनानुसारदोषः, अन्यस्य क्व परितर्पः ? नन्वस्मन्मतेन तावत् सर्वमस्ति, तत्त्वसाक्षात्कारिणां तु नास्तीति क्वावस्थानमस्तु ? सत्यम्,

ज्ञाततत्त्वस्य लोकोऽयं जडोन्मत्तपिशाचवत्।
ज्ञाततत्त्वोऽपि लोकस्य जडोन्मत्तपिशाचवत्॥

तदत्र स्वातन्त्र्यमिच्छायाः।

लोकस्यासत्प्रकाशश्चेद् व्यवस्थावोऽस्तु नाञ्जसा।
स्वाभासकल्पनादन्यद्धेत्वादेर्न हि भासनम्॥

तस्मात् तत्त्वतः कार्यकारणभावाभावेऽपि संवृतावशक्यपरिहारत्वात् कथम् अनवधेयः ? प्रकृतस्य फलस्य हेतुसंभारात् संभवः, सांव्यवहारिकस्यैव तदनुष्ठानार्थितया तदनुसरणात्। तत्त्वसाक्षात्कारिणस्तु यथा न हेतुफलभावसिद्धिः क्वचित्, तथानुष्ठानमपि न क्वचित्। कथमनर्थकारिणः सत्त्वमिति चेत्– न, अस्मदपेक्षया स्वलक्षण-

क्षीणपरार्थक्रियाप्रबन्धाविच्छेदात्। तत्त्वतस्तु प्रकाश एव वास्तवी सत्तेति व्यवस्थापितं चित्रस्यैव रूपस्येति स्थितम्।

ननु तथापि,

चित्रं तदेकमिति चेदिदं चित्रतरं ततः।
[ प्र. वा. २. २०० ]
ततश्चित्रतमं चेदं यद् भेदे वेदनं मिथः॥

नानाकारं हि चित्रमभिधीयते, ततः परस्परविरुद्धधर्माध्यासिनामाकाराणां कथमभेदः? भेदोऽपि तर्हि कथमेकवेदनान्तर्गतानां भिन्नसन्तानवत् परस्परमसंवेदनात् एकस्यैव कस्यचित् प्रतिभासप्रसक्तेः। तदयुक्तम्, विरुद्धधर्माध्यासस्य तदवस्थत्वात्। तस्मादनेकमेवेदम्, अभिन्नोपादानजन्यत्वात्त परस्परमध्यक्षभावः साहित्यप्रतिभासस्वभावः। सन्तानान्तरभुवां तु बुद्धीनामभिन्नोपादानताविरहान्नातिव्याप्तिः।

अत्र चिन्त्यते,

एकोपादानता तासां नानात्वं किमपोहति।
नानात्वादेव चान्योन्यवेदनं तासु नेष्यते॥

न हि संवित् परसंविदमाविशति। एकसंविदर्गलविगमादेव च स्वपरविदाम् अन्योन्यवेदनापवादः। स चाप्रच्युतः प्रस्तुतेऽपीति न विशेषः। ननु साहित्यप्रतिभासे व्यवस्थाप्ये किमेकसंविदावेशेन, साध्यविरोधिना तमन्तरेणापि क्षतेरभावात्? ननु साहित्यमित्यपि सहचारमात्रं तद्देशकालोपनियते लक्षणं स्यातम्। प्रतिभासश्च तेषां स्वस्वरूपसाक्षात्करणमिति नान्योन्यवेदनमुपपादितम्; सन्तमसमप्रसन्निहितानेकपुरुषवत्। ततः परस्परसंविदावेश एव परस्परवेदनव्यवहारोपयोगी, किमत्र साहित्यमात्रेण? अथ सर्वेषां सर्वत्र प्रतिभास एव साहित्यप्रतिभासशब्देनाभिमतः, तदा साहित्यप्रतिभासेऽपि साध्ये विरुद्धः सर्वत्रैकसंविदावेश इति रिक्ता वाचोयुक्तिः। तदर्थत्वे हि सहाय एवायम्।

एकसंविदि नान्योन्यध्वनिश्चेत् तदपह्नवे।
प्रतीतिरेव नान्योन्यमर्थदोषोऽत्र दुःसहः॥

मा भूद् वा साहाय्यं साहित्यप्रतिभासस्य तु परस्परप्रतिभासार्थत्वे [90a] अभिन्नोपादनत्वेऽपि भेदानिषेधात्, न हि स्वसंवित्परसंविदमाविशतीत्यत्र दूषणे किमुत्तरीकृतमिति न विद्मः, पर्यायमात्रघोषणे विशेषापोषणात् ॥

एकोपादानभावेऽपि न हि ताः सहिता अपि ।
आविशन्ति मिथो वित्तिमन्यथा भेद एव कः ॥

स्वविदेकनिमग्नास्ता न स्पृशन्त्यन्यसंविदम् ।
साक्षात्कुर्वन्ति चान्योन्यं किमप्येतन्महाद्भुतम् ॥

अपि च,

उपादानाभेदाद् व्यतिपरिचयश्चेद् वरमतः
स्वभावस्याभेदो भवतु न तु भिन्नेऽप्यनुभवः ।
तथैका सामग्री यदि नियतवस्तुग्रहसहं
सृजेत्तत्तत् किं भयमुभयथा लक्षणहतेः ॥

एवं हि सत्युत्पत्तिसारूप्याभ्यां यद् ग्राह्यलक्षणं तस्य दूषणाद् भीतिर्न काचिद्, बहिरर्थवादिनोऽन्यथैव ग्राह्यग्राहकभावस्य सुलभत्वात् । तत्रोपादानाभेदात् परस्परमनुभवः सर्वेषामनुभवस्वभावत्वात् । एकसामग्रीजन्यत्वे तु जडानुभवयोः प्रतिनियतं वेद्यत्वं वेदकत्वं च स्यात् । तत्प्रतिबन्धाच्च नातिप्रसङ्गः । अथ जडस्यापि तदानीं स्फुरणात् कुतः प्रतिनियमः ? जडोपादानत्वादेव ग्राह्यं, तदन्यद् ग्राहकमिति । इन्द्रियेणातिव्याप्तिरिति चेत्– न, सामग्रीसामर्थ्यादेव नीलस्यैव वेद्यत्वेनोत्पत्तेः ।

सहभावितयान्योन्यमुपकारवियोगिता ।
तादात्म्यव्यतिवृत्तिश्च युवयोरुभयोरपि ॥

अथ प्रकाशोत्पत्तेः साधारणत्वदोष इति चेत् ? वेद्यत्वेनोत्पत्तिर्न प्रकाशत्वेन । किमिदं वेद्यत्वमिति चेत् ? स्वसंविदितयोः किमिदं परस्परवेदनमिति समानम् । अथ न वेद्यत्वं प्रकाशोत्पत्तेरन्यदिति चेत् ? तथापि साधारणत्वं सामग्रीबलादेव परिहरिष्यते । अथैकरूपत्वाद् वस्तुनो नीलत्ववत् प्रकाशेनाप्रकाशेनापि नन्वसाधारणेन अभूत्वा स्थातुमशक्यम् । शक्यमेव सामग्रीबलादिति तूष्णीकामास्यताम् ।

अथ प्रमाणव्याहतोऽयमर्थ इति क्व सामग्र्याः शक्तिरुपनीयताम् ? यस्तर्हि तदवतारमपि नापेक्षते स्वरूपनिरूपणे स्वयमेव परिगलति, तत्र कथमुपादानाभेदनिर्देशः ? न हि द्वयोः प्रकाशयोरुत्पन्नयोरेकेनान्यः प्रकाश्यते, एकस्यान्यः प्रतिभाति, एकस्मिन् वेति काचिदर्थसङ्गतिः। यथा हि प्रदीपस्य स्वप्रकाशः कथञ्चिद् विदितो ज्ञाने तदनुसारेणानुगम्यते, तथा न प्रदीपानामन्योन्यप्रकाशतापि काचिदुपलब्धा, ततो यथा दीपेन दीपान्तरं प्रकाशितमिति विप्लवस्तथा ज्ञानेन ज्ञानान्तरमिति। तत् कस्मिन्नर्थे एकोपादानमुत्तरमस्तु ? एतेन स्वस्य वेदनमित्ययोगव्यवच्छेदस्यापि नापह्नव एवातिव्याप्तिपरिहारश्चेत् सुलभ इत्यपि निरस्तम्, परवेदनार्थस्यैवाप्रतिष्ठानात्।

परप्रकाशोऽपि दृष्ट इति चेत् ? सोऽप्यप्रकाशोपादानस्य प्रकाशक्षणान्तरजननद्वारेणेत्यनवसर एव ज्ञानदीपादिषु। यस्तु तत्रापि सहभाविनमालोकं पटस्य प्रकाशकमिच्छति सोऽपि न लोकाध्यवसायमात्रेण तत्त्वव्यवस्थेति, इदमस्येति व्यवस्था[90b]निबन्धनानुमाने यदि तज्ज्ञानजननमाश्रयेत्, तत् तर्हि ज्ञानेन सहभुवार्थस्य प्रकाशनस्वीकारे नास्तीति दुःस्था व्यवस्था। अथेहापि पृष्ठजविकल्पज्ञानापेक्षया साम्यम् ? तर्हीदमेव ग्राहकं न पूर्वकम्। इदन्त्वभिन्नकालमिति सौत्रान्तिकमतावतारः।

अथ नालोकस्य ज्ञानजननेऽपि तावता प्रकाशकत्वम्, ज्ञानमपि सहभाव्येव, किं तु सामग्रीतः सहोत्पत्तिमात्रेण, तर्हि तदातनेन्द्रियाण्यपि प्रकाशकानि प्रसज्येरन्, तेषामप्रकाशरूपत्वादिति चेत् ? प्रकाशोऽपि प्रकाश एवास्तु, प्रकाशकस्तु कथम् ? न हि पीतस्य सहभावमात्रेण नीलं पीतकं भवितुमर्हति। तस्मान्नाकिञ्चित्करं कस्यचित् संबन्धपद्धतिमध्यास्ते। कारणोपकारद्वारेण तु प्रदीपोऽप्रकाशस्वभावे घटादौ दृष्टः तद्व्यवहारभाक्, ततस्तज्ज्ञानस्य ज्ञानान्तरं प्रकाशमिति गम्यमानैकोपादानभावे न षष्ठीं प्रयुञ्जीत नाम। न पुनरध्यक्षतापेक्षया, चैत्रस्य मैत्रः सुन्दर इत्यत्र यथा गम्यमानसौदर्यतापेक्षया, न तु सौन्दर्यापेक्षयाध्यक्षता, सौन्दर्ययोरेकात्मनिष्ठत्वात्।

नैवं कश्चित् प्रयुंक्त इति चेत् ? यदि परिभावकः स्यात् तदपि कथं प्रयुञ्जीत, समानत्वात् न्यायस्य ? तदस्यान्धदुग्धन्यायेन ग्रहणे गतमेतद् ग्राह्यग्राहकलक्षणवैधुर्यद्वारेणाद्वयसाधनं न्यायनायकस्य। न चायं न्यायः, तत् किमनेन वार्तिककारद्वेषात् शुभगुप्तजुष्टलोटनेन ? अनेकप्रदीपवदेव तर्हि संविदः सहिताः प्रतिभान्ति भिन्नाश्चेति वेदनेनापि कोऽर्थ इति चेत्– न, व्यतिरिक्तप्रतिपत्त्यपेक्षया हि सहिताः प्रकाशन्त इति व्यवहारः। ननु तदभावेऽपि सहितानां प्रकाशनं न क्षीणम्। एवमेतत्। न तु

एकोऽप्यन्यस्य प्रकाश इत्यस्ति । स्वस्वप्रकाशरूपता पुनरयोघटीविहितानामप्यस्तीति न प्रस्तुतसिद्धिः । तस्मादन्योन्यसंविदन्तर्भाव एवान्योन्यवेदनव्यवहारसिद्धिः । न ह्येकदीपप्रभवा अपि परस्परप्रकाशिनो दीपा इति वार्ताप्यस्ति ॥

भिन्ना एवाणवस्तत्र जीवं चेत् सुतरां प्रियम् ।
काप्यदृष्टेस्तथा हेतोरसाधारणता स्फुटम् ॥

स्वप्रकाशो यथा दीपो दृष्टोऽनेकस्तथा यदि ।
बीजाभेदान्मिथो भासस्तत्र दृश्येत साध्विदम् ॥

तदयमेकसामग्रीसंभवोऽव्यभिचारद्वारेण क्वचिदेकदर्शनेऽन्यानुमानाय प्रभवेत्, नान्याध्यक्षत्वाय, रसरूपादिवत् । एवमेकोपादानतापि सजातीयतामधिकां प्रसाधयेत्, न स्वभावसंकरसाध्यमन्यप्रकाशम् । अन्यथा क्वचिदेकमन्यस्य जडमित्यपि स्यादिति। एतेनाभिन्नोपादानत्वमेव परस्परप्रतिभास इत्यपि कल्पनमपास्तम्, एकोपादानानां जडानामपि परस्परजडत्वप्रसङ्गात् । आत्मात्मरूपेण हि तेषामपि जडत्वम्, एवं प्रकाशत्वमपि ॥

अपि च,

न [91a] रूपजननद्वारा यथा वस्तुमति स्थितिः ।
एकोपादानभावेन तथास्तु परिभाषया ॥

यथा हि, सौत्रान्तिकस्य सरूपजननमेव ग्राह्यत्वं, न तु तस्यापि स्फुरणम्, एवमेकप्रतिभास एवान्यप्रतिभासः स्यान्न चित्रप्रतीतिः । किं च, एकोपादानत्वमपि शुद्धावधेयमेतत्, स्वप्नजाग्रदवस्थयोश्चित्राकारस्यैव हेतुत्वावधारणात् । व्याकुलकालेऽपि विकल्पस्यानेकाकारविवर्तत्वात्, एकवस्तुविकल्पनेऽपि प्रदेशभेदेनाकारस्य चित्रत्वात् । पुञ्जात् पुञ्जोत्पत्तौ चान्यतमस्यैव सामर्थ्यकल्पने च क्वचिदनेकस्य जनकत्वं भावाभावानुकारं समानम् । विच्छिन्ननीलाकारादपि नीलाकारोदयदर्शनादिति नोत्तरमचित्रात् चित्रोत्पत्तिवादिनः । अशक्यसंख्यानत्वाच्च न न्यूनाधिकभावः । किं च वटचत्,

न्यूनाधिकत्वेऽपि भवेत् किञ्चिदेकमनेककृत् ।
न त्वेकभावो न्यूनस्य भावे वा चित्रमद्वयम् ॥

तज्ज्ञानं तद्वदन्यदपि गाढस्वापाद्यवस्थानन्तरं चालयविज्ञानात् प्रदेशभेदेन चित्रादेव चित्रान्तरोपपत्तिः। अस्तु वा संमूर्च्छिताकारादेकस्मात् कदाचित् क्वचित् चित्रस्य क्रमेणाक्रमेण वा भावः। यदा तावत् जागरानन्तरं यावत्कालमनवरुद्धो मिद्धादिभिस्तावत् प्रथमक्षणभुवो विहाय नापरेषां परस्परमनुभवः स्यात्, उपादानभेदात्। परम्परया तदेकप्रबोधादिति चेत्? यथा यथा तर्हि व्यवधानं, तथा तथा मन्दतातारतम्यादन्योऽन्यप्रकाशप्रणाशः कियताप्यन्तरेण स्यात्। चित्रप्रकाशा विनाशश्च जागरादिभिरनेकं दिनमनुभूयते, नापि मन्दतातारतम्यम्। नैवं ज्ञानाकारे शक्यमिति चेत्? एकाकारसंवेदनेन भिन्नस्य संवेदनमित्यपि कथं शक्यं यदि नामोपादानाभेदः, स्वगतस्यैव भेदाभेदस्य प्रयोजकत्वात्? न च प्रसङ्गे तत्त्वमेव, विपर्ययपर्यवसायित्वात्।

किं च,

उपादानेन संबन्धादुपादेयस्य चेद् ग्रहः।
उपादानस्य किं नेति संबन्धो न प्रयोजकः॥

स्वभावविप्रकृष्टो हि परस्परस्य बोधः, तां च सीमानमतिक्रम्य सन्निकर्षः स्वप्रभावमादर्शयति, स चोपादानेनैव सार्धं मुख्य इति एकसामग्र्यधीनानुमानवद्धेतुप्रतीतिद्वारक एव सहभुवो भिन्नस्यानुभवः स्यात्। अतीतत्वान्नेति चेत्? स्वभावकालविप्रकर्षयोर्न कश्चिद् विशेषः। अथोपादानस्य द्वयमप्येतत्, सहभुवस्तु स्वभावविप्रकर्षमात्रम्। अद्य तर्हि सन्निकृष्टत्वमपि निकृष्टम्। उपादाने तु प्रौढमिति गोधाशशान्यायः। सन्निकर्षबलाच्च ग्रहणस्थितिः। अथातीतस्फुरणे वर्तमानत्वमेव स्यात्, कथमतीतत्वम्? ततो नातीतस्फूर्तिः। यदीदृशी वस्तुदृष्टिः परस्यात्मभूतया संविदा [91b] संवेद्यमानं परं स्वरूपमेव स्यात् कथं परवित्तिः?

तदत्रानुन्मीलिताक्षस्य सन्निकर्षघोषणमन्यत्राप्यस्तु। योगिवद् वातीतग्रहणमपि स्यात्। एवं प्रबन्धप्रवृत्तौ पूर्वपूर्वसर्वक्षणवीक्षणप्रसङ्गो यावदेकमुपादानमनवधिर्वा। यथा व्यवधितारतम्यं तथा सन्निकर्षप्रौढितारतम्यमिति। एवं स्वोपादेयस्यापि प्रतिभासप्रसङ्गे सर्वं तद्वत्। अपि च यदि चित्रप्रतिभासस्य भेद एव तदा नीलपीतवन्नीलखण्डयोरपीति परमाणुपर्यन्तदर्शनात् न किञ्चिदेकं संविदितमस्ति यस्यान्यदेकोपादानं स्यादित्यप्रतिरोधमान्ध्यमशेषस्य जगतः। न वा किञ्चिदित्येतत्पर्यवसानोऽयं वादः।

तद् यदीदमेव विवक्षितं किमनेन फल्गुवल्गितेन ? ऋजुना क्रमेणानेकत्वमपि भावानां नास्तीत्येतदेवोच्यताम् । आकाराणामवस्तुत्वमिष्टमेवेति चेत् ? तथापि किमनेन न्यायमसहमानेन ?

अपि च,

आकाराणामवस्तुत्वान्नैकोपादानसंभवः ।
प्रकाशमात्रस्य पुनर्भेदाभावेऽपि न क्षतिः ॥

अथापि भेद इष्येत न मृष्येत मिथः प्रथाम् ।
मिथः प्रथायाः क्षान्तौ तु ग्राह्यग्राहकता परा ॥

इति सिद्धान्तविप्लवः । तदयमाचार्यनिरपेक्षमाख्यायमानोऽप्युपादानाभेदः स्वभावाभेदमनाक्षिपन्नेषामाकाराणां परस्परानुभवविभावनाय प्रभवति ।

दृश्यते तावदेवं चेत् दृश्यतां किं त्वभेदतः ।
बीजस्य स्वात्मनो वेति विचारमिदमर्हति ॥

एकत्वे चित्रताऽभावो नानात्वे सुतरामयम् ।
नैकत्वं नापि नानात्वं बुद्धीनामुपपत्तिमत् ॥

तत् कोऽत्र परमार्थः ? तथा हि,

आकारा यदि रूपमेव मनसश्चित्राः कथं किं नु वा
चेतश्चित्रमनेकमेव यदि तत् कुत्रैक्यमास्थीयताम् ।
अप्येवाकारधरा च धीरविषयो नापि क्षमा संहतौ
भासन्ते च परस्परव्यतिकरं कोऽप्येष मायाविधिः ॥

तस्मात्,

इदं वस्तुबलायातं यद्वदन्ति विपश्चितः ।
यथा यथार्थाश्चिन्त्यन्ते विशीर्यन्ते तथा तथा ॥
[ प्र. वा. २. २०६ ]

भावा येन निरूप्यन्ते तद्रूपं नास्ति तत्त्वतः ।
यस्मादेकमनेकं च रूपं तेषां न विद्यते ॥

नाङ्गानि धारयन्त्येते विचारविपदूषिताः ।
वरं ह्युपेक्षिता भावाः कृत्वा गजनिमीलनम् ।

इति । स्वप्नमायामरीचिगन्धर्वनगरप्रतिभासवत् सर्वधर्मशून्यतैव न्यायप्राप्तेति परमार्थः । ननु भगवन्तमधिकृत्य प्रक्रान्तो विचारः, तत् किमीदानीं बुद्धोऽपि भगवान् मायोपमः स्वप्नोपम इति चेत्? कस्य पुनरत्रोपालम्भः स्वयमेव भगवता तथा प्रथनात्, सोल्लासं तद्व्याहृतैश्वर्यैरुद्योतनात्, तथतया च तथागतपृथग्जनयोरविशेषस्वीकारादागमोपगीतगाम्भीर्यौदार्यविशेषादन्यत्र? ननु व्यापकानुपलब्धिबाधितत्वात् लक्षणाद्याकाराणामलीकत्वात् क्वौदार्यमसत्ख्यातिप्रसङ्गश्च ? असत्प्रतिभासिज्ञानस्वभावत्वेन भ्रान्तत्वात् क्व गाम्भीर्यम् ? तदयुक्तम्,

अतस्मिंस्तद्ग्रहो भ्रान्तिर्भ्रान्तिरन्या [92a] निराकृता ।
अलीकं चानलीकेन रूपेण न स पश्यति ॥

यथा स्थिता धर्मतेयं तथा ज्ञानात् तथागतः ।
व्यवस्थामात्रतोऽप्यस्य बीजाभावाद् भ्रमो न हि ॥

यतः प्रवृत्तिव्यावृत्ती विकल्पाद् वासनाभुवः ।
तयोः समूलमुन्मूलान्निर्विकारपदस्थितिः ॥

असत्ख्यातिर्मते चात्र नानिष्टाभासतेह यत् ।
असत्त्वेन तत्सर्वं न चास्त्यन्यदबाधितम् ॥

पूर्वं विस्तरेण निरस्तत्वात् ।

अथापि धर्मोत्तरमार्गसङ्गा-
दनङ्गमङ्गीकृतमेतदेव ।
दकादिकाकारविविक्तमन्तः-
परिस्फुरद्दुःखसुखादि चेतः ॥

नात्र किल बाधकावतारो देशवितानीभावादिति । तदपि विलुतम् । यतः,

अन्तः सातादिविषयं बहिः शीतादिगोचरम् ।
वेदनं तत्तदाकारं बाधकग्रस्तमेव च ॥

व्यक्तिविशेषमेव हि ज्ञानस्याकारं विद्मः। देशवितानाभावश्च देशाद्यल्पत्वं वा स्यादभाव एव वा ? तत्र परमाणुपरिमाणेऽपि देशे प्रसङ्गो दोषः कियत्यल्पे प्रतिहन्येतेति न प्रथमः पक्षः। द्वितीयस्तु असंभवी संभविनः, संभविना हि नियमेन क्वचिद् भाव्यम्। क्वचिदप्यभावेऽभाव एव विभावितो भवति। संवेद्यन्ते चासुखसौमनस्यादयो देहान्तरतद्बहिर्देशव्यवच्छेदेन स्फुरन्तः। अन्यथा प्रकाशवन्नीलादिभिः अभेदे तद्वदेव दोषः।

तत्र च काये कियन्तमभिव्याप्य देशमासत इति किमनेन ? का वा सदेशता, रूपेऽपि स्वरूपातिरेकिणो देशसंज्ञितस्य क्वचिदनुपलब्धेः ? नाप्याधार एव देशो, वातातपयोरप्यदेशताप्रसक्तेः। न च तदपेक्षया बाधकप्रवृत्तिः, किं तु स्वरूपापेक्षया। स्वरूपं च निरङ्गमपि कल्पनाबुद्धौ यथा व्यतिरिक्तैरिव धर्मान्तरैः परिकरितमाभाति, तथा इहेदमिति कालाकारविमर्शप्रत्यनीकप्रत्ययकल्पितो नभोगतिप्रतिद्वन्द्वीव देशो न नाम व्यवहारमवतरति। न चेयं गतिरन्तःसुखसौमनस्यादिवेदने दूरवर्तिनी स्पर्शान्तरवदित्युक्तप्रायम्। अथ यथा नीलादौ विशदतरोर्ध्वाधरादिभागत्वं वितस्तिहस्तहस्तिपुरुषादिपरिमाणपरिच्छेद्यत्वं चोपलभ्यते, न तथा सुखादिष्विति मतिः, ततः किं देशवत्तामात्रपरिज्ञाने ? एवं ह्यस्पर्शनेन्द्रियगन्धरसध्वनिप्रभृतीनामप्यदेशताप्रसङ्गः। न च परोक्षे वह्न्यादावपि प्रतिनियतदेशतादि शक्यम्।

अथ यत्र फले गन्धरससंभवस्तावति वर्तमानौ नियतदेशावूहितुं शक्यौ, परपूर्वादिभागेन च ग्रहणकाले चेन्द्रियदेशपरिमाणेनेति चेत् ? सुखाद्यपि देहान्तर्गता-[भोगा]देशपरिमाणेन किं न शक्यं प्रतिपत्तुम् ? अभ्यासिस्तु फले गन्धरसयोरुपलब्धा। भोक्तुर्नियतदेशोपलम्भ इति चेत् ? सोऽपि स्थूलग्राही नाणुशः प्रतिनियमेन देशमवसातुं शक्तः। तस्मादत्र तावद् वर्तते कियन्तमपि देशमभि[92b]व्याप्येति समानम्। एवं ग्रहणकालेऽपीन्द्रियदेशपरिमितस्य प्रतिनियमनिश्चय एव। सुखादेरपि वा स एव न्यायो दर्शनश्रवणजनितस्यापि। अप्रियावलोकनतप्तं हि लोचनमेव प्रियदर्शने शीतलीभवदनुभूयते। खरांशुतप्तस्य तडागावगाहने तु व्यक्तः परिमाणविशेष ऊर्ध्वाधरभागो वा। अन्यदेशोदयस्य तत्रारोपकल्पनेऽपि स एव देशः स्यात्। परिमाणनियमो भूमिषु भूभुजामुचितः। इदमेव च नृसुखं यच्छाब्दं संवेदनमिति न भिन्नसिद्धिः, स्पष्टप्रतिभासाद् वा। सौमनस्यस्य तु मानसत्वादस्पष्टप्रतिभासेऽपि तदनुसारेण

संभविन इहैव कचिद् देश इति सामान्येन सिद्धेरप्रतिबन्धात्। नापि निर्बन्धः तत्रोपयोगी, साध्यस्यापि विकल्पकत्वप्रसङ्गात्।

किं च परिमाणनियमानवधारणे यदि देशवत्तानिषेधः कचित्, कालवत्ता तु सर्वस्य मा भूत् क्षणस्य परिमाणेनावधारयितुमशक्यत्वात्। केवलं पूर्वं नासीत् पश्चाच न भवतीति प्रतिनियतकालतामुपस्थापयति स्थवीयसी बुद्धिः। इहापि न बहिर्देहादिहैव तु सौमनस्यादीति निश्चयः स्थित एव। किं च, कालयोगस्तावदिष्ट एव सौमनस्यादेः, अन्यथा कदाप्यभवतः साध्वी बाधकयुक्तिः, स एव च देशवत्तामुपनयति, कचिदभवतः कदाचिद् भावायोगात्। यत्रैव चास्ति स एव देशः, स तु स्थूलः सूक्ष्मो वेति किमनेन? *काले तु प्रयोजनान्तरापेक्षया नियमस्थापनमिति ॥*

यथा नियतकालता नियतदेशतैवं स्फुटा,
प्रदेशनियमस्त्वसावणुतयाधिमात्रेण वा।
द्विधापि तु न बाधकव्युपरतिः सुखादावतो
निराकृतिगिरा कृतं किमु विशेषपराकृतेः ॥

तदेवं सत्तामात्रानुबन्धिनी कालवत्तेव देशवत्ता न कचिद् व्यापकानुपलम्भसंभवं भयमनवकाशयितुं शक्नोति नैवं वा स्वयमपि सत्ताव्यवहारसिद्धिः कथं सुखादौ?

एकानेकविवेकासिद्धिर्यद्वदस्य भवतोऽपि न सिद्धिः।
एकेतरयोरन्यतरस्य स्वविदो मित इव धाम निरस्य ॥

यथा हि, नीलस्येव पुरोऽवस्थिताकारस्य सुखादेरप्रतिभासनात् एकानेकरूपव्यतिरेकः प्रतिपत्तुमशक्यः, तथा तत एव तयोरन्यतरसंभवोऽपि पुरःस्फुरत्येवेदमेकमनेकं वेति निरूपणोपलब्धेः। परोक्षेऽपि दर्शनानुसारेण तथा व्यवस्थायाम् अपुरःस्फुरत्यपि रूपे पुरःस्फुरद्रूपानुसारेण देशप्रतिनियमात्तिग्मभङ्गजाग्निकणिकादिवत्तयोरभावोऽपि व्यवस्थाप्यताम्।

सता अवश्यमेकधा भाव्यमिति चेत्- न, व्यापकत्वात् तयोरन्यतरसन्देहे सत्त्वस्यैव सन्देहात्। स्वसंवेदनस्य तु शङ्कां श्वेतादियदेव दूरीकुरु, मा सत्प्रत्याशया स्थाः। न च प्रमाणान्तरमस्तीति परस्य सन्दिग्धासिद्धिमुद्भावयतोऽपि न स्वयं सद्व्यवहारः। साधकबाधकयोर्द्वयो [93a] सन्देहस्य न्यायप्राप्तत्वात्। स्वसंविदिते च

नीलादिज्ञानस्वरूपराशौ बाधादर्शनमेव बलवद् बीजमस्य। तत एव तर्हि भवतु स्वसंविदोऽप्रामाण्यम्, बाधाया अभावे तु प्रामाण्यमिति चेत्– नैवम्, अदर्शनमात्रेणाभावसिद्धेः। बहिः समस्तमभ्यस्तमबाधकस्य च साधकसंभवान्नापरो दृश्यानुपलम्भः। शास्त्र एव तु चिन्तितोऽयमबाधवाद इत्यास्तां तावत्।

वेदोत्पादकथादीनामपि चैवं प्रमाणता।
उत्सर्गसिद्धं मानत्वमित्यपि ग्रस्तमग्रिमैः॥

स्वतो यत्रापि मानत्वं तदभ्यासफलं विदुः।
बहिः समस्तमभ्यस्तमसदन्तस्तु चिन्त्यते॥

ननु ग्राहकाकारबलादलीकस्यापि ग्राह्याकारराशेरवभास इत्यशक्यापह्नवः सुखादिरिति चेत्– न,

स्वप्रकाशस्वभावत्वाद् भागयोरुभयोरपि।
किं ग्राह्यं ग्राहि वा किं स्यान्न चान्येनान्यभासनम्॥

इति बहिरर्थदूषणे प्रा[गेव] निरूपणात्। न चाभिमानमात्राद् वस्तुस्थितिरिति। किं चात्र मते दुःखादिवन्निराकारज्ञानरूपतया,

रागद्वेषमोहमानादिनिखिलक्लेशगणः सहजो यदि।
इष्टानिष्टतया च विभागः कः साकारमतेऽङ्ग विरागः॥

अलोकाकारयोगो हि भ्रान्तिर्भवताम्। तदभावादविद्यादयः स्वभाव एव भवभाजां भवेयुः, आलम्बनद्वारेणालीकत्वे सुखादेरपि प्रसङ्गात्। ततोऽनिष्टतया हानमुपादानमन्यथा केषाञ्चिदिति साकारपक्ष एवाक्षरान्तरेणोक्तः। आकारचक्रैकदेशदृश्यस्पृश्यपर्यवसानं तु वैमत्यमिति न किञ्चिदेतत्। यथा भ्रान्तित्वेऽप्यनिष्टतया कस्यचित् त्यागः तथालीकत्वेऽपीष्टतया आकारविशेषस्य स्थितिरस्त्विति साध्यक्षतिः। चैत्ताश्चैते सुखादय इष्यन्ते, चित्तं च विषयग्राहितया आकारस्वरूपं हेयम्, चैत्तं चावस्थायीति नायं संप्रयुक्तधर्म इत्यागमविरोधः। अभेदे च चित्तवदेवालीकत्वं तेषां तद्वद् वा चित्तस्यापि सत्यतेति कथमनाकारस्य साध्यस्य सिद्धिः?

ननु यद् यथा भाव्यते तत् तथा स्फुटीभवतीति व्योमाकारमपि चित्तं भाव्यमानं तथा स्फुटीभविष्यति, प्रसिद्धाकारविरहाच्च निराकारं तदेवेति कथं साध्यासिद्धिः? न, प्रयोजनाभावात्,

संसारदोषैरस्पृष्टं लक्षण्यज्ञनोज्ज्वलम् ।
आत्मभावं विहाय त्वं विहायस्त्वं यदीच्छसि ॥

ननु संभोगकायोऽयमिष्ट एवार्हतां सुतैः ।
धर्मकायस्य लाभेच्छुर्भजेद् व्योमोपमं वपुः ॥

इति चेत् ? तत्तर्हि न तावत् साध्यं, यथोक्त एवेच्छापरिसमाप्तेः । नापि साधनं कस्यचिदर्थस्य, निराकारात् क्वचिदर्थसिद्धेरसिद्धेः । परार्थसिद्धिरपि विशिष्टाकारप्रतिबद्धैवेत्युक्तप्रायम् । इदानीमाकारादेवार्थसिद्धिः परतस्तु निराकारादिति क एवं प्रत्येष्यति स्याद्वा[दा]दन्यत्र ? आगमादेवमिति चेत् ? क्व युक्तिबाधितेऽर्थे शरणमागमः ? पुण्यज्ञानसं[23b]वलिताकारविशेषेण विशिष्यमाणार्थशक्तिः तत्प्रकर्षपर्यन्ते स्वयमपि प्रकर्षपर्यन्तवर्तिन्येव स्यात्, कथं ततो विच्छिद्येत, अन्यतो वा संभवेत् ? यस्य कदाचित् प्रतीतिरेवासंभविनी, न चागमोऽपि मुख्याक्षर ईदृगर्थः, व्याख्यान्तराश्रयस्तु युक्तिप्रागल्भ्ये भवेत्, सा च क्षीणेति चिन्तितम् । तथापि बाधभयात् भक्तव्यमेव तद्वपुः, अबाधत्वाच्च तदेवार्थसमर्थमित्यपि सिध्यतु, तत एव च प्रागपि तदुपायिन्येवार्थशक्तिरिति चेत् ?

न सोऽस्ति कश्चित् समयप्रकारो
यत्र स्थितं नाभिनिहन्ति बाधः ।

तथा हि, यद्व्योमोऽयमनलाकारम्,

यदि तावत् खवद् व्यापि तद्वदेवास्य दूषणम् ।
ज्योत्स्नातडिन्मणिज्वालास्फुलिङ्गादितुलास्वपि ॥

तद्वदेवेति संबन्धः ।

न स्वरूपेण यद् दृष्टं दृष्टान्तद्वारतोऽथवा ।
भाव्यं कथं तदा रूपे तुला तेष्वेव केनचित् ॥

भविष्यति ? रूपविरागिणो हि सम्यङ्मार्गपरिचयादेव शुद्धिबुद्ध्या तज्ज्ञानम् । न तद्भावनादेव व्यापकानुपलम्भसंभवभयभ्रंशभागी । किं भूयः ?

सांशेऽवयविवद् दोषो निरंशे परमाणुवत् ।
नापरं वस्तु चास्तीह सर्वमासां हि शून्यता ॥

तस्माद् बाधाभयभ्रंशशंसिनापि तद्वाच्यमशक्यं च। प्रवचनोक्तत्वाद् भाव्यमेवेति चेत्? तत् किमिदानीं पितृकूप इति क्षारवारिपानम्? किं वा धातुगतियोनिश्रावकादिमार्गो न तदुक्तः? अत्र च यस्यापि हेयतया निर्देशः, तस्यापि नाज्ञतया हेयत्वम्, अपि तु विनेयस्याभिलापादिवशात्। स्वर्गोपदेशादेव हि भगवान् प्रमाणम्। तस्मात् तत्रोपयोगबुद्धेरभावाभावात् स्वयमदृश्यस्य बाधातिक्रमाकारनिदर्शनस्याभावाच्च कुतो भावनामयी सिद्धिरिति संभोग एव पर्यवसानं व्यापारस्य,

गुणास्तदेकनियतास्तदेकनियता रुचिः।
तदेकनियतं मानं बाधेनैव समः परः॥

पर एव जिनो येषां तैः स्वशास्तापि हारित.।
ऋजुक्रमगृहीतोऽय आगमाह्लादणोज्ज्वलः॥

शून्यता संविदो नान्यद् गाम्भीर्यं सा च तद्गता।
सा तु कल्पितधर्माणां सर्वेषां वेति चर्चितम्॥

आगमेऽपि स्ववाचा न निराकारस्य धर्मिणः।
श्रूयते धर्मकायत्वं व्याख्यान्यापि कृता न किम्॥

इष्टं खदृष्टान्ततया निरङ्गं
मनोऽथ शून्यं ननु सर्वथास्तु।
न सर्वथा चेदुपमा निरंश-
त्यागोऽपि किं न प्रणयी प्रियस्य॥

आगन्तुकमलप्रपञ्चविगमेनैव हि विहायःसादृश्यमिति दर्शितं प्राक्। अतएव महायानोत्तरतन्त्रे निर्दिष्टैव साधर्म्येण सर्वत्र व्योमोपमा, यथा व्यपगतविकल्पं गगनवदित्यादि। तस्मान्नाकारविरहेण। यत्तु,

अकिञ्चने निराभासे निरालम्बे निराश्रये।
चक्षुष्पथ व्यतिक्रान्तेऽप्यरूपिण्यनिदर्शने॥

यथा निम्नोन्नतं व्योम्नि दृश्यते न च तत्तथा।
बुद्धेष्वपि तथा सर्वं दृश्यते न च तत् तथा॥

इति। तत्राकिञ्चनादिविशेषणं व्योम्न एव रजोनीहारादादिकृतस्य निम्नो[94a]न्नतस्य दर्शनेऽप्यभावविभावनायेति व्यक्तमेतत्। संबुद्धेऽपीत्यनुक्त्वा बुद्धेष्विति सामान्याधिकरण्यं बाधकबहुवचननिर्देशयत्नात्। सुगते तु भगवति यथोक्ताकारे एवापवादसमारोपलक्षणस्य निम्नोन्नतस्य दर्शनेऽपि न भाव इतीयदेव विवक्षितम्। अस्तु वा वचनपरिणामेन भगवत्यपि योजनम्। यथा त्वाचार्यवसुबन्धुपादैर्धर्मधर्मिताप्रविभागे निर्विकल्पज्ञानलक्षणप्रस्तावे द्वयेन ग्राह्यग्राहकभावेन निरूपयितुमशक्यत्वादरूपि, अविषयत्वादनाभासमिति विभक्तम्, तथेह बुद्ध इति प्रयुक्तेऽप्यस्तु। अकिञ्चनत्वमप्यागन्तुकरागादिविगमाज्ज्ञेयम्। शेषमविरुद्धम्। अतएव धर्मधर्मिताप्रविभागे एव,

असत्ख्यानात्मतोऽख्यानादिति भ्रान्तिव्यवस्थितौ।
ख्यातिरध्यवसायार्था बोद्धव्येति निराकुलम्॥

कथं पश्यसि तस्यैवं विभाति प्रतिभासते।
इत्यादिवद् विकल्पेऽपि ख्यात्युक्तिर्न विरुध्यते॥

मध्यान्तविभागे च सुव्यक्तत्वात्।

यदि तु ख्यातिराकारस्यासतोऽभिमता भवेत्।
यौवराजकराजस्य मुनेः संभोग इत्यसत्॥

तदाधिपत्यात् तत्ख्यातिः परस्येत्युक्तवान् न किम्।
नित्यव्यापितयोरर्थं यथा व्यक्तं विभक्तवान्॥

तस्मादध्यवसायोऽयमसतः ख्यातिरीरिता।
शुल्कव्ययभयान्नातो रत्नराशिरपास्यताम्॥

तदुक्तिधर्मकायस्य त्यागेऽप्येष न किं नयः।
ननु तस्यापवादेन को बुद्धं शरणं गतः॥

वस्तुनो धर्मिरूपस्य धर्मः सामान्यलक्षणः।
शून्यताख्यो मतो धर्मकायः कातरतारणः॥

शून्यतातथताधर्मधातुभूतशिखादिभिः।
पदैः ख्यातः स्वभावोऽसौ स्वाभाविक इति श्रुतः॥

योगाचारमते गीतः परिनिष्पन्न इत्यपि।
द्वयाभावतया सर्वशून्यता मध्यमाध्वनि ॥

आश्रयस्य परावृत्तिः सैव धातुरनास्रवः।
तत्त्वं च परमार्थोऽसौ तद्बोधाद् बुद्ध उच्यते ॥

तन्निश्चयफले माने तद्बलालम्बिनो गुणाः।
न शक्यो निह्नवस्तस्य विभिन्नस्येव धर्मिणः ॥

अवश्यं हि प्रकाशमानमेतच्चित्रं शून्यतया साक्षात्कर्तव्यम्, तावतैव बोधिसिद्धिरिति किमपरेण? न च स्वसंवेदनादन्यत् साक्षात्कारि। सा च तथता संक्लेशव्यवदानावस्थासाधारणश्चित्तधर्म इति स्वाभाविकः सहजः प्रकृतिरिति चाभिधीयमानोऽपि व्यवदानापेक्षया धर्मकायव्यवहारगोचरः। तत्र क्षणिकता तावदाकारविशेषानपेक्षासौ भाव्यमाना यो य एवाकारः सन्निधीयते, तं तमेव प्रतिविध्यतीति धर्मितानियततल्लक्षणादिनिष्पादकपुण्यसंभारसहकारिकारणोपनीतमन्तिमं तमेवाकारम् आश्रयीकरोति। तत्र प्रागवस्थायां चित्रमेव तत्परतन्त्रमुच्यते। अभूतपरिकल्पो विकल्प इति चोक्तः। पर्यन्ते तु चित्र एव वितथकल्पनायामप्रयोजकत्वान्न तथोच्यते। तद्रूपरहितस्तूच्यते। [94b] हेतुपारतन्त्र्यमात्रसंभवेऽपि चासद्वासनापारतन्त्र्याभावे परतन्त्रोऽपि नाभिधीयते, किं तु संभोग इति, धर्मसंभोगाद् दशभूमिभिः संभुज्यमानत्वाच्च। तत्त्वतो वा हेतुफलाभावात् क्व पारतन्त्र्यमिति? तस्माद् धर्मरूप एव धर्मकायः। ननु,

सर्वाकारां विशुद्धिं ये धर्माः प्राप्ता निराश्रवाः।
स्वाभाविको मुनेः कायस्तेषां प्रकृतिलक्षणः ॥

इति सिद्धान्तः, कथं परोक्ताकारस्य शून्यताख्यो धर्म इत्युच्यते? तदयुक्तम्। न खलु शून्यतातोऽन्या प्रकृतिर्धर्माणामागमे श्रुतिपथावलम्बिनी, स्थितिभेदेन तु यथाधिमुक्ति वेदितव्या। तथाहि,

नैरात्म्यं विदुरीश्वरादिविरहान्नित्यस्य चैवात्मनो-
ऽवाच्यस्यापि च केऽपि केचन जडप्राकाश्ययोगस्य च।

बाह्यस्याणुतनोरपि व्यपगमादन्ये पुनः स्वप्नवत्
केचिद् रूपनिरूपणासहतया तस्याः स्ववित्तेरपि ॥

तर्कचिन्तायाश्च क्रमेण तदेकप्रवणत्वात् ॥

प्रत्यक्षादनुमावाद् वा न हि भावप्रसिद्धयः ।
ताभ्यामेव तु बाधैषामैदम्पर्यमतस्तयोः ॥

न च लक्षणादिमात्रस्यैव धर्म इति ब्रूमः । किं तु यावन्तः स्वलक्षणधारिणः चित्तप्रकाराः शरीरबुद्धिसंख्यातरूपास्तेषां सर्वेषामेव संभोगपोषणं तूपलक्षणं तदपि परित्यागेन बोधिबोधनार्थम् । अभिसमयालङ्कारे च,

ये धर्माः सर्वाकारां विशुद्धिं प्राप्तास्तेषां प्रकृतिः ।

इति सामान्येन निर्देशात् न संभोगत्यागः, स तु पृथक्कायत्वेन व्यवस्थाप्यत इति । सर्वाकारज्ञतापर्यन्तपरिगणनात् पृथगेव परिगणितः । तस्माद् धर्मधर्मिभावेन भित्त्वा कायद्वयव्यवस्थेयम् । सदस्य भगवति तादात्म्यं संबन्धो, निर्माणस्य तु तदुत्पत्तिः । यदा तु सदातनं तद्रूपं सकलशुक्लधर्माकारतया विवक्षितम्, तदा तत्रापि तदुत्पत्तिरेव । यथोक्तम्,

धर्मकायप्रभाविता गुणाः
[ ]

इति । एवं च सति यद्यपि साधनमपि तत्, तथापि न तन्मात्रेण तत्रादरः, किं तु तत्त्वमित्येव । साध्यसाधनयोरनन्तभावोऽपि कुत इति चेत् ? तत्त्वसाक्षात्कारस्यैव साध्यत्वात्, तद्भावनाया एव च साधनत्वात्, तदभावेऽनिश्चये वा तयोरेव लोपाशक्तेः । तस्य च प्रतिभासिनैव धर्मिणा चरितार्थत्वान्निश्चायकप्रमाणपर्येषणैव परमवशिष्यत इति समाप्तः पुरुषार्थः । तच्च सामान्यरूपमेव भाव्यम्, क्षणिकत्वादिवदिति स्वभावान्तरमवस्थाप्यते । तदधिगमाधीनश्च बुद्धध्वनिरिति तदेव प्रधानं बुद्धरूपम्, स एव वा बुद्ध उच्यते, प्रताप एव राजेत्यादिवत् । लक्षणादिचित्रता हि चक्रवर्तिनीष्वपरतन्त्रम् । न चैवमर्थान्तरस्य कथञ्चित् सत्त्वेऽपि कश्चिदुपयोगः । ततो धर्मकायसंज्ञाप्यस्य पार्थिवकमण्डनमिति न निराकारदर्शनानुरोधः कश्चित् । अत एव [95a] देहभोगप्रतिष्ठाविशेषशालिनि,

अकनिष्ठे पुरे रम्ये शुद्धावासोपरि स्थिते ।
बुध्यन्ते तत्र संबुद्धा आलयेण किमन्यथा ॥

तस्मात्,

संभोगकायस्थित एव नाथः
स्ववित्तिसाक्षात्कृतधर्मकायः ।
दशान्तरत्वे हि तदेव साध्यं
बाध्ये तु वन्ध्यो विविधः प्रयासः ॥

तथा च सति,

ग्राह्यग्राहकवैधुर्याद् विज्ञानं परमार्थसत् ।
एकानेकवियोगेन विज्ञानस्यापि शून्यता ॥

संवृत्त्यापि न तद्रूपं त्रैधातुकविवर्तिनाम् ।
तायतौदार्यमिष्टं च धर्मतातिक्रमान्न तु ॥

यथा क्षणित्वं भवता सोढं तच्चेदलीकता ।
किं न सह्या क्षणित्वं वा मरणं सह्यते कथम् ॥

मरणान्न भयं यस्य तस्यान्यस्मात् कुतो भवेत् ।
सर्वाक्रोशो हि मरणपर्यन्तत्वेन भीषणः ॥

मृताद् वरं दुर्बलता सदा चेत् सैव नः प्रिया ।
वरमिष्टस्य न प्राप्तिः प्राप्तौ विघटनं न तु ॥

तस्मात् प्रकृतिरेषैव नातिक्रमितुमिष्यते ।
तथापि कोऽप्यतिशयः प्राप्तुमिष्ट इति स्थितिः ॥

क्षणिकालीकयोश्च साधारणीति न दोषः कश्चित् । क्षणिकत्ववद्धेतुपराधीनतापि द्रष्टव्यम् । तदलमस्थानकातरतया । अपि च,

नभस्तलालीककलङ्कहानये
नभस्त्वमेवास्तु चलत्वशान्तये ।

न वस्तुधर्मस्य यदि व्यतिक्रमः
प्रमाणतोऽलीकमतेऽप्यसौ समः ॥

॥ महापण्डितज्ञानश्रीमित्रविरचितायां साकारसिद्धौ
मध्यमावतारपरिच्छेदस्तृतीयः ॥



## [ चतुर्थः परिच्छेदः ]

अथवा केयमलीकताप्यनुभवस्वभावस्य, बाधकादिति चेत्? कस्य केन बाधा? चित्राकारराशेर्व्यापकानुपलम्भेन। तदेतद् विक्रीतगवीरक्षणम्,

बाध्यबाधकभावस्य सांवृतस्योपपादनात्।
भाष्ये तद्व्यप्यसत्ख्यातेर्विरोधस्य प्रसाधनात्॥

अपि च, न तावज्ज्ञानमात्मानमेव बाधते, स्वरूपसंवेदनस्यैव बलवत्त्वात्। परेणापि तद्विषयेण भिन्नविषयेण वा बाधा स्यात्, समकालेनासमकालेन वा? तत्र तद्विषयं तन्न बाधत इति असंबद्धम्। भिन्नविषयेणापि तस्य कीदृशी बाधा? स्वविषयोपस्थापनमात्राच्चेत्? तेनैवास्य किं न बाधा? न च समसमयेन। एककाल-मनेकस्य सजातीयस्य विजातीयस्य वा प्रतिभासे कस्य केन बाधा? कालभेदे तु सुतरामनवकाशो महासंमतश्रीहर्षयोरपि प्रसङ्गात्।

अथैकस्य ज्ञानस्य ज्ञानान्तरेण निर्विषयत्वप्रतिपादनं बाधार्थः, स च भिन्नकाल-योर्न विरुध्यते। सोऽर्थस्तत्र ज्ञाने यदि प्रतिभासते, तदा सन्नेवेति कुतो बाधा? अप्रतिभासे तु स्वयमेवासन् किं निषेधान्तरेण? न वा तद्विषयं बाधनमुक्तं भवति। आरोपितस्य निषेध इति चेत्? आरोपोऽपि व्यवहारमात्रसिद्ध इति प्रतिपादनात्, तदाश्रया बाधापि न सांवृतमतिक्रामति। अथ यथैव प्रतीत्यसमुत्पादभे[95b]दसमा श्रयेण ज्ञानान्तरप्रसवमात्रलक्षणो भ्रमः, तथैवैवमेतन्नान्यथेत्यपि ज्ञानाकारोदय एव बाधा भविष्यति।

यद्येवं तत्त्वतो न बाधेति सिद्धमेतत्। केनचिदाकारपरिग्रहेण ज्ञानमिदं जातं नाम, न तु किञ्चिदनेन बाधितं साधितं वा, नीलज्ञानानन्तरं मधुरज्ञानवत्। अन्यत्र बाधाध्यवसायेन विशेष इति चेत्? अध्यवसायमात्रसिद्ध इत्येव सांवृत उच्यते। तस्मान्नालम्बनशून्यताप्रतिपादनं बाधार्थः। किं च, सालम्बनेतरभेदेन द्वैते गतिरियं स्यादपि। अद्वैते तु स्वरूपमात्रपर्यवसितवेदनस्थितीनां मतीनामन्योऽन्यं बाध इति महत्साहसम्। उक्तं च,

सिद्धिर्धियः परधियो न यथा तथा न बाधापि

[ ]

इति। ननु विज्ञप्तिमात्रतासिद्धिरपि परत एव, तथा बाधापि भविष्यतीति चेत्? असारमेतत्। संवृतिव्यवस्थितो हि नानुमानमनास्थाय स्थातुं शक्तः, अन्यथा न कश्चित् प्रवृत्तिनिवृत्त्यादिकमाचरेत्। अनुमानाश्रये च बलाद्विज्ञप्तिमात्रतासिद्धिरापतति। न तु तत्त्वपरिनिष्ठायामनुमानावकाशः। तथा यदि संवृतावेव बाधस्वीकारः, तदा पुनः प्रतिभाससमानमेतत् बहिरवसितमिति बाधस्तत्रैव स्यात्। यत्किञ्चिदेतत् बुद्धिर्जडं वा तत्रैव बाधसिद्धिः, तदापि न बाह्यरूपातिक्रमेण साधनवृत्तिः। अथ किमत्र विकल्पेन बुद्धिरूपमेव चित्रमालम्ब्य धर्मीकरणमिति न बाह्ये साधनव्यापारः। तदेतदश्वारूढाश्वविस्मरणवृत्तान्तमनुहरति॥

वेदनं किञ्चिदुद्दिश्य यद् बाह्यं बाह्यमेव तत्।
तच्च ज्ञानं जडं वा स्यादिति चिन्ता निरर्थिका॥

सर्वथा ग्राह्यग्राहकव्यवस्थानान्तरीयको बाधक इति सिद्धम्।

नन्वेतदेव नीलादिबाधाया विषयो मतः।
तच्च ज्ञानं जडं वा स्यादिति चिन्ता निरर्थिका॥

न च तत्र धियो रूपमिति भीतिः प्रबाधितुः।
नापि पश्चात् तथा ज्ञाने शक्तेरुत्कीलनं भवेत्॥

ग्राह्यग्राहकव्यवस्थाया व्यपेक्षानियमो न च।
इदं हि बाधितं नीलं बहिरस्तु मनोऽस्तु वा॥

अस्तु वा तद्व्यवस्थापि तथाप्येतस्य बाधनम्।
वैरबुद्धया न किं बन्धोः प्रहारो मरणप्रदः॥

इति चेत्? पुनरपि ब्रूमः न विज्ञप्तिमात्रतासिद्धौ बाधकावकाश इति प्रकृतम्। तत्र ग्राह्यग्राहकव्यवस्था नान्तरीयके बाधके सिध्यति नानिष्टमापादितं भवति, यथा हि तस्या विलयस्तथा बाधकस्येति साध्यसिद्धेः। न च तन्नान्तरीयकतापरिहारः शक्यः। न चाविषयीकृतस्य बाधः, इदमनेन बाध्यत इति बाधाध्यवसायात्। विषयीकरणं च बाध्यस्य बाधकादन्येन, बाधके[नेतरेण] स्वयं स्वपरेण वेति विकल्पाः। बाधकाद्

अन्येन विषयीकरणे तावदबाध्यमेव। बाधकेनापि विषयीकरणे क बाधकावकाशः, विषयीकरणस्य स्वरूपनिर्भास[96a]त्वात्? बाध्यमानत्वेनैव स्वरूपस्य निर्भास इति चेत्? व्याहतमेतत्। स्वरूपनिर्भास इति स्वरूपसत्त्वं, बाध्यमानता चासत्त्वम्। क्रमेण द्वयमपीति चेत्? न तावत् प्रथमं बाधा, संबन्धिनोऽप्रतीतेः। अथ स्वरूपनिर्भासस्तदा तावतैव सत्त्वाकृष्टेः क बाधा? न खलु कालान्तरे भवन्त्यपि तस्याः स्यात्, तदा तस्य स्वयमेवाभावात्। भावे वा बाधकशतेनापि न किञ्चित्। उभयेन तु विषयीकरणे संवादसिद्धिरेव क बाधागन्धः? न च तेन वान्येन वान्यस्य विषयीकरणं नामोपपत्तिमत्, विज्ञानसिद्धौ चिन्तायाः प्रारब्धत्वात्। नापि स्वयमेव विषयीकरणे बाधावकाशिनो,

स्वयं निर्भासमानस्य परेण विषयीकृतौ।
बाधकेनात्मनो मूर्द्धा बाधितव्यो बलीयसा॥

ततश्च नीलमिदं बाधितं मयानया युक्त्येति स्वाकारमात्रपर्यवसायिव्यापारो विकल्पस्तस्य वार्तामपि न स्पृशति भेदे, अभेदेऽपि तमात्मानमेव बाधत इति साहसम्। स्वपरवेदने च पूर्ववत् संवाद एव। अविषयीकृतस्य तु बाधनेऽतिप्रसङ्गः। बाह्यग्रहाधिमुक्तौ तु तदस्पर्शिन्यपि ज्ञानोदये तत्सिद्धिबाधव्यवहार इति स्यात् प्रत्याशा। स चाधिमोक्षो विप्लव इति तत्कृता बाधापि विप्लव एव। बाह्यग्रहव्यवस्थापरिभवे हि स्वसंवेदनमग्रमशेषमिति कस्य केन किं क्रिया स्यात्? न हि तदापीदमेवमिति शक्यं कर्तुम्। तथा सति पुनर्द्वैतप्राप्तेः। यदाहुः,

विज्ञानमात्रमेवेदमित्यपि ह्युपलम्भतः।
स्थापयन्नग्रतः किञ्चित्तन्मात्रेनावतिष्ठते॥
[ ]

इति। अथ तत्त्वनिश्चयेऽप्यसाक्षात्करणावस्थस्य प्रवृत्त्यादिवद् बाधकमप्यवकाशेतेति चेत्? तथापि न दोषः। यथा ह्येदमतो वेद्यं प्राप्यं वेति सहजाविद्यया बहिरधिकारेणैव प्रवृत्त्यादिः, तथा बाधोऽपि तन्मूर्धन्येव निपतेत्। चिन्मात्रचिन्तायां पुनः सर्वव्यापारोपरमः। तदयं बाध्यबाधकभावः सांवृत एव, न तत्त्वरूपामुखीकरणकाले अवकाशमासादयति। तदा च कामं साधनस्यापि नावतारः, केवलमनवतारोऽप्यस्य न बाधते, साध्यस्य सिद्धत्वात्।

तदसिद्धावितरस्यानवसारः परपरितोपादन्यत्र कमर्थं पुष्णाति ? यदि तर्हि तत्साधकप्रमाणवृत्तिमपेक्ष्य बाधकप्रयोगः, तदैव दोषः। कः पुनरेवं विलम्बिष्यते ? प्रथमत एव बाधकप्रयोगोऽस्तु। भीताचमनमात्रमेतत्। यदा हि विज्ञप्तिमात्रताप्रतीतौ नास्यावतार इति सिद्धम्, तदा तदात्मताविरहमपेक्ष्यैव तत्प्रयोग इति तन्निरूपणापेक्षायां प्रकाशतयैव विज्ञानतासिद्धौ विधूतो बाधकावतारः, भवन् वा यदि नेदं विज्ञानमित्यनेनाकारेण भवेत्। तस्माद् यावद् बाधस्तावद् बहिरात्मन्येव न विज्ञानरूप इति सिद्धम्। कः पुनरेवं साधनदोष इति चेत्– न, विज्ञप्तिमात्रतासिद्धौ अनुमानस्यैवो[96b]त्थानाभावात् क साधनदूषणावकाशः ? तथा हि,

बहिर्बोधेऽनुमानादि मानं न स्वैकसंविदि।
स्वैकसंवित्प्रसिद्धौ तु तद्ग्रहादेव तद्भवः ॥

तथापि यदि दोषोक्त्या सन्तोषः,

असिद्धेः पररूपस्य धर्मिहेतुस्वरूपयोः।
न सिद्धिर्नापि च व्याप्तिरिति किं वा न दूषणम् ॥

किं च, अयं व्यापकानुपलम्भोऽन्यो वा बाधको विचारादिनामा नानुमानात् अन्यः संभावनाविषयः। सर्वं हि विवादारूढस्य वचनमाविर्भावितसाध्यसाधनदृष्टान्तादितया नानुमानमनाक्षिप्य प्रकृतोपयोगि भवितुमर्हति। अतएव संवृताववश्यं प्रमाणस्वीकार इत्यद्वैतबिन्दौ दर्शितमस्माभिः।

अन्यथा यथा तथानुवादमात्रेण कस्य कीदृगर्थसिद्धिः ? न चानुमानमध्यक्षमधिक्षिप्य यथार्थं भवितुमर्हति, संबन्धग्रहणादौ परम्परयापि नियतोपयोगितया तेनैव जन्यत्वात्। तदप्यतदप्रमाणेन प्रमाणमिति जनयितुरकुलीनतायां कुलीनताशंसनमेतत्। स्वरूपे चैतदाकारवेदनं दूरीकृतभ्रान्तिकल्पनतया प्रत्यक्षमिति कुतो बाधावसरः ?

स्वविित्तिरेवापरमानयोनि-
र्न चेत् प्रमाणं किमिह प्रमाणम्।
अतस्तया साधितबाधितेषु
न बाधसिद्ध्योरपरस्य शक्तिः ॥

अथ विज्ञप्तिसाधनकाले कथं स्वयोनिप्रत्यक्षपरिभव इति चेत्– न, साध्यसिद्धौ स्वस्यापि परिभवात्।

दहति द्रुममाश्रयाशनो
निजशाखापुगघृष्टिजो यथा।
परवित्तिरपीत्थमात्मनो
यदि हन्त्री क इहापराध्यतु॥

न खलु विज्ञप्तिसाधनं परवेदनमपरं बाधमानमात्मनः प्रामाण्यमाशंसति। परवेदनसामान्येन तु तथोत्थापितो विचारः, वह्निर्यथा सर्वस्यैव दाहक इति नैकस्य कस्यचित् अपराधः। व्यापकानुपलम्भस्तु प्रत्यक्षपरिभवेनैव प्रामाण्यमाकांक्षतीति न न्यायः। विज्ञप्तिसाधनस्य तु परवेदनान्तरप्रामाण्यावधिकमेव प्रामाण्यम्। यदा पुनरर्थक्रियाशक्तिप्रतीतिव्यवहृतसत्ताकरतस्याविमर्शनादर्शनान्न तथा व्यवहरति, न तदा व्यापकानुपलब्धेरपराधः, स्वयमबाधनात्, परतस्तु समानत्वाद् दण्डस्य। न हि स्वसंवेदने शक्तिप्रतिभासः। यदा तु व्यापकानुपलम्भ एव नायकस्तदा प्रत्यक्षान्तरस्यापि न प्रामाण्यमुपहन्तुं शक्तः, प्रागेव स्वसंवेदनस्य जात्यैव दूरीकृतभ्रान्तिविकल्पशङ्काकलङ्कस्य। तस्मान्न संवेदनरक्षितस्य क्षतिः कुतश्चित्।

ननु,

अप्रामाण्ये यथाक्षस्य नानुमायाः प्रमाणता।
तथानुमानाप्रामाण्ये नाक्षस्येत्यपि शक्यते॥

तद्गृहीताङ्गतो लिङ्गाज्जातानुमितिदूषणे।
तस्यैव दोषोऽदोषे हि किं कृतं तज्जदूषणम्॥

ततो यद्युभयस्यापि प्रामाण्यम्, तथापि

संवित्तिः स्थितिमात्मनः प्रथयतु स्वस्मिन् भ्रमासंभवाद्
एकानेकतयात्ययः पुनरयं [97a] क्रूरः कथं वार्यताम्।
तत्साध्यस्थितिनान्तरीयकतया तुल्यप्रभावश्रियो-
रध्यक्षानुमयोरयं व्यतिकरः को वेत्ति कस्योर्जितम्॥

तदपि नौपयिकम्। व्यापकानुपलम्भस्य हि परवेदनैकनियतस्य व्याप्त्यादिग्राहिणा परवेदनेनैव प्रत्यक्षेण समकक्षता भवतु, यत एकप्रामाण्यस्वीकारनान्तरीयकमपरप्रामाण्यम्। स्वसंवेदनं तु द्वयोरप्याश्रयः तद्द्वयानाश्रयं चेति कस्तेन सह तुलारोहः ? विषयभेदाच्च परोक्षविषयत्वादनुमानस्य, प्रत्यक्षे तदनवतारात् क्व बलाबलचिन्तावकाशः ? अतएव प्रत्यक्षादिभिरनिराकृतः पक्ष आख्यातः[1]।

ननु प्रत्यक्षेऽपि स्वभावान्तरमव्यवहृतं व्यवहारयितुमनुमानमनुमतमेव। न च प्रतिभासिन एव कचिद् विधिर्निषेधो वा। प्रतिभासमाने हि शृङ्गलाङ्गुलादिसन्निवेशविशेषे गवादिशब्दप्रवर्तनम, कचित् केवलभूतलोपलम्भे कुम्भादिनिषेधव्यवहारः। ज्ञानगतचन्द्रद्वयाकारे चाबहिरिन्दुयुगलस्य। न तु प्रतिभासिनामेव विधिनिषेधौ। तथेहापि निषेधप्रस्तावे प्रतिभासिनो नीलाद्याकारस्य यावन्तः कल्पिता धर्मा निषिध्यन्ते, तावन्तो निषिध्यन्ताम्। यथात्मपरग्राह्यग्राहकज्ञाप्यज्ञापकनित्यक्षणिकैकानेकत्वादयो द्रव्यगुणत्रिगुणीमयत्वादयो वा स्पर्शादिलक्षणरूपान्तरसहचारपरमाणुरूपतार्थक्रियाशक्तिपर्यन्ताः प्रपञ्चशब्दवाच्याः, सर्वेषां कल्पितमात्रत्वात्। तस्मात् प्रकाशमाने धर्मिणि धर्मान्तरस्याप्रतिभासिन एव निषेधो विधिर्वा व्यवहारमाश्रित्य, शब्दादिव्यवहारविरहेऽपि तद्योग्येऽपि तद्योग्यतायाः परोक्षरूपत्वात्। न तु प्रतिभासिनः कचिन्निषेधः। यदाह न्यायप्रसूतिः,

तस्मिन् भावानुपादाने साध्येऽस्यानुपलम्भनम्।
तथा हेतुर्न तस्यैवाभावः [ शब्दप्रयोगतः ]॥
[ प्र. वा. ३. २०५-६ ]

इति।

व्यस्तो हेतोरनाश्रयः।
[ प्र. वा. ४. ६१ ]

इति च। यदि तर्हि प्रतिभासिनो विधिनिषेधौ व्यर्थासमर्थौ, अप्रतिभासिनोऽपि स एव निषेध इत्यसमर्थव्यर्थौ, क तर्हि शब्दव्यापारः ? न कचित् तत्त्वतः, प्रतीत्यसमुत्पादाश्रयव्यवहारमात्रमेतत् शब्देन किञ्चिद् विधीयते निषिध्यते चेति। यथा हि वृक्षोऽस्तीति संकेतवशात् तदनुरूपप्रवृत्त्याक्षेपपरिकल्पोत्पादनमेव शब्देन वृक्षसत्ता-

१. द्रष्ट° न्यायबिन्दुः ३. ३८

विधिः, तथा वृक्षो नास्तीति तदर्थिव्यावृत्त्याक्षेपकविकल्पोत्पादनमेव तन्निषेधः, नञस्त्योरप्रयोगे तु केवलं वृक्षशब्दस्य प्रवृत्तिनिवृत्त्यसमर्थशा[खा]दिमदाकारविकल्पोत्पादनमेव विधिनिषेधाकरणं नाम। तस्य चास्तिपदसन्निधौ स एव शाखी सत्तयोपचीयमान इव प्रतिभातीति पूर्वापेक्षया आकारविशेषोल्लेखमात्रम्। नञ्योगेप्यपचीयमान इवेति विध्यनुभवापेक्षया क्षीणाकारो[97b]ल्लेख एव। ततस्तदनुरूपप्रवृत्त्यादिः।

एवं लिङ्गेऽपि विकल्पविवर्तिनो वह्नेर्धूमजलदर्शनादौ, संवादनियमेतराभ्यां तु विशेषः। तथा च न स्फुरतो बुद्ध्याकारस्य क्वचिद् विधिनिषेधौ। नापि बाह्यस्यास्फुरतः सतोऽसतो वा तत्त्वतः। तथापि विकल्पोदयद्वारेण तु बाह्यस्यैव विधिनिषेधव्यवहारः केवलं कल्पितस्य, पुरःपरिस्फुरतो नञ्शतैरपि निषेधाभावात्। कल्पनं च वहिर्मुखपरामर्शादन्यत्, तरुमात्रविकल्पे सदसत्तानिर्णयावधानावस्थाक्षेपात्। अतएवाकारो वहीरूपतयारोपितः शब्दवाच्योऽपोह इति चोच्यते, शाब्दे ज्ञाने तस्यैव प्रतिभासात्। अध्यवसायात्तु विजातिव्यावृत्तं वहिरिति निवेदितं प्राक्। तस्मात्,

नाकारस्य न बाह्यस्य तत्त्वतः प्रतिषेधनम्।
वहिरेव हि संवृत्त्या संवृत्त्यापि तु नाकृतेः॥

तया अनर्थित्वात्, प्रकृत्या च वहिर्मुखत्वाल्लोकस्य। यदा च बाह्येऽपि परिस्फुरति नावकाशो निषेधस्य, कुतः स्वात्मनि ? तस्मात्,

न प्रमाणप्रतिक्षिप्ते हेतुभिस्त्राणसंभवः।
स्वसंवित्त्या च यत् सिद्धं तत्त्वतः सिद्धमेव तत्॥

यद्यपि सांवृत एव साध्यसाधनभावः तथापि सत्संवृतिसमाश्रय एव कर्तव्यः। प्रतिपुरुषं हि भिन्नभिन्नसाधनादिव्यवस्थितौ सर्वं सर्वस्य सिध्येत्। न च समयान्तरस्थायिनोऽपि बाधिते हेतुभिस्त्राणवार्ता। स्वसंवेदने यदि परं परेषां विमतिः, तत्र च,

न स्ववित्तिं विनाकृत्य प्रमाणैर्जीवितुं क्षमम्।
विश्वेनेव प्रमापाये शास्त्रे निर्णीतमेव तत्॥

तस्मात् स्वसंवेदनाध्यक्षसिद्धे व्यापकानुपलम्भाद्यनुमानमनवकाशयन्ती प्रतिज्ञायाः प्रत्यक्षबाधा। अथवा कीदृशी पुनः सत्ता साधनैरेभिरपाकर्तुमीष्यते ? तत्र

यदि तावद्दर्शनान्तरप्रसिद्धा सत्ता, सत्तायोगस्वरूपसत्त्वत्रिलक्षणादिलक्षणा, स्वकल्पिता वा काचित्, तदा न विवादः। अथ लोकप्रसिद्धा, सापि शक्तिलक्षणा प्रकाशलक्षणा च। तथा हि युक्तोपलम्भमनुपलभमाना नास्तीत्याहुः।

तत्र शक्तिलक्षणाया बाधने सिद्धसाधनम्। प्रतिभासलक्षणाया अप्यगृहीतशक्तेर्बाधने स एव न्यायः। न वा तदा प्रतिभासो लक्षणं किं तु शक्तिरेवेति न क्षतिः। कल्पितशक्त्याद्युपाधिविधुरप्रकाशमात्रस्वरूपात्तु रूपादिषु सत्ता कथमपह्नोतुं शक्यते, स्वसंवेदनप्रत्यक्षसिद्धत्वादिति प्रत्यक्षबाधे च प्रतिज्ञायाः? एवं निःस्वभावा अमी भावा इति रीतिभेदेऽपि स्वभावशब्दवाच्योऽर्थः प्रकाशादन्यो यथोक्तश्चेत् सिद्धसाधनम्। प्रतिभासे चाशक्तिरेवेति वेदितव्यम्। एकानेकविरहस्त्वभिमत एव, सर्वप्रपञ्चप्रशमस्य विवक्षितत्वात्। स्वभावहानिभयाद्धि [98a] तदनिष्टः स्यात्। सत्त्वं च प्रतिभासात् सिद्धमिति किमनेन व्याहतम्? कथं तर्हि चित्राद्वैतमिति चेत्?

ग्राह्यग्राहकहानितोऽद्वयमिदं यद् वा जडस्यात्ययाद्
एकानेकहतेश्च साकृतितया चित्रं तथाश्चर्यतः।
चित्राद्वैतमिति स्मृतं नृपतिवच्चैकध्वनिः सांवृतो-
ऽनेकत्वं च न तत्त्वतो न च फलं तेनास्ति सत्संवृता॥

एकानेकविरहेऽपि सत्त्वमित्याश्चर्यार्थश्च चित्रशब्दः। एको भगवानिति संवृतौ वा, यथोक्तं प्राक्। न चैवमनेकव्यवहारेणोपयोगः। यथा हि स भगवानाश्रयणीयो मया, मयापि च तथैव भाव्यमित्येकत्वाध्यवसायिनी प्रवृत्तिरुपयोगवती, तथा नानेकत्वेन किञ्चित् फलमाकलयामः। पृथग्धर्मिणि क्वचिद् व्यापृतेरसिद्धेः। ततः तत्त्वतो द्वयोरप्यनुपपन्नत्वे एकत्वं फलापेक्षया व्यवह्रियते नान्यत्, यथा अनित्यत्वं प्रशमानुकूलत्वेन। नन्वेतदपि नीलान्तरालवलयपर्यन्तं सजातीयेतरज्ञानचक्रं चित्रमेकमेव व्यवह्रियते भवता, तत् कथमुच्यते—

यावदेव बहिरध्यवसाय-
स्तावदेव पृथगेतदिदं च।
तन्मतिस्तु सकलेति स एव
ज्ञानपाणिचरणादिरसौ हि॥

न खलु मनोविवर्तान् विहाय करादिमात्रं चैत्रः। ततो विवर्तान्तरवच्चैत्रवाच्यतायामन्तर्भावादेकव्यवहारः केवलं विज्ञप्तिमात्रतापरामर्शे। तत्रापि भगवतीव गोचरभागव्यवस्थान्तरमुक्तं स्मर्तव्यम्।' तत्त्वतो वानेकव्यावृत्तिमात्रपर एकशब्दोऽद्वैतशब्दवत्। तस्मात् प्रकाशतया सन्नेव नीलादिरेकानेकविधुरश्चेति संग्रहः।

नीलादिश्चित्रविज्ञाने ज्ञानोपाधिरनन्यभाक्।
अशक्यदर्शनस्तं हि पतत्यर्थे विवेचयन्॥
[प्र. वा. २. २२०]

अत्र चित्र इत्येकतानिषेधः। विज्ञान इत्येकप्रतिपत्तुः। प्रतिभासमानतया एकसंविदन्तर्गमादनेकतानिषेधः। ज्ञानोपाधिरिति जडाद् व्यावृत्त्या ज्ञानात्मतया बाधकाभावः। आकारान्तरं पीतादिसभजन् न शक्यते द्रष्टुमित्यनेन भेदव्यवहारे प्रयोजनाभावमाह। यदि हि ततः पृथगप्येको लभ्यः स्यात्, तस्माच्च तत्साध्यसिद्धिश्चैत्रमैत्रादिवदुचितोऽनेकव्यवहारः। न चैवं, तत एक एवोचितः। तं हीत्यादिना च यावदेव बहिरित्यादिकमर्थमाह। बुद्धिरूपतापरामर्शे हि बुद्ध्यादिकलापे विहितचैत्राद्येकशब्दं तत्रापि तथैव प्रवर्तयेत्। विवेचयन् भिन्दन् पुनरर्थ एव पतेत्, अर्थस्यैव जन्मग्रहणं वा पृथक्, न ज्ञानस्य। यतः,

यद् यथा भासते ज्ञानं तत्तथैवानुभूयते[1]।
इति नामैकभावः स्याच्चित्राकारेऽपि चेतसि[2]॥
[प्र. वा. २. २२१]

नाम संज्ञावाचकः शब्द इत्यर्थः। स एवैकभावो न तात्त्विकः। भासत इति जायत इत्यर्थः, प्रकाशमानस्यैव जन्मेत्यभिप्रायात्। तदेवमेकानेक[98b]स्वभावविधुरमेव ज्ञानं चित्राद्वैतमपेतबाधनम्। संवृतौ चैकव्यवहारगोचर एव क्षणिकत्वादिवदिति दर्शितम्। ननु तथापि तच्च नास्ति तद्व्याप्तं चास्तीति कथं संप्रत्ययविषयः? न चैवं क्वचिद्धेतावाश्वासः। एकनिषेधेन चान्यविधाने राश्यन्तराभावाद् भावेषु उभयपक्षवदनुभयस्यापि कुतः संभवः? अतो लक्षणकरणकाल एव प्रकाराभ्यां सिद्धा व्याप्तिः। परस्य तु वस्तुस्वभावादुभयाभावो न बाधक इत्यसंबद्धमेतत्।

---

१. प्रज्ञाकरगुप्तोऽयं पाठः, तत्तथैव प्रकाशत इति मनोरथः। २. चेतस इति प्रज्ञाकरः, °कारस्येत्युभौ।

सत्यमसंबद्धमेतत्, तद्द्वयीमन्तरेणापि सत्त्वसिद्धेर्व्याप्तेरेवायोगात्। क चैवम्? नन्विहैव बुद्धिवपुषि। तत् किमिदानीं पक्षीभूतेनैव व्यभिचारः? को वा दोषो यदि व्यभिचारे प्रमाणवृत्तिः? धर्म्यन्तरेऽपि हि तथैव साधारणानैकान्तिकः क्रियते। यदि चात्र पक्षीकरणमात्रेण त्राणम्, तत्रापि कः प्रतिरोधः? यदा च विपक्षे साक्षादीक्षणेऽपि न साध्यक्षतिः, तदा सन्देहमात्रमकिञ्चित्करमिति नानैकान्तिकत्वं तावद् दोषः।

नाप्यसिद्ध्यादिः, यतः कुतश्चित् हेतोः सिद्धेः, अध्यक्षबाधनादरात्। एवं च प्रमाणव्यस्तसाध्याद्धेतोरनाश्वासेऽपि न क्षतिः। अन्यत्र तु कः शङ्कावकाशः? तत एव लक्षणकालेऽपि न व्याप्तिसिद्धिः। एकनिषेधेनान्यविधाने राश्यन्तरनिषेधो बाह्य एव। नहि तत्रापि प्रत्यक्षबाधोपदर्शनं शक्यम्, इदं तदेतदपेक्षया न भिन्नं नाभिन्नमिति वक्तुमशक्तेः। स्वसंवेदनं च निसर्गदुर्गमेव, बाह्यस्य भेदाभेदाभावे च संव्यवहारविलोपप्रसङ्गात्। यदाह,

न ह्यनलं पश्यन्

[ ]

इत्यादि। तस्माद् बाह्य एवायं न्यायो नियतश्च, तदनुरोधात्तु यदि बुद्धिरपि व्यवस्थाप्येत व्यवस्थामात्रमस्तु। यथोक्तम्,

यथा बाह्यं ग्राह्यम्

इत्यादि। न तु तदाप्याञ्जसः। यत्तु,

अन्यथैकस्य भावस्य

[ प्र. वा. २. ३५८ ]

इत्यादि बुद्ध्यधिकारेऽप्युक्तम्, तन्माध्यमिकविशेषाभिप्रायात्

यथा यथार्थाश्चिन्त्यन्ते

[ प्र. वा. २. २०६ ]

इत्यस्य स्फुटीकरणार्थम्। यथा तर्हि नैकं नानेकं, तथा न प्रकाशं नाप्रकाशमित्यपि स्यात्– न, प्रकाशनिषेधस्य प्रकाशेनैव बाधितत्वात्। नैवमेकानेकत्वयोः शक्यम्। परस्य त्वित्यादिना च नोपन्यस्तेनोपयोगः।

एकानेकत्वयोर्हानिरवस्तुत्वेन रक्षिता ।
अवस्तुत्वं स्ववित्त्या तु को रक्षेद्भ्यमाणकम् ॥

तस्मान्नैकानेकविवेचकस्य बुद्धावधिकारोऽसत्त्वसाधनाय, विषयविशेषापेक्षत्वाद् व्याप्तिसिद्धेरित्यनैकान्तिकत्वम्। यदि च सामान्येनैव व्याप्तिसिद्ध्यध्यवसायस्तत्र भवताम्, व्याप्यस्य सत्त्वस्य सिद्धत्वादेकानेकत्वयोरेकैकेनैव भवितव्यम्, न चानेकत्वं क्षममित्येकमेवास्तु । अनेकत्वे ह्यापरमाणुदलनात्परमा[99a]णुप्रतिभासेन भवितव्यम्। न चैवम्, तस्माद्,

यद् यथा भासते ज्ञानम्

अनणुरूपतयानेकव्यावृत्त्येत्यर्थः ।

तत् तथैवानुभूयते ।

प्राप्त्यर्थत्वादनुगम्यते उपगम्यत इति यावत् ।

इति नामैकभावः स्याच्चित्राकारेऽपि चेतसि ॥

[ प्र. वा. २. २२१ ]

नामेति अव्ययमुपगमे । एतच्च न जडस्य संवित्तेरेवाभावादिति ज्ञानमित्यनेन दर्शितम्। यदा तु ज्ञानपरमाणोरपि दिग्भागभेदादनुपपत्तिरेव, न चानंशैः सांशराशेरारम्भ इत्यनाभास एव स्यात् नानात्वपक्षे, अतोऽयमाभास एकत्व एव विश्राम्यतीति। यद् यथा यतः प्रकारादभेदलक्षणात् भासते ज्ञानं तत्तथैवानुभूयते अभेदेनैवास्ति, अनुभवः सत्तेति न्यायात्। इति नामेत्यादि सुगमम्। नाम संभावनायाम्। एतेन तदभ्युपगमायातमसिद्धत्वम् ॥

ननु चित्रमेकमित्यनुभवविरुद्धमेतत्, नीलपीतादीनां भेदेनैव भासनात्। किं च, चित्रं नानेकमित्यनर्थान्तरम्, तच्चैकपर्युदासेन स्थितमिति तत्कथं चित्रमेकम्? अन्यथा प्रकाशो जडः स्यादिति चेत्– न, नीलादित्वे हि संवेदनव्यापारो, न भेदे। भेदाभेदाव्यवस्था तु निबन्धनानुसारमर्हति। नन्विदं नीलमिदं पीतमिति परस्परात्मतयैव प्रतीतिर्भेदप्रतीतिरिति चेत्? बाह्यार्थवादे एवमेतत्। अभ्यासवासनावशात् तु बुद्धावप्यारोप्यते। बुद्धौ त्वेतानि रूपाणि भिन्नान्यभिन्नानि वेति चिन्त्यामर्हति। बुद्धावपि तदनुसारेणैव व्यवस्थेति चेत्? न खलु सर्वा। तथा हि,

स्थिरेतरत्वे नियतं परेण
प्रकाश्यमर्थक्रियया बहिःसत् ।
आकारभेदान्नितरां विजाति-
र्नाभ्यासवश्यं विपरीतमन्तः ॥

अन्तरिति चित्तं तद्विपरीतम् । कथं पुनः स्थिरेतरत्वे नियतं न बुद्धिरूपम्, तत्त्वतः पूर्वापराप्रतीतेः ?

पूर्वापरत्ववित्तौ हि नित्यत्वं चलताथवा ।
एकानेकाधिमोक्षेण तदभावादसद् द्वयम् ॥

तत्र भेदे व्याप्तिवित्तेः स्थूलाभासस्य चाभावप्रसङ्गोऽनाभासप्रसङ्गश्च दुर्निवारः । अथैकत्वेऽपि नीलं पीतमेव स्यात् । तदुक्तम्,

अभेदेऽप्येकता चित्रत्वविरोधिनी स्यादिति ।
[ ]

न चैवं भासते । तथापि,

यद् यथा भासते ज्ञानं तत्तथैवोपगम्यते ।
इति नामैकभावः स्याच्चित्राकारस्य चेतसः ॥
[ प्र. वा. २. २२१ ]

नामेत्यङ्गीकारे । अयमर्थः, सत्यमनेकवदेकभावो न स्यात्, प्रकाशमानस्य तु सत्तापह्नवो मा भूदिति नानिष्टं किञ्चित् । अयमभिप्रायः,

सत्यं चेत् संविदः सिद्धमनेकत्वं च बाधितम् ।
एकत्वे च तवैवेच्छाक्षतिर्नोभयथापि नः ॥

सत्तासिद्धौ चानेकत्वेनापि नापराधमस्माकं किञ्चित् । केवलं न्यायानुसारिण एकत्वमनुशिष्मः । [99b] तथा हि,

समानयोगक्षेमत्वात् सत्तायां नैकताक्षतिः ।
तद्विरोधि त्वनेकत्वमतस्तस्यां तदत्ययः ॥

यत् तूच्यते, एकत्वे नीलं पीतमेव स्यादिति। स बाह्य एव दोषः, तदर्थक्रियार्थिनां तत्रापि प्रवृत्तेः क्रियायाश्च प्रसङ्गात्। क्रियार्थिताव्यतिरेकेऽपि यन्नीलं तत् किं पीतं भवितुमर्हतीति चेत्? तत् किं स्वरूपसत्तया वियुज्यताम्? वरमेवमिति चेत्? यदि परोक्षता स्यात् स्यादप्येवम्। तस्माद् बाह्यत्वे नानात्वमेव नीलपीतयोर्मा भूत् प्रवृत्तिसंकरादिरिति। ज्ञानत्वे त्वेकत्वमेव। बहिर्व्यवहाराभ्यासात् तु महतः संमुखमध्यन्दिनादित्य इव दुःसहपक्ष एव इति किमत्र कुर्मः? तदिह प्रत्यक्षविरोधादयोऽपि प्लवन्त एव। पीतादन्यत् नीलमिति विकल्पस्य स्ववेदनव्यापारमनादृत्य वृत्तेः, इन्द्रियज्ञानव्यापारानुसारस्यैकस्य स्वरसवाहित्वात्। अतएव च चित्रमेकमिति न विरोधः। नीलपीतादितया हि चित्रं, न तु नानात्वेन। केवलं नानात्वेन व्याप्त्यभिमानात् तथोच्यते। व्याप्तिश्च बाह्य एव। अथवानुवादमात्रं चित्रमिति, यन्नानेति भवतां संमतम्, तद् बुद्धिरूपं सदेकमेवेति नाश्वारूढवद्दोषः।

ननु विरुद्धधर्माध्यासो भेद उच्यते, स च बाह्यस्य बुद्धेर्वेति नात्र नियम इति चेत्? नियम एव। बाह्याभेदे हि नार्थक्रियाप्रतिनियम एव, तदनादरे च प्रतिभासमात्रात् न विशेष इति तदभाव एव स्यात्। बुद्धेस्तु भेदे एव स्वरूपहानिः, अर्थक्रियानपेक्षायास्तस्याः प्रकाशादेव सत्त्वात्। भेदे च प्रकाशाभावप्रसक्तिस्तदवस्थायाः। यद्यपि च भेदेन निर्बन्धे द्वयोरपि स्वभावहानिः, तथापि तावद्दूरमनीत्वा यथाणुसंघातसंख्यातं बाह्यं भेदेऽपि सत्त्वं सहते, अएवाकारोल्लेखाभावेऽपि चैकघनस्थूलाकारेण ज्ञानेन संवादलेशाद् ग्रहणस्थितिं च, न तथा ज्ञानमित्युच्यते। न वा बाह्यस्य हानिरपि पीडयति, अभिमानमात्रव्यवस्थापितत्वात्। अभिमानादेव वा निर्वहेद् बहिः। अध्यक्षसिद्धायास्तु बुद्धेः कुत एव तद् द्वयमपि बहीरूपपरामर्शप्राप्तेश्च भेदे नियतः स्वभावभ्रंशः। यदाह,

तं हि पतत्यर्थे विवेचयन्निति।

[प्र. वा. २. २२०]

यथार्थशक्तिविरहे भासः केशादिसन्निभः।
तथान्योऽस्मादयमिति बाह्य एव विवेचनम्॥

नैष स्वसंवेदनानुसारः, किं तु बाह्याभ्यासवासनाविलास एव। तस्माद् यथा अपराधीनवेदनत्वादिभिर्धर्मैर्बहिरसाधारणं धियः स्वरूपम्, तथा विरुद्धधर्मा-

ध्यासकृतभेदव्यवस्थापरिभवेनापि न्यायसामर्थ्यादिति युक्तम्। यदि तर्हि बहिरेव विरुद्धधर्मेतरकृतो भेदोऽभेदो वानुभवाकारे का गतिः ? इष्टश्च तत्राप्येको [100a] भगवानिति व्यवस्था, नियमनिबन्धनाभावे हि सन्तानान्तरेणाप्यभेदप्रसङ्ग इत्याह,

नीलादिश्चित्रविज्ञाने

[ प्र. वा. २. २२० ]

इत्यादि।

बुद्धेरेकभावो नाम स्यादशक्यविवेचनात्मा नानेकत्वम्। यद् वा बुद्धेर्नाम स्यान्न जडस्य। प्रतियोग्यक्षमायां नामशब्दोऽवधारणपरः। यच्च यथा भासते चित्रमप्येकसंविदन्तर्गतम्, तत्तथैवानुभूयते इत्येकत्वमेकसन्तानप्रज्ञप्तिगोचरस्य नाम चेतसः स्यात्, नत्वेतादृशमशक्यविवेचनत्वं पराभिमतस्येति न दोषः। तदेवं स्वतन्त्रे च व्यापकानुपलब्धेरसिद्धिः, बुद्ध्याकाराणामेकताया एवोपपत्तेरिति। अपि च, किमिदमेकत्वमनेकत्वं वा क्व वा, वस्तुत्वव्याप्तिरनयोः ?

अत्रोत्तरम्, निरंशमेकमनेकं च समुच्चितं तदेव। लोके चैकानेकतयैव वस्तुस्थितिरास्थीयते। अथ परार्थानुमाने स्वदृष्टमुपयोगीति उच्यते, विचाराश्रये संवृतौ स्वयमेव तथोपलब्धमिति न दोषः ? अत्रोच्यते, संवृतावपि तदेव दृष्टमभिधीयते यत्सिद्धमध्यक्षानुमानाभ्यां, न चाभ्यां क्वचिदुपलम्भगोचरो निरंशः। ततस्तत्संमुच्चयरूपमनेकमपि नोपलब्धम्, तत्कथमाभ्यां वस्तुव्याप्तिसिद्धिः ? नापि किञ्चिदस्ति वस्तु, परोपगमस्तु न स्वतन्त्रहेतावधिक्रियते। प्रसङ्गसाधनत्वे च विपर्ययपर्यवसानात् साध्यविरोधः। यस्य चैकानेकत्वाभ्यां वस्तुव्याप्तिरभिमता तस्यायमस्तु दण्डः। यस्य तु प्रकाशमात्रेण वस्तुता तस्य कस्तदनुरोधः ?

तस्मात् स्वयमुपपादयितव्या व्याप्तिः। यदि च क्वचित् संबन्धबोध एकानेकत्वाभ्यां वस्तुनः, तदेव न शून्यमिति व्याप्तिशून्यता साधनोद्भूतिः। ननु वस्तुस्थितिः एकानेकव्यवहारः प्रमाणसिद्धव्यवसायश्च लोके तावदस्ति। विचारे तु नास्तीत्येतदेव साध्यमस्माकं कथं बाधकं भवितुमर्हतीति चेत्– न, स्वभावाभावो हि भवतां साध्यः, नैकानेकत्वाभाव एव साधनत्वेनोपन्यासात्। न चेदमासिद्धतोद्भावनम्। किं तु व्याप्त्यसिद्धिरभिधीयते। विपर्ययव्याप्तिश्च व्यापकानुपलम्भादौ शरणम्, सा च क्वचिद् व्याप्यव्यापकयोरसिद्धेरसिद्धैव, सांवृतेनापि प्रमाणेनाविषयीकरणात्। न च

व्यवहारमात्रं प्रमाणम्, न च लक्षणान्तरम्। अप्रमाणेऽपि प्रमाणस्य न व्यवस्था-नियमः।

संवृतौ मानमिष्टं चेद् विचारोऽप्येष संवृतिः।
संवृतावपि नेष्टं चेद् ब्रुवन् जेता यथा तथा॥

इत्यन्तरश्लोकः।

ततो यदि प्रमाणनिरस्तेनैव रूपेण व्याप्तिमवकल्प्य सर्वत्र तदभावादभावो भावानामभिमतः, अवन्ध्यस्तर्हि बन्ध्यासुतवियोगोऽपि तत्साधने स्यादिति साध्वी साध्यप्रत्याशा। तस्मात् क्वचिद् व्याप्य[100b]व्यापकयोरुपलम्भे व्याप्तिग्रहण-निबन्धनेऽध्यक्षरूपे विपर्ययबाधकसमाख्यातानुमानरूपे वा प्रवृत्ते क्वचित् तदभावात् अन्याभावनिश्चय इति युक्तम्। क्षणिकत्वेनापि सत्त्वस्य व्याप्तिसाधनं क्षणिकसत्ता-निश्चयनान्तरीयकमेवेति सैवोपलब्धिरस्य। प्रकृते तु तद्वत् तयोः सामान्येनापि सत्ताक्षेपे तन्नान्तरीयको हेतुरिष्टविघातकृद् विरुद्धः। अनाक्षेपेऽपि न व्याप्तिरिति अनेकान्तः।

ततः कुतश्चित्राकारबोधनिषेधः? बाह्यस्यापि कुतस्तर्हीति चेत्? तत्त्वतोऽप्र-काशादेव। न ह्यनुपलब्धेरन्योऽभाव इति सुप्रसिद्धम्। न वा निरंशतैकलक्षणमिति कः शक्तिप्रतिबन्धो बहिरर्थे व्यापकानुपलम्भस्य? किं पुनस्तदेकतालक्षणम्, यतो नोक्तोपालम्भसंभवः? विवेच्याशक्यदर्शनत्वं, तत्तु न बाह्यस्य। तदभावात् तत्संहति-रूपमनेकमपि नास्ति। अथ शक्यविवेचनमनेकं भविष्यतीति चेत्? यद्यशक्य-विवेचनं किञ्चिदन्तिमं स्यात्, तदा तदपेक्षया शक्यविवेचनता परस्परं स्यात्; न चैवम्, परमाणोरप्यनवस्थानात्। बुद्धौ तु स्वसन्तानभाविन्यां चित्रायामशक्य-विवेचनत्वमस्ति, न तु सन्तानान्तरेण सहेति दर्शयति। एतेन बुद्धौ व्याप्यव्यापक-भावसिद्धिरन्यत्र व्यापकानुपलम्भव्यापार इति व्यक्तमुक्तम्।

अत एवाचार्यवसुबन्धुपादैरपि बाह्याधिकारेणैव व्यापकानुपलम्भ उद्भावितो, न ज्ञानाधिकारेण। समानन्यायतया तत्राप्यवकाशमानो दुर्वार इति चेत्- न, विज्ञानमात्रमेवेदमित्यादिना समानन्यायताया निषिद्धत्वात्। अतएव ग्राह्यग्राहक-द्वयासत्तया त्रैधातुकचित्तचैत्तलक्षणभूतपरिकल्पसत्तया च समारोपापवादप्रतिषेध-निर्वृतिः कृता, नेतरसत्त्वासत्त्वमुक्तम्। तद्वद्बहितुं शक्यत्वादनुक्तिरिति चेत्? ग्राह्यस्य

तर्हि साक्षादेव बाधकमुक्तमिति तदभाव एव नाभिधेयः। तस्मात् तस्यैव बाधकमुक्तम् इतीष्टं चेत्यलं विस्तरेण। तथा विवेच्याशक्यदर्शनेतरत्वमेवैकानेकत्वमन्योन्य-परिहारस्थितलक्षणतया व्यापकं स्वभावे दृष्टत्वात्, न निरंशराशित्वं, अंशचिन्ता तु परानुरोधेन। अथवा तद्द्वारेणाशक्यविवेचनत्वाभाव एव व्यज्यत इति वेदितव्यम्, सन्तानान्तरवदिति। ननु स्वविदेकतत्त्ववादिनोऽनेकव्यवस्थाश्रयः,

सन्तानान्तरभावोऽयं न सिद्धश्चेत् फलाङ्गवत्।
सन्तानान्तरसिद्धिः किं संवृत्त्या तु यथा तथा॥

वा अस्तु किमत्र निर्बन्धेन? एवमपि हि बुद्धेरनेकत्वमेव मा भूत्, एकत्वेनाप्येकेन व्यापकानुपलब्धेरसिद्धिसिद्धेः। कल्पितानेकविवेकेन चैकशब्दो भविष्यति यावद् व्यवहारः। तस्मान्न बहिरिव बुद्धेर्विरुद्धधर्माध्यासकृतो भेदः।

अस्तु चैवं, [101a] किं पुनस्तत्र प्रमाणम्? एकत्वेऽपि किं प्रमाणम्? प्रत्यक्षमेव। विकल्पेना[न]नुगमान्नेति चेत्? विकल्पस्यैवायमपराधः। अध्यक्षस्यैव किं नेति चेत्– न, अन्योन्यसंविदन्तर्गतप्रतिभासादेव। किं च मया दृष्टा नीलपीतादय इत्येककर्तुरुल्लेखः। ममायं चित्रः प्रतिभास इत्येकसंबन्धिनश्च। एकप्रत्यक्षविकल्प एवायमभेदेन पटवत्यनुभवाकारवान्। एवमेकतैव बुद्धिरेकस्त[स्य] विकल्पस्त्रिभुवन-विकल्पो वा? एकस्यां बुद्धौ चित्रः प्रतिभास इत्यपि शिलापुत्रशरीरवत्, शरीरे पाणिपादादिवद् वा। एकावसाय एवायं, बहिरभिमानात् तु समुच्चयमात्रमुच्यते। तदभावे त्वेकत्वमेवेदमुल्लिख्यते। एवं वृक्षक्ष्माधरादावपि धीमात्रत्वे तूभयत्र एक-व्यवहारः।

तस्मान्न प्रत्यक्षापराधः। नापि विकल्पस्य भाव एवेति सिद्धमध्यक्षमभेदमाहि। भेदेऽपि तर्हि प्रत्यक्षमेव शरणम्। न चैका पर्वतबुद्धिरित्यादौ विपरीतोदयाद्विकल्पेन अननुगमो, भूयोदृष्टत्वात्। तत् किमिदानीमुभयमस्तु? अतो व्यापकानुपलब्धेर्विप्लवः। सोऽयमुभयनिषेधेन शून्यतासाधनारम्भे उभयसाधनेन स्याद्वादमुद्दीपयितुं प्रवृत्तः इति प्रहारपातः। अथैकैकसाधनमन्यान्यबाधनपरं, न तु स्थितिरेव तस्य विवक्षिता, पर्यायेण तस्यापि बाधनात्। यद्येवं यद्यैक्यं सिद्धमध्यक्षेण तदा द्वितीयबाधैव जाता, कथं तदाश्रयः परस्य बाधः? न हि पूर्वबाधितस्य कुतश्चित् प्रत्युज्जीवनम्। तथाभावे अनेनापि बाध्यमानस्य पुनः प्रत्युज्जीवनाशंसायां कीदृशी मनोरथसिद्धिः? पुनरचिरेण

बाधनजीवनपरम्पराया अनुपरमादेकैकसनाथतया धर्मिणो न कदाचिद् व्यापकानुपलम्भसंभवः ।

तदयमर्थः, यदुच्यते न तावदेकं बुद्धिरूपं, नीलपीतादीनामव्यतिकरप्रतिभासनात् । नाप्यनेकं, परम्परासंवेदनप्रसङ्गादिति । तत्र यदेकत्वनिषेधाय प्रतिभासभेदो दूषणीयते, तदा यद्यसौ स्वसंवेदनसिद्धः, तस्य केन पुनरपोहः ? तस्याद्दढत्वे एकत्वस्यापि कुतो बाधा ? एवं नाप्यनेकमित्यत्रापि वाच्यम् । यदि पुनः प्रतियोगिसंभवानपेक्षः परपरिभवः साधनान्तरकृतः स्यात्, तदा न दोषः । स्वयमेव तु प्रमाणसिद्धसंमतस्य पुनः प्रतिवहनमित्यसंबद्धम् । न च प्रमाणान्तरमेकानेकत्वविपर्यासनमस्ति । तत्संभवाभिमानेऽपि नैकस्यापि स्वसंवेदनसिद्धस्योद्धृतिः । अवस्तुत्वान्नैकमपीति परस्परापेक्षम् । विरुद्धयोरेकत्रासंभव इति न द्वयोर्निषेधः । तदत्र यस्यैव न संवेदनमित्युपपादयितुं शक्यं तदेवासदस्तु । द्वयोरपि न संवेदनमिति तु सर्वथा संवेदनाभावे स्यात् । तच्चासिद्धमिति । [101b] अथापि स्यात् स्वसंवेदनवादिनोऽनिष्टापादनमात्रमेतत्, ततस्तस्यैवायं दोषो नास्माकं तदनिष्टे चेति चेत् ?

अनिष्टिर्नाम महतां परिहारो महानयम् ।
सर्वानर्थानुषङ्गेषु यद्येवं स्यात् कृतार्थता ॥

व्यापकाभ्युपगमवादिनो हि प्रसह्यायातः स्वसंवेदनाभ्युपगम इत्युक्तम् । ततो यद्यभेदवदध्यक्षसिद्धिर्भेदेऽपि न शक्यः स्याद्वादपरिहारः । प्रमाणानुपगमे च सर्वस्य यथेष्टसिद्धावपि कस्तत्परिहारः ? एवं तर्हि,

भेदाभेदद्वयीसिद्धौ स्याद्वादः समुपागतः ।
वेदान्तवादस्त्वेकत्वे दुस्त्यजस्तत्त्वविप्लवः ॥

अत्रोच्यते,

भवित्तचक्रं यदपीदमेक-
मात्मा नभस्वन्न विभुस्तथापि ।
तथागतस्य प्रथते तथा चेन्-
मनःसमाध्यातिशयो न तत्त्वम् ॥

न खलु ज्ञानस्य तादृग्व्यापकत्वं नाम तत्त्वमेव, अन्यदा अन्यस्य चाभावात् । भगवतस्तु सिद्धिविशेषोऽसौ । पूर्वापररूपसंस्पर्शस्तु संवेदनेनास्तीति कुतो नित्यता ?

एतेन [ह्र]स्वतान्तपरिहारः। न च स्वसंवेदनमेव कदाचिदात्मानं विरमन्तमनुभवतीति उच्छेदान्तस्य प्रबन्धद्वारेण तु शाश्वतोच्छेदपरिहारोऽवान्तरव्यवस्थापेक्ष इष्ट एव। अतीतादिनाप्यभेदो भाष्यकारस्येति स्थवीयसी भ्रान्तिर्लोकस्य, प्रकाशमानस्यैवातीतादिभावनानिषेधात्। तस्मान्न तावन्मात्रमेकत्वं गगनवद् वैभवदोषाकर्षि। नापि नित्यताप्रतीतिरिति कथं वेदान्तसिद्धान्तशंका ?

अथ तावद्देशव्यापीदमिदं चान्यथेत्यपि प्रत्ययः कथम् ?. यद्येवं कालवद् देशस्यापि न दैर्घ्यप्रतीतिरिति न तरां नित्यविभुत्वे। उभयसिद्धिवादस्त्वह्रीकस्यैव। ननु दिगम्बरस्य बाह्यमप्यस्ति। तत्रापि कथञ्चिद् भेदाभेदौ, भावानां च नैकान्तेन बाह्यत्वमान्तरत्वं वेत्याद्यवकरपरिहारेऽपि प्रत्यक्षसिद्धबुद्धिरूपैकानेकत्वमात्रेण कः तन्मतोपनिपातः ? न खलु सर्वथा साम्यपरिहारः शक्यः, परस्परविरोधस्तु ध्वस्तो बुद्ध्यधिकारेण प्रतिभासादेव। तस्मात्,

यद् यथा भासते ज्ञानं तत् तथैवानुभूयते।<br>भासते द्व्यात्मकत्वेन तथैवास्य सदा स्थितिः॥

ज्ञानग्रहणेनैवदाह। न बहिर्द्व्यात्मकैकत्वेन क्वचित् प्रतिभासो भ्रमस्यापि संभवात्, प्रमाणान्तरावतारदर्शनाच्चन्द्रद्वयादिवत्। तत् कथमेकत्वं चित्राकारस्य ? उच्यते,

नाह्रीकवादमुक्तिर्वः प्रकृतार्थविमर्शने।<br>अस्माभिर्यदनुष्ठेयं भवद्भिस्तदनुष्ठितम्॥

एकानेकत्वयोरेकस्यापि सिद्धौ यदेप्सितम्।<br>का कथा द्वयसंसिद्धावेकं स्यादपि दुर्बलम्॥

चित्रैकताचोद्येऽप्युत्तरम्,

एकानेकत्वयोः सिद्धावेकत्वं सिद्धमेव तत्।<br>इति नामैकभावः स्याच्चित्राकारेऽपि चेतसि॥

चित्राकारे एकानेकाकारे [102a] रूपे इत्ययमप्यर्थः। चेतसि नाम स्यान्नजाते जडे एकभावोऽपि, न त्वेकभाव एव। न हि नीलं चतु[र]स्रं न नीलमिति युक्तम्। अथवा,

नैकं चित्रं विरोधेन विरोधश्च न दर्शनात्।
इति नामैकभावः स्याच्चित्राकारस्य चेतसः ॥

अनेकव्यवहारोऽपि तर्हि स्यात्। यदि प्रयोजनमस्ति को निवारयति? यथा ह्येको भगवानुच्यते, तथा चत्वारि वैशारद्यानि, द्वात्रिंशल्लक्षणानीत्यादि दृश्यते एवेति का क्षतिरस्माकम्? भवतस्तु स्ववधाय कृत्योत्थापनमेतत्। नन्वेवं परहेतुदूषणमस्तु, स्वाभिमतचित्राद्वैतसिद्धिस्तु कथम्, प्रत्यक्षप्रतिक्षिप्तत्वादेकतायाः, नीलपीतयोः प्रतिभासासंकरात्? यदप्यशक्यविवेचनत्वमुक्तं तदपि समानसामग्रीजन्यत्वेनाव्यभिचारनिमित्तं भेदहेतुः, बुद्धिरूपत्वात्तु समुदाय एकदेशो वा न गोचरः परस्येति किमेकत्वमस्तु?

औपचारिकमेकत्वं विवेकाशक्तितो यदि।
व्यापकानुपलम्भस्यासिद्धिः सत्यं कथं भवेत् ॥

यच्चेदमुच्यते, एकत्वनान्तरीयकः प्रतिभास इति, तदप्ययुक्तम्,

देशव्याप्त्या हि निर्भासो न चैकस्य भवेदयम्।
तद्भेदनान्तरीयत्वमप्याभासस्य किं न वः।

अभेदनान्तरीयत्वं यथाभासस्य दृश्यते।
नीलपीतादितन्त्रत्वमेवं भेदः स एव च ॥

तस्मात्,

व्याडिन्नोडाकरं क्षारदध्नोरेकत्वशासनम्।
तदेव किं न भवतो गुडगोरसकारिणः ॥

अत्रोच्यते,

इयता यदि भेदोऽपि कथ्यतेऽस्तीति का क्षतिः।
अयोगस्य व्यवच्छेदेनै[तदु]क्तमनन्तरम् ॥

तथैव चित्राद्वैतं च मुख्यमित्यपि दर्शितम्।
अन्यथा ह्येकमेव स्याच्चित्रत्वं नोपपत्तिमत् ॥

परस्परविरोधेन रूपसंकरभीरवे ।
अवश्यं कथ्यमेकत्वं निर्भासात्त्यज्यतां भिदा ॥

निर्भासे सति भिन्नत्वमभेदो वा तदाकृतेः ।
नानेकत्वे च निर्भासस्तस्मादेकत्वमेव सत् ॥

देशाव्याप्तिरनेकस्य जडस्यैवोपपद्यते ।
स्वसंवेद्यस्य तु कथमेकैकप्रतिभासने ॥

नीलपीतादितन्त्रत्वं तथास्तु न तदेव भित् ।
एकस्य स्वीकृतस्यैव तथोत्पत्तेः स्वहेतुतः ॥

एकतास्वीकृतं यद्वन्न भेदस्वीकृतं तथा ।
द्वितीयस्याप्रतीभासादभिदैव वशीकृतम् ॥

मिथो विरोधपक्षे च न द्वितीयावलम्बनम् ।
विरोधानभ्युपायेऽपि चित्राद्वैतं प्रसाधितम् ॥

तन्नाशक्यविवेकत्वं धियामद्वैतसाधनम् ।
एकसंवित्तिसिद्धेऽस्मिंस्तदेवैकत्वमुच्यते ॥

तत्रेति नामैकभावः स्यादिति कोऽर्थः ? एतदशक्यविवेचनत्वमेकत्वमित्यर्थः ।

तदेवमेकभावो ह्यस्यान्यथैवान्यथा धियः ।
इदं वस्तुबलायातमरुचिः कोपयोगिनी ॥

बाह्ये सति धियो ग्राह्यमिव भिन्नं शितेः [102b] सितम् ।
तदैक्यवादी निर्ग्राह्यो बाह्यैपी बाह्यविप्लवात् ॥

एतेनाभेदेन प्रत्यक्षप्रतिक्षेपः प्रयुक्तः ॥

किं च,

अध्यक्षमेव हि भिनत्ति शितेः सितं चेत्
तद्भिद्यमानमथवाभिदमेव भिन्द्यात् ।
भेदेऽन्यलेशमपि नेति कुतो भिनत्तु
भिन्द्यादभेदि मन इत्यपि कस्य शक्यम् ॥

बहिरपि हि भिद्यमानैव बुद्धिरर्थान् भिनत्ति । न चात्र बुद्धिस्वरूपे प्रमाणान्तराणामवकाशः स्वसंवेदनादन्यत्र । तच्चैकं भिनत्ति चेति व्याहतम् । बहिस्तु निराकारपक्षेऽभिद्यमानापि बुद्धिरर्थक्रियादिभेदेन दृढीकृताद् भिन्नस्वरूपग्रहणाभिमानात् अर्थान् भिन्द्यात् । संवेदनं तु स्वधर्म एव स्वभावात्मा नीलपीतयोर्न भिद्यते । भिनत्ति चेताविति महत् साहसम् । प्रत्यात्मं भिद्यमानं तु भिन्द्यात् । केवलमन्यान्यभावविरहात् चित्रप्रतिभास एवासंभवी तदेति कुतो भेदस्थितिः ? अथवा कुतः सकाशाद् भिनत्त्ववधेरप्रतीयमानत्वात् ? न च किमत्रावधिप्रतीत्या कर्तव्यम् यत एव तस्य न प्रतीतिस्ततःएव तस्य ततो भेदस्थितिः । न चान्योपलम्भेऽपि पररूपेण भावो भिद्यते, किं तु तादात्म्येन प्रतीतिरेवान्यतो भेदप्रतीतिः सा चाप्रतीतेऽपि परस्मिन्नविकलेति न भेदप्रतीतिक्षतिः ।

अत्रोत्तरम्, यदि तावदप्रतीयमानस्यापि सत्त्वपक्षापेक्षयेदमभिधीयते तदा बाह्यवाद एव युक्तमेतत्, न विज्ञप्तिमात्रतानये । तथा हि,

सत्ता च नामात्यक्षाणां स्वविन्मात्रे च संस्थितिः ।
यत्परैरुच्यते रुच्यमत्र विस्मीयते मया ॥

तस्मात् नाप्रकाशादसत्त्वादेव तदपेक्षाभेदसंस्थितिः । न चासदपेक्षैव भवितुमर्हति, न हि शशविषाणापेक्षया कस्यचिद्भेदस्थितिः, ऐक्यनिषेधमात्रं तु स्यात्, तदिष्यत एव । यदि न ततो व्यावृत्तं तदेव किं भवतु घट इति चेत् ? अत एवैक्यनिषेधमात्रं ब्रूमः । नन्वसतो व्यावृत्तं सदभिधीयते, यच्चासतो व्यावृत्तं तद् वन्ध्यासुतादपि, न हि वृक्षाद् व्यावृत्तं न प्लक्षादिति युक्तम् । तत् कथं खरश्रृङ्गान्न व्यावृत्तो घटः ? यद्येवं खपुष्पस्यापि कुम्भादिभ्यो भेदः सुतरां दुर्निवारः । न हि यद् यतो न व्यावर्तते ततस्तद् व्यावृत्तिमत् । ततश्च विन्ध्याद् वन्ध्यासुतस्य न भेदो नाभेद इति न वक्तव्यम् । उभयनिषेधस्याभावनियतत्वेन सामान्यपुद्गलाद्यभावसाधनायानुपन्यासः । ततो व्यावर्तत इति हि प्रथमार्थः पञ्चम्यर्थो वा साधारण एव, वस्तुधर्मतया कल्पितधर्मतया वा । तदिदमत्रार्थसतत्त्वम् । अस्मादिदं भिद्यत इति यदि वक्तुरेकस्वभावतानिषेधमात्रमभिमतम्, तदा घटतुरङ्गश्रृङ्गयोः परस्परतो व्यावृत्तिरस्तु, का क्षतिः ?

अथात्मात्मीयवस्तुरूपस्थितिरभिमता, [103a] तदा घटपटादीनामेव, न नरखरश्रृङ्गयोर्वा नरस्य खरश्रृङ्गस्य च, एकस्यैव वस्तुत्वात् । तथा च सति पुद्गलः

स्कन्धान्न भिन्न इति नात्मात्मीयरूपेणानयोः स्थितिरित्येव विवक्षितम् । नाप्येक इति वन्ध्यासूनुसमानतामनुभवतीति न दोषः। भावाभावयोस्त्वभावस्य कल्पितं रूपमाश्रित्य परस्परपरिहारेण व्यवस्थितलक्षणत्वमुच्यते, न वस्तुरूपत्वमुभयोः। अतएवात्मात्मीयवस्तुरूपस्थितिरित्युक्तम्। तस्माद् यावदप्रतिभाससमानमपि न वस्तुतामतिक्रामति तावत् परस्परासंकीर्णत्वेऽनुपलभ्यमानादपि भेदग्रहणमिति स्यादिति भतिसत्तासाधने। अन्यथा तु तदापि संशय एव। प्रकाशैकस्वभावे तु सत्त्वेन प्रतीयमानं नैकं न नाना। प्रतिभासी तु भावोऽभावो न भवतीति भेदार्थोऽभिमत एव। तत्रोद्भावनासंवृत्त्याभिधीयते, न तु तत्राभावांशस्य निषेधस्योल्लेखः, उल्लेखे तादात्म्यापरिहारात् कुतोऽभावता? अतएव भावाभावतयापि न द्वैतप्राप्तिः। तस्मादन्याभिमतस्य लेशस्यापि न प्रतीतिरित्यभावादेव कुतो भिनत्त्वीति युक्तमुक्तम्। अतएव पूर्वापरयोः सहानुपलम्भेऽपि भेदः प्रसिध्यत्येवेति व्यक्तमात्मप्रतारणमात्रमेतत्। पूर्वापरत्वस्याप्रकाशात् प्रकाशस्य च पूर्वापरत्वायोगात्। तस्मादसत्त्वादेव नातीतादिवेदनं नाम, प्रकाशस्यैव सत्त्वात्। तथा च,

> भ्रमात्र संकल्पनकल्पनानि
> ज्ञातासितादिन्यखिलाक्षजानि ।
> ज्ञानान्यभिन्नानि सहोपलब्धेः
> पूर्वापरत्वं तु न वेद्यमेव ॥

इति संग्रहः ॥

अथवा कुतो भिनत्त्वीति भेदावधेरप्रतिभासादेव, किमत्र भावाभावचिन्तया इत्यर्थः। तथा हि,

> अस्माद् भिन्नमितीदं चेत् स्वरूपं ग्राह्यवस्तुनः।
> [1]सावधेरस्य भासः स्यान्न वा ग्राह्यं तदात्मना ॥

ननु संबन्ध्यन्तराप्रतिभासेऽपि संबन्धिनः पित्रादेः प्रतीतिरस्तीति चेत्? तत्रापि काल्पनिकमेव संबन्धित्वं विद्मः, वस्तुरूपत्वे सर्वस्य संबन्धिनो बोधाक्षेपात्। अवधिरपि हि संबन्धिविशेष एव। अतएव हेतुफलयोरेकप्रतीतिरन्यप्रतीतिविनाकृता भवन्ती शुद्धस्वभावविषया परस्परापेक्षालक्षणसंबन्धविसवसंकल्पशिल्पिनिर्मितमेवोप-

१. साधधेरस्यावभास इति मातृकायाम्।

पादयति। तस्मादवधेरबोधेऽवधिमतो मतिरिति विमतिरेवेति कुतश्चिद् भेदग्राहि प्रत्यक्षमप्रतिभासिनः। ननु नीलमनीलाद् भिन्नमवश्यमेषितव्यम्, तद्ग्राहिणा च प्रत्यक्षेण तथा न गृह्यत इति न गृहीतमेव नीलम्। वयमप्येवं ब्रूमः। अनीलाग्रहणे ततो भिद्यमानं न गृह्यत इति नीलमेव कथं गृहीतम्? यत एव तस्याग्रहणं तत एव ततो भेदग्रहः, अन्यथा ह्युपलम्भानुपलम्भावेव न सिध्येयाता[103b]मिति चेत्? यथा तर्हि तस्य नोपलम्भः, तथा तदवधेर्भेदस्यापि कथमुपलम्भः? ततश्च तदग्रहो नाम यथैकतामस्य विरुणद्धि, तथा तदवधिकभेदग्रहमपि। अथास्यैतद्रूपप्रतीतिरेव भेदप्रतीतिरित्युच्यते? भेदप्रतीतिनिषेधेऽपि समानमेतत्।

विनावधिं प्रतीतो हि भेदो भेदः कथं नु सः।
शब्द एव तथा माभूदिति चेद् भासतां तथा॥

उभया[व]भासने हि तदपेक्षः स्वभाव एवास्य न स्फुरतीत्युच्यते, न विकल्पमात्रप्रतिक्षेपः। तस्माद् यथान्यासंकीर्णरूपभासनमेव भेदप्रतिभास उच्यते, तथावधिनिरपेक्षमीक्षणमेवास्य भेदप्रतिभासभ्रंश इत्युच्यते, स्वरूपमात्रप्रतिभासात्। यद्येवम्,

न भेद्यभासादवधेर्ज्ञातं नाभेद्यसंकरात्।
नान्यच्च भेदाभेदाभ्यां वस्तु वस्तुग्रहः कथम्॥

यदि समीचीनमालोच्यत एवमेतत्,

अर्थस्याव्यतिभेदे हि ज्ञानादपि भिदा कुतः।
भेदे चावधिबोधेऽपि सर्वः सर्वस्य गोचरः॥

केवलं बहिरभिनिवेशपारवश्ये चिन्तेयम्, तत्र च समानमेव दूषणमिदम्। यथा हि भेदग्रहानङ्गीकारे एकस्य, तथा भेदग्रहनिबन्धनस्यावधिग्रहस्याभावे द्वितीयस्य। तत्र यदि चक्षुषी निमील्य बाह्यग्रहवदवधेरबोधेऽपि भेदग्रहव्यवस्थैकस्य, तदा चक्षुषी निमील्यैव भेदग्रहाभावेऽपि वस्तुग्रहव्यवस्था किं नापरस्य, यथा परमाणुरूपानुल्लेखेऽपि? न हि परमाणुभ्योऽन्यदस्ति वस्तु, ततस्तत्रापि निमीलिताक्षस्यैव तदनुल्लेखेऽपि वस्तुग्रहव्यवस्था। एवं भेदाप्रतीतावपि न दोषः।

कथं तर्हि भेदग्रहः? न कथञ्चित्। भेदग्रहव्यवस्थामात्रं तु पश्चिमनिश्चयापेक्षया स्यात्। स हि नीलमनीलराशिं च स्वानुरूपप्रतिभासविषयीकृतमन्योऽन्य-

प्रत्यनीकतया विभजन् स्वव्यापारमपि नीलमिदं दृष्टं नानीलमिति प्रत्यक्ष एव क्षिपतीति, तदपेक्षयाध्यक्षमेव परस्य व्यावृत्तिं गृह्णातीति व्यवस्थाप्यते, सोऽपि वा स्मृतिरिति, यथा धारावाहिज्ञानान्तरस्य गृहीतग्रहणमगृहीतेऽप्येकत्वनिश्चयापेक्षया। एतेन तत् परिच्छिनत्तीत्यादेरविरोधो व्याख्यातः। तदनेनावान्तरव्यवस्थामात्रेण न प्रत्यक्षस्य भेदग्रहनिसर्गविसर्गयोगः। तत् किमिदानीमुपलम्भानुपलम्भयोरैक्यमस्तु? न, भेद-ग्रहनिषेधमात्रस्य विवक्षितत्वात्। विकल्पस्तु सह क्रमेण वा प्रतियोगिनः प्रतिपत्तौ संकल्पे वा भेदमभेदं वा व्यवहारयेत्, प्रत्यक्षापेक्षया स्वप्रतिभासमानं नैकं न नाना। प्रतिभासमाने का गतिरिति चेत्? तत्रापि यदि ग्राहकयोर्भेदः, तदान्यविषयानुल्लेखात् पूर्ववद्विकल्प एव भेदग्राही। अभेदे सिद्धश्चित्राद्वैतवादः, बुद्धिरूप[104a]मेवाभेद-ग्राहकमेव प्रत्यक्षमित्यपि। संग्रहः,

> बाह्यस्य सत्त्वेऽसत्त्वे वा नाध्यक्षं भेदवेदनम्।
> अभेदवेदनं बुद्धौ भासमानात्मनैव तु ॥

तस्माद् व्यवहारपरायणमेव भेदः ॥

ननु पुरः स्पष्टाकारं नीलपीतादिविरुद्धधर्माध्यासि भासमानं कथमपह्नोतुं शक्यते? नेदमपह्नूयते, अतएव चित्रमुच्यते। तस्य चित्रशब्दाभिधेयस्य नीलपीतादेः प्रतिस्वं भेदं तत्त्वतो न क्षमते, स्वसंवित्तिरित्युच्यते। तत्र च विरुद्धधर्माध्यास इति विरुद्धौ वा धर्मौ विरुद्धयोर्वा? प्रथमपक्षे अप्याश्रयद्वारेण वा, स्वरूपेण वा? आश्रयपक्षे, संवेदनादेवाधिकरणतासिद्धेरसिद्धिर्विरुद्धधर्माध्यासस्य, स्वसंवेदनस्वीकृते प्रमाणान्तरावतारविरहात्। अथ स्वरूपेण, तन्मात्रं न व्यथतेऽभेदिन्याश्रये प्रति-भासमानौ मैत्रीमेवावहतो हतो विरोधः, कृतकनित्यत्ववत्।

तयोः कल्पनाकृत एव भेदोऽत्र तु प्रतिभासकृत इति चेत्? अभिन्नाश्रयत्व-मात्रेण निदर्शनमेतत्। आश्रयाभेदस्तर्हि तत्र प्रतिभासाभेदादेवेति चेत्? अत्रापि स्वसंवेदनाभेदात्। प्रतिभासभेदात् तर्हि भेद एव किं न वेति चेत्– न, बाह्ये हि प्रतिभासः प्रमाणमाकारापरनामा, तदभावे त्वाभास एव विषयः। प्रमाणं तु स्व-संवेदनम्, स चैकीक्रियमाणः केन भेत्तुं शक्यः? विरुद्धयोर्धर्माविति तु दूरोत्सारि-तम्, भेदस्यैवाभावात् क्व विरोधः इति। तस्मान्न भेदसाधनं किञ्चित्। अभेदसाधनं

तु स्वसंवेदनमेव भेदबाधनं च स्वरसवाही बहिर्व्यवहारस्तूपस्थापयतीति स्थितम्। एतदप्याह,

नीलादिश्चित्रविज्ञाने ज्ञानोपाधिरनन्यभाक्।
अशक्यदर्शनस्तं हि पतत्यर्थे विवेचयन्॥
[ प्र. वा. २. २२० ]

इति। अनन्यभागित्यनन्यस्वभावभाक्। पीतादिस्वभावमभजन्नीलादिरशक्यप्रतिभासश्चित्रविज्ञानस्थ एकाकी शक्यदर्शनः स्यादपि पीताद्येकैकनियतत्वात् तद्धर्मतापन्नस्य प्रतिभासस्य। परस्परस्वभावंस्त्यजन्नेव शक्यप्रतिभास इत्यर्थः। तं हि विवेचयन् भिन्दन् नियतं तद्धर्मतामनापन्नतां प्रतिभासस्य स्वीकुर्यादिति बहिरर्थवाद एव निपतेत्। ज्ञानोपाधिश्चायं नीलादिः, तस्माद्,

यद् यथा भासते ज्ञानम्
[ प्र. वा. २. १२१ ]

नीलपीतादिभासित्वेन तत्तत्रैवानु[भूतं] पीतादित्वेन स्वसंवेदनात् परस्परात्मत्वेनेति इत्यर्थः। शेषं सुगमम्। अतो युक्तमाह भाष्यकारः,

न वा तच्चित्रम्, अचित्राद् भेदेन व्यवस्थापनासंभवादिति।
[ प्र. वा. भाष्ये पृ. २६० ]

अत्र ह्यचित्रादनानारूपात् स्वसंवेदनाद् भेदेनाव्यवस्थापनमिति, अभेदेन व्यवस्थापनं पर्युदासपर्यवसायि विवक्षितम्। तच्च प्रसाधितं स्वयमेव। पूर्वमशक्यविवेचनत्वमव्यभिचारलक्षणमेकत्वमुक्तम्, अधुना त्वेकसंविदन्तर्गतत्वमेवेति वा शब्दः। तेन चित्राकारतापि संवृत्योच्यते। परमार्थतः पुनरद्वैतमेवेत्यर्थं परिकल्प्य भेदप्रतीतिनिषेधमात्राभिप्रायेण यदुक्तम्, [104b] यद्येवं न वा तदद्वैतं द्वैताद् भेदेनाप्रतिभासनात्, एवं न वा ज्ञानम्, न वा स्वसंवेदनमिति, तन्निरस्तम्। द्वैतं हि भेदः, तस्य च क्व प्रतिभासः? तेन ततो भेदप्रतिभासाभावेऽपि कुत एकत्वम्, एकस्यैकसंविदन्तर्गमेण प्रतिपादितत्वात्? एवं शेषमपि, प्रतिभासे हि सर्वस्य विपर्ययस्य स्वभावभङ्गप्रसङ्गः। ॥

उद्भावनासंवृत्त्या चात्र चित्रवद् भेदोऽपि व्यवस्थार्ह इत्यपि न युक्तम्, अनुभवस्य भेदविरोधेनोदयप्रतिपादनात्। नीलपीतादिमात्रेण चित्रस्याद्वैतवचनमेवोद्भावनासंवृतिः, न भेदवचनम्। अभ्यासभावितं तु भेदवचनमनभ्यूहिततत्त्वस्य न तत्त्वोपरोधीति। वस्तुतस्तु, प्रसज्यप्रतिषेध एवायं वाचकाचरः, एकत्वसाधनायेति तु भ्रान्तिर्लोकस्य। तदयमर्थः, अथवा तद्ग्राह्यग्राहकाभिमतं नीलपीतादि वा चित्रशब्दाभिधेयं न चित्रं, न नाना, अचित्रात् स्वसंवेदनाद्धेतोर्भेदेन व्यवस्थापनाभावादिति नानात्वनिषेधमात्रमिष्टम्, परेण चैकत्वनिषेधोऽध्यक्षादेव कृत इत्युभयविनिर्मुक्त एव प्रकाशः। क्षणिकं क्षणित्वमुक्त इव सन्नित्युक्तं भवति, यथा प्रथमं प्रथितमस्माभिः। अत एवान्यस्य जडस्य ग्राह्यग्राहकस्य वा अभावात् केवलार्थोऽयमद्वैतशब्दो न द्वैतपर्युदासे नैकार्थ इति दर्शयन्नाह,

तस्मात् स्वसंवेदनमेव केवलमद्वैतमपरस्याभावादिति।
[ प्र. वा. भाष्ये पृ: २९० ]

तेन यदेव चोद्यमुखेन पूर्वमाह, अथ प्रतिभासमानं कथमेकानेकत्वविकल्पनादेव न भवति, विकल्प्यमानमपि तत्प्रतिभासत एव, अभावे कथं प्रतिभासः? प्रतिभासश्चेत्, कथमभाव इति? टीका चात्र एकानेकरूपपरिहृतस्याप्युपलम्भात्मतयोपलम्भः सत्तेति न्यायात् सदेवेति। तदेव सिद्धान्तान्तरत्वेन व्यक्तीकृतम्। तदेवमेकत्वोपाधिश्चित्राद्वैतवादो वार्तिककारस्य मुख्य उपलक्ष्यते। भाष्यकारस्य तूभयव्यावृत्तिविशेषणः। तत्त्वतस्तु उभयोरप्येक एवाभिप्रायः। अभिव्यक्तिरीतिभेदात् तु मुख्येतरव्यवस्था॥

अनालोच्य ततश्चित्रां चित्राद्वैतव्यवस्थितिम्।
भाष्यापदेशादाचार्यदूषणं कस्य भूषणम्॥

यदि चाचार्यस्यान्योऽभिप्रायो भाष्यकारस्याप्यक्षरव्याख्येयमभिप्रायस्त्वन्य इति नाशक्यमिति धिक् प्रकाश एव स्खलनम्! तदेवमेकताया एव बुद्धिरूपे चित्रेऽप्युपपत्तेर्व्यापकानुपलब्धेरसिद्धिः। नोपयोगश्चित्राद्वैतेन व्यवहारिणामिति तु न बाधकं शुद्धगोचरत्वात्, शून्यतावत्।

तत्त्वावबोधेतरयोरभेदाद् दोष एव चेत्।
अनीक्षमाणः स्वमुखं सुखं जीवति पेचकः॥

तथा हि,

न सा कृतौ चेतसि विप्रतीतिः
  प्रकाशमानस्य मनस्त्वसिद्धेः ।
प्रकल्पितेनैव तु नात्मनासत्
  प्रकाशिनापीति विशेष एषः ॥

तया च किं धर्मतया कदाचिद्
  विमुच्यते चक्र[105a]मिदं मतीनाम् ।
न चात्मरूपानुभवो न पूर्वं
  चित्तस्वभावत्वहतिप्रसक्तेः ॥

ततश्च तन्निश्चय एव नासीद्
  आकारभेदोत्कलितश्च सोऽपि ।
न तत्त्वसंवृत्यनुगम्य चास्य
  परव्यपेक्षाविरहेऽस्ति भेदः ॥

न च क्वचिन्नाम परस्य बोधः
  स्वभावशून्यत्वमपि द्वयोः समम् ।
तदेकदा संवृतिरन्यदा ने-
  त्ययं विभागो भवतोऽपि किं कृतः ॥

अथवा,

न शून्यताया विरहः कदाचित्
  साक्षात्क्रिया वापि परा न काचित् ।
न दोषनाशो न गुणोदयो वा
  न संवृतिः कार्यविचार्यमाणा ॥

तदत्र यावन्न विचारसंभवो
  भवोऽयमन्यः शम इत्ययं नयः ।
विचारलीलालुलिते तु मानसे
  भवः शमो वा क इहेति कथ्यताम् ॥

## [ पञ्चमः परिच्छेदः ]

ननु स्वसंवेदनविलासः सर्वोऽयं पूर्वो विस्तरः, स्वसंवेदनं च नाम नास्त्येवैतत्, युक्त्यागमनिगृहीतत्वात्।

तदभावे कुतश्चित्रा चित्राद्वैतव्यवस्थितिः ।
न वा समन्तभद्रत्वमालीक्यापरिहारतः ॥

अत्र प्रश्नः,

[105a] विदेव किं नास्ति किमस्तु न स्वयं
प्रमेयहत्याथ कथं प्रवेदनम्।
हृतिः स्ववित्तौ परवेदनेऽपि वा
समस्तमेतन्न समस्ति निर्णये ॥

तथा हि,

संवित्तिर्मम नेति न प्रथयितुं शक्यं विभिन्नैर्मृदो
नापीयं परतः कचिन्न च परिस्फूर्तावपीदं न सत्।
न स्फूर्तौ स्वयमेव सत्यमिति चेदन्येन वित्तौ कुतः
सत्त्वं नोभयथापि चेति गदितुं चैतत्स्वतोऽसांप्रतम् ॥

अयमर्थः,

संवित्तिरेव नास्तीति ब्रूयान्निश्चेतनोऽपि किम्।
न वक्ता चेन्न च श्रोता स्वनिर्भासस्तथाप्ययम् ॥

परतस्तु वेदनमिति निरस्तमन्यत्रेत्यास्तां तावत्। अथ न सर्वथा वार्यते स्वसंवित्तिः, किं तु सांवृतीत्युच्यते, तर्हि सर्वथाप्रतिक्षेपाभावे बाधकाधीनमस्याः सांवृतत्वम्। बाधा च प्रमेयाद् भेदेनानुभवाद् वा। प्रमेयबाधयैव न तस्याः स्थितिरिति। तत्र,

भे[illegible]सम्भवे भेदात् स्वानुभूतिः कथं भवेत्।
[illegible] न पुनः शक्रेणापि न शक्यते ॥

न हि स्फुरद्रूपमेव नास्तीति शक्यमवसातुम्। अथ न सर्वथा स्फुरतो निषेधः, स्वयं वेद्यमेव तु मा भूत्, परवेद्यं पुनरस्तु। नैवम्,

स्ववेदनेऽप्यनाश्वासः का वार्ता परवेदने।
स्ववेदनस्याभावे हि परवेदनमप्यसत् ॥

यदि परेण परं वेद्यमानं सद्भवेत्, परमेव कथं सद्भविष्यति? न चासदेवान्यसत्ताव्यवहारकारणम्। तस्यान्येन वेदने सति सत्त्वेऽनवस्था। एवमेव परसत्तेति चेत्? प्रमेयेऽप्येवमेवास्तु।

स्वयमेव च सत्त्वं चेत् प्रकाशोऽपि स्वयं भवेत्।

जडस्य।

स्वकारित्रविरोधो हि तावतामनयोः समः ॥

अथ परवेदनमपि येन स्वीकृतं भवतु तस्यैव दोषः, मम तु स्ववेद्यं न परवेद्यं किमपीति चेत्? नैवं चेतनावान् वक्तुमर्हति। तथा हि, स्वतः परतो वा स्फुरन्नेव नास्त्यर्थ इति नानिष्टया वचनमात्रेण वा निवर्तयितुं शक्य इति। यदि प्रमाणमनुसरेत् तदा प्रत्यक्षमादावादाय प्रमाणान्तरपरिगणनम्। अनुमानादौ हि दृष्टानिष्टिः, न तु प्रत्यक्षे। परोक्षविषये च शेषमशेषं न तद्विषये विधिबाधयोरुत्सहते। तदेव च प्रत्यक्षसिद्धम् अभिधीयते, यत्स्वरूपस्य साक्षान्निर्भासः। स च स्वेन परेण वेति किमनेन?

परव्यापारभावेऽपि यदि नास्य स्वरूपवित्।
स्वरूपप्रच्युतिः सैव किमन्यैर्बाधकैरपि ॥

यत एवात्मनिर्भासस्तत एव न बाध्यते।
स्वार्थावभासनादेव बाधकस्यापि बाधिता ॥

सोऽपि तेनैव भाण्डेन वणिगित्यवगम्यताम्।
तस्मात्प्रकाशमानस्य न बाधो नाम कश्चन ॥

ननु परेण प्रकाशने तेनैव रक्षा स्यात्, स्वयं भासनमनाथं परेण प्रभवता बाध्येत। उक्तमत्र, परोऽपि स्वरूपप्रकाशनेनैवोपयुज्यते न [106] सत्तामात्रेण, नापि

तथा च सूत्रालङ्कारे,

न चान्तरं किञ्चन विद्यतेऽनयोः
संदर्थवृत्त्या शमजन्मनोरिह ।
तथापि जन्मक्षयतो विधीयते
शमस्य लाभः शुभकर्मकारिणाम् ॥

सदर्थवृत्त्या परमार्थवृत्त्या, शेषं संवृत्त्या । अभिसमयालंकारेऽपि,

स्वप्नोपमत्वाद् धर्माणां भवशान्त्योरकल्पना ।
[ अभिसमयालङ्कारालोके पृ: ४४० ]

इत्यादिकम् । ततश्च जातिसिद्धम् ।

निर्वाणं च भवश्चैव द्वयमेतन्न विद्यते ।
परिज्ञानं भवस्यैव निर्वाणमिति कथ्यते ॥
[ नागार्जुनस्य ]

इति । अस्य दूषणं निरपराधमातृवध एव तदयं प्रकरणार्थः,

भेदोऽभेदो द्विधाऽद्वेधा धीरूपेऽस्तु यथा तथा ।
नालीकत्वं प्रकाशस्य बाधगन्धविरोधिनः ॥

विजानातीति विज्ञानमित्यादिकल्पितप्रपञ्चशून्यता तु सर्वत्र । तथा च न हि ते स्वभूते धर्मास्तथा संविद्यन्ते यथा बालपृथग्जना अश्रुतवन्तोऽभिनिविष्टा इत्यादि विस्तरः । बुद्धिधर्मा अपि हि बुद्ध्यन्तरपरिकल्पितेन रूपेण सन्त एव न स्वसंवेद्यतया एव सत्त्वात् । एतेन स्वप्नमायोपमत्वं भगवतो व्याख्यातम् । दृष्टान्तेष्वपि हि निषेधोऽध्यवसितस्यैव न प्रतिभासमानस्य । तस्मात् साकारस्यैव भगवतः सिद्धिर्बाधाविनाकृतेति स्थितम् । तथा च नमस्कारश्लोकस्यार्थसिद्धिः —

सान्नव्यञ्जनलक्षणैरधिगतौदार्यं निजेनात्मना
यद्गम्भीरमनन्यगोचरतया शून्यं प्रपञ्चोर्मिभिः ।
निर्माणैश्च यतः स्फुरन्ति जगती ज्ञानत्विपरतन्न चा-
लीकत्वेन कलङ्कितं वपुरसौ भद्रं समन्तान्मुनेः ॥

किं भूयः,

यथा सुवर्णं गुणरूपसंपदः
प्रकर्षपर्यन्तमुपेतमद्वयम् ।
विमुक्तमालीक्यकलङ्कशङ्कया
तथैव बौद्धं वपुरस्तु देहिनाम् ॥

॥ इति महापण्डितज्ञानश्रीमित्रविरचितायां साकारसिद्धौ
चित्राद्वैतपरिच्छेदश्चतुर्थः ॥



भुजं प्रसार्य प्रहारवारणेन, तत्स्वरूपप्रकाशनं यदि स्वरूपमपि संभवेन्नापरमुपयोगि। प्रत्युत,

स्वबलेनैव बलवान् यः परेण स दुर्बलः।
यथात्मरक्षावहितो परस्तत्र परस्तथा॥

तथा चासत्ख्यातिविपरीतख्यातिस्मृतिप्रमोपदृष्टिप्रमोषादयः,

परेण भासने दृष्टा विविधा भ्रमकल्पनाः।
स्वहेतोस्तु प्रकाशस्य निष्पत्तौ प्रभवन्ति न॥

यद् यथा भासते ज्ञानं तत् तथैव व्यवस्थितम्।
नान्यत्र रूपमाधाय भासते ज्ञानमन्यथा॥

यदा यदेव स्फुरति रूपं तस्य तदेव हि।
स्वाकारेणैक्यकरणाद् बहिरप्युच्यते भ्रमः॥

यदा तु बहिरपि परितो निरस्तविभ्रमाशङ्कमभ्यासात् स्वरूपनिर्भासि ज्ञानम् अनुभवविषयस्तदा क बाधशंका? किं पुनः स्वानुभवे? केवलं तादृशस्य कथमुत्पत्तिः कथं वा निश्चयः स्यात्?

यथा नीलस्वभावेन जन्म बोधात्मना तथा।
धियः स्वहेतोर्दीपस्य पीतभासात्मना यथा॥

कथं पुनः स्वसंवेदनमेवेदं न परवेदनमित्यन्यत्रोक्तमित्युक्तम्? केवलंस्ववेद्यं परवेद्यं वा प्रतिभासमानमेव रूपमबाध्यमिति प्रकृतम्। तच्च सिद्धम्,

प्रमाणस्य प्रमाणेन नापरस्यापि बाधनम्।
प्रागेवाध्यक्षरूपस्य स्वसंवित्तेस्तु का कथा॥

त्रैरूप्यपरिशुद्धिबोधजन्मनोऽनुमानस्यापि न मानान्तरेणावमानः शक्यः, शब्दादेर्वा यथायथम्। न ह्येकदैकत्रैव धर्मिणि परस्परप्रत्यनीकधर्मद्वयसाधनसमर्थयोः संभव इत्याद्यभिप्रायम्। एकस्य तु स्वविषयदार्ढ्यविरहे बाध्यबाधकभावः स्यात्। स्वविषये च दार्ढ्यमदार्ढ्यं वा द्वयोः पर्यन्ते प्रत्यक्षस्यैव स्खलनेतराभ्याम्। प्रत्यक्षस्य च स्खलनं विषये भ्रम एव। भ्रमश्च परवित्तिनियत इति कः संवेदनस्य प्रतिमल्लः?

यदि बहिरपि निरस्तविभ्रमाशङ्कस्य न बाधः, कथमद्वयानुमानेन स्वप्रभवस्य बाधः ? उक्तमत्र परवित्तेरेवायं विप्लव इति न शक्यम्, व्यापकानुपलम्भेऽपि स्ववित्तेरेवायं विप्लव इति शक्यमभिधातुम्, परवेदनाध्यवसायेन तद्व्यापारस्याननुविधानात्। तदापि सत्तामात्रेण भाव इति संस्कारिणः श्रुतसंस्कारचालनवत् महामोहसामर्थ्यमेतत्। संस्कारमन्तरेणापि स्खलनमिति चेत्? तर्हि जीवितमन्तरेण न स्खलनमिति मरणमेव स्खलनप्रतीकार इति साध्वी बौद्धस्थितिः। किं च स्ववेदनस्य व्यापकतया व्यतिरेकोऽशक्यदर्शन इति अनाद्यविद्याप्रभवोऽपि विप्लवस्तदीय इति वदतो व्यापकानुपलब्धिसाध्याया निःस्वभावताया अपि स्वभावारोपरागादयो विप्लव इति न [106b] दूरम्, प्रत्यनीकाकारता तु साधारणी।

तस्मान्न सत्तामात्रेणोपयोगव्यवस्था, उपयोगेऽपि वा न तद्व्यापारानुविधायिना विकल्पेनोत्थापितो व्यापकानुपलम्भस्तस्मै प्रभवति। तदप्रभवो हि संबन्धादिग्राहकमेवाप्रमाणीकुर्वन् तेनैकविषयतया परवेदनमेव दोषेण स्पर्शयेत्, न स्वसंवेदनम् अत्यन्तभिन्नविषयत्वात्। ततो यथा तत्र साधने यदि परवित्तेः प्रामाण्यं स्वीकुर्यात्, स्वबाधनमनुमानमपि प्रमाणयेत्। अथ न, तथाप्यनुमानसाध्यं सिद्धमिति तस्या एव विप्लवः स्फुटीभवत्यनुमानोदयेन, तथा न व्यापकानुपलम्भेन स्ववित्तेः, उक्तसामर्थ्यस्य वक्तुमशक्तेः, स्वेच्छया तु प्रतिपत्ता स्ववेदनविषयमपि पक्षीकुर्यात्, केवलं प्रत्यक्षविशेषबाधितत्वात् न साधनावधानमिति न्यायः।

तर्हि विज्ञप्तिमात्रसिद्धावेष न्यायः, प्रागेव तु व्यापकानुपलम्भोदये तत्साधनमेवानवकाशम्। नैवम्, यदैव नीलस्य निःस्वभावतां प्रतिजानीते, तदैव स्ववेदनाध्यक्षेण प्रतिक्षेपादुक्तक्रमेण। यद्येवं, प्रकाशमानतादिसाधनबन्ध्यताप्रसङ्गः। एतदपि नास्ति, विज्ञप्तिव्यवहारमात्रोपयोगात्। ननु तथापि परप्रकाश्यतानिषेधेन स्वप्रकाशता साध्यमाना विज्ञानव्यवहारं साधयेत्, न च सर्वथा परवेद्यताभावे निःस्वभावत्वे वा साध्यसाधनं नाम किञ्चित्, तत् कथं व्यवहारसिद्धिरपि ?

तदयुक्तम्। संवृतौ हि साध्यसाधनास्था। तदा च द्वयोरपि तत्त्वयोरसिद्धिः। तत्र च यस्य पुरोऽपरोपाधिप्रकाशिन्यपि नीले निजाभिसंस्कारिकाऽविद्याबलात् परप्रकाश्यतासंशयः, तद्बोधनाय न्यायसहः साधनोपन्यासः। तदा च स एव प्रत्यक्षबाधादिकं निरूपयिष्यति। तत्प्रतिपादने च जाते विज्ञप्तिव्यवहार इति। एतावतैव

विज्ञानवादिनो व्यापारसमाप्तिः। परस्य तु प्रत्यक्षबाधैव साधनावधानं निषेधति। न चानुमानानुदयमपेक्ष्य प्रत्यक्षवृत्तिः क्वचिदपि। 'अनुमानं तदविषय एव सर्वदा प्रवृत्तिमदिति तेन साधिते इव बाधितेऽपि नावकाशमासादयतीति स्थितम्।

तस्मान्न प्रमेयबाधया सांवृतत्वमात्मवेदनस्य। तथैतदपि नाशङ्कनीयम्, यदि नीलं स्ववेदनात् सिद्धम्, स्ववेदनेनापि स्ववेदनान्तरात् सेद्धव्यमित्यनवस्था, तस्य स्वयं सिद्धौ नीलस्यापि स्ववेदनेन किं कर्तव्यमिति। तथाहि नीलस्यापि किं स्ववेदनेन इति वेदनं वदतः स्वयमेव वेदनमस्त्वित्यभिमतम्। अयमेव च स्वसंवेदनवाद इत्यश्वारूढन्यायः। यदि तु भिन्नं तत्स्यात्, तदा नानवस्थामतिक्रामेत, [107a] नापि स्ववेदनवादस्पर्श इति। यदि तर्हि न भिन्नं प्रज्ञप्तिसत्, तस्यैव च धर्ममात्रमेतत्, तदा तद्बाधने स्वयमेव न तटस्थमासितुं शक्तम्, तत् कथं परक्षणक्षमम्? तदपि यत्किञ्चित्।

नीलस्यापि प्रकाशत्वं प्रकाशस्यापि नीलता।
धर्मधर्मिव्यवस्थानं नैकात्मनियतं मतम्॥

अभेद एव रक्षापि भेदोऽस्मिन् निष्प्रयोजनः।
स्वरक्षानान्तरीया हि पररक्षा भवेन्न वा॥

यत एव स्वयं भाति तत एव न बाध्यते।
इत्यर्थतत्त्वं केनापि व्याहारेण निवेद्यते॥

यत्पुनर्युक्तिवादिताभिमानिनोच्यते, स्वात्मनि कारित्रविरोधात् न स्वसंवेदनम्, *न हि तदेवाङ्गुल्यग्रं तेनैवाङ्गुल्यग्रेण स्पृश्यत इति*, तत्रापि,

नाङ्गुल्यग्रं तदग्रेण स्पृश्यं चेन्मसृणं कथम्।
स्वयं मसृणमेतच्चेद् विरोधः किं न संप्रति॥

किं न धीर्मासते स्वयं वा स्वयमेव मसृणमिदमस्ति जातं वेत्ति प्रतीत्या वाक्यार्थपर्यवसानादायातः कारित्रविरोधः। तथा च स्वयं गच्छति, स्वयं गौर इत्यादि प्रेरणाङ्गरागजनितत्वादिप्रतिक्षेपेण सर्वथा न वक्तव्यमेवं वादिभिः, तत्सन्निधौ वा परेणेति महान् विप्लवः। अथ सकर्मिकायां क्रियायां एकमेव कर्म कर्ता च नोचितम्, ज्ञानार्था च सकर्मिकैव क्रिया नीलं वेत्ति चैत्र इति। एवं तर्हि,

स्वयं प्रकाशते बुद्धिरित्यादौ तूष्णीमास्यताम् ।

ततश्च वेद्यत इत्यादि यत् कर्मकर्तृविवक्षया परैः प्रयुज्यते, तदस्माभिर्भासते इत्यस्मिन्नेवार्थे शङ्कितमिति न कश्चिद् विशेषः। अथ स्वयम्भूर्भगवानित्यादिन प्रकृतीश्वरादिव्यापारनिराशेन स्वहेतोरेव तादृक्स्वरूपोत्पत्तिप्रतिपादनमात्रमेतत्, न तु भेददृष्टः क्रियाकारकव्यवहारोऽत्र मत इत्युच्यते, बुद्धिरपि तर्हि स्वहेतोरेव प्रकाशरूपोत्पन्ना न परेण प्रकाशितेति संमतौ को विद्वेषः ?

इयमेवात्मसंवित्तिरस्य याजडरूपता ।
क्रियाकारकभावेन न स्वसंवित्तिरस्य तु ॥

इत्यन्तरश्लोकः ।

यत्पुनरत्रोक्तमेवंवादिनो लोक एव बाधको भविष्यति इति, तदनेनैव निरस्तम्, लोके तथाविधाया विवक्षाया दृष्टत्वात्। अथ बुद्धिविषये न दृश्यते, तत्रापि प्रकाशरूपव्यवहारे स्वपरप्रकाशविवक्षाया दृष्टत्वाद् दीपघटवत्। केवलं बाह्ये द्वयदर्शनेऽपि बुद्धिरूपाधिकारेण परप्रकाश्यताया बाधनात् स्वप्रकाशतैव व्यवस्थाप्यते, न तु सर्वथा व्यवहार एवैवं नास्तीति ॥

ननु,

दीपः प्रकाशत इति ज्ञात्वा ज्ञानेन कथ्यते ।
ज्ञानं प्रकाशत इति केनेदं सुहृदोच्यते ॥

प्रकाशा [107b] वाप्रकाशा वा यदा दृष्टा न केनचित् ।
वन्ध्यादुहितृलीलेव कथ्यमानापि सा मुधा ॥

इति चेत् ? निरवकाशमेतत्। इदमेव हि नीलादि स्वप्रकाशस्वभावं ज्ञानमिति व्यवस्थापितम्, तत्कथं केनेदं सुहृदोच्यत इत्युच्यते ? न स्वसंवेद्येऽर्थे परोपदेशो गरीयान्, कोऽन्यथा धर्मी व्यापकानुपलम्भादेः ? प्रदीपेऽपि तर्हि ज्ञानमेव कथं दृष्टान्तः ? सत्यम्, लोकापेक्षयाऽलोक एव बाधको भविष्यतीत्यपहस्तयितुम्। तदेतद् युक्तिक्षीणस्य विश्राममात्रमत्राणम्, अन्यथा सर्वशून्यतायामेव किं बाधको लोकः ? संवृत्त्या;सर्वस्वीकारादिति चेत् ? तत्त्वतो न किञ्चिदस्तीति एतदेव लोकस्य न क्षमं,

संवृत्त्या तु नास्तीति यदि स्यादस्तु । अथ तत्त्वतोऽपि नास्तीति किमस्माभिः साध्यते, अस्तिनास्तिव्यतिक्रमस्याभिमतत्वादिति चेत्– न । अस्तिनिषेध एव, न हि नास्त्यर्थः ।

न भावो यदि नीलादेरभावः केन वार्यते ।
नाभाव इति वादे च भाव एवावतिष्ठते ॥

परस्परपरीहारव्यवस्थितिमतां यतः ।
एकबाधोऽन्यविधये नानिच्छामात्रतोऽन्यथा ॥

तृतीयो वा प्रकारोऽत्र वक्तव्यो यदि वानयोः ।
एकत्रैव व्यवस्थानं धीमतां नापरा गतिः ॥

स्यादेतत्, नास्माभिः कस्यचिद् विधिः प्रतिषेधो वा साध्यते, सदसदुभयानुभयवादिनां तु स्वाभ्युपगमेनैव तत्तल्लक्षणानुपपत्तिरिति प्रतिपाद्यते । तत्र यदि सल्लक्षणानुपपत्त्या स्वयमेव प्रागपि सत्त्वाभावः, तदा किमस्माभिरपनीतं किमपि स्यात्? यदा चासल्लक्षणानुपपत्त्या प्रागप्यसत्त्वाभावः, तदा किमभावाभावेन भावो नाम कस्यचित् कुतः? यथा हि,

पुत्रोत्पत्तिविपत्तिभ्यां कुमार्याः प्रीतिदीनते ।
पुत्रसङ्कल्पतः स्वप्ने जाग्रतस्तु न विद्यते ॥

स तस्याः सावशेषशोकविनोदनाय यदि तत्प्रबन्धमृषात्वमासादयति, तत् किं तेन कस्यचिद् विधिः पुत्राद्यभावस्य, निषेधो वा पुत्रादिभावस्य कृतः, पुत्रोदयनिषेधेन वा अभावः कस्यचित्, मरणनिषेधेन वा भावविधिः, स्वयमादितः पुत्रस्यैवाभावात्? तदनुवादमात्रं तु जाग्रतः । एवमार्यानार्ययोरूहितव्यम् । एतदेव चादिशान्तत्वं प्रकृतिपरिशुद्धिश्चागमे गीयते इति ।

अत्रोच्यते । कीदृशौ विधिनिषेधौ भवता परिह्रियेते, उत्पादनविनाशनलक्षणौ हस्तेन गृहीत्वोपनयापनयस्वभावौ वा? यद् वा विवादास्पदीभूतस्य कस्यचिद् धर्मस्य प्रमाणेन साधनलक्षणो विधिर्बाधनलक्षणो वा निषेधः? तत्र,

आद्यपक्षद्वयं तावदन्यस्यापि न विद्यते ।
भवतापि तृतीयस्तु परिहर्तुं न शक्यते ॥

न हि भगवतः प्रामाण्यं स्थितमेव प्रागपनीयते, पश्चाद् वेतीश्वरादावसदेवोपनीयत इति [108a] परेऽपि मन्यन्ते। तथा न द्वयं स्थितमेवापनीयते, अद्वयं वा संप्रत्युपनीयते, अपरेण स्थित एव स्वभावोऽनूद्यते। युक्त्या च कयाचित् प्रतिपाद्यत इति सर्वसंमतिः। तच्च भवतोऽप्यस्तीति क एवमतिरेक उक्तो भवति? तदयमेव विधिनिषेधप्रक्रमो यदिदमस्तीदं नास्तीति प्रतिपादनं, तच्चायातं वचनव्यापृतस्य, विशेषतो जिगीषया [1]परार्थशीलतया वा वादे प्रवृत्तस्य। मूकीभूय तिष्ठतस्तु नायं पर्यनुयोग इति स्यात्। स्वप्नदृष्टान्तोऽपि सर्वसाधारणः, यो हि वस्तुधर्मः केनचिदाद्रियमाणः केनचिन्निषेध्यः, तस्य सिद्धया तद्गुणारोपाद् वा प्रीतिः, परेण तदभावप्रतिपादने विषादः, तच्चित्तविनोदनोद्यतेन चादित एव तथा नास्तीत्यनुवादमात्रं कृतमिति तुल्यम्।

तत्र य एव तथा प्रतिपादनक्षमस्तस्यैव स्वाधीनः स्वप्नदृष्टान्तः। तथा चाद्वयवादेऽपि यथा स्वप्ने स्वाकारमात्र एव पुत्रं जागरणकाले फलितमारोप्य हर्षादिस्तथा जाग्रद्दशायामपि ज्ञानाकारमात्र एव बहिरारोपेणेति न क्षतिः। तदुभयदशयोरपि निर्विकल्पप्रतिभासः स्वरूपमात्रपर्यवसितोऽपि विकल्पेनाभूतारोपस्तिरस्क्रियत इति उक्तम्। स च स्वरूपं तिरोधाय पररूपमेव दर्शनेन योजयति, यत एवं भवति पुत्रोऽद्य स्वप्ने मया दृष्ट इति, किञ्चिद्विमर्शे हि न पुत्रदर्शनं नाम, ज्ञानमात्रं मम तथोदपादीति। ततस्तद्व्यवसायापेक्षया सा पुत्रं जातं च मृतं च पश्यतीत्याद्यभिधानम्, तत्त्वतस्तु क्व पुत्रदर्शनम् अनादिवासनावशात् तदभिनिवेशप्रसवयोग्यविशिष्टाकारज्ञानमात्रोदयाद् अन्यत्र? केवलं किमत्र वस्तुतत्त्वमिति,

विचारव्यसनं यस्य हस्तामर्शेन तस्य किम्।
प्रीत्याभियोगः क्रियतां कीर्तिवार्तिकभाष्ययोः॥

श्रद्धावशत्वेऽपि वरं युवराजनयाश्रयः।
आर्यनागार्जुनादीनामपि यत्र व्यवस्थितिः॥

इति प्रतिपादयिष्यते। आगमपाठाः पुनरविचारचतुरस्य पुण्यमात्रप्रसवहेतव एव। विचारप्रक्रमे च भावाभावयोरेकनिषेधाभिधायिनो द्वितीयस्वीकारः सामर्थ्यादायात इति नानिच्छामात्रेण त्रातुं शक्यम्। तथा हि स्वप्ने न पुत्रो नामासीदिति पुत्राभावो

---

१. परमार्थनिरूपणायेत्यर्थः इति पत्र प्रान्तटिप्पणी।

विहित एव भावश्च निषिद्धः, तत् कथं जाग्रता न विधिर्न प्रतिषेधः क्रियते ? आर्यस्य तु न तथा दर्शनमित्यपि तदाकारदर्शनप्रत्यनीकाकारज्ञानोदय एव, न सर्वथा संवित्तिविलोप इत्यास्तां तावत् ।

अथ भावाभावविकल्पनिषेधो विवक्षितः, सर्वथा न प्रतिभासमात्रलोपः, तदेतदिष्टमेव, विकल्पस्य प्रकृतिभ्रान्तत्वात् । अथ विचाराक्षमत्वैव शून्यतार्थः, तदा विचारो ।नाम संवृ[108b]त्याश्रयः, तत्र च नियमेन प्रमाणावतारे न स्वसंवित्तिमन्तरेण प्रत्यक्षान्तरमनुमानं वा, स्वरूपसत्तयैव वियोगप्रसङ्गात् । नापि धर्मिधर्मादिप्रतिपत्तिरिति संवृतौ नियतस्वाकारायाः स्वसंविदः प्रमेयप्रमाणान्तरवद् बाधानुपपत्तेः स्थितेरेवेति न सांवृतत्वविशेषणावकाशः ।

यथा यथार्थाश्चिन्त्यन्ते विविच्यन्ते तथा तथा ।
स्वयं तु वित्तिश्छायेव धावतो दुरतिक्रमा ॥

ततश्च 'स्वसंविदितरूपस्य कीदृशी विचाराक्षमता ? कियन्तो हि विचाराः प्रवर्तन्ताम्, न तु नीलप्रकाशस्य प्रकाशता नीलता वा अतिपातमात्रम्, नाप्यप्रकाशधर्मान्तरं परिचयविषयः । य एव च,

स्वरूपमात्रानुभवः कल्पितानां पराभवः ।

स एव,

ततश्च समता ज्ञेया नोपलम्भोपलम्भयोः[1] ॥

इति न्यायः ।

तदेवदादिशान्तत्वं प्रकृत्या च विशुद्धता ।
वैमल्यपरिशुद्धिस्तु सर्वासत्कल्पनाक्षयः ॥

इत्युक्तमेव । यदपीदं तदभ्युपगमेनैव तल्लक्षणानुपपत्तिरिति, तात्रतापि नानुभवस्वभावपरिभवः । यतः,

भीतकल्पितकल्पानां लक्षणानां क्षतावपि ।
सर्वोपाधिविविक्तस्य वस्तुरूपस्य न क्षतिः[2] ॥

---

१. म. वि. १. ८ २. तुल° आ. त. वि. पृ: २३०

राजद्वारि द्विरदमवलोक्य,

दन्तेन मूलादकमन्धकारं
प्रस्रावतो नीरदपोतमाह ।
कश्चिच्चतुस्तम्भकमट्टमास्यं
द्वारं वलिं पिण्डनिभात्पुरीषात् ॥

राजद्वारे श्मशाने वा यस्तिष्ठति स बान्धवः ।
इति गाढस्मृतेरन्यो भीतो बान्धवमेव तम् ॥

ततो भीतैरिव परैः कल्पितान्येव स्वरूपाणि विगलन्तु पुरःप्रकाशिनः किमायातं बाधायाः ? ततः,

यद्येप एव सिद्धान्तो न विशेषस्तदावयोः ।
बाधे तु सर्वथाऽभावः कथं लोकादबाधनम् ॥

यदि लोकानुरक्षापि धीरूपे नास्तितोच्यताम् ।
तत्त्वेन सर्वथा नास्तीत्युद्वेगः किं न गण्यते ॥

तस्माल्लोक उद्वेजतां मा वा पुरुषार्थोपयोगितत्त्वाख्यानं कथं परिहर्तुं शक्यमिति यदि स्वयमाशयः परः किमलीकमाकुलीक्रियते ? को हि सदुत्तरेऽपि भवतां शक्तिप्रतिबन्धं श्रद्दधीत ? अस्ति च लोकेऽपि स्वप्रकाशव्यवहार इति क्व लोकबाधापि[?] बुद्धे रेवाधिकारे साक्षात् न दृष्ट इति किमनेन ? स्वप्रकाशमपि वस्त्वस्ति न च कारित्रविरोध इति सामान्याश्रयेणैव दृष्टान्तस्य कृतत्वात् । अपि च,

स्फुरत्येतादृशो बुद्धिर्ममेत्यादिमतिर्न किम् ।
मम स्वानुभवश्चात्र सङ्कल्पे त्वद्गुणस्पृशि ॥

तस्मादलमनेन बालजनोपलापनेन ॥

यदपि स्मरणादनुभवसिद्धिमाशङ्क्यार्थ एव स्मरणमनुभवश्च न ज्ञान इत्युच्यते, तत्राप्यर्थाकारज्ञानमेव, तच्च स्वयंस्फुरितमनुस्मर्यत इति न क्षतिः । अर्थे च स्मरणमिति न तावदननुभूते भवितुम[109a]र्हति, अतिप्रसङ्गात् । अनुभूतश्चार्थोऽनुभवाननुभवे इवि कथं प्रतीतमत्र हृदयेन ?

असंवित्तौ वित्तेर्न खलु तदुपाधिव्यवहृतिः
प्रतीतावन्येन प्रसभमनवस्था प्रसरति ।
अनेनैवापास्तेऽप्यनुमितिमते लिङ्गविरहो
न चादृष्टं लिङ्गं तदधिगतिसिद्धौ च विमतिः ॥

इत्यन्तरश्लोकः ॥

कथं तर्हीदंतया न निर्दिश्यते ज्ञानमनुभूयमानम् ? ननु निर्दिष्टमेव,

अन्तः शातादिविषयं बहिः शीतादिगोचरम् ।
वेदनं तत्तदाकारं नान्योऽप्यस्ति ततः परः ॥

स्फुरत्ता नाम धर्मोऽस्य प्रत्यात्मं दुरपह्नवः ।
इति सा योग्यता मानमात्मा मेयः फलं स्ववित् ॥

ततो निराकारपक्षे स्यादेष दोषः, साकारपक्षे तु शंकापि नास्ति । साकारपक्ष एव तु शान्तिदेवपादानामभिमतः । यदाहुः,

यथा दृष्टं श्रुतं ज्ञातं नैवेह प्रतिषिध्यते ।
सत्यतः कल्पना त्वत्र दुःखहेतुर्निवार्यते ॥
[ बो. अ. ६. २६ ]

इति । अत्र हि सत्यतस्तत्त्वतो दृष्टादिर्न निषिध्यत इति दृष्टादिकर्मनिर्देशात् प्रकाशमानो नीलकोमलादिरशक्यनिह्नव इत्युक्तं भवति ।

कस्य तर्हि नैरात्म्यमित्याह, कल्पनैवाभूतानां ग्राह्यग्राहकहेतुफलादीनामित्यर्थात् कल्पना शब्दादेव । अदृष्टे हि कल्पना । अदृष्टं चादृष्टत्वादेव न संभवति तत्त्वत इति अत्रापि संबध्यते । तेन निःस्वभावाः सर्वधर्मा इत्यादिवचनेऽपि तत्त्वतः कल्पितरूपनिषेध एवेति भावः । किमर्थं पुनरभूतविकल्पवारणम् ? दुःखस्य हेतुत्वात् । स एव हि प्रवृत्तिनिवृत्त्यादिलक्षणं संसारमाक्षिपति, तमन्तरेण तदाकारोदयमात्रस्य तत्राकिञ्चित्करत्वादिति । यत्तु सत्यत इति सत्यत्वेन या कल्पनेति योजयन्ति, तत्रापि यदि सत्यत्वेऽपि सत्यमिदमिति विकल्पवारणं, परिनिष्पत्तौ को दोषः ?

अथ संप्रत्यपि सत्याधिमोक्षवारणमसत्त्वादित्यर्थः, तदा दृष्टादि न प्रतिषिध्यत इति व्याहतम्, असत्यं चापाद्यते दृष्टादि न च प्रतिषिध्यत इति, असत्यतापादनस्यैव

प्रतिषेधार्थत्वात्। अथ न प्रतिषिध्यते संवृत्त्या, तत्त्वतस्तु वारणम्। तदपि नाक्षरारूढम्। सत्यतःशब्दोऽन्यथायोजितः कल्पनाविशेषणत्वेन, न च तदा कल्पनाशब्दः सङ्गतः, दृष्टादेरेवैकस्य संवृतिपरमार्थापेक्षया विधिनिषेधविषयतया अभिमतत्वात्। तथा हि,

यथा दृष्टं श्रुतं ज्ञातं नैवेह प्रतिषिध्यते।
संवृत्त्या तत्त्वतस्त्वेतद्दुःखहेतुर्निवार्यते॥

इति वक्तुमुचितम्। तदत्र शब्दतः शब्दस्य पुनरावृत्तिः, संवृतिशब्दस्याध्याहारः, कल्पनाशब्दस्यान्यार्थतेति किमक्षराणि क्लिश्यन्ते [109b] महताम्? व्यक्तमेतत् षडिन्द्रियविज्ञानगोचराभिमता आकारा न निषिध्यन्ते स्वसंविदितत्वात्, कल्पितस्यैव तु निषेध इति। कथं तर्हि स्वसंवेदननिषेध एषाम्? यथा भगवतः। भगवत एव कथम्? भिन्नविषयप्रतिषेधात्। एकत्रापि चित्राकारे ग्राह्यग्राहकभावः सूक्ष्मेऽपि साक्षादिति क्रियाकारकभावाभिप्रायेण। न चायं नाशङ्काया विषयः सर्वथा परिहारयत्नस्य वेति मन्तव्यम्। तथा हि कस्यचित्,

एकत्रापि यथा भावे कार्यकारणकल्पनम्।
एकत्रैव तथा ज्ञाने ग्राह्यग्राहकधीर्भवेत्॥

यथा भगवतः,

स चायमङ्कुरो न स्वयंकृत इति।

आर्यनागार्जुनपादानां वा,

न स्वतो नापि परतः
[मा. का. १. १]

इत्यादिना निषेधयत्नः, तथा,

विभुं चित्तं न पश्यति
[ ]

इत्यादि। युक्तमेतत्। निःसीमा च समारोपः सांसारिकस्य स्कन्धा एवात्मेत्यादिवत्, कारुणिकेन तस्याप्यनुपेक्षणीयत्वात्, ग्राह्यग्राहकारोपस्य च प्रधानदोषत्वात्।

क्रियाकारकभावेन निषेधस्तेन युज्यते ।
स्वसंविदितरूपस्य समुत्पादस्तु शस्यते ॥

यथोक्तमार्यसन्धिनिर्मोचने, न हि मैत्रेय, तत्र कश्चिद् धर्मं प्रत्यवेक्षते, अपि तु तथा समुत्पन्नं तच्चित्तं यत् तथा ख्यातीति । चित्तमर्थाभासं प्रवर्तत इत्यपि स्वसंवेदनमेव निवेदयति, वेद्यवेदकयोः एकीकरणात् । तथा नीलज्ञानसमङ्गी पुरुषो नीलं जानातीति, अगेर्गत्यर्थतया ज्ञानार्थत्वात् । नीलज्ञानसंवेदी सन्नित्यनेन,

अप्रत्यक्षोपलम्भस्य नार्थदृष्टिः प्रसिध्यति ।
[ प्रमाणविनिश्चये ]

इति व्यक्तमुक्तम् । तद्वेदीत्येव नीलवेदीति यावत् ।

उत्तरतन्त्रे च,

प्रत्यात्मवेद्यो धर्मः
[ उ. त. पृः १० ]

इत्येवाक्षरम् । न चाभूतपरिकल्पोऽस्तीति ब्रुवतः स्वसंवेदनादन्यच्छरणम् । तस्मान्न युक्त्यागमाभ्यां स्वबोधसिद्धौ प्रतिबन्धः ॥

अस्तु नाम स्वसंवित्तिः स्वमलीकं तु बुध्यताम् ।
मानयोर्न विरोधश्च क्षणिनीलेक्षणे यथा ॥

अनुमानसिद्धव्यावृत्त्यन्तरविशिष्टस्य प्रत्यक्षेण साक्षात्कारे प्रमाणयोरपि न विरोधः, क्षणिकवदलीकत्वेऽपि निश्चयप्रत्ययानुदयाद् । विषयभेदश्च व्यक्तः । तदपि यत्किञ्चित् । नीलसत्ताग्राहिणो हि प्रत्यक्षस्य क्षणभङ्गसाधनं सत्ताविशेषसाधनमेवेति न विरोधः । सत्तावाधनं तु प्रमेयत्वं कूर्मरोमवदिति विरुद्धमेव, बाध्यते चाध्यक्षेण तथाऽव्यापकानुपलम्भोऽपि । तथा हि,

अलीकमात्मानमवैति कोऽर्थो
[ह्य]सत्स्वभावः स्फुरतीति योऽर्थः ।
स्फुरत्त्वमेवास्य च सत्त्वमुक्तं
कथं निषेधश्च विधिश्च तस्य ॥

एतेन प्रतीत्योत्पन्नत्वमपि प्रतिबिम्बवन्निःस्वभावतायां स्वभावहेत्वभिमतम् अपा[11Ca]स्तम् । अपि च,

प्रतीत्योत्पन्नता नाम कार्यतामात्रमुच्यते ।
सा च नित्यविरुद्धेति नित्यतामेव बाधताम् ॥

अथ,

अकृत्रिमः स्वभावो हि निरपेक्षः परत्र च ।
इत्यभिप्रायतस्तादृक्स्वभावस्यैव बाधनम् ॥

येन तर्हीदृशं यत्र रूपमारोपि वस्तुनि ।
तस्यैव बाधो निर्बाधः क्षणभङ्गव्यवस्थितः ॥

एवं हि सौत्रान्तिक एव माध्यमिकः प्रसक्त इति महत्पौरुषम् ।

यत्र चाकृत्रिमं रूपं व्योमादावभ्युपेयते ।
न प्रतीत्योदयस्तत्र प्रमासिद्धः कथंचन ॥

ईप्सितार्थक्रियासक्ता उपलब्धा घटादयः ।
न सन्त्यात्मादयः सन्ति व्यत्ययेनेति कापि धीः ॥

अनुपलम्भादेव न ते सन्तीति चेत् ? उपलम्भस्तर्हि सत्तासाधन इति कथम् असन्तः शैलादयः ? नोपलब्धिरनुपलब्धिर्वा सत्तासाधनीति चेत् ? एतदेव परसमुत्तरं किं प्रतीत्योत्पादेन ? असत्तासाधनमनेनेति चेत् ? सर्वथा सर्वदा सत्ताया असिद्धेः असत्ता सिद्धैव । नानुपलम्भो मदीयोऽयमसत्ताहेतुः, किं तु परेणैव तथाभ्युपगतत्वात् उपन्यस्यते । तन्नोपलब्धेः सत्तासिद्धिरिति चेत् ? नात्मादिवादिनानुपलम्भमात्रेणाभाव इष्टः, तदन्येनेष्टत्वेऽपि न तस्य स्वोपगमेन दोष उक्तो भवति, ततश्च स्वतन्त्र एवायम् अनुपलम्भो हेतुः कर्तव्यः ॥

सत्ता साधुर्न संवित्तिरसंवित्तिस्तु बाधनी ।
विशेषणानपेक्षा च सेत्ययोगपरम्परा ॥

न च कार्यतानिःस्वभावतयोर्विपर्यये बाधकं प्रतिबन्धसाधकं किञ्चिदस्ति, न च क्वचिदुभयदर्शनमात्रेण व्याप्तिसिद्धिः, नापि प्रतिबिम्बे स्वाभिमतनिःस्वभावता-

संभवः, प्रतिभासस्याशक्यनिषेधत्वात्, प्रसाध्य साध्यं साध्यशून्यतापरिहारे साधनान्तराभावादनवस्था, अध्यवसितनिषेधोपदर्शने च तेनैव व्याप्तिः प्रतिभासिनामिति सिद्धसाधनम्, न च कश्चित् हेतुफलभावः प्रमाणसिद्ध इति साधनशून्यता च दृष्टान्तस्य। अथ पक्षधर्मस्य हेतोर्लोकाश्रयात् सिद्धिरिति चेत्? लोकाश्रयात् तर्हि शून्यतायै जलाञ्जलिर्देयः। न हीदमर्द्धजरतीयं लभ्यं साधने लोकाश्रयो न साध्ये इति।

प्रतिबिम्बे लोकाश्रयेणापि शून्यता दृष्टेति चेत्? बिम्बे तर्हि विपर्ययदर्शनान्न साधनम्। न च प्रमाणप्रतिक्षिप्तस्य पक्षीकरणमिति न्यायः। विपर्ययादर्शने दर्शनाभिमान इति चेत्? प्रतिबिम्बेऽपि निःस्वभावत्वादर्शने दर्शनाभिमानो भवतः केवलं लोकः प्रमाणमाश्रितः, बिम्बे विपर्यये प्रमाणमपि लोक एव बिम्बे चाप्रमाणीभवन् प्रतिबिम्बेऽपि [110b] कथं प्रमाणं स्यात्? प्रतिबिम्बे संवादाभाव एव प्रमाणमिति चेत्? यत्र तर्हि संवादसंवासस्तत्र दुर्वारः शून्यताविरहः क्ष्मारुहादौ। संवादाभिमानमात्रमिति चेत्? वक्तव्यस्तर्हि संवादोऽर्थो यथा प्रसिद्धादन्यः, यतः प्रतिबिम्बे तदभावः प्रतीयते।

प्रमाणनिरूपणासहत्वं महीधरादावसंवाद इति चेत्? केन पुनः प्रमाणेन भवान् निरूपणमनुसरतीति प्रक्रमे प्रत्यक्षानुमानोपमानशाब्दानि तदितराणि वाभिदधीत, नत्वेकस्यापि स्वसंवेदनमन्तरेण सिद्धिरिति महान्तमायासमाविशेत्। ततः प्रमाणान्तरतिरस्कारेऽपि स्वसंवेदनादेव सिद्धिः सिन्धुभूधरादेः। यदि च कश्चित् प्रमाणनिरूपणेन संवादोपलम्भस्तदा तदभावान्निवर्तेत, न च तदस्ति। पुनरपि परचरणपरिचरणमेव शरणमिति क एष न्यायः, प्रसङ्गमात्रेण तदुपगमापेक्षायाः क्षमत्वात्? न च सर्वदा प्रसङ्ग एव। विपर्ययार्थमेव हि प्रसङ्गसङ्गमः, न च कदाचिद् अस्वातन्त्र्येण हेतोरुपन्यास एषां क्षमः। क्षमायां वा सांवृतं तात्त्विकं वा प्रमाणम् आश्रयणीयमिति न भूधरादेः सिद्धिप्रतिबन्धः। अन्यस्य तु विज्ञप्तिमात्रव्यवहार एव अधिको न तु प्रतिभासमानरूपसिद्धिप्रतिबन्धः। यदि च निरूपणाक्षमत्वं क्ष्माधरादेः असंवादः, तदेव तर्हि निःस्वभावत्वमिति किं प्रतीत्योत्पादेन?

किं च, शक्तिनान्तरीयकः प्रतीत्यसमुत्पादः, शक्तिरेव च सत्त्वमिति निःस्वभावत्वसाधने विरोधश्च दोषः। अथ शून्येभ्य एव धर्मेभ्यः शून्या धर्माः प्रजायन्त

इति न दोषः, तत् किमिदानीं सिद्धान्तपाठमात्रेण दोषपरिहारः ? एवं ह्यतिप्रसङ्गः स्यात्।

यस्मादेव हि यज्जन्म शक्तं तत्र तदेव तत्।
शक्तेऽपि निःस्वभावत्वकल्पना क्वोपयोगिनी ॥

अन्यस्य तु पूर्वापरविरह एव तत्कल्पनाप्रतिघातहेतुरित्यनवद्यम्। किं च,

सर्वप्रतीतिमूलत्वाद्धन्मो हेतुफलस्थितिम्।
शून्यताकांक्षिणो यत्नाद्विपरीतस्त्वयं विधिः ॥

तदयमहेतुरेव निःस्वभावत्वे प्रतीत्योत्पादो नाम ॥

अथ प्रतीत्योत्पाद एव निःस्वभावत्वं व्यवहारमात्रसाधनं तु कदाचित्, तदापि कार्यतामात्रं शून्यत्वमुक्तं भवतीत्यधरस्थितिपात एव। समयमात्रं वा कुर्वतो न कश्चित् परिपन्थीति किमनेन ? स्वयमेव वा कृत्रिमे स्वभावत्वमवकल्प्य तदभावेन स्वभावहानिं ब्रुवतः शृङ्गेणापि तुरङ्गतामवकल्प्य [111a] तदभावेन न तुरङ्ग इत्यपि प्रत्येयम्। कथं तर्हि,

यः प्रतीत्यसमुत्पादः शून्यता सैव ते मता।
[ द्र. अ. अ. आ. पृ: १५३ प्र: ]

इत्यादिकं सङ्गंस्यते। अधरस्थित्यपेक्षया तावताङ्गेन शून्यतावतारमभिप्रेत्य तदेतादृशानि साधनान्यपि क्वचिन्न प्रकृतवादिन्युपयोगभाञ्जि भवन्ति। व्यापकानुपलम्भवद् वा स्वसंवेदनप्रत्यक्षापोढपौरुषाणि नाङ्गनिरूपणायातमिति स्थितम्। ततो निःस्वभावतया न कथञ्चिदपि स्वसंवेदनसिद्धिरिति निरस्तम्, तत्साधनप्रमाणानवकाशात्, प्रत्यक्षेण प्रतिबन्धाद्यभावाच, साधनविनाकृतायां सिद्धावतिप्रसङ्गात्। स्वप्रकाशिनि तु नान्यापेक्षिततथासिद्धिरेव स्वसंवेदनस्थितिः।

यदप्युच्यते, न चापि जडस्वभावता मध्यमकं वादिनं प्रति कस्यचित् सिद्धा, येन तद्व्यावृत्तमजडं स्वसंवेदनं स्यादिति। तदपि गात्राभ्रेडमात्रं न त्राणाय। तथा हि,

योगाचारस्य नाज्ञानं नाशून्या मध्यमा विदः।
तथापि ज्ञानशून्यादिव्यवहारो न बाध्यते ॥

यदि सर्वथा नास्तीति तद्व्यावृत्तिनिबन्धनध्वनिनिषेधः, हन्त ! आदितः प्रभृति क्षणिकनिरात्मानीश्वरकृताप्रकृतिमयादिशब्दोन्मूलनादव्यवहार एवायातः ।

नव्यो निर्विषयस्यास्ति न प्रयोग इति ब्रुवन् ।
परिभूतः स्ववाचैव परं वा बोधयेत् कथम् ॥

अन्तरश्लोकः ॥

तदास्तां तावदतिघृणाकरमेतादृशम् । तस्मान्न स्वसंवेदने दूषणकणस्यापि संभवः । ततः सांवृतत्वविशेषणमपनीय स्वसंवेदनमस्त्येवेति व्यवस्थानमनपेतं न्यायाद् यद्यपि नाभिनिवेशावेशि मानसमिति,

स्वयमपि यदि बोधे बाधकस्य प्रवृत्ति-
स्तदुपनतविशेषे कीदृशी निर्वृतिर्वः ।
अथ कथमपि तत्रापत्तितः किं न साक्षा-
दनुभुवि तदबाधा बोधिभित्तिः स्ववित्तिः ॥

परबोधस्तु तत्त्वतोऽसन्नपि अभिमानमात्रसिद्धौ यद्यनुमानान्तरेण बाध्यते बाध्यताम्, स्वरूपपर्यवसायि तु तदा प्रत्यक्षं स्वरक्षायां न क्षममिति न क्षममेवेति ।

सकल इह विचारः संवृतावेव युक्तः
क्वचिदनुभवबाधो न क्षमः संवृतौ च ।
न च परमनुभूतं क्वापि तद्बोधबाधे
कलिरिव कलिनायं हन्यतामस्तु शान्तिः ॥

॥ इति महापण्डितज्ञानश्रीमित्रविरचितायां साकारसिद्धौ
स्वसंदनपरिच्छेदः पञ्चमः ॥



## [ षष्ठः परिच्छेदः ]

अथ तथाविधश्लाघास्पदं मध्यमामुपक्रम्य, सम्यग् [111b] योगाचारदर्शनमेतत् परिनिष्ठितमिति कोऽयं क्रमः ? नैष दोषः, अस्यापि भगवतैवोक्तस्य नीतनेयविभागकारितया तद्व्यक्तैरार्यैर्युवराजपर्यन्तैः प्रतिगृहीतस्याचार्यैः प्रसाधितस्योल्लाघश्लाघत्वात्। साकारसिद्धिश्रेयमुपक्रान्ता। ननु तथापि परस्परविरोधिद्वयमपि न सत्यम्, तत्रैकहृदयोऽपि स्वयं दैशिको भगवान् विनेयापेक्षया नेयमप्युपदिशेत्, भूमिलाभिनस्तु दृष्टसत्याः कथमेकैकपक्षपातिनः एकैकमतदेशनात्? विशिष्टान्यदेशने हि परानुरोधादेतदिति स्यात्। परमगम्भीरश्च मन्त्रनयसमय एते एव स्थिती समाश्रित्य ययोरियान् विरोध इति कथं हृदयनिर्वृतिः समन्तभद्रत्वेऽपि ? उच्यते,

विरोधः पौरुषेयोऽत्र वस्त्वेकमुभयस्थितौ।
समारोपापवादान्तमुक्तं हि मुनिशासनम् ॥

अत्र हि चित्रप्रकाशराशौ नाप्रकाशकणस्यारोपः सह्यो, नापि प्रकाशलेशस्यापवादः,

शल्येन विशताङ्गेन च्छिद्यमानेन वा यथा।
व्यथारोपापवादाभ्यां तथेह स्फुरदाकृतौ ॥

अपवादो न संवृत्त्या नारोपस्तत्त्वतो यदि।
न तौ द्वावपि तत्त्वेन यदि किं वा विरुध्यते ॥

तथा सदसल्लक्षणनिर्देशे आर्यस्वामी,

अभूतपरिकल्पोऽस्ति द्वयं तत्र न विद्यते।
शून्यता विद्यते त्वत्र तस्यामपि स विद्यते ॥
[ म. वि. १. २ ]

अभूतपरिकल्पस्तु चित्तचैत्तास्त्रिधातुकाः।
[ तत्रैव १. ६ ]

इति ब्रुवन् ग्राह्यग्राहकयोरेवारोपनिषेधं प्रति भासमानस्यैवापवादनिषेधमाह। तत्राभूतं ग्राह्यग्राहकद्वयं परिकल्प्यतेऽनेनास्मिन् वा पृष्ठजविकल्पद्वारेत्यभूतपरिकल्पः। तदेव विस्तरेण दर्शयन् सभाष्यः सूत्रालंकारः,

यथा माया तथाभूतपरिकल्पो निरुच्यते।
यथा मायाकृतं तद्वद् द्वयभ्रान्तिर्निरुच्यते॥

यथा मायामन्त्रपरिगृहीतं भ्रान्तिनिमित्तं काष्ठलोष्टादिकं तथाऽभूतपरिकल्पः परतन्त्रस्वभावे वेदितव्यः। यथा मायाकृतं तस्यां मायायां हस्त्यश्वसुवर्णाद्याकृतिस्तद्भावेन प्रतिभासिता, तस्मिन्नभूतपरिकल्पे द्वयभ्रान्तिर्ग्राह्यग्राहकत्वेन प्रतिभासिता परिकल्पितस्वभावाकारता वेदितव्या। अत्र भाष्ये काष्ठलोष्टादिकमिति प्रवीणशिल्पिरचितहस्त्यादिसंस्थानं चित्रितं च सम्यक्प्रयुक्तम्। लोष्टं मन्त्रादिपरिग्रहात् विकृतेन्द्रियज्ञानधर्मपोताद्याभासपरिकिरितम्। आदिशब्दान्मृन्मयपाषाणादिपरिग्रहः। यथा मायाकृतमिति व्याख्येयानुवादः। तस्यां मायायामिति कृत्रिमहस्त्यादौ। उपलक्षणमेतद् यथो[112a]क्तलोष्टे च। हस्त्यादीनामाकृतिर्वर्णसंस्थानम्। तद्भावेन हस्त्यादित्वेन, प्रतिभासिता अध्यवसिता, असतोऽनुभवाभावात्। मरीचिषु जलस्येवाध्यवसानमात्रं यत् तत्र हस्त्यादीनां तन्मायामात्रकृतमुक्तमित्यर्थः। तथा द्वयभ्रान्तिरिति सम्बन्धः। तस्या व्याख्यानम् परिकल्पितस्वभावं ग्राह्यग्राहकमेव, तस्यैवाकार उल्लेखोऽस्याभूतपरिकल्पस्य खण्डद्वयप्रतिभासात्। तस्य भावस्तत्ता। ग्राह्यग्राहकत्वेन प्रतिभासिताध्यवसिता। यथा मायादिषु हस्त्याद्यवसायस्तथाऽभूतपरिकल्पे द्वयावसाय इत्येवार्थः। तथा च,

यथा तस्मिन्न तद्भावः परमार्थस्तथेष्यते।
यथा तस्योपलब्धिस्तु तथा संवृतिसत्यता॥

यथा तस्मिन् न तद्भावो मायाकृते हस्तित्वाद्यभावः, तथा तस्मिन् परतन्त्रे परमार्थ इष्यते। परिकल्पितस्य द्वयलक्षणस्याभावः। यथा तस्य मायाकृतस्य हस्त्यादिभावेनोपलब्धिः, तथा तस्याभूतपरिकल्पस्य संवृतिसत्यत्वेनोपलब्धिः। अत्र मायाकृतं मायारचितं मन्तव्यम्। हस्त्यादिभावेनोपलब्धिर्ज्ञानमध्यवसाय इत्यर्थः। संवृतिसत्यं ग्राह्यग्राहकं तद्भावेनोपलब्धिरध्यवसायः। एतेन मूलेन विषयेण विषयिनिर्देश इति दर्शितम्।

तदभावे यथा व्यक्तिस्तन्निमित्तस्य लभ्यते ।
तथाश्रयपरावृत्तावसत्कल्पस्य लभ्यते ॥

यथा मायाकृतस्याभावे तस्य तन्निमित्तस्य काष्ठादिकस्य व्यक्तिभूतार्थ उपलभ्यते, तथाश्रयपरावृत्तौ द्वयभ्रान्त्यभावात् अभूतपरिकल्पस्य भूतार्थ उपलभ्यते । मूलेऽसत्कल्प इत्यभूतपरिकल्प उक्तो भूतार्थो द्वयविवेकः ।

तन्निमित्ते यथा लोको ह्यभ्रान्तः कामतश्चरेत् ।
परावृत्तावपर्यस्तः कामचारी तथा यतिः ॥

यथा तन्निमित्ते काष्ठादावभ्रान्तो लोकः कामतश्चरति-स्वतन्त्रः, तथाश्रयपरावृत्तावविपर्यस्त आर्यः कामचारी भवति स्वतन्त्रः । अत्र च काष्ठादियन्त्रमात्रमेतद् भ्रान्तज्ञानाकारो वा न हस्ती न वा सुवर्णमिति निश्चयादिति मन्तव्यम् ।

तदाकृतिश्च तत्रास्ति तद्भावश्च न विद्यते ।
तस्मादस्तित्वनास्तित्वं मायादिषु विधीयते ॥

एष श्लोको गतार्थः ।

न भावस्तत्र चाभावो नाभावोभाव एव च ।
भावाभावाविशेषश्च मायादिषु विधीयते ॥

न भावस्तत्र चाभावो यस्तदाकृतिभावो नासौ न भावः । नाभावो भाव एव च, यो हस्त्याद्यभावो नासौ नाभावः । तयोश्च भावाभावयोरविशेषो मायादिषु विधीयते । य एव तत्र तदाकृते[111b]र्भावः, स एव हस्त्याद्यभावः । य एव हस्त्याद्यभावः, स एव तदाकृतिभावः ।

तथाद्वयाभता चास्ति तद्भावश्च न विद्यते ।
तस्मादस्तित्वनास्तित्वं रूपादिषु विधीयते ॥

तथात्राभूतपरिकल्पेऽद्वयाभता चास्ति द्वयभावश्च नास्ति । तस्मादस्तित्वनास्तित्वं रूपादिषु विधीयते, अभूतपरिकल्पस्वभावेषु । अत्र च द्वयमिवाभातीति द्वयाभस्तस्य भावोऽन्तर्बहीरूपप्रतिभासी स्वभावः ।

न भावस्तत्र चाभावो नाभावो भाव एव च।
भावाभावाविशेषश्च रूपादिषु विधीयते॥

न भावस्तत्र चाभावो या द्वयाभासता। नाभावोभाव एव च या [तद्]द्वयभावनास्तिता, भावाभावाविशेषश्च रूपादिषु विधीयते। य एव हि द्वयाभासतया भावः स एव द्वयस्याभाव इति।

समारोपापवादान्तप्रतिषेधार्थमिष्यते।
हीनयानेन यानस्य प्रतिषेधार्थमेव च॥

किमर्थं पुनरिह भावाभावयोरैकान्तिकत्वमविशेषश्चेष्यते, यथाक्रमम्? समारोपापवादान्तप्रतिषेधार्थमिष्यते, हीनयानगमनप्रतिषेधार्थं च। अभावस्य ह्यभावत्वं विदित्वा समारोपणं करोति। भावस्य भावत्वं विदित्वापवादं न करोति। तयोश्चाविशेषं विदित्वा न भावादुद्विजते। तस्मान्न हीनयानेन निर्याति इत्येवं विस्तरः। तथाभिसमयालङ्कारे तात्पर्यम्,

सत्ता च नाम धर्माणां ज्ञेये चावरणक्षयः।
यत्परैरुच्यते शास्तुरत्र विस्मीयते मया॥
[ अ. अ. आ. पृ: ४६६ ]

इति प्रकरणान्तरवत् कल्पितधर्मनिषेधाभिप्रायेणाभिधाय सामान्यवचनात् प्रकाशनिषेधशङ्कासङ्कोचार्थमेवाह,

नापनेयमतः, किञ्चित् प्रक्षेप्तव्यं न किञ्चन।
द्रष्टव्यं भूततो भूतं भूतदर्शी विमुच्यते॥
[ तत्रैव पृ: ४६६; उ. त. १. १५४ ]

इति। तत्रात इति प्रकाशमानात् चित्रात् संक्लेशकालापेक्षयाऽभूतपरिकल्पशब्दवाच्यात् स्वसंवेद्यतया न किञ्चिदपनेयम्।

प्रागप्यभावादस्माभिरपनीतं किमत्र चेत्।
असत्त्वापादनादन्यो निह्नवो नाम कीदृशः॥

न किञ्चित् प्रक्षेप्तव्यमप्रकाशं ग्राह्यग्राहकमनाकारमात्मादि वा, किं तु यद्भूतं तद् भूतेनैव ग्रहीतव्यम्, नाभूतत्वेनेत्यपवादनिषेधः, भूतमेव च भूतत्वेनाधिमोक्तव्यं,

नाभूतमिति समारोपनिषेधः। किं तद्भूतमभूतं वेति विशेषनिष्ठां नेतुं मध्यान्तविभागे सदसल्लक्षणमनुसरन् द्वयमभूतम्, द्वयशून्यताधर्मिणं च भूतमवगच्छत्येककर्तृकत्वात्। अत्रापि वा अत इति प्रत्यक्षपरामर्शात् प्रकाशराशेरप्रतिक्षेपार्हत्वाद् भूतत्वमन्यस्य तु कल्पितमात्रत्वादभूतत्वम्; ततश्च [113a] तच्छून्यताया अपि भूतत्वं सूचितमेव। ततो भूतसाक्षात्कारो विमुच्यते, भूतग्राही वा। श्रुतचिन्ताभ्यामभ्यासक्रमेण विमुच्यत इत्यर्थः। समारोपापवादविनिर्मुक्ता च मध्यमा स्थितिः। तदेव च योगाचारदर्शनमिति न वस्तुभेदः। न हि प्रतिभास एवारोपः। नापि बाधमर्थामीत्युक्तम्। ये त्वत्रापि प्रतिभासमानमपि पुद्गलनिराकारवेदनादि ग्राह्यतादि चारोपयन्ति, ये चाप्रतिभासमानमप्यपवदन्ति सर्वतः, अंशतो वा तदुभयपुरुषाश्रयो विरोधः परस्परप्रतिक्षेपहेतुरनर्थाय। तस्मादयमेव शून्यतानयः। यथोत्तरतन्त्रम्,

[1]तत्र शून्यताविक्षिप्तचित्ता उच्यन्ते। न च यानसंप्रस्थिता बोधिसत्त्वास्तथागतगर्भशून्यतानयविप्रलब्धाः। ये भावविनाशाय शून्यताविमोक्षसुखमिच्छन्ति सत एव धर्मस्योत्तरकालमुच्छेदो विनाशः परिनिर्वाणमिति, ये वा पुनः शून्यतोपलम्भेन शून्यतां प्रतिसरन्ति, शून्यता नाम रूपादिव्यतिरेकेण कश्चिद्धर्मोऽस्ति यमधिगमिष्यामो भावयिष्याम इति, तत्र कतमः स तथागतगर्भ शून्यतानय उच्यते?

नापनेयमतः किञ्चिदुपनेयं न किञ्चन।
द्रष्टव्यं भूततो भूतं भूतदर्शी विमुच्यते॥
[उ. त. १. १५४; अ. अ. आ. पृ: ४६६]

इत्यादि विस्तरः। तत्र सत एवाकारस्यालीकतामास्थाय पश्चादुच्छेदानुपगमान्न प्रथमो विप्रलम्भः शून्यतार्थे। नापि द्वितीयः, निराकारवेदनादिवद् व्यतिरिक्तानुगमात्, नन्वत्र अतस्तथागतधातोर्न किञ्चिदपनेयं, संक्लेशनिमित्तं नात्र किञ्चिदुपनेयं व्यवदाननिमित्तमिति व्याख्यातम्। सत्यम्, किं तु धर्मेण धर्मिनिर्देशात् तथागतधातुशब्देन शून्यताधर्मा चित्तविवर्तग्राह्य एव ग्राह्यः, कल्पनानिवेशिनि शून्यतामात्रे कस्यचित् प्रक्षेपादिशंकाविरहात्। ततश्च संक्लेशव्यवदाननिमित्तयोः सदसतोर्निरोधोत्पादप्रतिषेधेन यथोक्तापवादसमारोपनिषेध एव विवक्षितः, यतोऽनन्तरमाह, एवं यद् यत्र नास्ति तत्तेन शून्यमिति पश्यति। यत् पुनरत्रावशिष्टं भवति, तत्सदिहास्तीति यथाभूतं

१. उ. त. पृ: ७१

प्रजानाति, समारोपापवादान्न परिवर्जनादविपरीतशून्यतालक्षणमनेन परिदीपितमिति। तत्र प्रकाशरूपनिषेधः। अयमेव च मध्यमार्थः। अथवा,

शून्यं नापि न चाशून्यं तस्मात् सर्वं विधीयते।
सत्त्वादसत्त्वात् सत्त्वाच्च मध्यमाप्रतिपच्च सा॥

[म. वि. १. ३]

इत्यनेन,

सन्मध्यमाख्या प्रतिपच्च सैवे-
त्युवाच मध्यान्तविभागशास्त्रे।
साक्षादकल्पं युवराजमौलिः
किमत्र पाण्डित्य[113b]परिश्रमेण॥

तस्मादियमेव स्थितिर्मध्यमा योगाचारनयश्च वस्तुत इति॥

एनामेव चाभिसन्धायार्यनागार्जुनपादानामपि,

आत्मग्रहनिवृत्त्यर्थं स्कन्धधात्वादिदेशना।
सापि ध्वस्ता महाभागैश्चित्रमात्रव्यवस्थया॥

[ ]

इति श्लाघा। इतरदिगपक्षेपात् तु,

चित्तमात्रमिदं सर्वमिति या देशना मुनेः।
तत्त्रासपरिहारार्थं बालानां सा न तत्त्वतः॥

[ ]

इत्युक्तम्। प्रायसो बहिरिवार्थशक्त्यैव सत्तां चित्तस्यापि प्रपन्नो जनः। तथा चाद्य यावद् वार्तिकभाष्यकारयत्नैरपि न प्रबोधमासादयति, प्रत्युतान्याभिप्रायदूषणाभ्यामुपक्रमत इति। चित्तमात्रमिति सामान्यवचनं प्रायस्तत्त्वसूचनपरम्, न तु सर्वथाऽनिष्टयैव, श्लाघाया निरवकाशत्वप्रसङ्गात्। न चैषां स्वप्नवदनुत्पन्नानिरुद्धप्रतिभासमात्रादन्यत्र श्लाघासंभवः।

धर्मो नोत्पद्यते कश्चिन्नापि कश्चिन्निरुध्यते।
उत्पद्यन्ते निरुध्यन्ते प्रत्यया एव केवलाः॥

[ ]

इति वचनाच्च साकारनय एवैषाम् , संभोगकायवर्णनाच्च, अन्यैरिवोपचारादेरवर्णनात्। कथं तर्हि,

न रक्तो हरिन्माञ्जिष्टः

[ ]

इत्याद्युक्तम् ? धर्मकायाभिप्रायेण। तथा चानन्तरमेव,

अद्वयाय नमोऽस्तुते

[ ]

इत्युक्तं प्रसज्यवृत्तिमाश्रित्य। किं च, वन्दे प्रत्यात्मवेद्यं धर्मकायमिति स्वसंवेदनादरेऽपि विपरीतशङ्केति धिक् स्वातन्त्र्यम् , स्वसंवेदनस्य चित्राकारप्रतिभास एव विश्रामात्। तच्च दृढीकृतमिति न धर्मकायाद्यपलापिनां विलापेन किञ्चित्। तस्माद् युवराजरुचितैवार्याणां मध्यमेति स्थितम् ॥

एतेन यैरपि,

रूपकायमधिष्ठाय प्रकृतिभ्रमभावतः।
निरोधश्चित्तचैत्तानां धर्मकायाप्तिरिष्यते ॥

[ ]

तेषामपि व्यवस्था दुःस्थेति प्रतिपादितम्। तथा हि,

क्व रूपमात्राधिष्ठानं सर्वत्रैव प्रसाधनात्।
स्वसंवेदनरूपस्य भ्रमभावविरोधिनः ॥

तस्मात् तत्त्वतो ज्ञानमपि न विचारसहम्। संवृत्त्या तु पञ्चापि स्कन्धाः सन्त इति कुत एकनिषेधोऽन्यस्थापनं चेति न वाच्यमेतत्। किं च, केयं संवृतिर्नाम ? यद्यविचाररम्याप्रतीतिः, हन्तानन्तत्वात् संवृत्तेः क्व पञ्चस्कन्धनियमः ? प्रकृतीश्वरषट्पदार्थादिबुद्धयोऽपि विविधाः सहजाभिसंस्कारिकव्यामोहभाजः पर्यन्ते बालस्यापि प्राप्यचन्द्रबिम्बादिगोचराः, करप्रणिधानाद्यनुमेयास्तत्तद्वस्तुसंवृतिसत्यत्वेन ग्राहयेयुः। एवमस्त्विति चेत् ? किमिदानीं निरोधाय मार्गान्वेषणेन, वेदेश्वरादेरपि गवेषणीयत्वात् ? [114a] अथ संवृतावपि कैश्चिदेव परितोषलाभान्न सत्ताश्रयणम् , एवं तर्हि

यथाविहितलक्षणप्रत्यक्षानुमानरूपैव संवृतिराश्रयणीया। तथा च सत्यवान्तरव्यवस्था-मात्रमेतत् नामरूपमिति।

प्रत्यक्षादनुमानाद् वा न रूपस्कन्धसाधनम्।
ताभ्यामेव तु बाधास्य ज्ञानमेवाखिलं ततः॥

केवलं तत्राप्यनुमानमेव बाधकमिति किल तत्रापि न स्थितिः। तथा सति ज्ञानमेव संवृतिसत्, न रूपम्। तस्मादासंसारस्थायि ज्ञानमेव संवृत्या युक्तम्, बाधनेऽपि तस्य प्रकाशात्, अन्यस्याप्रकाशात्। सन्तु वा संवृत्या पञ्चापि स्कन्धाः, स्वयं वा बुद्धेस्तु निवृत्तिः स्यात्, निवर्तनप्रयत्नेन वा? नाद्यः पक्षः, स्थिरस्वभावत्व-साधनात् चित्तसन्ततेः। निरालम्बा प्रशाम्यतीति चेत्? ननु शान्तिरनुपद्रव उच्यते इति कीदृशो दोषः? नाशो विवक्षित इति चेत्? तदापि यद्यालम्बनं विषय इदानीमपि निर्विषयैव तत्त्वतः कथं प्रबन्धेन प्रवर्तते? संवृत्या तु न कदापि विषयव्यावृत्तिः। अथाधारः? नास्याः किञ्चिदाधारेण, गौरवाभावात्। अथ कारणम्? तदेदानीमपि समनन्तरप्रत्ययः कारणं न तदापि विच्छिद्यते, विशेषतोऽशेषजगत्कृपासहायम्। क्लेशा-भावान्न प्रतिसन्धिसक्तिरिति चेत्? हितसुखेच्छयाशुचिस्थानपातलक्षणः संसार एव मा भूत्, प्रबन्धमात्रेण तु वृत्तिः केन वार्यते, विशेषेण दयालोः? तस्मान्न स्वयं निवृत्तिः, प्रयत्नस्तु द्वयोरेकस्य स्थापने निवर्तने वान्यस्य गुणदोषदर्शिनः स्यात्।

तत्र जडराशेः कीदृशो गुणो यो न चैतन्यस्य? कीदृशो वास्य दोषो यो न जाड्यराशेः? प्रकृतिभ्रान्तत्वात् चित्तचैत्तानामिति चेत्? जाड्यराशित्वाद्रूपस्येति किं नोच्यते? यदि च तावतैव बहुमानः, लोष्टेष्टकाप्रभृतयो वरं भवद्भ्य इति किमतःपरं परेण कर्तव्यम्? किं च केयं भ्रान्तिर्नाम? न तावदलीकतैव, रूपेऽपि प्रसङ्गात्। अथालीकत्वेऽपि न रूपे भ्रान्तिव्यवस्था किं तु विज्ञान एव? एवं तर्हि परिभाषामात्रमेतत्। स्वसंकेतानुरोधाच्च विभागे त्यागपरिग्रहौ। तथा च सति रूपेऽपि तथा परिभाष्य त्यागो भवेत्। यदि तु विज्ञानमात्रवादिनो भगवतः प्राति-कूल्येन तस्यैव निरोध इष्टो न रूपस्य, तथापि किं भ्रमत्वपोषणेन? मा भूज्जडरूपस्य प्रत्यासत्त्या भ्रान्तिसंभावना।

विज्ञानस्य विपर्यास उपलब्धो न जडैकरूपस्येति चेत्? ननु विपर्यासो भ्रम इत्येक एवार्थः, तस्यैव च स्वरूपनिरूपणमिदमिति केदमुत्तरं संबध्यते? अथातस्मिन्

तद्ग्रहादिर्यथासमयं प्रसिद्धो भ्रमार्थः, तर्हि तद्व्यत्ययेनाभ्रान्तिरपि विज्ञानस्योपलब्धैव। स्यादेतत्, भ्रमस्तावद्भ्रम एवोभयसिद्धेः। अत्र सोऽपि भ्रम एव मद्विचारेण इति? एवं तर्हि सर्व एव भ्रम इति [114b] शून्यताज्ञानमपि भ्रमः। ननु न शून्यताज्ञानं नाम तत्त्वेनेति चेत्? तत्त्वतो नास्तीति भवतु, भ्रमस्तु शून्यताज्ञानमिति कापीयं व्यवस्था। अपि च,

तत्त्वेन किञ्चिन्नास्तीति शून्यता नाम कथ्यते।
तत्त्वेनैव भ्रमोऽस्तीह नाभ्रमोऽस्तीति कापि दिक्॥

यतो विचारादखिलभ्रमस्थितिः
स एव किं भ्रान्तिरथाभ्रमो भवेत्।
यदि भ्रमोऽसावखिलो भ्रमः कथं,
न चेत् स एव भ्रमभाववर्जितः॥

परमार्थतो न कश्चिद् भ्रमोऽप्यभ्रम इति चेत्? युक्तमप्येतत्। केवलं संवृतौ यथा स्कन्धपञ्चकम्, तथा कश्चिद् भ्रमः, कश्चिदभ्रम इत्यवश्योपेयम्। न हि तदापि नीले नीलबुद्धिर्भ्रमः, श्वेते तु स्यात्। एवं रजतबुद्ध्यादयो द्विधाभिधातव्याः, अन्यथा न रूपस्कन्धो नाम। संवृत्या च चित्तचैत्तनिरोधो रूपस्कन्धस्थितिरिति विवक्षितम्, तत्र च भ्रम एव। तस्य तु न सम्यग्बोधः, तदर्थमेव सर्वारम्भात्।

संवृतौ द्वयमप्यस्ति तत्त्वतो द्वयमप्यसत्।
भ्रम एवाखिल इति केदं संबध्यते वचः॥

अथ कदाचिज्ज्ञान एव भ्रमो दृष्टो न रूप इत्युच्यते? स्कन्धेष्वेव दृष्ट इत्यपि स्यात्। शास्तृसंमतेषु वा दोषदर्शनं भगवन्तमपि त्याजयेत्। अवान्तरभेदस्तु साधारणः। प्रकृत्या भ्रान्तिरित्यपि यदि सर्वव्यक्त्यनुयायित्वं विवक्षितं, तदानेनैव प्रत्युक्तम्। अथ क्वचिद् भ्रान्तिर्भवन्त्यपि विकृतिरेवेत्यर्थः, तथापि कथमयं निश्चयः, उभयस्यापि दर्शनात्? तत्रागमस्तावच्चित्तस्य प्रकृतिपरिशुद्धत्वम्, आगन्तुकत्वं तु दोषाणामसकृदभिधत्ते, अनुभूयते च विपर्यासशङ्कया परिपीड्यमानं मनः, सम्यक्परिज्ञाने च निर्वृतमिति विभक्तं सर्वज्ञसिद्धौ।

न च सविकल्पाविकल्पयोरन्यतरापेक्षयेदमभिधातुं शक्यम्, द्वयोर्द्वयदर्शनात्। एकत्र तथाभावे वा तस्यैव प्रहाणिरस्तु, भेदाप्रतिपत्तौ वा प्रतिपत्तये शास्त्रान्तरमन्वेष-

णीयम्। तदयमलक्षः क्षेपः प्रकृतिभ्रान्ताश्चित्तचैत्ता इति। किं च, चित्तचैत्तनिरोधश्च धर्मकायसाक्षात्क्रिया चेति व्याहतम्, चित्तधर्मत्वात् साक्षात्क्रियायाः। साक्षात्कारोपचारोऽसाविति चेत्? कुतः? गत्यन्तराभावादिति चेत्? तत्र साक्षात्कारिचित्तस्थितिरेवास्तु, किं निवर्तनयत्नेनेति कथं गत्यन्तराभावः? तदेतन्नेत्रमुत्पाट्य दर्शनकौतुकविनोदनं न प्रेक्षावतां क्षमते।

लोष्टादयो वा धर्मकायसाक्षात्कारिणः, तेषां प्रभावातिशयाभावादिति चेत्? न खलु तावता धर्मकायसाक्षात्क्रिया किं त्वधिगमविशेषेण, अन्यथा मन्त्रादीनामपि साम्याद् बुद्धत्वं च। यद्येवम्, अभावातिशयसंभवे साक्षात्क्रियया किं कर्तव्यम्, मण्यादिवत्? यद्येवं [115a] लक्षणानुव्यञ्जनैरपि किं कर्तव्यम्? सामर्थ्यविशेषस्य मणिमन्त्रादिवदन्यथापि संभवादिति न धर्मकायो नापि संभोगकाय इति परिशुद्धा बुद्धस्थितिः। अथवा रूपवदधिगमस्यापि प्रभावफलातिशयदर्शनाद्रूपमेव निवर्त्यमस्तु, स्थाप्यं वा, द्वयमपि कस्यचित् केनचिदर्थसिद्धेः।

सर्वसामर्थ्यस्य रूप एवारोपयितुं शक्यत्वादिति चेत्? विज्ञान एव शक्यत्वाद् विपर्ययोऽस्तु, नेति कोशपानं प्रमाणम्। तथाप्येकस्य स्थापने कदाचिच्चित्तभागस्यैव स्यात्, इति न रूपस्यैव स्थितिः। रूपसामर्थ्याच्च ज्ञानसामर्थ्यस्यैव महत्त्वदर्शनात् तत्रैव भरन्यास उचितः। कथमन्यथा विज्ञानमात्रं जगदिति नेयम्? तस्मात् पञ्चस्कन्धकसंवृतिपक्षेऽपि न चित्तचैत्तनिरोधः साधुः। न च सैव संवृतिः सर्वशून्यतापक्षेऽपि।

अन्तिमा संवृतिर्वक्तुं संवृतित्वे न युज्यते।
अन्त्या च ज्ञानरूपैव नो चेद् द्रव्यगुणाद्यपि॥

तस्मात् साकारचित्तस्यैव स्थितिः स्वसंवेदनसिद्धश्च धर्मकाय इति॥

यद्येवं स्वसंवेदनस्य वस्तुविषयत्वात् कथं प्रज्ञप्तिसत् शून्यताभिधानं धर्ममात्रं धर्मकायो भगवतः। ततः,

संभोगकायादितरज्ज्ञानमेव निराकृति।
शून्यतालम्बनं धर्मकाय इत्यपरे विदुः॥

अत्रापि पक्षे संभोगसंख्यातात् बुद्धनामतः ।
भिद्यमानं कथं तस्य स्वभावो भवितुं क्षमः ॥

तस्यापि बुद्धरूपत्वे द्वौ बुद्धौ भिन्नलक्षणौ ।
तस्यैव बुद्धरूपत्वे धर्मकायोऽपरः पुनः ॥

स एष बुद्धो धर्मश्चेत् तस्येति न समन्वयः ।
न धर्मिधर्मभावेन न सामान्यविशेषतः ॥

संभोगधर्मो बुद्धश्चेद् बुद्धः प्राज्ञप्तिको भवेत् ।
सतोऽप्यन्योऽथ धर्मात्मा द्रव्यं चेत् सा परम्परा ॥

धर्मता चेन्न संवित्तिः संवित्तौ नीलतादिवत् ।
अनाकारेण किं साऽ[न्या] संभोगस्यैव धर्मता ॥

कस्तर्हि उत्तरतन्त्रे[1] क्लेशोपचयापचयात्यन्तापचयात् स एवायं धर्मकायः सत्त्वधातुर्बोधिसत्त्वो बुद्ध इति चोच्यते इति दर्शितः ? यस्तत्रैव,

धर्मकायो द्विधा ज्ञेयो धर्मधातुः सुनिर्मलः ।
तन्नि[ष्यन्द]श्च गाम्भीर्यवैचित्र्यनयदेशना ॥
[ उ. त. १. १४५ ]

इत्यनेन धर्मधातुरित्युक्तः, स एव च प्रकृतो न तन्निष्यन्दभूतगम्भीरविचित्रनयदेशनाख्यः । कस्तर्हि धर्मधातुरपि ? एतदर्थमधोष्व मध्यान्तविभागमेव । यः,

तथताभूतकोटिश्चानिमित्तं परमार्थता ।
धर्मधातुश्च पर्यायाः शून्यतायाः समासतः ॥
[ म. वि. १. १५ ]

इत्युक्तः, तादृक्संमोहापोहाय । तथा शून्यतापि धर्ममात्रमित्यत्रापि यदि विप्रतिपत्तिः,

द्वयाभावो ह्यभावस्य भावः शून्यस्य लक्षणम् ।
[ म. वि. १. १४ ]

---

१. उ. त. पृ: ४०–१.

इत्याद्यनेकप्रकारमनुसरत्[115b]तत्रैव तत्परिहारेण निराकारवस्तु किञ्चिद्धर्मकायशब्दवाच्यमिति स्वातन्त्र्यमेतत्। ननु धर्ममात्रं संवृतिसत्, कथं स्वसंवेदनविषयः ?

कथं वा तस्य पूर्वेण सदा रहितता तु या।

इत्यादि कचिद् विधिरूपः परामर्शः ? उच्यते,

प्रसज्यपर्युदासाभ्यां सर्वाभावस्थितिर्द्विधा।
धर्मिमानं च सर्वस्मिन्नभावे मानमिष्यते ॥

यदा तावत् पर्युदासः, यथोक्तम्– य एव हि द्वयाभासताया भावः स एव द्वयाभाव इति, तदा न स्वसंवेदनेन ग्रहाभावशंका।

द्वयं तत्र न विद्यते
[प्र. वि. १. २]

इत्यादि प्रसज्यपक्षेऽपि धर्मिसंवेदनस्य न द्वयाभावविकल्पोत्पादनादन्यद् द्वयाभावसंवेदनमिति। तदर्थं प्रदेशे घटस्य तादात्म्यतदाधारतानिषेधप्रस्तावः शास्त्रे चिन्तनीयः। उभयथापि तदेवैकं वस्तुरूपमापद्यत इति प्रसज्यप्रतिषेधेन पर्युदासेन वा व्यवहार इति नात्र निर्बन्धः। यथा वा भावमात्रापेक्षयैकान्तिकभेदाभेदनिषेधेऽपि दिगम्बरमतावतारः टीकाकारेण निषिद्धः, तथा विकल्पप्रतिभासिनि विधिरूपेऽपि निषेध्यः, तस्यापि नित्यादिरूपस्यावस्तुत्वात्, यदर्था चेयं व्यवस्था, तथोक्तं प्राक्। यथा वा स एव धर्मकाय इति। न चान्यथा समलामलसर्वज्ञरागादिचिन्तायाः कश्चिदुपयोगः। निष्यन्दाद्यर्थे टीका च, धर्मधातुप्रभावितत्वाद् बुद्धवचनस्येति प्रस्तुत्य, सर्वाकारपरिशुद्धस्य धर्मकायाख्यस्य धर्मधातोराधिपत्येन प्रवृत्तत्वादिति। तस्मात् प्रज्ञप्तिसन् धर्मकाय इति न सचेतसस्त्रासविषयः, तथैव युक्त्यागमाभ्यां समर्पणात्। अथवा यत्र निष्ठा निषेधस्य, विधिरूपस्य तु यदवसायोऽपि तद् धर्मिरूपापेक्षया वस्तुसन्नेव भगवान् धर्मकाय इति त्यज्यतां त्रासः। यथा हि प्रदेशे घटाभावः सत्य इति केवलः प्रदेश इत्यर्थनिष्ठा, तथा द्वयाभावोऽत्रेति द्वयेन द्वयत्वेन वा रहितं ज्ञानरूपमित्यर्थः। एतदेवाभिसन्धाय द्विधापोहः, तस्य च वस्तुरूपे निष्ठा। धर्मिग्राहि च धर्मे प्रमाणम् इति निर्णयः शास्त्रे। तेन धर्मधर्मिणोः,

कल्पितं भेदमाश्रित्य बुद्धो धर्मश्च तावुभौ ।
संघो निर्माणकायाभ इति रत्नत्रयस्थितिः ॥

वस्तुतस्तु बुद्धधर्मयोस्तादात्म्यमेव । एतेन यः सभाष्यः सूत्रालङ्कारः,

समः सूक्ष्मश्च संबद्धः कायः स्वाभाविको मतः ।
स्वाभाविकः सर्वबुद्धानां निर्विशिष्टतया समः ॥

सूक्ष्मो दुर्ज्ञानतया, तेन सांभोगिकेन कायेन संबद्ध इति । तत्र तादात्म्यमेव वास्तवः संबन्धो बोद्धव्यः । यदि तर्हि संभोगबुद्धताहेतुरिति वचनात्तदुत्पत्तिरेवास्त्विति चेत्– न, मध्यान्तविभागे [116a] आर्यधर्महेतुत्वाद् धर्मधातुरार्यधर्माणां तदालम्बनप्रभवत्वादिति वचनेन तदामुखीकरणस्य तत्र प्रभावात् तथा व्यवहार इत्यस्यार्थस्य स्फुटीकृतत्वात् । तथा शून्यतास्वभावप्रस्तावे टीका, शून्यताभावनायाः प्रयोजनं गतिद्वयप्राप्तिमारभ्य यावद् बुद्धधर्मप्राप्तिः, स्वपरात्मनो रूपधर्मकायसम्पत्प्रकर्षः शून्यताभावनादेवेत्येवमन्यदपि । पूर्वावस्थापेक्षया वा तदङ्गस्य तत्राधिपत्यव्यवस्था, यथा विक्रमोऽस्य सर्वार्थसाधकः, क्षणिकता चेति । न चाकारमन्तरेण क्वचिदर्थक्रियोपलम्भः । समस्तशुक्लेतरधर्मोत्पत्तौ तस्यैव सामर्थ्यदृष्टेः । तत्त्वामुखीकरणस्य शुक्लधर्मजन्मनि सहकारित्वम् । तत एव निराकारात् सर्वसंभव इति चेत् ? नात्रागम इति दर्शितम्, नापि युक्तिः काचित् । अपि च,

प्रतीत्यभावप्रभवेऽप्ययं जनः
समक्षवृत्ति श्रयतेऽन्यकारितम् ।
तमःप्रकारः कतमोऽयमीदृशो
यतोऽविपश्यन् 'सदसन्निरीक्षते ॥

कृञः कर्तृकर्मविवक्षायां णिच् । अन्यकारितमन्यक्रियामित्यर्थः । आकारलेशो वरं हेतुफलभावं सन्तं न विपश्यति । अन्यविषयमसन्तमीक्षते । नन्वयमात्मवादाधिकारेण सूत्रालङ्कारश्लोकः । किमतोऽप्यन्य आत्मवादो नाम ? नित्यविभुतयोरनङ्गीकारान्नेति चेत्– न, चित्रत्वादात्मवादिनाम् । यतः,

कर्ता भोक्ता च दृष्टेभ्यो भिन्नोऽहंकारगोचरः ।
निरञ्जनस्तदेकावशेषा मुक्तिश्च योगिनाम् ॥

किं च, पृथक्स्वरूपनिर्भासाभावेऽर्थक्रियायां क्वचिदुपयोगाननुभवाद् भवान् नैव क्षणिकतामस्य स्वीकुर्यात्। तदयं निष्कलात्मवत् ज्ञानमात्रार्थकरणेऽप्ययोग्यम् इत्यादेर्विषयः। यदा तु नित्यविभुतयोरपि धर्मकायस्य प्रतिपादनमागमे, तदा किमुत्तरम्? न च प्रवाहनित्यता, प्रकृतिनित्यताया एव निर्देशात्। तथा च तत्रैव,

प्रकृत्याश्रंसनेनापि प्रबन्धेन च नित्यता।

इति। अत्र च भाष्यम्, प्रकृतिनित्यता स्वाभाविकस्य, स्वभावेनैव नित्यत्वात्। अश्रंसने सांभोगिकस्य, धर्मसंभोगाविच्छेदात्। प्रबन्धेन नैर्माणिकस्य, अन्तर्धाप्य पुनःपुनर्निर्माणसंदर्शनादिति। विभुता चोक्तैव। यथोत्तरतन्त्रम्,

सर्वत्रानुगतं यद्वन्निर्विकल्पतया नभः।
चित्तप्रकृतिवैमल्यधातुः सर्वत्रगस्तथा॥
[उ. त. १. ४९]

अनेन किं दर्शयति?

तद्दोषगुणनिष्ठासु व्यापि सामान्यलक्षणम्।
हीनमध्यविशिष्टेषु व्योम रूपगतेष्विव॥
[उ. त. १. ५०]

इति। रूपगतेष्वित्यत्र मृद्रजतसुवर्णभाजनेष्विति भाष्यम्। गतशब्दश्च प्रकारार्थो [116b] वेदितव्यः। ह्रस्तेर्गततताच्छिल्य इत्यत्र पतञ्जलिः[1] गतविधप्रकारा एकार्था इति। गतताच्छिल्य इति रूढिः। निर्विकल्पतयेतीत्थंभूते तृतीया। चित्तस्य प्रकृतिवैमल्यमेव धातुस्तथता। तस्मान्नित्यव्यापित्वं मुख्यमेवोक्तम्। ततो यदि द्रव्यमेव धर्मकायः, कथमात्मवादपरिहारः?

धर्मतायास्तु नित्यत्वव्यापकत्वादि सांवृतम्।
स्वाभाव्येऽपि यथाकल्पं प्रसिद्धं क्षणितादिवत्॥

अत्रापि हीनमध्यविशिष्टेष्विति धर्मिनिर्देशः। नापि व्यापित्वाभावादनात्मवादो दिगम्बरवत्, न चात्मवादत्वेऽपि निर्बन्धः,

अविपश्यन् सदसन्निरीक्षते।

१. महाभाष्ये नेदृशी पंक्तिः। आशयोऽयं पतञ्जलेः कैयटादिभिर्व्याख्यातः। द्रः, म. भा. प्रदीपे १. ३. २१

इति दोषस्य तद्वदेवापरिहारसिद्धेरिति। सत्त्वेऽपि च श्रद्धेयस्याकारभागस्तावत् सत्य इति दुर्वारः। सत्ताप्रज्ञप्तिमात्रमेतत्, श्रद्धेयमेव तु वस्तुसत्। अत एवालीकः संभोगात्मा न भिन्न एव तदाश्रयप्रकाशत्वाच्च नासंबद्ध एवेत्यपेतागमयुक्तिकं काव्यमात्रम् एतत्। स च बुद्धनामार्थोऽलीको यस्यासौ धर्मकायः सत्य इति साध्वी स्थितिः।

अपि च, एवमाश्रितमात्रत्वेनोपसर्जनं, बुद्धः प्रभुस्तु धर्मकाय इति धर्मस्य बुद्ध इत्याञ्जसो निर्देशः स्यात्। अथोभयं बुद्धः, तदापि प्रत्येकं समुदायो वेति विकल्पे, एको बुद्धस्तदंशो वालीको भ्रान्तश्च इत्यपि साधु, भ्रान्तिबुद्धयोर्विरोधात्। कथं च सोऽलीकः संभोगात्मनि निर्माणहेतुरिष्टः? यदाह सूत्रालङ्कारः,

द्वयोर्द्वयार्थसम्पत्तिः सर्वाकारा प्रतिष्ठिता।

इति। अत्र भाष्यम्, संभोगः स्वार्थसम्पत्तिलक्षणकायः। नैर्माणिकः परार्थसम्पत्तिलक्षणः। सेयं परार्थसम्पत्तिर्यथाक्रमं प्रतिष्ठिता स्वाभाविके च सांभोगिके चेति। एवं च सति फलं धर्मकायस्य, हेतुश्च निर्माणस्य परार्थसम्पत्तेः। स्वार्थसम्पत्तिश्चासावसती च ख्यातीति विप्लवः सर्वः। तदयं संभोगे स्वार्थसम्पत्तिवादोऽलीकताप्रतिज्ञानम् आकारेषु विधुरयति। एतेन श्रद्धेयस्यैव बुद्धत्वे सत्यत्वेऽपि वा संभोगः कार्यार्थमाद्रियत इति कल्पनमपास्तम्। तेन फलस्याणोरप्यभावात्, कलङ्करूपत्वात् च,

दोषं लघीयांसमुपेत्य कश्चि-
 दास्थीयते कार्यमपेक्ष्य भूयः।
प्रधानदोषभ्रमराशिरर्थ-
 शून्यः स्थवीयान् कथमाद्रियेत॥

कर्मवशात् तदुदय इति न युक्तम्। एकान्तत्याज्यस्य हि हेतुः कर्मैव नारम्भम् अर्हति, पातकान्तरवत्। कर्मापराधाद् भ्रान्तिस्तथागतस्येत्यपि सुभाषितम्। तदस्य सर्वथोपरम एवायातः। किं च बोधिसत्त्वाभिधानैः,

निराकारतया पुंभिः सर्वथा स्यादसेव्यता।
आकारोपगमे मुख्यं गजस्नानमिदं भवेत्॥

निराकारप्रतिज्ञानं निराकारप्रसिद्धये।
स्वीकारः पुनराकारे निकारः कोऽपर[117a]स्ततः॥

इत्यन्तरश्लोकौ॥

यदर्थलालसतया च तद्धारणं, तत्र कः शक्तिप्रतिरोधः श्रद्धेयस्य ?

यदि तस्य क्वचिच्छक्तिः शक्तिः सर्वत्र गीयताम् ।
नान्वयव्यतिरेकौ हि शरणं कारणस्थितेः ॥

तस्मान्निराकारवादिनां केवलविमलानन्तव्योमनिभाशेषशक्तिमति रूपं साध्यमिति दर्शनान्तरमस्तु किमन्यानुपङ्गेण ? आर्यमैत्रेयनायकनयातिक्रमे हि कीदृशी बौद्धतत्त्वस्थितिः ? संक्षेपतः स हि,

त्रैधातुकं धियमुवाच विचित्रमत्र
संवेद्यवेदकमिति द्वयमेव मिथ्या ।
रोपापवादनियतैव नुदन्नुनाव
संभोगमन्यहितहेतुनिजार्थलक्ष्मीम् ॥

न च क्वचिल्लक्षणानुव्यञ्जनादिप्रस्तावे तत्त्वतो न बुद्धरूपमिदमौपचारिकं वेति दर्शितम् । धर्मकायप्राधान्येन बुद्धव्यवहारप्रस्तावेऽपि नासत्त्वमेव प्रतिपादितमुपचारो वा, लक्षणादिकं हि चक्रवर्तिनोऽपीति दर्शनात् । सूत्रालङ्कारेऽपि,

सर्वैश्चित्रैर्लक्षणकैर्मण्डितगात्रः

इत्यत्र भाष्यम्, चित्रग्रहणं चक्रवर्त्यादिलक्षणेभ्यो विशेषणार्थमिति दृढीकरणमेव । तदतिक्रमे च यदपीदं लिखितं, भगवांस्तु प्रहीणज्ञेयावरणत्वादसंभवद्भ्रान्तिरादर्शनज्ञानरूपः सकलज्ञेयबिम्बोदयात् प्रतिक्षणमेकज्ञानचक्रात्मा । अत एव चक्रचिह्नः । सर्वज्ञेयप्रतिबिम्बसंवेदनमेवास्य सर्वज्ञेयसंबोधः । अत एव सर्वधर्मस्वरूपावबोधादतिशयेन बुद्धिरस्यास्तीति बुद्ध उच्यत इति । ततः स्वपरमेव लुप्तम्, आकारस्यैव च भ्रान्तिव्यवस्थानात्, क्व प्रशस्तबुद्धियोगः, क्व वा ज्ञेयावरणप्रहाणिरिति । अलीकमलीकमेव वेत्तीति अतस्मिंस्तद्ग्रहभ्रान्तिवादप्रसङ्गः ।

निराकृतायामिति संविदाकृतौ
न मन्त्रनीतिर्न च पारमीनयः ।
तदस्तु सैव स्थितिरस्तदूषणा
मनोज्ञता स्वर्गुणरत्नभूषणा ॥

इत्यन्तरश्लोकः ।

अथेष्यत एव संभोगकायः, अलीकत्वेऽपि तत्तदर्थसमर्थश्च। सामर्थ्येऽपि वा विशुद्धत्वादेव तदुपसंहारेण धर्मकायसाक्षात्क्रियालक्षणं नभोनिभमवस्थान्तरमिति न दोषः ? न, एवमप्यश्रंसननित्यतातिक्रमापरिहारात्। धर्मकायविरहितश्चैवं जगदर्थकारी भगवानित्यायातम्। तच्च विरुध्यते, यदाह उत्तरतन्त्रम्,

महाकरुणया कृत्स्नं लोकमालोक्य लोकवित्।
धर्मकायादविचलन्निर्माणैश्चित्ररूपिभिः॥
[उ. त. २. ५३]

इति। जातकादीनि निर्वाणपर्यन्तानि दर्शयतीति विस्तरेण संबन्धः। पुनश्च,

सर्वत्र देवभुवने ब्राह्मयादविचलन् पदात्।
प्रतिभासं यथा ब्रह्मा दर्शयत्यप्रयत्नतः॥

तद्वन्मुनिरनाभोगान्निर्माणैः सत्त्वधातुषु।
धर्म[117b]कायादविचलन् भव्यानामेति दर्शनम्॥
[उ. त. ४. ५३-४]

इत्यादि पुनर्विस्तरेण। अथ प्रकृतिपरिशुद्ध्यपेक्षया धर्मकायाविचलनमुच्यते, तदा सर्वस्यैव प्राणिनस्तुल्यमेतदिति कोऽतिशयो भगवत एवमुक्तो भवति प्रबन्धेन ? तस्माद् वैमल्यविशुद्ध्यपेक्षयैवायं विशेषः, केवलं धर्मकायसाक्षात्क्रियाकाले न जगदर्थकरणमाभोगाद्यपेक्षमतः समाधिव्युत्थाने तदिति शंकानिवृत्त्यर्थः प्रयत्नः, तथा चानाभोगान्निर्माणैरिति चोक्तम्। एवं च देहत्यागेनात्मवादिनां तत्त्वाधिगमप्रवादनिषेधसिद्धिः।

अथापि पुनः पुनः समाधिव्युत्थानाभ्यामपि चलनं विवक्षितं, तथापि किमनेन परिश्रमेण ? ननु,

संभोगकायात् परमेति शुद्धौ
संभोगकायं च ततोऽर्थसिद्धौ।
निमज्जनोन्मज्जनसक्तमूर्ते-
र्मद्गोरिव स्वास्थ्यमृषेः कदा स्यात्॥

न चैवमनुपपन्नविधानः परार्थः। नापि शाश्वती शुद्धिरित्यास्तां तावदेतत्। मा भूत् तुन्दिवृत्तान्तस्मृतिः। यथोक्तम्, धर्म एव बुद्ध इति, तत्र कल्पितस्यापि भेदस्याभावाद् भिन्नप्रवृत्तिनिमित्तत्वेऽपि पर्यायत्वात् जिनमुनीन्द्रादिवत्, कुतः कायान्तरव्यवस्था ? किं च पर्यायत्वविरोधिधर्मजिनयोस्तद्वाक्यम्,

धर्मकायादविचलन्

इत्यादि। न हि बुद्धादविचलन् सुगत इति युक्तम्, बुद्धत्वादिति तु युक्तमेव। एकस्य च प्रज्ञप्तिस्थितिमाह, तच्च वाक्यम्, यथा ब्रह्मा ब्राह्मयादविचलन् पदादिति निदर्शनात्। तत्र हि ब्रह्मैव परमार्थसन्। तत्पदं तु प्रज्ञप्तिसदेव, न हि तद् वस्त्वन्तरं किञ्चन, आश्रयोपकरणात्मभावविशेषे पदप्रज्ञप्तेः।

यदाप्युपाधिविशेषापेक्षं स्वरूपमेवाचार्यपदवत् पदशब्दवाच्यम्, तदापि धर्मिणः पृथगिव कल्पनया निर्दिश्यमानं प्रज्ञप्तिसदेव, तथात्रापि मुनिधर्मकायशब्दवाच्ययोरेकस्य प्रज्ञप्तिसत्त्वमायातम्,

धर्मस्यैव तथास्तु नापि च मुनेरर्थक्रियाभावतो।
भावः सोऽपि निराकृतेर्यदि कथं संभोगजन्मोच्यते॥
[ ]

इति स्ववचनव्याघातः। किं चैवं मुनिरित्यपि निराकार एव स्यात्, ततश्च धर्मकायाद् अविचलन्निति संभोग एव प्रज्ञप्तिसन् धर्मकायशब्दवाच्यः स्यादिति विपर्ययः। तस्य द्वयशून्यता धर्मकाय इति चेत् ? तदापि कथं संभोगस्य जन्मोच्यते ? तावतैवार्थपरिसमाप्तेरित्यापादितम्।

अथ विभागोऽस्तु काचित्कार्यकोटिः, संभोगस्य काचिन्निराकारस्येति चेत् ? विभागेन त्वसहः क्रियाभावो व्यवस्थायाः, द्वयोरपि समानप्रौढितया ब्रह्मतत्पदद्दृष्टान्तानुपपत्तेः, प्रकरणेष्वपि तथा प्रतिपादनाभावाच्च। संभोगे [118a] तु यथा धर्मकायो हेतुरुक्तः, तथा दर्शितमेव। अस्तु वा संभोगेऽन्यत्र वा कार्यग्रामे कियत्यपि निराकारस्य व्यापारः, संभोगस्य तु सिद्ध एव। ततश्चानलीकमुभयं भवेदिति परं संबन्धनीयम्, तत् कथं संभोगस्यालीकता लोकोत्तरनिराभासज्ञानसिद्धिर्वा समुद्घुष्यते ? बाधकाद् अलीकत्वमिति चेत् ?

विहाय प्रतिबिम्बादि ब्रह्मदृष्टान्ततो यदि ।
संभोगालीकता सिध्येत् बाधशक्तिस्तु चिन्तिता ॥

प्रतिभासार्थक्रिययोरविच्छेदेन । एतेनोपसर्जनतापि प्रागुक्ता प्रत्युक्ता । किं च, द्वयोरपि सामर्थ्यस्थितौ यदा द्वयशून्यतामेव धर्मधातुं धर्मकायापरनामिकामिच्छेत्, युवराजानुरोधाद् वा यथा दर्शितं प्राक्, संप्रत्येव ब्रह्मपददृष्टान्ताद् वा, तदा

कायश्च तुर्यो भवेत्

श्रद्धेय एव निर्माणस्य पृथक्त्वात् । सा च द्वयशून्यता संभोगस्यैव संबन्धाभिधानात्, तस्यैव धर्मसंभोगाविच्छेदप्रतिपादनाच्च । न हि स्वसंवेदनादन्या संभुक्तिः । सूत्रालंकारेऽपि,

क्वचिद् धर्म्यं चक्रं बहुमुखशतैर्दर्शयति स
क्वचिज् जन्मान्तर्धिं क्वचिदपि च चित्राञ्जनवराम् ।
क्वचित् कृत्स्नां बोधिं क्वचिदपि सनिर्माणमसकृ-
न्न च स्थानात्तस्माद्विचलति स सर्वं च कुरुते ॥

इति । स्थानादनाश्रवाद् धातोरिति भाष्यम् । स चानास्रवो धातुर्धर्मकाय इति । तत्साक्षात्कारस्थिरता चाविचलनार्थ इति स एवार्थः । अथवा,

कायश्च तुर्यो भवेत्

इति निराकारसाकारकल्पितादिस्वभावत्रयाच्चतुर्थश्च स्वभावः प्रसक्तः, अभूतपरिकल्पाख्यविचित्रचित्तचक्राद् भिन्नत्वात् । तदेव चित्तमभूतपरिकल्पो वेति चेत्- न, अस्यार्थस्योपायकारैरप्यनुद्भेदितत्वात् । न चाप्रकाशं चित्तमचित्तं वा प्रकाशमानमिति । उक्तं च प्राक्, रूपादिष्वभूतपरिकल्पस्वभावेष्विति । तथाकल्पितविकल्पितधर्मतारूपादिप्रस्तावो मध्यान्तविभागेऽनुसर्तव्यः । व्याख्यानमन्यथेति चेत्? भवतु न तु न्यायाद्यनुरोधीति उच्यते । किं च, एवमप्याकारराशिरेव पृथक्स्वभावोऽलीकाख्यः स्यात् । कल्पितेऽन्तर्भवतीति चेत्? क कस्य कल्पना? निराकारे आकारस्येति चेत्? अप्रतिभासिनि प्रतिभासमानं कल्पितमारोपितं वेति कार्यदृष्टिः, प्रकाशे त्वप्रकाशम् आकारेऽनाकारमारोपितमन्यवदिति तस्यैव कल्पितेऽन्तर्भावः । तस्मात्,

धर्मत्वेन विकल्पभासिवपुषा भेदाभिदावर्जितो
निष्पन्नः परतन्त्रधर्म्यनुगतो यः शून्यताख्यो मतः ।

स स्वाभाविक उच्यते भगवतः संभोगकायोदये
धर्माणां प्रकृतिध्वनिव्यवहृतं धर्माख्यमेतद् वपुः ॥

इति [118b] प्रकरणार्थः । ततो यदि प्रवचनप्रकीर्णार्थसंकलनमेव युवराजनीतिः, तदा-

स्फुटतरार्थगतिर्वचसामियं
प्रकरणान्तरसंगतिरीदृशी ।
प्रमितिभेदवलं च विचिन्तितं
विवृतयस्तु भवन्तु यथारुचि ॥

तस्मान्न निराकारवादवार्तापि । ननूत्तरतन्त्रे अनुत्तरं बुद्धगुणमारभ्य श्लोकः[1],

स्वार्थः परार्थः परमार्थकायता
तदाश्रिता संवृतिकायता च ।
फलं विसंयोगविपाकभावा-
देतच्चतुःषष्टिगुणप्रभेदम् ॥
[ उ. त. ३. १ ]

इति । तत्र च स्वार्थपरार्थौ धर्मसंभोगकायावनूद्य परमार्थकायता संवृतिकायता च यथाक्रमं विहिते, विसंयोगविपाकफलत्वे च । तत्र संभोगकायस्य सांवृतत्वप्रतिपादनम् अनाकारं परमार्थमुपस्थापयतीति कथमुच्यते निराकारवार्तापि नास्तीति ? तथा च तत्रैव विवृतिः,

आत्मसम्पत्त्यधिष्ठानं शरीरं पारमार्थिकम् ।
परसम्पत्त्यधिष्ठानमृषेः सांकेतिकं वपुः ॥

विसंयोगगुणैर्युक्तं वपुराद्यं बलादिभिः ।
वैपाकिकैर्द्वितीयं तु महापुरुषलक्षणैः ॥
[ उ. त. ३. २-३ ]

इति । तदेतत् हितकामतामात्रप्रयुक्तं व्याख्यानमात्रम्, अपास्तं च प्राक् धर्मकायस्य द्रव्यधर्मरूपतानिरूपणे । कथं च बुद्धगुणमारब्धो वक्तुं नाथः परार्थसाधनमसाधारणं निर्माणकायमनभिधाय निर्वृणीत ? कथं वा तत्रैव,

---

१. अनन्तरं बुद्धगुणविभागमिति पाठः उ. त. पृः ९१

रत्नविग्रहवज्ज्ञेयः कायः स्वाभाविकः शुभः।
अकृत्रिमत्वात् प्रकृतेर्गुणरत्नाश्रयत्वतः॥

महाधर्माधिराजत्वात् संभोगश्चक्रवर्तिवत्।
प्रतिबिम्बोपमत्वाच्च निर्माणं हेमबिम्बवत्॥
[उ. त. १. १४१-२]

इत्यनेन निर्माणस्य सांवृतत्वं व्यक्तमुक्तं विस्मृत्य धर्मकायादप्यायस्थानीकृतान्महाधर्माधिपत्येन चक्रवर्तितुलयोत्कर्षिते संभोगकाये योजयेत्? यदार्यनागार्जुनपादा अपि,

वन्दे संभोगकायं तमहमिहमहाधर्मराज्यप्रतिष्ठम्।
[ ]

इति। तदयं श्लोकार्थः। स्वार्थपरार्थौ धर्मसंभोगावनूद्य परमार्थकायव्यवहार एव विधीयते, परमज्ञानविषयत्वात् परमसाध्यत्वाच्च तयोः। एवं परमार्थसंगृहीतकायद्वयम् अभिधाय तृतीयमाह, तदाश्रिता संवृतिकायता चेति। प्रतिबिम्बोपमत्वेन निर्माणस्य सांवृतत्वप्रतिपादनात्। आश्रितत्वं च संभोगे साक्षात्, धर्मकाये पारम्पर्येणेति प्रतिपादितं प्राक्। विवृतावपि परमार्थशब्दाभिधेयकायद्वयमादिममनूद्यात्मसम्पत्त्यधिष्ठानत्वं विहितम्। तत्र,

लोकातीतामचिन्त्यां स्वकृतशतफलामात्मनो यो विभूतिं
पर्षन्मध्ये विचित्रां प्रथयति महतीं धीमतां प्रीतिहेतोः।

तस्याः संभोगकायोऽधिष्ठानमाश्रय [119a] इति व्यक्तम्। धर्मकायस्तु तदाश्रयो दर्शित एव। तृतीयं पश्चार्धेनाह, तत्र बिम्बोपमत्वेन लोकप्रसिद्धया सांवृतं पदं मूले। विवृतौ तु तत्त्वतो बुद्ध इति संकेतमात्रं निर्माणे। न त्वसौ बुद्ध एवेति सांकेतिकः शब्दः। पौरुषफलं चास्य बाह्ययोगिसाधारणमतिप्रतीतमिति न पृथक् कथ्यते। स्वरूपेण तु त्रयोऽप्यसाधारणगुणा इत्यारब्धम्॥

अथैवमपि परमार्थशब्दः शून्यतायां निवेशितः, कथं संभोगेऽपि व्याख्यायते? नैवमन्यार्थत्वात्। परमज्ञानविषयत्वेन हि शून्यता परमार्थः परमप्रयोजनत्वाच्च संभोगः स्वार्थसम्पत्तयः। तथा च, स्वार्थशब्द एव संभोगे दर्शितः पुनरधुना धर्मकायेऽभि-

धीयते, स्वार्थोऽर्थोऽस्मादिति कृत्वा । तस्मादर्थभेदान्न दोषः । ननु धर्मकायोऽपि साध्य उच्यते, ततश्च स्वोऽर्थ इति न क्षतिः । सत्यं, किं तु व्यवस्थामात्रमेतत्, न तु संभोगवन्निर्वर्त्यतया साध्यत्वमस्येति सिद्धोऽर्थभेदः । तथा च परार्थतापि निर्माणे साक्षात् । संभोगे तु तद्द्वारेणेत्यागमे । केवलो वा परमार्थशब्दः शून्यतापर्यायः कृतः, परमार्थकाय इति तु धर्मधर्मिणोः प्रमाणसिद्धिनिबन्धनोऽभिधीयते इति न विरोधः । कियद् वा शक्यं निर्बन्धुमेवंविधश्रद्धाविलसितेषु इत्यास्तां तावत् । स्थितमेतत्, न निराकारवादवार्तापीति । कथं तर्हि आचार्य दिग्नागपादाः पिण्डार्थे,

कल्पितस्य निषेधोऽयमिति संग्रहदर्शनम् ।
सर्वो ज्ञेयतयारूढ आकारः कल्पितो मतो ॥

इति । अत्रायमर्थः, सर्वो मतावारूढ आकारो ज्ञेयतया कल्पितः । तस्य ज्ञेयतया कल्पितस्य निषेध इति ग्राह्यत्वनिषेध इत्यर्थः । यथा,

तदभावात् तदप्यसत्

[ ]

इत्यत्राचार्यस्थिरमतिः, अर्थाभावाद् विज्ञातृत्वेन विज्ञानमसत्, न त्वर्थसत्त्वात्मविज्ञप्तिप्रतिभासतया । तदसत्त्वे हि सर्वथा अभावप्रसङ्गः, तद्व्यतिरेकेण विज्ञानस्वभावानभिधानात् । तद्व्यतिरिक्तस्वभावत्वे वा कथं तद्विज्ञानं, कथं वा परस्परतो भिद्यत इति ? अत्र तर्हि किं कर्तव्यम् ?

असदेव यतः ख्याति तदविद्याविनिर्मितम् ।
असत्ख्यापनशक्तौ हि साविद्येति निगद्यते ॥

इति ।

स एष बन्धकीमृत्युवृत्तान्तः समुपागतः ।
कथञ्चिदेकनिस्तारे दुस्तरान्तरसङ्गतेः ॥

यातु । अत्रापि तु भवत एव भ्रान्तिः, पूर्वापरापरामर्शात् । तथा हि,

तेन बुद्धं तथा बोधिं न पश्याम्यादिवाचकैः ।
आसमासैरिह ज्ञेया कल्पितानां निराकृतिः ॥

अमी त्वसाधारणयोगसंपदो
गुणाश्च रूपं च भवन्तमाश्रिताः ॥

इति विशेषाभिव्यक्तेरित्यलं बहुना। न चास्माकं यावत्संभवं ग्रन्थकाराशयसमर्थनयत्नः। एकवंशसंमतास्त्वेत इति। तथा हि,

आर्यासङ्गमनङ्गजिन्नयवहो यद् भूपतीशोऽन्वशाद्
आचार्यो वसुबन्धुरुद्धुरमतिस्तस्याज्ञयादिद्युतत्।
दिग्नागोऽथ कुमारनाथविहितासामान्यसाह्यक-
स्तस्मिन् वार्तिकभाष्यकारकृतिनोरद्यानवद्या स्थितिः ॥

आर्यनागार्जुनपादानां तु भिन्नवंशत्वेऽपि साधारणैव साध्यतत्त्वस्थितिरिति दर्शितम्, अबाध्यस्वसंवेदनस्वीकारात्। तदेवम्,

केचिद् बुद्धमलीकरूपवपुषं बुद्ध्या विहीनं विदुः
संविद्रूपमरूपमम्बरनिभं न भ्रान्तमन्ये पुनः।
संविद्रूपमलीकसुन्दरतनुं भ्रान्त्या विमुक्तं परे
केचित् त्वेनमलीकताविरहितं यद्भाति तद् गृह्यताम् ॥

तस्मात् संभोगधर्मस्यैव धर्मकायस्य स्वसंवेदनसिद्धेः किमप[120a]रेण ? स हि भवन्नपि भेदाद्भिन्नवेदनः कथं तस्य स्वभावः स्यात्, एकदेशत्वेऽपि आरूप्यधातुसत्त्ववत् ?

ननु आदर्शादिज्ञानचतुष्टयस्वभावो भगवान् पारमितानय एव वर्णितः। तत् कथं प्रस्तुतेऽपि विमतिरिति चेत् ? तत्रापि चित्राद्वैतस्थित्यैव निर्वाहः। निराकारे हि तावत् परस्परं भेद एव दुर्लभः। यदाह, कथं वा परस्परतो भिद्यत इति। भेदेऽपि परस्परासंवेदने स एव दोषः। चित्राद्वैतस्वीकारे च किमपरेण ? अथ चित्राद्वैतमपि नोक्तमिति चेत्- न, साकारज्ञानवादितया तदाक्षेपात्, साधनवत्। न हि वार्तिकप्रमेयराशिरपि तत्साधनैकप्रवणस्तत्रोक्तः। तस्मात् तद्वदेव तदुक्त्यैव यावती तस्य निष्ठा साप्याक्षिप्तैव। प्रदीपेन वा प्रदीपान्वेषण एषः। एक एव भगवान् चतुर्ज्ञानस्वभाव इति प्रस्तु[ते] चित्राद्वैतं च गवेषत इति। एवं चित्रलक्षणाद्युक्तयोऽपि वाच्याः।

अतएव यदप्युक्तं सूत्रालङ्कारे, त एव विकल्पा न पुनर्द्वयाभासाः प्रवर्तन्त इत्येवं व्यवदानं पर्येषितव्यमिति तत्रापि द्वयाभासा इति द्वयावसायिन इत्येवार्थः विकल्पशब्दश्च नाभूतपरिकल्पार्थः, किं तु कल्पनार्थः। अतएव बहुवचनम्। युक्तं चैतत्। न हि ग्राह्यग्राहकादृते द्वयशब्दस्य क्वचिदन्योऽर्थ उक्तः। न च तयोः साक्षात् ख्यातिः, किं त्ववसाय एव, मायाहस्तिनि हस्तिवत्। अन्यथा च यदेव सर्वाकारक्षयस्तदेव व्यवदानमिति कथं संभोगः स्वार्थसंपत्तिरिति सर्वव्यवस्थाविलोपः। आकारानाकारयोरसत्यसत्यताप्रतिपादनाभावाच्च कथं तत्परिहारः? अतएवोन्नीयतामिति चेत्—न, अन्यदर्थत्वात्। तथा प्रतिपादने तु नान्यार्थकल्पना। तथा च तत्रैव,

अर्थान् स विज्ञाय च जल्पमात्रान्
सन्तिष्ठते तन्निभचित्तमात्रे।

इत्यत्र भाष्यम्, मनोजल्पमात्रानर्थान् विदित्वा तदाभासे चित्तमात्रे व्यवस्थानमियं बोधिसत्त्वस्य निर्वेधभागीयावस्था। ततः परेण धर्मधातोः प्रत्यक्षतागमनम्, यो द्वयलक्षणेन विमुक्तो ग्राह्यग्राहकलक्षणेन। इयं दर्शनमार्गावस्थेति। न चात्र निर्वेधभागीयावस्थापि, तस्याकारस्य दर्शनमार्गावस्थायां भ्रंश उक्तः। नापि क्वचिद् भावनामार्गे, ग्राह्यग्राहकलक्षणक्षयस्तु सर्वत्र। तस्माद् ग्राह्यग्राहकसंगृहीतप्रपञ्चकल्पना न पुनर्भवन्तीति व्यवदानपर्येषणार्थः।

ननु भावनामार्गसंगृहीतायां सप्तम्यां भूमौ साभोगमनाभोगम्, अष्टम्यां निमित्तवर्जनमुक्तम्, निमित्तं चाकार एव, किमियं नागलोक[120a]भाषा, आचार्यमुष्टिर्वा? अथाकारो भ्रान्तिनिमित्तं प्रपञ्चनिर्मितमुच्यते भ्रान्त्यवलम्बनत्वात्? नन्वास्तां तावदाकारो बाह्यस्यापि सतो न भ्रान्तिहेतुतानियमः वासनामात्रानुबद्धत्वात् तस्याः। यद्यपि च सादृश्यमपि स्थिरभ्रान्तेः साधनमुक्तम्, तथाप्यनार्यस्येति वासनाविशेष एवावशिष्यते। यदि च कदाचिद् भ्रान्तिसंवासात् परिहारः, निराकारस्यैव प्रथममस्तु। यदेव वा किञ्चिद् भ्रान्तिनिमित्तमुपपादयितुं शक्यमनाकारदर्शनादिवत् तदेव निवर्त्यं निमित्तशब्दाभिधेयमिति कथमस्यां भणिताबाश्वासः? स्वयमेव च परिकल्पितेषु धर्मेषु कार्यकारणभावो निषिध्यते, तेषामलीकत्वादित्युच्यते। अलीकसंमतस्य चाकारस्य भ्रान्तौ शक्तिरिति सुव्यवस्थम्। तदालम्बनविकल्पद्वारेण तस्य शक्तिरुच्यत इति चेत्? विकल्प एव हेयोऽस्तु। स चाकारः स्वयमेव भ्रमो भवतामिति किं निमित्त-

वचनेन ? प्रबन्धापेक्षया च सर्वहेयानां निमित्तशब्देनैव चोदनप्रसङ्गः। निरालम्बनस्य च भ्रान्तालम्बनत्वं, न तावत् तत्त्वतः। संवृत्त्या च भवदपि न हेयताहेतुरिति किमनेन पूतिकुष्माण्डस्थानीयेन ?

तस्मात् प्रसिद्ध एव भेदव्यवहारहेतुर्विप्रयुक्तसंस्कारो वस्तुधर्मसंमतो निमित्तशब्देन गृह्यतां यदुद्ग्रहः संज्ञोच्यते हेयश्च, भिन्नस्य तस्याभावात्। यदि तर्हि तस्यापि स्वालम्बनविकल्पद्वारेणैव भेदव्यवहारकारणत्वमेष्टव्यम्, ततो विकल्प एव हेयः। सत्यं, तदेव तस्य हानं स्वयं स्फुरणाभावादाकारवत्। यदि चाकारपरिहारः, तदा अत एवास्यां भूमावुपायपारमितातिरिक्ततरा भवति, यतः सर्वनिमित्तान्यनिमित्तत्वेन प्रतिविध्यति, तत्कृतं च व्यवहारं न विरोधयतीति न व्याख्यानविरोधः। तत्कृतो हि व्यवहारो भेदव्यवहार एव भाष्यटीकाभ्यां दर्शितः। स चाकारविरहिणो मनोरथस्याप्यविषयः। न च तदैवाकारपरिभवे भगवतामादर्शज्ञानसंभवः। लौकिकं तदिति स्वकपोलविलसितम्, आर्यराजस्मृतेरभावात्। कथं तर्हि सूत्रालंकारे, आदर्शज्ञाननिर्देश एव सर्वज्ञेयेष्वसंमूढं, न च तेष्वामुखं सदेत्यत्र भाष्यम्, न च तेष्वामुखमनाकारत्वाद् इति। नायं दोषः, वस्तुज्ञानप्रकाराणामाकारा इति लक्षणमित्यभिप्रायेणोक्तत्वात्। तद्ग्रहणप्रकाराभावान्नामुखमुच्यते ज्ञेयप्रतिविम्बोदयेऽपीत्यर्थः। एतच्चादर्शज्ञानत्वादेव सुव्यक्तम्। तथा चानन्तरमेव,

संभोगबुद्धताज्ञानप्रतिविम्बोदयाच्च तत्

इत्यत्र [121a] भाष्यम्, संभोगबुद्धश्च तत्, ज्ञानप्रतिविम्बोदयाच्च तदादर्शज्ञानमित्युच्यत इति। तस्मादर्थसत्त्वप्रतिभासस्यानाकारत्वादित्यत्राप्यग्राहकत्वादिति युक्तं विभक्तमाचार्यस्थिरमतिना। तथा चार्यवसुबन्धुपादैः स्वयमनाभासशब्दस्याप्यन्यत्र निर्विषयार्थत्वं व्याख्यातमिति दर्शितमेव॥

कथं पुनर्ज्ञेयाभावे ज्ञेयप्रतिविम्बोदय एव ? उच्यते, यथा यथा पूर्वं वाह्यतो विज्ञानमात्रतो वा विश्वमभिनिविश्य महाकरुणया परार्थसंपादनाभिप्रायस्य प्रतिपरमाणुप्रतिक्षणसर्वाकारसर्ववेदनप्रणिधिः, तथा तथैव ज्ञानोदयः। तत्र च बहिरर्थाभावेऽपि चित्तसन्ततिविवर्तभेदेन भिन्नभिन्ना आकारास्तावत् सन्ति, तदाकारोत्पत्तिसंवेदनमेव तत्संवेदनम्। न च ग्राह्ये जडेऽप्येष प्रसङ्गः, प्रकाशस्यैव सत्ताप्रसाधनात्। ततः सन्तानान्तरमिमरस्याप्रकाशमपि स्वप्रकाशं सदेव। जडस्य तु नैवं, जडत्वप्रच्युति-

प्रसङ्गात्। युक्तमेतत्, केवलं सन्तानान्तरस्य सत्तायामेव क आश्वासः ? ननु तदर्थमेव सन्तानान्तरसिद्धिः, इह पुनरप्रकृतमेतत्॥

ननु गम्भीरस्तत्राशयो नास्माकमवधारणसहः, तत्प्रतिबिम्बसंवेदनं च सार्वज्ञ्यं प्रकृतमेव। प्रणिधानं हि परचित्ताकारापेक्षं, तद् यदि परस्तथा भवतु मा वा, मया तु एवंरूपेण एवंपरिवारभाजनोपकरणेन भाव्यमिति नियतरूपभावनादेव तदाकारोदयः। तदेव च सर्ववेदनं, तदा न क्षतिः। यदा तु परस्य प्रश्नाकारोदयस्तदा हन्त प्रतिविसर्जनाकारः स्यामिति प्रणिधिरेव साधनम्, तदा तदीयसत्तायामेव तथा युज्यते। एवमपि प्रणिधेस्तावन्न क्षतिरधिमोक्षसंभवात्। सति च सन्तानान्तरे तथा सेत्स्यति, असत्यपि स्वरूपाधारोपकरणसंपत्तिरेव शुभसञ्चयसचिवस्य भविष्यतीति न साध्यक्षतिः। त एव च स्वाकाराज्ञेयारोपाज्ञेयप्रतिबिम्बशब्दवाच्या इति॥

प्रणिधिरपि कथमनिश्चये ? परोपदेशात् सत्त्वाधिमोक्षाद् बाधकाभावाच्च। न च कश्चिद् दोषः। इयमेव वा स्वार्थसामग्रीति। अत्र च चित्राद्वैतवादितया भाष्यकारमते बुद्धबोधिसत्त्वादिप्रतिक्षेपात् क परोपदेश इति निराकारपक्षपातेन द्वेषविषधरायितं केषाञ्चित्। तत्रायं मन्त्रपाठः,

धर्माधर्मनिराशंसः सर्वाशी सुखमेधते।
युक्तायुक्तविमर्शेन शून्यो यश्च यथेष्टवाक्॥

तथा हि, युवराजप्रभृतिभिः साकारवादितया आक्षिप्त उक्तश्च साक्षात्। वार्तिककारेण च [121b] साधितोऽयं चित्राद्वैतवादः। तद्भाष्यकारश्च दूष्यते। सोऽयं चौरापराधेन माण्डव्यनिग्रहः। अथवा,

भानुं परिभवत्येव विचक्षुः संमुखः स्थितः।
न सचक्षुस्तदालोकान्मार्गामार्गं तु पश्यति॥

एवं हि वदता न तत्त्वं न संवृतिर्न स्वपक्षो न परपक्षश्चालोचितः। तथा हि,

योगाचाराभिमानात् स्वविदि कृतपदोऽप्यन्यसत्तामवैति
न्यक्कारः कोऽपरोऽस्मान्ननु भवतु [ततो] दुर्लभः संशयोऽपि।
सन्दिग्धात् किं फलं वो भवतु किमपि चेन्निश्चयस्यैव किं वै
नाशंसा संशयोऽपि स्वविदि कथमिदं विद्धि धान्ध्यं विधूय॥

न हि निराकारमित्येव पुरुषकारः कश्चिदस्य येन परवेदनमुपनयेत्, स्थितिहानिप्रसङ्गात्। नापि तद्वाह्यपक्षमुपादानाभेदोऽप्यत्र संभवी। शेषं समानम्।

संवृत्यपेक्षा यदि संशयार्थं
किं नार्थ्यते निश्चय एव तस्याः।
चित्राद्वये चेदनुमाप्यशक्या
चित्राद्वयं तत्त्वत एव गीतम्॥

विचित्रं च चित्राद्वैतमादर्शितम्। तत्र चैकोपाधिरन्यत्र वचनादिविज्ञप्त्या अनुमीयमानमन्यचेतः किमङ्ग साकारवादविद्वेषादङ्गमाकर्षेत्? एकोपाधि तु संवृतावसदेव। संवृतौ चानुमानमन्वेषसे? अथवा,

यावत् संवृतिरस्ति तावदनुमाबाधाच्च सत्संवृति-
र्बाह्येऽसावलसापि नापरधियः सत्त्वं विना प्राणिति।
आसंसारमतोऽनुमानविषयः शास्ता परस्तात् पुनः
प्रत्यक्षस्य पदं स्ववेदनतनोर्मौनं किमन्यत् ततः॥

सुदृष्टतरमेतत् स्याद् दृश्यते स्वयमेव यत्

इति न्यायः। न च तदा परोपदेशापेक्षा, यदापेक्षा तदानुमानमनिवारितम्। तन्निवारणमेवाद्वयसाक्षात्क्रियोच्यते। तदपि न दूरमस्माकम्। आकाशीभाव एव हि भवतोऽतिरिच्यते, न च तेनानुमानमन्यद् वा। तस्माद् गम्भीर एवायं विषयः तदनिश्चयेऽपि सत्ताधिमोक्षे यथाशक्तिपरीक्षिताप्तोपदेशेन प्रवर्तमानो व्यवहारः कथं परिहर्तुं शक्यः? मध्यमानयेऽप्ययमेव न्यायः, सांवृतत्वादात्मपरतादेः। न च तत्र परोऽपि संवृतौ प्रतिभाति तावदिति शक्यम्, तदाप्यनुमानैकशरणत्वात्। न च मध्यमाधीमात्रवादयोर्भेदस्तत्त्वत इत्युपपादितमेतत्। अपि च,

प्रतिभासोपममखिलं केचित् प्रतिभासमेव विदुरन्ये।
सकलार्थशक्तिशून्यं केषा[ञ्चित्] कियदन्तरं तदिह॥

अपूर्वोऽयं शून्यतावाद इति चेत्? युवराजेनैकेन दर्शितेऽवान्तरप्रमाणपुरुषसंवादोऽप्यतिरिच्यते, किमन्यसाहाय्यकेन? उक्तं च चन्द्रप्रदीपे,

बहूजनो भाषति स्कन्धशून्यतां
न च प्रजानन्ति यथा निरात्मकाः ।
ते अप्रजानन्त परे हि चोदिताः
क्रोधाभिभूताः परुषं वदन्ति ॥

इति । तस्माद्विचारः शरणमिति सोऽपि यथाकथञ्चित् कृत एव ॥

कथं तर्हि स्थितिचतुष्ट[122a]यव्यवस्थेति चेत्– उच्यते । नानयोर्बाह्यवादवद् द्रव्यत एव भेदः, किं त्वभिन्न एव वस्तुनि प्रतिपाद्ये विधिनिषेधद्वारव्यवहारः कृतः । स च विनेयभेदात् । द्विविधो हि संक्षेपाद् विनेयजनः, आरोपचरितोऽपवादचरितश्च, तत्रापवादचरिताशयवशात् प्रतिभासमात्रपर्यन्तसत्तोल्लेखिनी विधिमुखेन भगवतो देशना, तावता विज्ञाननयप्रसिद्धिः । आरोपचरितं तु प्रति सर्वधर्मशून्यतादेशना प्रतिषेधमुखेन मध्यमास्थितिरित्युच्यते । सर्वारोपव्यवच्छेदेऽपि हि चित्रप्रतिभासमात्रमिदमिदानीमशक्यापह्नवमिति स्वयमाक्षेपात् । उच्छेदचरितस्यापि विज्ञाने सत्तां गृह्णतो प्रतिभासमात्ररूपैवास्यापि सत्तेत्येकसिद्धान्तनिष्ठा, साधर्म्यवैधर्म्यवाक्यवत् । आरोपचरितस्य प्रायशः संभवापेक्षया तन्मुखदेशनाविस्तरः । तथा हि,

प्रकृतिविमले सर्वारोपप्रपञ्चविवेकिनि
स्फुरति यदिह न्यस्तं किञ्चित्तदेव सुदुःसहम् ।
निरवधिरयं क्षिप्तो भारस्तथा तु वृथा परै-
श्चिरमिव यथा भावस्यात्मा तलेन तलं गतः ॥

अतएव विकल्पितविशेषणमनपेक्ष्य सर्वमेव नास्तीत्यपि साधु समारोपशीलं प्रति । स ह्यलस इव गाढप्रेरितो भित्तौ स्थास्यतीति भावः । तदनयोरेकवंशतया तत्त्वतो बान्ध[व]त्वादमूलकः कलहः । यथा,

सर्वशक्तिवियुक्तेन प्रकाशेन शतापि किम् ।
शक्त्यभावान्न कार्यं स्यात् स्वरूपं तु क गच्छतु ॥

न चात्र प्रमेयभेदः, अन्यत्र सच्छब्दप्रयोगाप्रयोगाभिमानात् । न चेच्छाचरितस्य शब्दस्य प्रयोगेऽप्रयोगे वोपचयापचयाविति कलहवारणमपि सुकरम् । ये तु प्रतिभासमानमप्यपवदन्ति, चित्राकारमप्रकाशं प्रकाशसंज्ञितमतिरिक्तमारोपयन्ति, अर्थशक्त्यादिकं वा साध्यमपूर्वम्, तेऽर्थशक्तिमात्रकल्पकेभ्योऽपि विज्ञानवादिभ्यो दूरमपक्रान्त-

त्वात् न बन्धुत्वभाजः। कलहश्चैकपर्यवसान इति। तस्माद् वस्तुतो मध्यमायोगाचारयोरप्यद्वैतमेव। नापि स्थितिचतुष्टयव्यवस्थादौःस्थ्यम्, सर्वत्राविरोधाच्च समन्तभद्रत्वे अपि नानिर्वृतिः॥

यत् तूक्तम्, नोचेत् नित्यमिदमद्वयमेवेति। छेकोक्तिरियं निराकारनिरसनपरा, इतरमाध्यमिकापेक्षया वा। तत्त्वतस्तु,

नासत्प्रकाशवपुषा न च सत् तदन्यै-
रेकेन न द्वितयमद्वितयं न ताभ्याम्।
इत्थं जगद् यदि चतुःशिखरीवियुक्तं
को भाष्यकारमतमध्य[म]योर्विशेषः॥

अर्थक्रियापि परमार्थत एव येषां
तेषां प्रकाशवपुषोऽपि निषेध एव।
तेषां भिदा भवतु किं तु निसर्गदुर्गो
मार्गोऽयमात्मविदि साहसभारसारः॥

भाष्यकारस्य च प्रतिराज[122b]स्थानीयस्योत्थापनम्, परप्रसिद्धया वा। नायकस्तु वार्तिककार एवात्र युवराजनीतिप्रसाधनपदे संप्रतीत्यभिव्यक्तमेतत्। किं च भूयः,

यन्मध्यमामवतरन्नपि न स्ववित्ति-
मुल्लंघते स्वरुचिमाह यदाकृतीनाम्।
यत्कार्यकारणगुणं च निराकरोति
रीतिस्ततो नयनिधेरपि सैव सिद्धा॥

क्रूरासंख्यविपक्षराक्षसमुखाद् यः शासनस्यावने
शास्तुर्मूर्त इव प्रभावमहिमाचार्यः स्तुतिस्तस्य का।
कस्यामन्दविमर्दमन्दरगिरिव्यापारमासाद्य वा
धन्यानां परमार्थसम्पदि मुदे दुर्गाधमेयाम्बुधिः॥

पोतेनेप्सितमाप्यते जलनिधावित्युक्तिमात्रान्वयाद्
आरब्धं शिशुनापि चापलबलाच्छ्रुत्वापि भीतिर्यतः।

तत्तीरान्तमियाद् विनाशमविशन् यद्येष मुख्यः सुधा-
सिन्धोरस्य गुणः स वेपितवियद्वेलावलीमालिनः ॥

साक्षात्ख्यातकुमारमूर्तिमहिते मञ्जुश्रियां शास्तरि
प्राप्योद्भेदमिदं पदं प्रति शिशुक्रीडानुकारेऽपि यत् ।
श्रेयस्तेन जनोऽयमस्तु परितो निर्यन्त्रमैत्रीमय-
ज्ञानश्रीवशितोपनीतपरमानन्दैककन्दाङ्कुरः ॥

॥ उभयाद्वैतपरिच्छेदः षष्ठः ॥

॥ समाप्तं चेदं बलाबलपरीक्षामुखेनारब्धं साकारसिद्धिशास्त्रं.
कृतिर्महापण्डितज्ञानश्रीमित्रपादानामिति ॥



# ॥ साकारसंग्रहसूत्रम् ॥

## [ प्रथमः परिच्छेदः ]

प्रज्ञा येन खलीकृताम्बरदशामाकृष्य नः प्रेयसी
सासूयं सदसि स्थितेषु कृतिषु प्रख्यातकीर्तिष्वपि ।
क्रूरन्यायमयो निराकृतिनयो दुःशासनः साम्प्रतं
सोऽयं मद्भुजपञ्जरे निपतितः संरक्ष्यतां कौरवाः[1] ॥१॥

साकारेतरमध्यमासु कृतिनामुत्थाप्य नानाविधा
विक्रान्तीर्युवराजनायकनये व्यक्ते ममायं भरः ।
श्रीनागार्जुनपादसंमतिपदे भाष्यान्तिमैर्वर्णिते
तन्न्यूनाधिकचिन्तनाय सफले मध्यस्थबुद्धेः श्रमः ॥२॥

साकारत्वं मतीनां भवशमनियमः सुन्दरं बुद्धरूपं
हेतोर्व्याप्तेश्च हानेर्न तु सदिति सदित्येव वास्तु स्ववित्तेः ।
आर्याचार्याविरोधः प्रगुणपरिचयो धर्मकायो नयौ च
मुक्तौ स्थित्योरभेदः परम इति परं शास्ति साकारसिद्धिः ॥३॥

आवेणिकाखिलगुणाभरणाभिरूप-
रूपस्ववित्त्यधिगतामलधर्मधातुः ।
धातुत्रयीहितलवानिकरैककन्द-
कन्दर्पकेतुरवतादकनिष्ठनिष्ठः ॥४॥

तत्साधनप्रवणशास्त्रपरम्पराया
यत्नाद्विचित्रमतिमात्रजगत्प्रसिद्ध्या ।
ध्वस्तोऽखिलस्तदपवादिषु तीर्थिकौघ-
स्तन्मार्गसंगमगुणप्रथितास्त्ववार्याः ॥५॥

---

१. तुल० वेणीसंहारम् ३. ४७

एकेतरात्मविकलः किल भासनेऽपि
चित्राकृतिव्यतिकरोऽयमसत्य एव ।
तत्रापि सत्यमपरं स्वविदभ्युपेतं
तन्मात्रशेषमवदानमिति क्व नाथः ॥६॥

युक्त्यागमोक्तियुवराज[123a]नयानुगोऽय-
मध्वेति साकृतिनये निहितः प्रवादः ।
वादेस्थिताविव विवादिमतक्रमेण
लेखाविधेस्तु स नयोऽजनि विप्रकीर्णः ॥७॥

समासतस्तेन करिष्यतेऽयं
तदर्थसंग्राहकसूत्रकोशः ।
परार्थचर्या हि भवेन्नवेयं
स्वार्थस्तु तत्त्वाभ्यसनादवार्यः ॥८॥

प्रकाशो नाम न स्वप्नेऽ[प्य]नाकारोऽनुभूयते ।
ततोऽदृश्यमतस्यास्तं बाधकं न तु साधकम् ॥९॥

जडत्वेन गुणादीनामदृष्टिः सविशेषणा ।
बाधनेऽपेक्षते तावन्न विलम्बः स्वसंविदः ॥१०॥

बोधात्मनि सिते भासमाने सिद्धाथ बोधधीः ।
प्रतीयमानेऽजां वेत्यगवि गोत्वगतिर्न किम् ॥११॥

किं च [ प्रदेशो ] भिन्नश्चेद्बाध्यो भेदनिश्चयः ।
अभेदे तु प्रदेशस्य स्वरूपाभेद एव सः ॥१२॥

न वातातपयोरस्ति प्रतिघात्यणुपुञ्जयोः ।
देशाविभेदो बुद्धिस्तु तथान्वेति स्थवीयसी ॥१३॥

प्रतिघातात्ययान्तेन देशाभेदोऽस्तु वा सितेः ।
अवयव्यणुरूपत्वविकल्पे सैव दूषणा ॥१४॥

अभेदभा[स]ने यथा क्षणयोर्बाधकाद् भिदा ॥१५॥

अभेदभासनान्नास्ति क्षणयोर्व्यवसैव तु ।
अस्ति नीलधियोः स्पष्टं नान्यथा क्वचिदेकता ॥१६॥

न बाधापर्युदासोऽस्ति साधकं प्रमितिद्वयम् ।
प्रसज्यपक्षे बाधाया हानिस्तावद् दुरन्वया ॥१७॥

कदाचित् केनचिद् बाधान्नीलवद् बोदितेव सा ।
बाधास्फुरणमात्रं तु सन्दिग्धे वितथेऽपि सत् ॥१८॥

ततो न भेदसिद्ध्यर्थं भेदो धर्मः स्वतो यतः ।
क्षणयोस्तु सतोर्भेदः कार्यकालभिदा भवेत् ॥१९॥

न चैवमेककालत्वे कार्यभेदेऽप्यपोद्धृते ।
अभेदभासिनो दीपपीतस्येव प्रकाशिनः ॥२०॥

किं च बाधात्र नान्नेति पृथग्भासे द्वयोर्भवेत् ।
बाधायोग्यस्वभावस्य विभागेनोपलम्भतः ॥२१॥

न चानाकारभागस्य पृथग्भासोऽस्ति नीलतः ।
देशाव्याप्त्यवसायस्तु बाधकेऽस्यैव साधकः ॥२२॥

सिद्धोऽपि तत्र हेतुश्चेन्न समर्थः प्रकल्प्यते ।
नूनं न साध्यसंबन्धो नाकारेऽपि ततः क्षमः ॥२३॥

भासनं भास इति च धर्मो नीलेऽस्ति भासिनि ।
तस्य स्वभावभूतत्वाद् बाधाबाधौ समौ द्वयोः ॥२४॥

न नीलस्य प्रकाशश्चेत् साहसं किमतः परम् ।
परतोऽपि भवन्नस्य प्रकाशोऽशक्यवारणः ॥२५॥

नान्यतोऽपि प्रकाशोऽस्य प्रकाशोऽस्यान्य एव चेत् ।
न तन्नीलं प्रकाशेत प्रकाशोऽन्यस्य किं [ फलम् ] ॥२६॥

यतः कुतोऽपि वा तस्मात् प्रकाशोऽस्यानपह्नवः ।
दीपेन भासमानस्य घटादेः किं न भासनम् ॥२७॥

तस्य बाधोक्तिरफला धर्म्यबाधावकाशतः ।
यतस्तद्भासनं तत्तु भासमानं न दृश्यते ॥२८॥

यदि प्रकाशो नीलादिः किं प्रकाशान्तरेण वः ।
अथाप्रकाशो नीलादिः किं प्रकाशान्तरेण वः ॥२९॥

ध्वस्तोऽन्येन प्रकाशो हि प्रसिद्धमपरं न च ।
कस्या[123b]बाधः कुतो हेतोः सर्वस्याश्रयसंशयात् ॥३०॥

अथास्ति स्फुरणं तावन्नीलधर्मस्तु तन्मतम् ।
तस्याबाधनतो भेदसिद्धौ सिद्धं समीहितम् ॥३१॥

भासमानस्य नीलस्य तावद्धर्मेण भाषया ।
अवश्यभाव्यं तद्भेदप्रतिज्ञान्या पटुः सहा ॥३२॥

कुतश्च भासमात्रं तदबाध्यं स्वविदो यदि ।
स्ववित्तावपि नीलादि किं न बाधाभिधावति ॥३३॥

स्वसंवित्तिर्न नीलस्य यदि किं न प्रकाशते ।
प्रकाश्यतां परेणेति निषिद्धमिदमीदृशम् ॥३४॥

असत्त्वान्न परत्वं चेत् स्वं नेत्येव कुतोऽस्य वित् ।
अस्वभासनशक्तिश्च निमील्याक्षि निगद्यते ॥३५॥

अथ कल्पिततादात्म्यादेतदन्योन्यसंशयः ।
भासः कल्पिततादात्म्याद्भासात् तादात्म्यकल्पनम् ॥३६॥

कल्पितं क्वचिदर्थे च नोपयोगीति संमतम् ।
इयन्तं कालमधुना श्रद्धेयमिदमप्यभूत् ॥३७॥

तेनान्यासंभवाद् भ्रान्तिवासनोपप्लवान्मनः ।
अलीकरूपैर्भातीति प्रक्रियामात्रपोषणम् ॥३८॥

साध्यशून्यश्च दृष्टान्तः स्वप्नोऽलीकैरितीह च ।
स्वादिः सदार्थान्यार्थाभासनं केन कस्यचित् ॥३९॥

अविद्ययापि निर्भान्तः आकाराः सन्तु तत्कृताः ।
प्रकाशास्तु [प्र]जायन्ते यथा दीपः स्वहेतुतः ॥४०॥

तथापि हेत्वपेक्षा चेत् स्वप्रकाशत्वबाधनी ।
भिन्नोऽप्यनुभवोऽन्यस्मादुदयन् किं स्ववेदनः ॥४१॥

तत् क्वचित् स्वविदोऽभावान्नास्ति व्यवहृतिर्भवेत् ।
भवेद् वाकारपुञ्जेऽपि समानन्यायसंभवात् ॥४२॥

भासमानस्य च भवेत् स्वप्रकाशः परेण वा ।
नीलादाविति चिन्तेयं न स्वभासिन्यनाकृतौ ॥४३॥

न च कार्यतया भासमात्रं हेतिभिराकृतेः ।
स्वसंभवेऽन्यव्यापारापेक्षं कार्यं हि कथ्यते ॥४४॥

शक्त्यभावाच्च कार्यत्वाभावस्तेनेव बाधितः ।
आकाराद‍ाकृतेर्जन्मदृष्टेरन्यत्र चिन्त्यताम् ॥४५॥

न वा शक्तं सितं कार्यं किं नान्यापेक्षसंभवात् ।
शक्त्या व्याप्तं तदिति चेच्छक्तिरप्यनुमीयताम् ॥४६॥

कार्यत्वे हि न सन्देहः शक्तिः साध्या तु संशयात् ।
केशाकारोऽपि नाकार्योऽध्यस्तकेशास्त्वशक्तिकः ॥४७॥

दृष्टा च प्रागुपादानाभावे कस्य प्रकाश्यता ।
प्रकाशधर्मा नीलोऽयं तस्माज्जातोऽभ्युपेयताम् ॥४८॥

अबाधया च भिन्नत्वे बाधाभावः कुतो मतः ।
स्वसंवेदनसामर्थ्यं संप्रत्येव निराकृतम् ॥४९॥

अनारोपितभावाच्चेदनारोपमतिः कुतः ।
अबाधयानारोपश्चेदेतदन्योन्यसंश्रयम् ॥५०॥

प्रकाशस्य प्रकाशत्वं नारोप्यं रूपमेव तत् ।
नीलस्यापि न नीलत्वमारोप्यं रूपमेव तत् ॥५१॥

न प्रकाशं विना नीलः प्रकाशस्तं विनापि चेत् ।
अन्योऽपि व्यापको धर्मः कल्पितः को न तादृशः ॥५२॥

न च प्रकाशः पीतेऽपि नील एव स्थितो हि यः ।
सामान्यमन्यथा [124a] कस्मादकस्माद्विनिवार्यते ॥५३॥

अन्यत्वे च यथा नीलं न प्रकाशं विना तथा ।
नर्ते नीलात् प्रकाशोऽसौ सप्रकाशोऽथ साकृतिः ॥५४॥

मिथश्चेद् व्यभिचारेण भेदो नीलोत्पलेन किम् ।
चक्षोदकेऽपि भेदः किं [किं] न रूपनिरूपणात् ॥५५॥

बीजेऽपि कालभेदेन तर्जन्या भेदरूपणे ।
मानेन भेदोऽभेदो वा नैवं नीलप्रकाशयोः ॥५६॥

नीलधर्मः प्रकाशोऽस्मान्न भेद्यो भेदिनः पुनः ।
कल्पितस्य स एवात्मा भण्यते भासिनो न किम् ॥५७

कल्पि[तं] तस्य जात्यादे रूपं किं न तदेव तत् ।
प्रमाणेन तु तत्सत्यमसत्यं वेति चिन्त्यते ॥५८॥

तेन भानेऽपि नीलादिरलीको वस्तुसन्मतः ।
अयोगाद् बाधकस्येति विभागः किं कृतो भवेत् ॥५९

न[वा त]स्य प्रमासिद्धः शक्तियोगोऽपि संभवी ।
आकृतिं साकृतेरेव सामर्थ्यस्योपलम्भतः ॥६०॥

विरुद्धधर्माध्यासाच्च न विना भेदसाधनम् ।
धर्मौ विरुद्धौ भिन्नाधिकरणौ यदि सिध्यतः ॥६१॥

देशकालाकृतिकृतो भेदोऽधिकरणस्य च ।
न संभवी नीलधियोस्तत् क धर्मविरोधिवत् ॥६२॥

देशकालप्रतीभासभेदाभावेऽपि भेदनम् ।
नीलोत्पलादाविव तद् भवतो यदि सिध्यति ॥६३॥

अन्तः स्फुरत्सुखाद्येव स्वसंवेद्यं मनो यदि ।
नीलाद्याकारविरहादनाकारं च संमतम् ॥६४॥

प्रतिभासाद् यदि ज्ञानं सुखं सोऽस्ति सितेरपि ।
अभेदेन प्रकाशश्चेत् सुखाद्यैवं सितेरपि ॥६५॥

यथा भिन्नं सुखान्नीलं नीलाद् भिन्नं तथा सुखम् ।
यथा नाहं मतं नीलं तथा नाहं मतं सुखम् ॥६६॥

अहं सुखीति व्यवहृन्नाहं नीलीति चेन्मतिः ।
व्यवहारभावाभावौ नार्थसाधनबाधनौ ॥६७॥

साधारण्याभिमानेन न भवेदपि सा स्थितिः ।
तथापि क्वचिदस्त्येव गोमान् दण्डी दुकूलवान् ॥६८॥

अन्तः शातादिविषयं बहिः शीतादिगोचरम् ।
वेदनं तत्तदाकारं बाधकमस्तमेव च ॥६९॥

हानादेशवितानस्य बाधकासंभवः किल ।
दोषो देशेऽणुमात्रेऽपि कियत्यल्पे विहन्यते ॥७०॥

कुत्राप्यवर्तमानस्य कदाचिन्न हि वर्तनम् ।
तदस्य विद्यमानत्वं सुखादेः साधु साधितम् ॥७१॥

विद्यते यदि कुत्रापि देशस्तस्य स एव हि ।
शरीरादबहिर्भूता वेद्यन्ते च सुखादयः ॥७२॥

मानं हस्तवितस्त्यादि ज्ञायते नियतं न चेत् ।
ततः किं भूभुजामेव भूमाननियमोऽर्थवान् ॥७३॥

स्पर्शनात् स्पृश्यरूपाभ्यां चान्यत्र विषयेन्द्रिये ।
न माननियमोऽस्तीति तत्रापि किमबाधनम् ॥७४॥

यत्रापि निश्चयो माने शक्यस्तत्रापि नाणुशः ।
निश्चयेऽप्यङ्गुलादीनां तत्त्वतो न मितिस्ततः ॥७५॥

तडागगाहने व्यक्तं तप्तस्योर्ध्वाधरादितः ।
सुखमानं स्फुटत्वेन तत्रारोप्यो न चान्यतः ॥७६॥

तत्स्पर्शनेन्द्रियद्वारा मितेस्तद्देशतामतिः ।
इत्यपि ध्वस्तमियता भ्रमत्वादस्फुटाप्तितः ॥७७॥

इन्द्रियभ्रान्तिरेषा चेत् न ततोऽन्यसुखात्ययात् ।
इदमेव हि नः सौख्यं यत् [124b] शातं वेदनं स्फुटम् ॥७८॥

रूपादिष्वपि वा कास्था चक्षुरादीन्द्रियाश्रयात् ।
तथाप्रतीतेराख्यातुं शक्यत्वादपरं समम् ॥७९॥

निर्भासनियमाज्ज्ञाने¹ यद्यदेशाः सुखादयः ।
क्षणरूपापरिज्ञानादकालं सकलं जगत् ॥८०॥

यथा नियतकालत्वं तथा नियतदेशता ।
बाधकावञ्चनात् तस्मान्निराकृतिगिरात्र किम् ॥८१॥

अस्तु वा बाधकाभावः सत्ताश्वासस्तु किंकृतः ।
एकेतरत्वयोरेकस्थित्यसिद्धेरदेशतः ॥८२॥

न चादर्शनमात्रेण बाधाभावोऽपि सिध्यति ।
एकबाधवियोगेऽपि स्याद् वा बाधान्तरोदयः ॥८३॥

अनुमानादबाध्यत्वसाधने यदि साधनम् ।
कथञ्चिदाश्रयासिद्धिदूषणं नातिवर्तते ॥८४॥

दुःखद्वेषादयोऽप्येवं स्वभावाः सर्वदेहिनाम् ।
हानं स्वतोऽप्यनिष्टेश्चेदसतोऽपीच्छया स्थितिः ॥८५॥

यद् यथा भाव्यते चेतः तत् तथैव स्फुटीभवेत् ।
व्योमाकारमपि स्याच्चेन्न प्रयोजनहानितः ॥८६॥

संसारदोषैरस्पृष्टं लक्षणव्यञ्जनोज्ज्वलम् ।
आत्मभावं विहाय त्वं विहायस्त्वं यदीच्छसि ॥८७॥

---

¹ ...नियमेति मातृकायाम् ।

यदि तावत् खवद् व्यापि तद्वदेवास्य दूषणम् ।
ज्योत्स्नातडिन्मणिज्वालास्फुलिङ्गादितुलास्वपि ॥८८॥

सांशेऽवयविवद् दोषो निरंशे परमाणुवत् ।
न चापरः प्रकारोऽस्ति मुधैवादेशघोषणम् ॥८९॥

गुणास्तदेकनियतास्तदेकनियता रुचिः ।
तदेकनियतं मानं बाधेनैव समः परः ॥९०॥

पर एव जिनो येषां तैः स्वशास्तापि हारितः ।
ऋजुक्रमगृहीतो य आगमाल्लक्षणोज्ज्वलः ॥९१॥

येन रूपेण यन्नैकं नानेकं तेन तन्न सत् ।
यथा शातमशातेन भासश्च सितिना तथा ॥९२॥

न धर्मो धर्मिणो भेत्तुं शक्य इत्युक्तमेव हि ।
न च भिन्नस्य भानस्य न्यायेनानेन साधनम् ॥९३॥

यदि नाम न नीलेन प्रकाशस्यास्ति वस्तुता ।
तथापि भिन्नभानस्य वस्तुत्वं केन सिध्यति ॥९४॥

बन्ध्यासुतोऽग्निरूपेण नैकानेको न तेन सन् ।
ततस्तस्यापि वस्तुत्वं किमस्तु भवतो मितेः ॥९५॥

न सन् बन्ध्यासुतः सिद्धः प्रकाशः सिद्ध एव सन् ।
असिद्धो भेद एवास्य साध्यते चेत् तदप्यसत् ॥९६॥

तत्त्वतः सत्यरूपेण सिद्धिर्भेदस्य चेन्मता ।
सा न सिद्धा न हि व्यापिविरहो नास्त्यवस्तुनि ॥९७॥

प्रतीतिमात्रं सिद्धिश्चेद् भिन्नोऽप्येवं न तात्त्विकः ।
व्यावहारिकभेदस्तु किं न पीतसितस्य ते ॥९८॥

यदि प्रकाशसत्तां च बाधकावसरं हनन् ।
साधयेत् तावतैवास्तु भेदो मानमिदं वृथा ॥९९॥

तदशक्तावपि व्यर्थमेतत् शौटीर्यजृम्भितम् ।
परस्योपगमः संप्रत्यप्रमा कथमाश्रयः ॥१००॥

नीलभासोरभेदावभासिनोः प्रस्तुता च भित् ।
न चैवमन्वयः शक्यस्तथा साध्यमतः कथम् ॥१०१॥

येन नैकमनेकं यदिति सामान्यतोऽन्वये ।
पीतेनं नैकानेकोऽस्तु नीलभासो न तेन सन् ॥१०२॥

अनुक्तोऽपीच्छया व्याप्तः साध्य आत्मार्थवन्मतः ।
विशेषेणान्वयस्तस्मात् सामान्ये सिद्धसाधनम् ॥१०३॥

यथा शातमशातेन भिन्नेनैवातदात्मकम् ।
तज्जातिनैव पीतेन [125a] नीलभासोऽस्तु तादृशः ॥१०४॥

नैकानेकप्रकाशश्च नीले[ने]ति यदोच्यते ।
कस्तदास्तु प्रकाशार्थो धर्ममात्रं यदीष्यते ॥१०५॥

धर्मिरूपादभिन्नस्य तस्य तेनैव सा स्थितिः ।
ऐक्यानैक्यं प्रकाशस्य नीलेनैवेत्यसिद्धता ॥१०६॥

तस्यापि नैक्यानैक्यं चेदनेकान्तोऽपि वाञ्छते ।
पिण्डेन नैकानेकं सद् वस्तुसद् गोत्वमस्तु किम् ॥१०७॥

कर्तृसाधनपक्षेऽपि दोष एव दुरुद्धरः ।
प्रकाशमानरूपं हि शून्यं तेनात्मना भवेत् ॥१०८॥

अर्थान्तरं प्रकाशाख्यं यदि सान्वयसंज्ञकम् ।
नीलादिभ्योऽतिरिक्तस्य न सत्तास्य फलं न च ॥१०९॥

निरन्वये च हेतूनामाश्रयासिद्धिरत्र ते[1] ।
व्यावृत्तिमात्रसिद्धौ च प्रस्तुतेऽनुपयोगिता ॥११०॥

प्रत्यक्षप्रतिवेद्योऽयं प्रकाशो धर्मकारि चेत् ।
प्रत्यक्षगोचरो धर्मी नीलादन्यो न विद्यते ॥१११॥

1. °त्रमे इति मातृकायाम् ।

परत्वमेव चेत् साध्यं तत् सिद्धं कथमर्थ्यते ।
साध्यं तव किमप्यस्तु धर्मी कार्यस्त्विदन्तया ॥११२॥

परिनिष्ठित एवार्थो वस्तुरूपो यदा मतः ।
व्यवच्छेदद्वये निष्ठानपेक्षायां फलं न वः ॥११३॥

ननु प्रकाशः सामान्यं धर्मि किं भेदनिष्ठया ।
विशेषनिष्ठया साध्यविधूतेश्च न तच्छ्रमः ॥११४॥

[स] निष्ठितविशेषोऽपि विवादपदमेष यः ।
धर्मी तदेका व्यावृत्तिरन्या साध्यं ध्वनाविव ॥११५॥

युक्तो व्यावृत्तिमात्रेण साध्यसाधनसंस्थितिः ।
धर्मिरूपं तु भेदेन दृष्टमेवोपयुज्यते ॥११६॥

सामान्यधर्मयोरेव व्याप्तिः शक्यप्रतीतिका ।
अयमेवमितीत्थं तु धर्मी सर्वत्र भेदभाक् ॥११७॥

सामान्याश्रयणं यत्र तत्रावश्यमपेक्षते ।
*विशेषदर्शनं सिद्धिः सामान्यस्यैव नान्यथा ॥११८॥*

न विशेषं विना कापि सामान्यस्य व्यवस्थितिः ।
नो चेद्वन्ध्यातनयव्यावृत्तेश्च समानता ॥११९॥

भेदः साध्यस्य दृष्टान्ते हेतोः पक्षसपक्षयोः ।
सामान्यस्याप्यवश्योपदेश्यो धर्मी त्विदन्तया ॥१२०॥

*व्यक्तिभेदाः क्षणित्वादेरप्यमी एव संमता ।*
प्रसिद्धव्यक्तिभेदश्च शब्दो धर्मी तथापरः ॥१२१॥

अप्रकाशपराव्यावृत्तिरतद्वदेवात्र दर्श्यताम् ।
इदन्तया यदि पुरो दर्श्यताकार एव सः ॥१२२॥

ततः प्रकाशः सामान्यं नीलाद्येवेतिवादिना ।
स्वीकृते विविदिष्यन्ते सत्त्वात्मादिनि दूषके ॥१२३॥

सिद्धे धर्मिणि सन्दिग्धो धर्मः साधनमर्हति ।
धर्मिरूपविशेषस्य निष्ठायां तु हतो हतः ॥१२४॥

क्षणिकत्वादिरप्येवं यदि धर्मिणि निष्ठिते ।
हन्येत साधयेत् कस्तं संशयार्थस्य साधनम् ॥१२५॥

येन रूपेण यन्नैकं नानेकं तेन तत्र सत् ।
यथा ज्ञातमज्ञातेन प्रकाशेनासितं तथा ॥१२६॥

विद्युदुद्द्योतसंकाशः प्रकाशः कस्यचित् क्वचित् ।
तमपेक्ष्य स्थिरो बाह्यः प्रकाशेऽलीकता ततः ॥१२७।

अलीकनीलजनने यथा शक्तिर्मता धियः ।
अलीकबोधजनने तथा शक्तिर्न किं बहिः ॥१२८॥

नैकं त्वयाप्यनिष्टेरित्येतदुक्तं न लभ्यते ।
ईदृक्साधनमज्ञात्वा ममानिष्टिर्यतोऽभवत् ॥१२९॥

प्रकाशः केवलो [125b] नापि कश्चित् केनचिदोक्षितः ।
ततोऽनुमानप्रत्याशा प्रत्याशैव हि केवला ॥१३०॥

तेनैकानेकहानिश्चेत् स्वेनैकानेकसंभवः ।
ततः स्वेन स्थितिः साध्या हेत्वसिद्धिस्तथापि वः ॥१३१॥

विपर्ययविवक्षा चेत् यद् यद् येनात्मना हि सत् ।
त[त्त]त् तेनैकानेकं वा भासश्च, स्वेन सन्निति ॥१३२॥

नाद्ये दृष्टान्तसद्भावो भास एव हि संमतः ।
न पक्षे चोपसंहारो विषादात् प्रकृतं न च ॥१३३॥

यो भ्रमः सर्व एवासौ द्विचन्द्रप्रतिभासवत् ।
सत्यसङ्गी भ्रमश्चायं द्वैताभास इतीतरे ॥१३४॥

खण्डद्वयाकारतया जन्म वा द्वैतभासनम् ।
माह्यमाहकरूपावसायी चेति विवक्षितम् ॥१३५॥

अतस्मिन्नतदाकारा वेद्ये सति मतिर्भ्रमः ।
सर्वथा वेद्यहानौ तु न भ्रमो नाम तत्त्वतः ॥१३६॥

यत् किञ्चिदतथाभूतं तथा भावेन कल्प्यते ।
कीदृक् तस्यापराधोऽस्तु कल्पकस्य तु युज्यते ॥१३७॥

कल्पकोऽपि न कश्चिचेद्भ्रमो नाम न कश्चन ।
तन्नासिद्धतया हेतुर्व्यवहारादथ भ्रमः ॥१३८॥

व्यवहारादवितथं बहिरेव कथं भ्रमः ।
अबहिर्व्यवहारे तु [य]दारोपस्तदा भ्रमः ॥१३९॥

आरोपातिक्रमे यस्मात् तत्त्व एव व्यवस्थितिः ।
बाधनाद् वितथत्वेन भ्रमस्तदपि किं भ्रमः ॥१४०॥

भासनेऽलीकमित्यस्तु भ्रमत्वं [वा] कथं भवेत् ।
अतस्मिंस्तद्ग्रहाभावादनलीकमतेरिव ॥१४१॥

द्विचन्द्रप्रतिभासेऽपि भ्रमत्वं यच्च विश्रुतम् ।
द्विचन्द्रग्राहिचित्तस्य तन्न चन्द्रद्वयस्य तु ॥१४२॥

ग्राह्यग्राहकभावेन कल्पितेऽंशद्वये धियः ।
ग्राहकांशे प्रमाणत्वं ग्राह्यांशे भ्रमता कथम् ॥१४३॥

वेद्यत्वे वेदकत्वे च व्यतीते भासमात्रकम् ।
बोधकग्रस्तमप्येतदसत्यं स्यान्न तु भ्रमः ॥१४४॥

वेदकाभिमतत्वेन भ्रमत्वं व्याप्तमिष्यते ।
तद्विरोधिन्यवेदित्वे भ्रमत्वं दूरतो हतम् ॥१४५॥

अन्यथाध्यवसाये तु भ्रमत्वे निर्विकल्पकम् ।
न भ्रमस्तेन तेनैव सत्यसङ्गित्वमस्तु च ॥१४६॥

यद् यत्रावस्थितेऽपैति तत् तद्भिन्नं पटाम्बुवत् ।
प्रकाशेऽवस्थितेऽपैति नीलादीति परे विदुः ॥१४७॥

यद् यत्रावस्थितेऽप्यैति तत् तद्भिन्नं पटाम्बुवत् ।
गोत्वे चावस्थितेऽप्यैति चित्रादीत्यपि गीयताम् ॥१४८॥

अथ गोत्वमगोऽपोहस्तत् तद्धर्मोऽन्वयी कथम् ।
भासोऽपि भासिनां धर्मो नीलादीनां किमन्वयी ॥१४९॥

॥ इति साकारसंग्रहे
निराकारसाधकप्रमाणाभावनिर्णयः
प्रथमः ॥



## [ द्वितीयः परिच्छेदः ]

नाप्यागमाद् गमयितुं शक्यं चित्तमनाकृति ।
न प्रत्यक्षप्रतिक्षिप्ते प्रमाणान्तरसंगतिः ॥१॥

न च प्रवचनेऽप्यस्य बोधकं मुख्यमक्षरम् ।
लोकः स्वाभिनिवेशं तु तत्रैव प्रतिबिम्बयेत् ॥२॥

वासनालुठितं चित्तमर्थाभासमिति श्रुतौ ।
लुठतिः श्लेषणार्थोऽयं नोपघातार्थलोठतिः ॥३॥

विनार्थमर्थाभासा धीः कथमित्यत्र कथ्यते ।
वासनायोगत इति सम[न]न्तरशक्तितः ॥४॥

व्यतिरेकीव निर्देशो न च भेदस्य [126a] वेदकः ।
सुवर्णं कुण्डलाकारं करोतीति न किं वचः ॥५॥

वासनोपहतत्वं चानिष्टरूपोदयान्मतम् ।
प्रवृत्त्याक्षेपि संकल्पसूतिसामर्थ्यगर्भतः ॥६॥

अद्वैतशिखरारोहे न प्रवृत्तिनिवृत्तयः ।
ता एव संसार इति तद्धेतुः कथमिष्यताम् ॥७॥

विनेयचित्तानुसतावस्थापेक्षमिदं वचः ।
तेनार्थाभासमित्येतत् सामान्यं भेदधिष्ठितम् ॥८॥

दर्पणे दृश्यते रूपमिति बालाभिमानतः ।
अनूद्य वेदनाकारे तदारोपनिवारणम् ॥९॥

तथा भावेषु भावत्वं ज्ञानाकारेषु बाह्यता ।
यथा तिमिरिणा दृष्टश्चन्द्रयोश्चन्द्रतासती ॥१०॥

निम्नोच्चविरहाद् बाह्यैकत्वं नास्ति दर्पणे ।
नान्तःप्रविष्टनिर्भासात् पृथक्त्वं प्रतिपातिना ॥११॥

भावैराकारसंज्ञैर्वा लक्ष्यते बोधरूपता ।
सामान्यं ज्ञानसंख्यातमत एवापृथग्वचः ॥१२॥

लोके रूढं पृथगिव ज्ञानमादर्शसन्निभम् ।
आकाराः प्रतिबिम्बाभा उभयोः कल्पितं न सत् ॥१३॥

बोधस्य नैकता बाह्यैः स्वरूपविरहान्नितः ।
नान्यत्वमग्रहग्राग्रैर्न सत्ता चाप्रकाशिनः ॥१४॥

ऋजुक्रमेण चादर्शे एकानेकत्ववर्जितम् ।
इति युक्तं न भावाश्च युज्यन्ते दर्पणोपमाः ॥१५॥

सर्वधर्माः स्वधीरेव स्थिताश्चित्ते समाहिते ।
अबाध्यां कल्पितैर्धर्मैः शून्यतामाश्रिता यतः ॥१६॥

तत्प्रकाशतया चित्तं स्वमेवैते सितादयः ।
कल्पितास्त्वप्रकाशत्वान्न धर्मा न च धर्मता ॥१७॥

शून्यताख्या यथा भाति विकल्पे भेदिनीव सा ।
भिन्नया हि तया शून्या धर्मैर्धर्मा न तैरमी ॥१८॥

बाह्यग्राह्यस्य हानेऽपि ग्राहकस्थितिवारणम् ।
तथतारम्बणे स्थित्वा चित्तमात्रव्यतिक्रमः ॥१९॥

आरोप्यहानादारोपविषयस्यापि मास्म भूत् ।
चित्रस्योच्छेददृक्पात इत्यनाभासवारणम् ॥२०॥

निराभासे स्थितो योगीत्याभासः कल्पना मता ।
एकापोहेन यत्तस्यामीपदाभासते बहिः ॥२१॥

समन्तभासादाभासः प्रपञ्चो वा कदम्बवत् ।
विचित्रकल्पनारूढो हेयश्चित्रेऽपि चेतसि ॥२२॥

तदागन्तुमलध्वंसात् तदाकाशतलोपमम् ।
ज्ञेयेनाभितुला ज्ञेयनिर्विशिष्टतया स्फुटा ॥२३॥

प्रकाशमात्रं तदिदं दीपसन्तानसन्निभम् ।
अप्रकाशाङ्गविरहान्न स्वाकारप्रकाशनात् ॥२४॥

अप्रकाशकणस्यापि न पूर्वमपि संभवः ।
भ्रमव्यवस्थापेक्षा तु समलामलतास्थितिः ॥२५॥

बाधे नाम निमित्तानामाकारस्य च न क्षतिः ।
नाममात्रं मुनेर्धर्माः सन्तु वा कल्पितात्मना ॥२६॥

दृष्टा विकल्पाकारेऽपि दृष्टताख्यातिभातयः ।
कथं पश्यसि संख्यां भो भाविते प्रतिभासते[1] ॥२७॥

निराभासे स्थितिवतोऽप्यविकल्पस्थितिर्भवा ।
सतो ख्यानमसत्ख्यानं व्याख्यात इयता भ्रमः ॥२८॥

अवश्यादेयमेतच्च सतोऽख्यानं किमन्यथा ।
परास्फूर्तौ न हि भ्रान्तिः स्वास्फूर्तौ च न चित्तता ॥२९॥

अग्राह्यग्राहकस्यातः स्वस्य नावसितिः सतः ।
अवसायोऽसतो ग्राह्यग्राहकस्याप्यतो भ्रमः ॥३०॥

तथा [126b] चाभूतकल्पोऽस्ति द्वयं तत्र न विद्यते ।
न ग्राह्यग्राहकादन्यद् द्वयशब्देन चोच्यते ॥३१॥

अभूतपरिकल्पास्तु चित्तचैत्तास्त्रिधातुकाः[2] ।
विहाय चित्राकारं च का त्रिधातुव्यवस्थितिः ॥३२॥

न चाकारातिरिक्तोऽंशश्चित्तमापादितं क्वचित् ।
वैभाषिकमतिक्रम्य स्थितिरेषा हि दूरतः ॥३३॥

अभूतं कल्प्यते यत्र येन वा पृष्ठ्यकल्पतः ।
अभूतपरिकल्पोऽसौ बुद्धिश्चित्रैव युज्यते ॥३४॥

अभूतद्वितयारोपापेक्षयान्वयसंगतेः ।
अदृश्ये त्वतिरिक्तांशे नारोपो नाम कस्यचित् ॥३५॥

१. तुल० स० सि० शा० पृ: ४३२ २. म. वि. सू. १. ९

कल्पितं च द्वयं तावन्नीलमेव न भासनात् ।
अतः स्वभावस्तु योऽपि वक्तव्यः कल्पितादिषु ॥३६॥

कल्पितं स्फुरदेवेति साहसं किमतः परम् ।
मरीचिनिश्चयेऽप्यम्भः कल्पितं स्फुरदस्तु किम् ॥३७॥

तथाभ्युपगमे पाथःकार्यं तेनाभिधीयताम् ।
असत्त्वान्नैवमिति चेत्, यदसत् तत् कथं पयः ॥३८॥

आरोपादिति चेत् तर्हि भवत्वारोपमात्रकम् ।
न तु स्वभावस्फुरणं स्फुरणे तत्क्रियास्थितः ॥३९॥

सत्यतैव प्रसज्येत तथा बाधापि किंकरी ।
बाधया तत्क्रियाहानौ, न पयस्तत्क्रियं हि तत् ॥४०॥

तत्पाथः कथमारोपे स्फुरतीति निगद्यते ।
ग्राह्यग्राहकयोरेवमारोपः स्फुरणं न तु ॥४१॥

स्वप्रकाशस्वभावत्वाद् भागयोरुभयोरपि ।
किं ग्राह्यं ग्राहि वा किं स्यात् स्वस्वलक्षणहानितः ॥४२॥

स्फुरदेव ततो रूपं स्वभावोऽस्तु तुरीयकः ।
अदृश्यात्मनि दृश्यस्य कल्पनेत्यपि कापि धीः ॥४३॥

चित्रे च परतन्त्रोऽतो धीः कल्पितविकल्पिता ।
धर्मतारूपनिर्णीतौ व्यक्तमेतच्च लक्षय ॥४४॥

कल्पितस्य द्वयस्यैव परतन्त्रस्य भासिनः ।
रोपापवादौ मध्यान्तविभागे विहतावतः ॥४५॥

सूत्रालंकारमार्यीयं भाष्ययुक्तं च चिन्तय ।
यत्र रूपादिराख्यातः परतन्त्रपरिस्फुटः ॥४६॥

तदाकृतिश्च तत्रास्ति तद्भावश्च न विद्यते ।
तस्मादस्तित्वनास्तित्वं मायादिषु विधीयते ॥४७॥

न भावस्तत्र चाभावो नाभावो भाव एव च ।
भावाभावाविशेषश्च मायादिषु विधीयते ॥४८॥

तथाद्वयाभता चास्ति तद्भावश्च न विद्यते ।
तस्मादस्तित्वनास्तित्वं रूपादिषु विधीयते ॥४९॥

न भावस्तत्र चाभावो नाभावो भाव एव च ।
भावाभावाविशेषश्च रूपादिषु विधीयते ॥५०॥

समारोपापवादान्तप्रतिषेधार्थमिष्यते ।
हीनयानेन यानस्य प्रतिषेधार्थमेव च ॥५१॥

रूपादिष्विति चाभूतपरिकल्पात्मकेष्विति ।
भाष्यीयविवृत्तिं पश्य तस्य विस्तरमेव वा ॥५२॥

नापनेयमतः किञ्चिदुपनेयं न किञ्चन ।
द्रष्टव्यं भूततो भूतं भूतदर्शी विमुच्यते[1] ॥५३॥

प्रत्यक्षवस्तुविषयो विमर्शोऽयं यदीष्यते ।
न चित्रादन्यदध्यक्षं यन्नः शास्त्रद्वयेऽप्ययम् ॥५४॥

धर्मधातुविमर्शोक्तौ धर्मी धर्मगिरोदितः ।
तथा चानन्तरगिरा व्यक्तमेवदितीरितम् ॥५५॥

*अतएव च धर्मस्य पश्चाच्छेदो हि निर्वृतिः ।*
दोषोऽयं स्वीकृतोऽलीकनाम्नाका[127a]रक्षयस्तु हैः ॥५६॥

शून्यता नाम धर्मोऽस्ति रूपादिव्यतिरेकतः ।
यो भाव्य इत्युपालम्भलाभोऽनाकारवादिनाम् ॥५७॥

अर्थान् स विज्ञाय च जल्पमात्रान्
सन्तिष्ठते तन्निभचित्तमात्रे ।
इत्याह निर्वेधपथेऽथ दृष्टौ
प्रत्यक्षताप्तिं खलु धर्मधातोः ॥५८॥

---

१. मध्यान्तविभागसूत्रे पृ: २१

ग्राह्य ग्राहकरूपेण यो द्वयेन विवर्जितः ।
इति तस्य विशेषं च न त्वाकारद्वयं क्वचित् ॥५६॥

द्वयलक्षणहानिस्तु सर्वत्रेति परिस्फुटम् ।
न ग्राह्यग्राहकत्वं चाकृतीनामत एव च ॥६०॥

द्वयाभासाः प्रवर्तन्ते न विकल्पाः पुनश्च ते ।
व्यवदानार्थनेत्यत्राप्याभासोऽध्यवसायिता ॥६१॥

सर्वज्ञेयेष्वसंमूढं न च तेष्वामुखं सदा ।
इत्यत्र विवृतौ हेतुरनाकारतयेति यः ॥६२॥

[1]ग्राह्यप्रकाराभावेनेत्यर्थो बिम्बोदयेऽपि हि ।
एतच्चानन्तरं मूलभाष्ययोरीक्षणे स्फुटम् ॥६३॥

एवं मध्यान्तभागस्य [मूले] भाष्येऽपि ईदृशे ।
अग्राहकत्वादित्यर्थो विभक्तः साधु टीकया ॥६४॥

तथा [च] तद्भाष्यकृताधर्मधर्मतयोन्नये ।
अविकल्पकविज्ञानलक्षणप्रक्रमे स्वयम् ॥६५॥

अरूपीति पदं ग्राह्यग्राहित्वेनानिरूपणात् ।
अनाभासमितीदं चागोचरत्वेन वर्णितम् ॥६६॥

न त्वाभासवियोगेन ग्राह्याभावेन चेत् तथा ।
किमनेन प्रयासेन मुख्यमेवोचितं वचः ॥६७॥

नास्मिन्नाभासते किञ्चिद् गोचरत्वेन संमतम् ।
इति व्युत्पत्तिरिष्टेह तस्मात् तन्त्रेऽपि चोत्तरे ॥६८॥

अकिञ्चने निराभासे निरालम्बे निराश्रये ।
चक्षुष्पथव्यतिक्रान्तेऽप्यरूपिण्यनिदर्शने ॥६९॥

यथा निम्नोन्नतं व्योम्नि दृश्यते न च तत्तथा ।
बुद्धेष्वपि तथा सर्वं दृश्यते न च तत्तथा[2] ॥७०॥

---

[1] ०प्रकार० इति मातृकायाम् । [2] उ. त. ४. ७३-४

अत्रापि यदि दृष्टान्तविशेषणगणो विभौ ।
अवश्ययोज्योऽनाभासरूपित्वे तद्वदेव हि ॥७ ॥

आलम्बाश्रययोर्हानिरूर्ध्वाधोऽपेक्षया समा ।
अकिञ्चनत्वमागन्त्वशेषदोषवियोगतः ॥७२॥

खविशेषणमात्रात्तु कृतार्थं पद्यमादिमम् ।
बुद्धेष्विति तथा चेदं बहुत्वं भेदकं ततः ॥७३॥

खसाम्यान्न च नैरूप्यं नैःस्वरूप्यं यथैव न ।
रोपापवादस्थानोच्चावचहान्या तु तुल्यता ॥७४॥

वस्तुरूपेषु नीचोच्चभावसंभावना भवेत् ।
अवस्तुरूपे शङ्कापि नास्तीति खमुदाहृतम् ॥७५॥

यदि चानाकृतिज्ञानमभ्रान्तिर्भ्रान्तिराकृतिः ।
त्रिकायव्यवहारोऽन्तःसंभोगस्य पराभवात् ॥७६॥

भ्रान्तिराकृतिपुञ्जोऽसौ यावत् तावन्न बुद्धता ।
बोधे भ्रान्तिविरोधित्वाद्बुद्धात्मा संकथं भवेत् ॥७७॥

नापि संवृतिरेवासौ कल्पनैव हि संवृतिः ।
न चोपचारात् कायत्वं त्यागस्यैवोपपत्तितः ॥७८॥

बुद्धाधिपत्याद् धन्यानां तदाभासश्च नोचितः ।
निराकारतरास्ते हि बुद्धस्तु भामयाधिकः ॥७९॥

बुद्धाधिपत्यं स्थाने च स्थाने तेषां च धन्यता ।
अण्डभ्रमाणां यदयं तादृक्स्थूलभ्रमोदयः ॥८०॥

यथा च व्याप्तिनित्यत्वे स्वाभिप्रायेण वर्णिते ।
न संभोगे तथा व्याख्या तत्स्वातन्त्र्यमिदं महत् ॥८१॥

सर्वैश्च लक्षणैश्चित्रैर्मण्डितात्मेति चित्र[127b¹]वाक् ।
चक्रेशलक्षणगणाद्विशेषायेति भाष्यकृत् ॥८२॥

१. पृष्ठमिदं दुष्पठम् ।

धर्मकायप्रधानत्वदर्शनायोत्तरेण [2]यत् ।
चक्रेशस्यापि भावोति नालीकत्वाद्यवर्णयत् ॥८३॥

अयं च सूत्रालंकारो विरुद्धो यद्यलीकता ।
द्वयोर्द्वयार्थसंपत्तिः सर्वाकारा प्रतिष्ठिता ॥८४॥

संभोगः स्वार्थसंपत्तिः परार्थश्रीस्तु निर्मितिः ।
प्रतिष्ठिते ते स्वाभाव्ये संभोगे चेति भाष्यगीः ॥८५॥

एवं च धर्मकायस्य कार्यो निर्माणकारणम् ।
स्वार्थसंपदसन् ख्यातिसंभोग इति विप्लवः ॥८६॥

आकाशवादे देहत्वान्न बहुत्वं मुनेरिति ।
बहुत्वं नाकृतिव्याप्तं चित्तचैत्तात्मनामिव ॥८७॥

टीका त्वात्मग्रहाभावान्मुनेः स्वपरहानितः ।
न भूमेति वदन्त्याह देहमात्मग्रहं स्फुटम् ॥८८॥

स्वार्थः परार्थः परमार्थकायता
तदाश्रिता संवृतिकायता च ।
फलं विसंयोगविपाकभावा-
दित्युत्तरेतन्त्रवरेऽथ कोऽर्थः[3] ॥८९॥

स्वार्थः स्वाभाविकोऽन्यार्थः संभोगो मत एव नः ।
प्रस्तावेऽत्र तयोः किं तु परमार्थत्वसंविधिः ॥९०॥

पारम्पर्येण साक्षाद् वा सांवृतस्तौ समाश्रितः ।
निर्माणकायः ख्यातं च निर्माणं [सांवृतं] फलम् ॥९१॥

वदंस्तथागतगुणान्निर्माणं हि त्यजेत् कथम् ।
पारमार्थिकमित्येवं वृत्तौ कायावनूद्य तौ ॥९२॥

आत्मसंपत्त्यधिष्ठाने विधिश्च न विरुध्यते ।
आत्मसंपत् द्विधा रूपनिष्पत्त्याभ्युदयेन च ॥९३॥

---

२. ये इति मातृकायाम् ।  ३. उ. त. ३. १

आद्यायामादिमाधिष्ठा द्वितीयस्य द्वितीयके ।
अचिन्त्यलोकातीतादिख्यातानेे[क]विशेषणे ॥९४॥

अथवात्मनि संभोगे संपत्तौ च तयोर्बलम् ।
रत्नविग्रहवज्ज्ञेयः कायः स्वाभाविकः शुभः ॥९५॥

अकृत्रिमत्त्वात्प्रकृतेर्गुणरत्नाश्रयत्वतः[1] ।
महाधर्माधिराजत्वात् संभोगश्चक्रवर्तिवत् ॥९६॥

प्रतिबिम्बस्वभावत्वान्निर्माणं हेमबिम्बवत्[2] ।
एवं वर्क्षार नाथे तु स्वपक्षरसिकैः कृतः ॥९७॥

संभोगः सांवृतो हित्वा निर्माणं धिक् स्वतन्त्रताम् ।
महाकरुणया कृत्स्नं लोकमालोक्य लोकवित् ॥९८॥

धर्मकायादविचलन्निर्माणैश्चित्ररूपिभिः[3] ।
इत्यादिना प्रबन्धेन यत्रात्रैव प्रदर्शनम् ॥९९॥

उक्तं निर्वाणपर्यन्तजातकादेः पुनश्च यः ।
सर्वत्र देवभवने ब्राह्मयादविचलन् पदात् ॥१००॥

प्रतिभासं यथा ब्रह्मा दर्शयेदप्रयत्नतः ।
तद्वन्मुनिरनाभोगान्निर्माणैर्लोकधातुषु ॥१०१॥

धर्मकायादविचलन् भव्यानामेति दर्शनम्[4] ।
इत्यादि विस्तरस्त[त्र] धर्मकायात् पृथग् गिरा ॥१०२॥

संभोगात्मा न चेत् कोऽन्यः कार्यभारकरो मुनिः ॥१०३॥

क्वचिद् धर्म्यं चक्रं बहुमुखशतैर्दर्शयति स
 क्वचिज्जन्मान्तर्धिं क्वचिदपि च चित्राङ्गनविधिम् ।
क्वचित् कृत्स्नां बोधिं क्वचिदपि सनिर्माणमसकृ-
 न्न च स्थानात् तस्माद्विचलति स सर्वं च कुरुते ॥१०४॥

इत्याह सूत्रालङ्कारेऽप्यत्र स्थानमनाश्रवः ।
धातुर्भाष्योदितो धर्मकायाचलनमेव तत् ॥१०५॥

१. °त्वात् सत्प्र° ह्राक.रे त्व° २. उ. त. १. १४१-२ ३. तत्रैव २. ४२ ४. तत्रैव ४. ५३-४

तथाप्यलीक एवात्मा चाकारश्च भ्रमो मतः ।
कार्यभारस्तदन्यस्मादिति लज्जैव लज्जिता ॥१०६॥

अस्तु चालीकभावेन भ्रमः [128a[1]] स्थूले निरर्थकः ।
अवश्यहेयस्त्वाकारभारः स्यादिष्यते यदि ॥१०७॥

निरभ्रगगनाकारज्ञानस्यैवावशेषणात् ।
त्रिकायसिद्धिमुद्धूय परमेवेदमुद्गतम् ॥१०८॥

संभोगभङ्गे तद्धर्मो धर्मकायो न विद्यते ।
तत्कार्यं न च निर्माणं साध्वी बौद्धकृतान्तता ॥१०९॥

नन्वस्तमेतु संभोगो धर्मकायोऽस्त्वनाकृतिः ।
तत एव च निर्माणं संभोगोऽपि तदाश्रितः ॥११०॥

भ्रमत्वादेव संभोगं हित्वानङ्गदशाश्रयः ।
विशुद्धेः स हि पर्यन्तस्तत्त्रयी संगतिर्न किम् ॥१११॥

युवराजनयेनैतद् विरोधीत्युपपादितम् ।
तथापि यदि चर्चायां कौतुकं किञ्चिदुच्यते ॥११२॥

अनाकारप्रकाशश्चेद् धर्मकायोऽभिधीयते ।
कस्तर्हि बुद्धसंभोगो न प्रहेयतयोचितः ॥११३॥

कार्यार्थं ध्रियमाणोऽपि भ्रमत्वात् सुगतः कथम् ।
यदि कार्योपयोगी च मृषालीकत्वपोषणम् ॥११४।

तथा च सति न भ्रान्तिरभ्रान्तेस्त्यजनं न च ।
ततोऽनभ्र[व]तः साम्यसिद्धिसिद्धान्तनिर्धुतिः ॥११५॥

तदस्यावश्यहेयस्य हेतुर्नारम्भमर्हति ।
ततोऽपि नासौ सुगतो धर्म एव जिनो यदि ॥११६॥

धर्मकायो जिनस्येति व्यवहारो न सिध्यति ।
व्यावृत्तिभेदद्वारेणाप्येकस्यैवाभिधानतः ॥११७॥

---

१. पृष्ठमिदं मातृकायां दुष्पठम् ।

जिनादिनामभेदेन कायाः स्युः शतमन्यथा ।
न च बुद्धो जिनस्येति व्यवहारोऽस्ति कुत्रचित् ॥११८॥

धर्मिणो धर्मवाचो तु भिदेव व्यवहारभाक् ।
धात्र्यास्तरोर्वा तरुता न तु धात्री तरोरिति ॥११६॥

धर्ममात्रे मते बुद्धे बुद्धो धर्मस्य युज्यते ।
बुद्धस्य धर्मकायस्तु धर्मस्तस्य गुणो यदि ॥१२०॥

तथा सति निराकारः कायस्तुर्यसमश्च ते ।
गणनीया न वा हानात् संभोगेन तनुत्रयी ॥१२१॥

समः सूक्ष्मश्च संबद्धः कायः स्वाभाविको मतः ।
इति चोद्यं विरुध्येत संबद्धपदवर्णने ॥१२२॥

सांभोगिकेन कायेन संबद्ध इति भाष्यतः ।
संभोगे सति तद्धर्मस्तेन संबन्धमर्हति ॥१२३॥

तदभावे न तादात्म्यं भावेऽप्यत्यन्तभेदतः ।
संभोगबुद्धताहेतुरिति तत्रैव कीर्तनात् ॥१२४॥

कार्यकारणभावश्चेत् कार्यं नावस्तु कस्यचित् ।
अवस्तुधर्मतामात्रं कथं हेतुरपीति चेत् ॥१२५॥

न मध्यान्तनये भाष्ये तदालम्बनतोद्गता[1] ।
तद्धेतुतोक्तो धर्माणां टीकैवं तत्र तत्र च ॥१२६॥

तदंशो वा पृथक्कृत्य सन् पुरापि तथोच्यते ।
यथा विक्रम एवास्य राज्ञः सर्वार्थसाधकः ॥१२७॥

निराकारात् कचिज्जन्म कस्यचिन्नोक्तमात्मनि ।
सूत्रालंकारगदितं दूषणं तुल्यमत्र तु ॥१२८॥

प्रतीत्यभावप्रभवेऽप्ययं जनः
समग्रवृत्ति श्रयतेऽन्यकारितम् ।

---

१. °तोद्भवतेति मातृकायाम् ।

तमःप्रकारः कतमोऽयमीदृशो
यतो विपश्यन् सदसन्निरीक्षते ॥१२९॥

कर्ता भोक्ता च दृष्टेभ्यो भिन्नोऽहंकारगोचरः।
निरञ्जनरतदेकावशेषा मुक्तिश्च योगिनाम् ॥१३०॥

इत्यात्मवाद एवायं न च नित्योऽक्रियादृशः।
स्वभावनित्यता प्राप्ता धर्मकायतयास्य च ॥१३१॥

प्रकृत्याशंसनेनापि प्रबन्धे[128b]न च नित्यता।
अत्र स्वाभाविके तस्यार्थस्य भाष्येण योजनात् ॥१३२॥

कार्यभ्रमव्यवस्थायां यः स्वाभाविक एव सः।
धर्मकाय इति प्रोक्तो व्यवदानव्यपेक्षया ॥१३३॥

स्वभावः शून्यता धर्मः संभोगः सुगतः स्वयम्।
तस्यान्तरेतरगुणौ भित्त्वा कायचतुष्टयी ॥१३४॥

त्रिकाये धर्मकायोक्तिर्वक्ति स्वाभाविकं वपुः।
संभोगांशचतुष्टेऽन्तर्निर्माणं शेषमत्र च ॥१३५॥

सर्वत्रानुगतं यद्वन्निर्विकल्पतया नभः।
चित्तप्रकृतिवैमल्यधातुः सर्वत्रगस्तथा[1] ॥१३६॥

इति चोत्तरतन्त्रेण मुख्यं व्यापित्वमीरितम्।
संपूर्ण आत्मवादोऽयं व्यक्तो वेदान्तवादिनाम् ॥१३७॥

धर्मतायास्तु नित्यत्वव्यापकत्वादि सांवृतम्।
स्वाभाव्येऽपि यथाकल्पं प्रसिद्धं क्षणितादिवत् ॥१३८॥

विना विशेषं न न्यायो वस्तुनस्त्वेष हीयते।
अत एवाभिसमये तच्छंकावारणं विभौ ॥१३९॥

इति कारित्रवैपुल्याद् बुद्धो व्यापी निरुच्यते।
अनुच्छेदाच्च तस्यैव नित्य इत्यपि कथ्यते ॥१४०॥

---

१. उ. त. १. ४९

योऽयं न च तदेवात्र प्रकृत्या नित्यतोदिता ।
स्वाभाविकाधिकारे हि वस्तुरूपस्ततो न सः ॥१४१॥

विश्वकार्यं च संभोगे शुद्धि[स्तद्वि]रहे यदा ।
प्राग्वद् विरोधः संशुद्धिसत्त्वार्थौ न च शाश्वतौ ॥१४२॥

यदि नास्ति निराकार आत्मना चास्य तुल्यता ।
स एवायं धर्मकाय इत्युपक्रम्य भूभुजा ॥१४३॥

संक्लेशोपचयध्वंसात्यन्तध्वंसैः क उत्तरे ।
तन्त्रे प्रकाशितः सत्त्वबोधिसत्त्वजिनात्मकः ॥१४४॥

धर्मकायो द्विधा ज्ञेयो धर्मधातुः सुनिर्मलः ।
तन्निष्यन्दश्च गाम्भीर्यवैचित्र्यनयदेशना[1] ॥१४५॥

इति व्याख्यापि तत्रैव किं तु धर्मेण धर्मिणीः ।
प्रस्तुतो धर्मकायस्तु धर्मधातुः सुनिर्मलः ॥१४६॥

तथता भूतकोटिश्चानिमित्तं परमार्थता ।
धर्मधातुश्च पर्यायाः शून्यतायाः समासतः[2] ॥१४७॥

इति मध्यान्तवीभागे धर्मधातुश्च वर्णितः ।
ज्ञेयः सपरिनिष्पन्नस्तत्त्वं धातुरनाश्रवः ॥१४८॥

शून्यता च द्वयेनोक्ता तत्र क्लेशदशावशात् ।
परतन्त्रगुणो ज्ञेयः संभोगस्य मलक्षये ॥१४९॥

सर्वाकारां विशुद्धिं ये धर्माः प्राप्ता अनाश्रवाः ।
स्वाभाविको मुनेः कायस्तेषां प्रकृतिलक्षणः ॥१५०॥

अत्रापि चाभिसमयालङ्कारे न विरुध्यते ।
प्रकृतिः कारणं यस्मात् तत्त्वं च प्रतिपादितम् ॥१५१॥

यद् वा स्वभावः प्रति[प]द्धर्माणां शून्यतैव सा ।
सर्वेषां च मता बुद्धप्रस्तावात्तु विशुद्धवाक् ॥१५२॥

---

१. उ. त. १. १४४ २. म. वि. १. १५

न शुद्धिसंगृहीतोऽपि संभोगो गणितो गणे ।
पृथक्कायो हि वाच्योऽसौ धर्मस्तस्य कथं तदा ॥१५३॥

मुख्यत्वान्न तु तस्यैव शेषः परिकरोऽस्य हि ।
एकज्ञानात्मकत्वेन तद्ग्रहेणैव गृह्यते ॥१५४॥

भोगः प्रतिष्ठाकारी च ततो भिन्नो न यद्यपि ।
अन्यवद्व्यवहारस्तु सांवृतः पुरुषाद्विदा ॥१५५॥

इति धर्मकायस्वरूपचिन्तापर्यन्तप्रवचन-
मार्यासङ्गयुवराजोक्तिनिर्णयो
द्वितीयः ॥



## [ तृतीयः परिच्छेदः ]

यद्येवं धर्मतामात्रं पृथक्कृत्य विमुच्यते ।
बुद्धो वा धर्म एवेति द्वयाभावः स्वचित्कथम् ॥१॥

तद्बोधा[129a]दुच्यते बुद्धो नोज्ज्वलैर्लक्षणादिभिः ।
न तदालम्बनं हित्वा सर्वशुक्लगुणप्रियः ॥२॥

तद्बोधः सर्वबुद्धानां सामान्यो नापरस्य सः ।
तत्स्मृतिस्तायिनां पूजा तन्निश्चयफले प्रमे ॥३॥

तस्मात् स्वलक्षणं बुद्धो धर्मः सामान्यलक्षणम् ।
तत्प्राधान्ये न बुद्धत्वं भिन्नो राशिरतः कुतः ॥४॥

अत एवोच्यते बुद्धो धर्म एवेति तद्यथा ।
प्रताप एव राजेति तादात्म्यं तत्त्वतस्तयोः ॥५॥

यथोक्तमाद्याचार्येण बुद्धशब्दस्य गोचरः ।
विशुद्धश्चित्तसन्तानो धर्माख्यापि महामुनेः ॥६॥

तत्रापि धर्मकायस्य साक्षात्कारेण स ध्वनिः ।
धर्म एव जिनो यद्वज्जिन एव तथा [१]स च ॥७॥

आर्येशनीतिविवृतेररूप्यनाभासवर्णनारीतेः ।
द्वयमात्रहानिगीतेरपि शङ्का नास्त्यनाकृतिनः ॥८॥

आलयज्ञानयत्नेऽपि न तदेव निराकृति ।
तस्य व्यावृत्तिरर्हत्त्वे कथ्यते कथमन्यथा । ९॥

व्यावृत्तिश्चेद् दशाभेदोऽनाभासः साध्यनिर्धृतिः ।
अकनिष्ठे हि संबोधिरुक्तानारूप्यधातुजा ॥१०॥

टीकाप्याहागमे क्वापि नोक्ता नाकारधीरिति ।
ख्याताचार्यस्थिरमतेरागमस्यानुसारिणी ॥११॥

---

१. तथा सचेति मातृकायाम् ।

तन्निराकारमेवोक्तमिति चेन्निश्चयो हृतः।
किमन्यचिन्तयास्माकं प्रकृतस्य प्रसाधनात् ॥१२॥

क्वापि व्यवस्था कथमप्यागमे क्रियतां जिनैः।
आद्याचार्येण वा सर्वमिदानीं प्रस्तुतं न तत् ॥१३॥

उपेक्षाकारसद्भावान्नारूप्येऽप्याकृतिक्षतिः।
धियो विवर्तो ह्याकारः किंचिद्रूपस्य वा स्थितेः ॥१४॥

धीजातेर्व्यक्तिराकारो यदि नाकनिभा न किम्।
किं वाधुना व्यवच्छेद्यं न किञ्चिद् बुद्धिसंभवे ॥१५॥

नीलादौ तु तदाकारादन्या बुद्धिर्निषिध्यते।
स्वप्नेऽप्यदर्शनाद् धीस्तु तथा काचित् परान्यथा ॥१६॥

यद् यथा भासते ज्ञानं तत्तथैव व्यवस्थितम्।
तत्तद्रूपाङ्गमिच्छा चेत् पात्रमस्या निवेदितम् ॥१७॥

मोहारूपविरागेणारूप्यधातुः शमाशया।
तस्मान्नीलादिरात्मैव बुद्धीनां द्वयमेव न ॥१८॥

प्रसज्यपर्युदासाभ्यां सर्वाभावस्थितिर्द्विधा।
पर्युदासो द्वयस्यात्र धर्मिरूपं स्वलक्षणम् ॥१९॥

तस्य वस्तुतया तावत् स्वसंवित्तिर्न विरुध्यते।
धर्मिप्रत्यक्षमेवान्याभावेऽपि विहिता मितिः ॥२०॥

भूतले कलसाभावो भूतलाध्यक्षसाधनः।
संभोगे च द्वयाभावः संभोगाध्यक्षसाधनः ॥२१॥

आर्योऽन्यस्तदपेक्ष्येदमद्वयाय नमोऽस्तु ते।
न रक्तो हरिन्माञ्जिष्ठ इत्यादिकमवर्णयत् ॥२२॥

प्रत्यात्मवेद्यमित्येवं स्वविद्य स्वगिरोदिता।
तत्पर्युदस्तेऽपि समं कल्पेऽप्यवसिताश्रयात् ॥२३॥

अवसेयस्य निन्नापि संभोगेन स्फुटीकृता ।
अतएव च साकारस्वीकारस्तैः प्रकाशितः ॥२४॥

धर्मो नोत्पद्यते कश्चिन्नापि कश्चिन्निरुध्यते ।
उत्पद्यन्ते निरुध्यन्ते प्रत्यया एव केवलाः ॥२५॥

इति चाङ्कुरबीजादिस्थाने बुद्धिनिवेशनात् ।
तदाभासः स्फुटो यत्र कल्पितत्रयकीर्तनम् ॥२६॥

महाभूतादिविज्ञाने [129b] प्रोक्तं समवरुध्यते ।
तज्ज्ञाने विगमं याति ननु मिथ्या विकल्पितम् ॥२७॥

तत्रासत्त्वाधिमोक्षोऽर्थावरोधः श्रुतचिन्तयोः ।
तज्ज्ञान इति च ज्ञानरूपसाक्षात्कृतौ त्रयः ॥२८॥

आत्मग्रहनिवृत्त्यर्थं स्कन्धधात्वादिदेशना ।
सापि ध्वस्ता महाभागैश्चित्रमात्रव्यवस्थया ॥२९॥

इति श्लाघासमुद्धारान्निश्चयोऽत्र रुचेरपि ।
स्थितिद्वयमपेक्ष्यायं विशेषश्चेद् यथोदितम् ॥३०॥

चित्तमात्रमिदं सर्वमिति या देशना मुनेः ।
तत्त्रासपरिहारार्थं बालानां सा न तत्त्वतः ॥३१॥

उच्छेदाभिनिविष्टानामिच्छां दत्त्वैष संग्रहः ।
त्रासहानेन नेत्यत्र च्छेदस्तु परमार्थतः ॥३२॥

अन्यथा बालसंत्रासहानिस्तुल्या स्थितिद्वये ।
कोऽत्र भेदो यतः श्लाघा प्रक्षेपो वा तथाविधः ॥३३॥

नापनेयमतः किञ्चिदित्यादिवचनस्य च ।
अन्वाख्यानात् स्वयमपि व्याख्येयं किमतः परम् ॥३४॥

भूतात्मना भूतमेव भूतं भूतात्मनैव च ।
द्रष्टव्यमिति वाक्यार्थो नेयतां गोयतेऽत्र किम् ॥३५॥

सर्वनास्तित्ववादे हि न भूतं किञ्चिदस्ति यत् ।
द्रष्टव्यं भूतरूपेणेत्यपवादान्त एष सः ॥३६॥

समारोपस्तथापीति नारोपः कल्पना यतः ।
निर्विकल्पे स्फुरत्यत्रारोपस्तु द्वयकल्पना ॥३७॥

अपवादो न संवृत्त्या नारोपस्तत्त्वतो यदि ।
न तौ द्वावपि तत्त्वेन यदि किं वा विरुध्यते ॥३८॥

संवृत्यानपवादोऽपवाद एव हि तत्त्वतः ।
सर्वनास्तित्ववादोऽतः प्राप्त उक्तं च दूषणम् ॥३९॥

भूतं चेत् शून्यता साधु यत्र यन्नास्ति तेन तत् ।
शून्यं गेहं यथा पुंभिर्न बाधा धर्मिधर्मयोः ॥४०॥

अभूतपरिकल्पोऽस्ति द्वयं तत्र न विद्यते ।
शून्यता विद्यते त्वत्र तस्यामपि स विद्यते[1] ॥४१॥

सर्वनास्तित्ववादस्तु दूष्य एव मितेर्बलम् ।
चिन्तिष्यतेऽत एवार्याः किञ्चिन्नेच्छन्त इत्यसत् ॥४२॥

वेद्यवेदकभावेन कल्पितापेक्षयाथवा ।
निषेध एष सदृशो यदा चेक्षाविकल्पनम् ॥४३॥

यथा पुण्यबलं तेषां चित्रज्ञानसमुद्भवे ।
एतदेतच्च पश्यन्तीत्युच्यते व्यवहारिभिः ॥४४॥

अस्तित्ववारणं कूर्मो नास्तित्वस्य विधिर्न तु ।
तस्यापि प्रतिषेध्यत्वात् महानेष मनोरथः ॥४५॥

निषेध एवास्तित्वस्य नास्तित्वमभिधीयते ।
नञोऽपरार्थविरहान्नैकस्य विधिबाधनम् ॥४६॥

परस्परव्यवच्छेदरूपयोरेकबाधनम् ।
विधिं विधूय नान्यस्य स्थातुं क्षणमपि क्षमम् ॥४७॥

---

१. म. वि. १.२

भौतकल्पितकल्पानां स्वभावानामसंभवे ।
सर्वोपाधिविविक्तस्य वस्तुरूपस्य न च्युतिः ॥४८॥

तस्माद् रूपद्वये निष्ठा नैकत्र विधिबाधयोः ।
भासेऽपवादोऽनाभासे चारोपस्त्यज्यतामतः ॥४९॥

शल्येन विशताङ्गेन च्छिद्यमानेन वा यथा ।
व्यथारोपापवादाभ्यां तथेह स्फुरदाकृतौ ॥५०॥

शुद्धमाध्यमिकस्तस्माद् योगाचारान्न भिद्यते ।
समारोपापवादान्तमुक्तिरेव हि मध्यमा ॥५१॥

शून्यं नापि न चाशून्यं तस्मात् सर्वं विधीयते ।
सत्त्वादसत्त्वात् सत्त्वाच्च मध्यमाप्रतिपच्च सा[1] ॥५२॥

अभावार्थे परमते शून्यमादाय वागियम् ।
आर्यैरा[130a]जस्य यत्नोऽयं दृष्टिदग्धैर्मुधाकृतः ॥५३॥

सत्त्वेऽत एव धर्माणां ज्ञेयावरणवारणे ।
विस्मयः कल्पितापेक्षोऽसकृच्छास्त्रेषु कीर्तनात् ॥५४॥

स्वयं विज्ञानवाद्येव परशब्देन चोदयेत् ।
विज्ञानवादिन इति वैशसं किमतः परम् ॥५५॥

*स्वो भावी यदि संबुद्धो वञ्चकः कुत्र निर्वृतिः ।*
वञ्चिता अपि तेनैव शोभाभाजो मनीषिणः ॥५६॥

पराशयाज्ज्ञाननयोऽथ नाथ-
स्यार्यस्य किं नान्यकथा तथैव ।
यथा विनेयाः खलु तस्य केचिद्
भवादृशोऽप्यस्य तथा विनेयाः ॥५७॥

अनुक्तिरन्यस्य निजाशयस्य
साधारणायाश्च नरान्तरेऽपि ।

१. म. वि. १. ३

श्लाघां ततानार्यधराधिपस्य
यत्नस्तु मध्याप्रतिपत्त सेति ॥५८॥

समेऽपि चेद् दर्शनमार्गलाभे
न भावनाथाभ्यधिकोऽपराधः ।
तदेकसत्ये सदृशे द्विधा चेद्
वरं धराधीशपुरप्रवेशः ॥५९॥

धर्मानुसारो यदि्वर्णितस्ते
प्रमाणशास्त्रैकपरायणः स्याः ।
श्रद्धानुसारे तु महाजनीयः
सभाजनीयो युवराजराजः ॥६०॥

जिनोक्तिमात्रं बत पुद्गलेऽपि
न सन्धिनिर्मोचनमोचनेन ।
नीतार्थलाभस्तदनादरे तु
बुद्धे स्वयं वक्तरि को विशेषः ॥६१॥

अन्तरश्लोकाः ॥

विनेयभेदाद् भित्त्वैकां गाम्भीर्यपरमार्थतः ।
विधिबाधामुखतया चतुर्धा स्थितिरुच्यते ॥६२॥

अपवादपरा ह्येके समारोपपराः परे ।
तत्राद्यानधिकृत्योक्ता प्रथमा चरमा परान् ॥६३॥

स्वयं निषेधनिरतेष्वभिसङ्गं निषिध्य ये ।
चिन्तास्तित्वविधानेन योगाचारनयस्थितिः ॥६४॥

आरोपरक्तेषु पुनर्बाधद्वारेण मध्यमा ।
तद्भूम्ना च निषेधोक्तिर्भूयसी निरुपाधिका ॥६५॥

पङ्गुवद्गाढतुन्नाक्तिभित्तौ स्थास्यन्ति ते स्वयम् ।
साधर्म्यवैधर्म्यगिरोरैकार्थ्ये किं न भेदनम् ॥६६॥

योगाचारान्न तत्त्वेन भिद्यते शुद्धमध्यमा।
तस्मादार्योऽपि चार्येशनयस्थ इति सुन्दरम् ॥६७॥

विशिष्टयोग्यताहष्टेस्तद्द्वारेणान्यकर्षणात्।
उत्साहनाच्च सोल्लासव्याकृतिर्न विरोधिनी ॥६८॥

तस्मादेषामपि नये यावदुक्तनिषेधनम्।
कल्पितस्यैव तज्ज्ञेयं द्वितीयाचार्यनीतिवत् ॥६९॥

कल्पितस्य निषेधोऽयमिति संग्रहदर्शनम्।
सर्वो ज्ञेयतया रूढ आकारः कल्पितो मतौ ॥७०॥

मतावारूढ आकारो ज्ञेयरूपेण कल्पितः।
तस्योपलक्षणत्वेन ज्ञानत्वेनापि कश्चन ॥७१॥

कल्पितस्य निषेधश्च ग्राह्यादित्वेन गृह्यताम्।
विभक्तं टीकया यद्वत्तदभावात् तदप्यसत् ॥७२॥

असदेव यतः ख्याति तदविद्याविनिर्मितम्।
अस[त्]ख्यापनशक्तौ हि साविद्येति निगद्यते ॥७३॥

ख्यातिरध्यवसायार्थो विकल्पे स्फुरतीति वा।
अविद्यावासनायातकल्पस्थस्तत्कृतो मतः ॥७४॥

प्रज्ञापारमितायां हि त्रीन् समाश्रित्य देशना।
कल्पितं परतन्त्रं च परिनिष्पन्नमेव च ॥७५॥

नास्तीत्यादिपदैः सर्वैः कल्पितं विनिवार्यते।
मायोपमादि[130b]दृष्टान्तैः परतन्त्रस्य देशना ॥७६॥

चतुर्धा व्यवदानेन परिनिष्पन्नकीर्तनम्।
प्रज्ञापारमितायां हि नान्या बुद्धस्य देशना ॥७७॥

इत्थं पारमितानीतेरक्षीणार्थान्वयाच्च तत्।
तस्यां हि तावत् साकारवादः स्फुरति निर्मलः ॥७८॥

ततो यद्यन्य एवार्थो मुख्यमाख्याय भाविकम् ।
अर्थ आर्यनयेऽप्येष ग्राह्य इत्युचितं वचः ॥७९॥

अथ तस्मादियत्यंशे भेदः साध्ये तथापि किम् ।
द्वयमात्रनिषेधेन निर्वृतिः कृतिना कृता ॥८०॥

वाच्यो भासनिषेधोऽपि भास एव च न द्वयम् ।
लक्षणाभावतो भावे त्ववाधा सूचिता पुरा ॥८१॥

संभोगे चोपचारादि वर्ण्येत विशदाक्षरम् ।
प्रधानार्थतयार्येण स्वनीतौ वा प्रकाशनात् ॥८२॥

भगवत्या हि पिण्डार्थवाक्प्रवृत्ते न किं कृतम् ।
विहाय हेयोपादेयव्यक्तिमीपत्करां गिरा ॥८३॥

गुणरूपविशेषेण स्वस्तुतिर्वा किमन्यथा ।
यद् वा वार्तिकमादर्शस्तन्मतस्य परेण किम् ॥८४॥

तत्र वार्तिककारेण यत्नाद् बाह्येऽपि साकृतिम् ।
धियं प्रसाध्य तन्मात्रं शेषितं ग्राह्यविप्लवात् ॥८५॥

आत्मा स तस्यानुभवः स च नान्यस्य कस्यचित् ।
प्रत्यक्षप्रतिवेद्यत्वमपि तस्य तदात्मता[1] ॥८६॥

तथा ब्रुवाण आर्येश इत्थं वार्तिककृद् वदन् ।
संमुखोऽप्यन्यथा कुर्वन्न संप्रत्ययगोचरः ॥८७॥

यथाकारं प्रवेश्यापि चित्ते चित्तमनाकृतिः ।
इष्टमालोक्यमाकारस्यान्तर्न्यासोऽस्य किंफलः ॥८८॥

निराकारं मनः सिद्धं सर्वयोः स्वाम्यवादिनोः ।
ज्ञानवद् बहिरारोपेऽप्याकृतेदूषणं समम् ॥८९॥

ततः प्रयासः किमियान् प्रक्षाल्य त्याग एव वा ।
अयत्नसिद्धो वितथस्फुरणे वासनान्वयः ॥९०॥

---

१. प्र. वा. २. ३२६

ग्रहसाधुतयाकारं ग्राह्येऽङ्गीकार्यदूपिते ।
साकारचित्तनिष्ठायां युक्तमाकारसाधनम् ॥६१॥

ग्रहणे करणत्वेन प्रकाशैकोपलम्भतः ।
विप्रतीतिशताधारं प्रसाध्याकारवन्मनः ॥६२॥

मानमेयफलन्यायं निर्वन्धेन विधाय च ।
अतृप्तेः पुनरन्तेऽपि तदर्थो हि महान् श्रमः ॥६३॥

प्रत्युतालीकमाकारं मुधा साधयतः प्रति ।
प्रत्यासत्तिं ग्रहेऽनाद्यः स एव स्यान्निदर्शनम् ॥६४॥

ततः स्वभावतोऽनात्मप्रकाशावलवन्मनः ।
सिद्धमित्यफलं ग्राह्यलक्षणक्षतिचिन्तनम् ॥६५॥

सहोपलम्भप्राकाश्यहेतुद्वयगिराप्यलम् ।
द्वितीयाचार्यवश्यत्वं धर्मोत्तरवदुच्यताम् ॥६६॥

न च वार्तिककारोयमेकानेकात्ययोऽञ्जसा ।
वाह्येऽपि दूषणं [1]कापि परमाणोरदूपणात् ॥६७॥

यत्नसाधितसाकारे स्थित्वा ग्राह्यं तु दूषितम् ।
वैभाषिकाच सूत्रान्तो वर्णितस्तत्त्वसन्निधेः ॥६८॥

ततोऽलीकमसद् वेति सर्वत्रावशितं प्रति ।
न ह्याकारस्वरूपेण गृह्यते किं तु वाह्यतः ॥६९॥

दृष्टमिन्दुयुगं तच्च नास्तीत्युक्तिर्न चेतसः ।
दृष्टाकृतिर्मृषावेति न चेन्दुद्वयमेव तत् ॥१००॥

जलारोपोदिताद्दोषाच्चित्ताकारस्तु युज्यते ।
असाधारणनिर्भासी प्रकाशो न परस्य च ॥१०१॥

इयं [131a] यथाध्यवसिति व्यवस्था तत्त्वतः पुनः ।
केशादयो न सामान्यमनर्थाभिनिवेशतः ॥१०२॥

---

1 क्वचिदिति मातृकायाम्

इत्याह न त्वनर्थत्वादित्यन्यश्च स्फुटाभता ।
ज्ञानरूपतयार्थत्वात् केशादीति मतिः पुनः ॥१०३॥

सामान्यविषयं केशप्रतिभासमनर्थकम् ।
इन्द्रियज्ञानसंख्यातमसद्ग्राह्यावसायतः ॥१०४॥

ज्ञानरूपतयार्थत्वे सामान्ये चेत् प्रसज्यते ।
तथेष्टत्वाददोषोऽर्थरूपत्वेन समानता ॥१०५॥

अप्रतिक्षेपभाग्धर्मी शब्दार्थ इति चासकृत् ।
तस्माद् यथाप्रतीत्युक्तः शब्दार्थोसावसन्नपि ॥१०६॥

अभवन्नपि शब्दार्थः शब्दार्थ इति कीर्तितः ।
ज्ञानाकारश्रुते शब्दे तद्भासादिति दर्शितम् ॥१०७॥

यथावसायं तु बहिः शब्दार्थ इति निश्चयः ।
अतद्रूपपरावृत्तवस्तुमात्रस्थितेरिति ॥१०८॥

यथाप्रतीति सत्त्वं चेत् नावसायोऽत्र सापि तु ।
भासनं सैव सत्तास्य बाह्ये शक्तेस्त्वपेक्षणम् ॥१०९॥

तस्माज्ज्ञानतयैवोक्त आकारोऽर्थ इति स्थितम् ।
व्याख्यातं भाष्यकारेण यच्च तत्र श्रमेण किम् ॥११०॥

साकारमेव चेतश्चेत् पर्यन्तेऽप्यधिकं न हि ।
संक्लेशव्यवदानं चेत्येकमस्तु न तु द्वयम् ॥१११॥

आकार एव संक्लेशो व्यवदानं तु तत्क्षयः ।
इत्यनाकारवादे स्यादुभयस्य व्यवस्थितिः ॥११२॥

अतस्मिंस्तद्ग्रहाद् भ्रान्तिर्विकल्पस्तत्क्षयः समः ।
समापि चेद् विकल्पोऽपि सत्याकारः कथं भ्रमः ॥११३॥

अवसाये प्रकाश्यत्वं प्रकाशे च तदात्मता ।
अर्थस्य हानौ न स्याच्च नाम इत्यादिवेदनम् ॥११४॥

सर्वात्मनिश्चयश्च स्यात् स्पष्टोऽर्थः स्याच्च गौरिति ।
स्वलक्षणे चासंकेतात् कल्पिकैव भवेन्न धीः ॥११५॥

तस्मादशेषगोव्यक्तिसामान्येन विभाति धीः ।
गोत्वेन साभिलापेनालीकेनेति तथा प्रथा ॥११६॥

गवावसाय इत्यस्तु नैते दोषा भवन्त्यतः ।
स्वलक्षणस्याभावेऽपि भ्रान्त्या तदवसायतः ॥११७॥

यथालीकस्य गोत्वस्य गोबुद्धौ च प्रकाशनम् ।
तादात्म्यं चाव्यतिरिचोऽनारोपो वस्तुतापि च ॥११८॥

तथा नीलादिनिर्भासेऽलीकस्य धवलादिनः ।
प्रकाशभावसिद्ध्यैव तादात्म्यं सिद्धमिष्यताम् ॥११६॥

वस्तुतायामनारोपे लिङ्गं तादात्म्यगोत्रकम् ।
गोत्वादिभिरनेकान्तसमारोपमसिद्धकम् ॥१२०॥

तदेतत् फल्गु सकलं यतः साकारवादिनाम् ।
सतोऽपि भानं नार्थस्य कुत एवासतो भवेत् ॥१२१॥

स्वरूपस्यैव निर्भासाद् बालस्याप्येष निश्चयः ।
अर्थभानाश्रयास्तस्य किल दोषाः प्रसङ्गिनः ॥१२२॥

कुत्र सङ्केतकरणं शब्दो यस्यावबोधकः ।
कस्यावबोधकः शब्दो यत्र संकेतकक्रिया ॥१२३॥

वाचोयुक्तिरियं कीदृशीदृगेव यदीक्षसे ।
वाच्यवाचकतां कापि ममापि प्रतिपादय ॥१२४॥

अलीको यस्य चाकारः किं तस्यापि विशिष्यते ।
अलीके यदि [1]सङ्केतः सत्याकारे कथं न सः ॥१२५॥

फलं न सत्यप्याकारेऽलीके सुष्ठु न विद्यते ।
अर्थारोपादलीके चेन् सत्ये केन निषिध्यते ॥१२६॥

1. शंकेतः इति मातृकायाम् ।

कोऽ[131b]र्थारोपोऽथ सत्यत्वेऽलीकत्वेऽपि स कीदृशः ।
सत्योऽलीकोऽथवाकारो वस्त्वारोपस्तु किंकृतः ॥१२७॥

असत्यगोत्वभानाद् {हि} भानात् सत्याकृतेर्न किम् ।
सत्येऽपि सत्याकारश्चेत् सत्येऽप्यालीक्यमाकृते ॥१२८॥

असत्यभानादारोपो युक्तः सत्ये कथं भवेत् ।
नन्वसत्येऽपि सङ्केतोऽसत्यत्वावसितौ कथम् ॥१२९॥

तस्मादर्थक्रियाशक्तवस्त्वारोपात्मनस्तनौ ।
सङ्केतकरणं सत्यासत्ययोर्न विशिष्यते ॥१३०॥

यथातथात्वे वाकारस्यावसायो न विद्यते ।
न भानमर्थस्य ततो वाच्यता कस्य तत्वतः ॥१३१॥

अभाने प्रतिभाने वा न चारोपोऽपि कस्यचित् ।
प्रतीत्योत्पादभेदेन व्यवस्थामात्रमीदृशः ॥१३२॥

निर्विकल्पाद् विकल्पस्य भावे लेशानुसारिणः ।
सङ्केतकारिवचनाद् बुद्ध्याकारे विशेषिणि ॥१३३..

सङ्केतः कृत इत्यास्था तादृक्शब्दस्थितौ पुनः ।
प्रवृत्त्याक्षेप बुद्ध्यात्मभावे वाच्यव्यवस्थितिः ॥१३४॥

एवं प्रवृत्तेराक्षेपिविकल्पाकारजन्मनि ।
ततो जलादिरारोपः सत्यासत्यसमश्च सः ॥१३५॥

ततो यद्यपि तत्त्वेन नारोपः कस्यचित् क्वचित् ।
व्यवहारकृतस्त्वेष प्रतिषेद्धुं न शक्यते ॥१३६॥

मरीचौ जलवद् यावदनात्मन्यात्मकल्पनम् ।
भ्रमः स एव संसारो निर्वाणं तत्वसंस्थितिः ॥१३७॥

यदत्र यावत्र विचारसंभवो भवोऽयमन्यः शम इत्ययं नयः ।
विचारलीलालुलिते तु मानसे भवः शमो वा क इहेति कथ्यताम् ॥१३८॥

तथा च,—

नचान्तरं किञ्चन विद्यतेऽनयोः सदर्थवृत्त्या शमजन्मनोरिह ।
तथापि जन्मक्षयतो विधीयते शमस्य लाभः शुभकर्मकारिणाम् ॥१३९॥

तथा,

निर्वाणं च भवश्चैव द्वयमेतन्न विद्यते ।
परिज्ञानं भवस्यैव निर्वाणमिति कथ्यते ॥१४०॥

जलबुद्धावलीकत्वं नाकारस्य प्रयोजकम् ।
भ्रमव्यवस्थितौ तद्वद्ग्राह्यग्राहकविप्लवे ॥१४१॥

सत्येऽसत्ये[ऽथ]वाकारे नापराधोऽस्ति चेतसः ।
यदि प्रवृत्तेराक्षेपी बाह्यारोपो न जायते ॥१४२॥

सत्याकारमपि ज्ञानं कल्पकं गोचरे ततः ।
प्रवृत्त्याक्षेपणाद् दुष्टं प्रवृत्तिः संसृतिर्यतः ॥१४३॥

प्रवृत्तिरविकल्पेऽपि विकल्पेऽपि न सेति[1] चेत् ।
विशेषसरणेऽप्येव तत्रानिष्टिस्ततो न किम् ॥१४४॥

अनादिकालिकाभ्यासाद्यथा किञ्चित् क्वचित् क्षमम् ।
तथा विकल्पस्यापीयं योग्यतानिष्टिसाधनी ॥१४५॥

विकल्पे क्लेशभावोऽधिसत्त्वानामत एव हि ।
तद्वासनाहतौ यत्नो यावद्धेतुफलस्थितिः ॥१४६॥

अलीकगोत्वाकारेण ख्यातिः सिद्धा न [2]गोमतेः ।
सत्याकारोऽपि संकल्पोऽध्यवसायः प्रवर्तनात् ॥१४७॥

सत्यस्य गोत्वाकारस्य गोबुद्धौ भासनं यथा ।
तादात्म्यं चाव्यतिरिचोऽनारोपो वस्तुतापि च ॥१४८॥

तथा नीलादिनिर्भासे सत्यस्य धवलादिनः ।
प्रकाशभावसिद्ध्यैव तादात्म्यं सत्यमिष्यताम् ॥१४९॥

---

1. सतीति मातृकायाम् ।  2. गोमतो इति मातृकायाम् ।

यद्वस्तुरूपं तद्वस्तु गोविकल्पे यथाकृतिः ।
प्रकाशवस्तुरूपं च नीलं न स्फूर्तिरन्यथा ॥१५०॥

तादात्म्यद्वैधनिर्धूतेः सिद्धो बाधश्च वास्तवः ।
नेष्यते च सितादन्यस्तथानारोपसाधनम् ॥१५१॥

शक्तस्त्वलीक [132a] आकारो नोपकारापकारयोः ।
कादाचित्कः स्फुरन्नर्थसमर्थो वा मृषा कथम् ॥१५२॥

एतत्स्वरूपाबाधे हि बाधकोऽप्यस्य किंकरः ।
ततः स्वयं प्रकाशात्मा शुद्धो वा क्लिष्ट एव वा ॥१५३॥

अलीकमात्रं सदपि न हि क्वापि विबन्धकृत् ।
विबन्धकत्वेऽलीकत्वमेवालीकं प्रसज्यते ॥१५४॥

गोचरान्तरसञ्चारो नेष्ट एव क बन्धकृत् ।
स्वसंवित्तौ पुनस्तस्य शतेनापि न बन्धनम् ॥१५५॥

स्ववित्तिबन्धे हि जडः प्रकाशश्च स्वहेतुतः ।
इत्ययुक्तमतोऽशक्यं स्वाभेदेनापि वेदनम् ॥१५६॥

स्वहेतोश्च तथोत्पत्तिर्वेदनं च तदात्मना ।
भावैः स्वीकृतमेकत्वं वादिनां महती व्यथा ॥१५७॥

तन्नालीकोऽयमाकारः स्फुरत्येनं स्फुरन्नपि ।
तावताप्यस्य संक्लेशे सन्तानान्तरतो न किम् ॥१५८॥

वस्तुसन्नपि सन्तानभेदस्तस्य न बाधकः ।
असत्यः पुनराकारो बाधायेति किमप्यदः ॥१५९॥

तत्प्रवृत्तिनिवृत्तिभ्यां संसारो नाम नापरः ।
[1]तत्त्वावसायभेदेषु प्रतिबन्धे प्रसाधिते ॥१६०॥

विशेषश्चावसायानामाकारात्परतो न च ।
जलाकाराद् विसंकल्पाज्जल एव प्रवर्तते ॥१६१॥

---

१. ते, चाव° इति मातृकायाम् ।

जलाकारविकल्पोऽपि जलाकारावकल्पतः ।
भवन्नपि न तन्मात्राद् वासनासचिवा त्वसौ ॥१६२॥

तद्वासनासमुद्घाते केवलान्नाविकल्पतः ।
ग्राह्यग्राहकभावादेरभूतस्य विकल्पनम् ॥१६३॥

निर्विकल्पमपि ज्ञानं हेतुश्चेद् वासनाश्रयात् ।
यथाप्रवृत्ताकारस्य तत्क्षयेऽस्तूदयव्ययः ॥१६४॥

आ बोधिचित्तग्रहणाद् दानाद्यभ्यासतः क्रमात् ।
अतिविश्ववपुर्भोगप्रतिष्ठाकारसंभवः ॥१६५॥

आसंसारमविश्राममपरार्थस्वार्थसंपदे ।
रुचेस्तदेकनिष्ठत्वात्तद्धेतावसमः श्रमः ॥१६६॥

महाकारुण्यसम्पन्नपुण्यज्ञानश्रियान्ततः ।
विशुद्धिवासनाबन्धप्रबन्धस्थैर्यसाधनः ॥१६७॥

तत्रासत्कल्पना कालः संक्लेशः शुद्धिरुत्तरः ।
साकार एव विज्ञाने तस्मादेषा व्यवस्थितिः ॥१६८॥

अद्वैतचित्रगुणसंभृतशातपूर्ण-
साधारवेयमयमण्डनचक्ररूपम् ।
साध्यं विधूय न च सन्ततयोऽपि सारः
साकारनीतिरिति नीतिपुगस्य जीवः ॥१६९॥

दृष्टं शर्मविशिष्टसाधनपराधीनं यथा भावना-
प्यस्योदेति तथैव यत्सुखरसाकृष्टाङ्गनादेरपि ।
निष्पत्तौ च तथा निरन्तरसुखस्यन्दाभिनन्द्याकृतौ
बाधाबाधविधौ समेतरतया शर्मैकशेषोऽस्तु किम् ॥१७०॥

अन्तरश्लोकौ ॥

॥ इति धर्मकायचिन्तामशेषा[ा]मारभ्य संक्लेशव्यवदानपर्यन्त-
शास्त्रकारान्तरैकवाक्यतानिर्णयस्तृतीयः परिच्छेदः ॥

## [ चतुर्थः परिच्छेदः ]

मा भूदन्योऽस्तु साकार एव साध्येतरस्थितिः ।
एकानेकविवेकेन त्वालीक्यं केन वार्यते ॥१॥

एकानेकविवेकोऽस्तु न त्वालीक्यं प्रकाशिनः ।
बाधा हि रूपेऽवसिते नाध्यक्षविषये क्वचित् ॥२॥

रूपमात्रस्य निर्भासो द्विचन्द्रेऽपि न बाध्यते ।
बाधा स्पर्शादिनो रूपस्यापि तत्सहचारिणः ॥३॥

एवं [132b] स्वप्नेऽपि पुत्रादिः कल्पितोऽसन्न धीतनुः ।
मन्त्राधिपत्याल्लोष्टादौ पीतभासो न बाधनम् ॥४॥

रुक्मादि कल्पितं बाध्यं लोष्टादेस्तु न भासनम् ।
न चावसायस्तेनास्य न विधिर्न च बाधनम् ॥५॥

अन्यथाख्यातिरस्येति दुष्टं तत्ख्यात्यसंभवात् ।
असत्ख्यातिस्तु विख्याता कल्पिता सदपेक्षया ॥६॥

लोष्टमेवान्यथाख्यातीत्यभिप्रायान्न सापि किम् ।
व्यवहारेण निर्बन्धः तत्त्वतस्तु न तद्द्वयम् ॥७॥

अन्यथैवावभासन्ते तद्रूपरहिता अपि ।
इत्युक्तेर्भाविकस्त्वत्र बोद्धव्योऽर्थो यथोदितः ॥८॥

तथैवादर्शनात् तेषामनुपप्लुतचक्षुषा ।
कल्पितत्वमनेनोक्तमाभासे कनकादिनः ॥९॥

न बाधः कस्यचित् तत्त्वे संवृत्तौ कल्पितस्य तु ।
प्रकाशिनोऽपि बाधश्चेद् बाधेऽप्याश्वासनं कुतः ॥१०॥

अनुमाबाधिकाशा च न वस्तुविषयेति चेत् ।
अपरमस्ति यस्यात्मनिष्ठासौ नान्यथा प्रमा ॥११॥

भातमेव पुरा वस्तुविधावध्यवसीयते ।
निषेधोऽपि स्वभावार्थः पर्यन्ते पर्यवस्यति ॥१२॥

अन्तरश्लोकौ ॥

परेण विषयाभावज्ञापनं सपदीष्यते ।
स्वार्थे प्रवृत्तिमज्ज्ञानमभावं गमयेत् कथम् ॥१३॥

स्वगोचरोपस्थानेन विषयान्तरबाधने ।
स्वगोचरस्य तेनापि स्थानात् किं नास्य बाधनम् ॥१४॥

तदर्थकर्महानेश्चेद् भिन्ना सार्थक्रिया यदि ।
अन्यहानेऽन्यहानिः किमभेदे तु स्फुरत्यसौ ॥१५॥

रूपं समीक्ष्य दाहादिहानेः स्पर्शस्य बाधनम् ।
न च स्पर्शः स्फुरत्यत्र बाधा सैवास्य किं परैः ॥१६॥

विषयीकृतमन्यद्वा बाध्येत प्रथमं यदि ।
स्फुरदेव कथं बाध्यमस्फूर्तौ बाधकेन किम् ॥१७॥

न बाधा भिन्नकालत्वे स्वस्वकाले स्फुरत्तया ।
तथैव कालाभेदेऽपि नीलपीतसितादिवत् ॥१८॥

तस्मादारोपवद् बाधः प्रतीत्योत्पादभेदतः ।
कल्पितो न तु तत्त्वेन स्वविन्मात्रे तु का कथा ॥१९॥

यावन्न सिद्धिः स्वविदो बाधकं तावदस्तु चेत् ।
निरूप्य स्वविदोऽसिद्धिं बाधस्तर्हि प्रवर्त्तताम् ॥२०॥

पूर्वं प्रवर्तनारम्भे प्रतिज्ञाबाधमक्षतः ।
यदि ब्रूयात् परज्ञाननिषेधे स्वविदागता ॥२१॥

यथायथार्थाश्चिन्त्यन्ते विविच्यन्ते तथा तथा ।
स्वयं तु वित्तिश्छायेव धावतोऽप्यनतिक्रमा ॥२२॥

अतएव निषेधस्य प्रक्रमेऽपि जगौ गुरुः ।
यदीदं स्वयमर्थानां रोचते तत्र के वयम् ॥२३॥

न बाधा चेत् परेणास्ति सिद्धिरप्यस्तु नान्यतः ।
स्ववित्सिद्धिरपीदानीं साधनान्तरतः कथम् ॥२४॥

कुतश्चित् कस्यचित् सिद्धिर्न तत्त्वे किं तु संवृतौ ।
यथा धूमादितोऽन्यादेर्मता सिद्धिरियं तथा ॥२५॥

स्ववित्सिद्धिरतत्त्वे चेत् यावत् साध्याङ्गसंस्थितिः ।
तावत् तदेव तत्त्वं यत् सिद्धं साधनशक्तितः ॥२६॥

यत्साधनबलात् सिद्धे स्वविन्मात्रे पुनः परम् ।
सिद्धिबाधनयोरस्ति नावकाशः कुतश्चन ॥२७॥

न बोध[य]न् किञ्चिदन्यत्[1] प्रस्तुतत्यजनक्षमः ।
प्रस्तुतं वा त्यजन् नान्यस्यान्यतो ग्रहणक्षमः ॥२८॥

अत एव परज्ञानं गृह्यमाणं स्वबाधनम् ।
स्ववित्तिहेतुत्रैरूप्यज्ञानस्याप्यवकाशतः ॥२९॥

[133a] त्यक्तं तु तेषां रूपाणामबोधेऽपि न बाधकम् ।
साध्यसिद्धेः प्रकाशो हि विद्यते परतो न तु ॥३०॥

स्वतोऽपि मा भूदिति चेत् यदि भासो न सर्वथा ।
युक्तमेतत् प्रकाशस्तु तत्रास्त्यस्मान्न किं स्वतः ॥३१॥

प्रकाशोऽस्ति न तु स्वस्मादतोऽन्यस्मात् कथं न चेत् ।
अन्यथा बाधकं यद्वत् तद्वन्नास्ति स्वतो मतौ ॥३२॥

स्वात्मन्यथ क्रियारोधो धारयोः स्वच्छिदा न हि ।
धारापि तीक्ष्णा स्वयमित्युच्यते किं न सूरिणा ॥३३॥

स्वहेतोरेव तीक्ष्णा सा जायते नान्यतो यदि ।
प्रकाशरूपज्ञानं च स्वहेतोरेव जायते ॥३४॥

उपकार्योपकारित्वकृतं मा भूत् प्रकाशनम् ।
तद्रूपजन्म रूपं तु स्वयंशब्देन शब्दितम् ॥३५॥

---

१. न बोधन् किञ्चिदन्यस्मादिति मातृकायाम् ।

यथा प्रदीपपटयोरुपकारात् प्रकाशनम् ।
दृष्टं तथा प्रदीपस्य स्वयं किं न समीचितम् ॥३६॥

अत्रापेक्षापि दीपे चेत् सा कुम्भे किं न विद्यते ।
तत्सत्त्वेऽपि घटो दीपं दीपो नान्यमपेक्षते ॥३७॥

यन्त्रादौ सत्यपि यथा परप्रेरणवारणात् ।
स्वयंगमोक्तिस्तज्जातिवारणैव स्वभासने ॥३८॥

आगमेऽपि स्वयंवित्तेर्बोधे च प्रतिभाति या ।
ग्राह्यग्राहकभावस्य सूक्ष्मस्य तदपोहनम् ॥३९॥

एकत्र फलहेतुत्वं यथाशङ्क्य निवारितम् ।
ग्राह्यग्राहकतैकत्र तथाशङ्क्य निवारिता ॥४०॥

न कर्मकर्तृभावेन स्वप्रकाशमतो मतम् ।
परानपेक्ष्य भासन्तु स्वहेतोरुदितं मनः ॥४१॥

सन्धिनिर्मोचने व्यक्तं तदर्थप्रतिपादनात् ।
अर्थाभासप्रवृत्त्यादिवचनैरपि सूचनात् ॥४२॥

तस्मान्न युक्त्यागमयोः प्रतिबोधि स्ववेदनम् ।
दोषः स एवान्यविदं बाधतेऽग्निरिव द्रुमम् ॥४३॥

न च स्ववित्तिव्यापारं परवित्तिग्रहोऽर्थितः ।
यतोऽस्य गुणदोषाभ्यां स्ववित्तेरवलेपनम् ॥४४॥

दोषो न सत्तामात्रेण व्यापारेण तु स स्मृतः ।
अकार्यकृतिकालस्था निग्राह्या दमादयो न हि ॥४५॥

न स्ववित्तेरतो दोषः परवित्तेस्तु विस्तरात् ।
तदन्यवित्तिव्यावृत्तः प्रकाशो नियतः स्वयम् ॥४६॥

न स्वतो नापि परतो भासश्चेद् भास एव न ।
नालोष्टादिसमानस्य वक्तुमेतच्च साम्प्रतम् ॥४७॥

स्वतोऽन्यतश्च व्यावृत्तावपि भासो यदीष्यते ।
एकानेकवियोगोऽपि वस्तुनः सत्त्वमस्तु वः ॥४८॥

एकानेकवियोगेऽपि यदि वस्तु सदिष्यते ।
स्वतोऽन्यतश्चाभावेऽपि भावो भासस्य किं न वः ॥४९॥

भासमानास्तथाप्येते न भावाः शक्यनिह्नवाः ।
असाधारणभासत्त्वात् ज्ञानत्वं च भविष्यति ॥५०॥

रूपनिर्भासतोऽप्यचरूपताप्यस्ति वारतधी ।
न च स्ववित्तौ दोषश्चेत्यतः किञ्चिन्न दुष्यति ॥५१॥

ननु स्ववित्तिर्नीलस्येत्येतदेव कुतो भवेत् ।
न हीदमेकमात्मानं वेत्ति येन स्ववेदनम् ॥५२॥

अन्तः शातादिरूपस्य बहिः शीतशितादिनः ।
भासनात् कस्य केनास्तु कथं वित्तिर्न चैकता ॥५३॥

भासनं तावदस्त्येषां तन्निषेद्धुं न शक्यते ।
न भेदे तच्च युक्तं चेदभेदोऽस्तु धियस्तदा ॥५४॥

भिन्नाकृतीनामेतेषामभेदोऽपि कथं भवेत् ।
तत् [133b] किमिष्टो द्वयाभावो भाव एव द्वयस्य वा ॥५५॥

भेदोऽभेदो द्विधाऽद्वेधा धीरूपेऽस्तु यथा तथा ।
नालीकत्वं प्रकाशस्य बाधगन्धविरोधिनः ॥५६॥

न हि स्वानुभवस्यास्ति बाधः काप्युपपत्तिभिः ।
स एव वासां प्रभवो निष्ठा तत्रैव वा यतः ॥५७॥

भेदादिरेव चिन्त्योऽस्तु न प्रकाशस्य वारणम् ।
यत्र प्रकाशविश्रामः स्वः परो वा स एव सन् ॥५८॥

सत्त्वे च स्वविदः सिद्धे किमेकानेकचिन्तया ।
सदभावादभावेन [त]स्याः किल फलस्थितिः ॥५९॥

प्रकाशमात्रे सिद्धेऽपि स्ववित्तिः कथमुच्यते ।
तावता चार्थसंसिद्धौ किं स्ववित्तिगिरापि नः ॥६०॥

प्रत्यक्षबाधा हि परप्रतिज्ञा या विवक्षिता ।
[स्व]रूपस्य परेणापि प्रकाशे सा च सिध्यति ॥६१॥

स्वरूपसाक्षात्करणादध्यक्षत्वं न चापरम् ।
परेणापि प्रकाशस्य रूपं तावद् विभाति तत् ॥६२॥

तथापि स्वविदस्त्येव किं तु स्वस्येति न स्वयम् ।
बाधासिद्धौ तथान्येन वित्तिवादेऽपि न क्षतिः ॥६३॥

न सिद्धापरवित्तिश्च स्ववित्तिश्च न सिध्यति ।
ततः प्रत्यक्षता नाम कीदृशी बाधनं यया ॥६४॥

साक्षात्कारस्वरूपस्य प्रत्यक्षत्वमुदीरितम् ।
विशेषलक्षणस्यापि नैव क्षतिरनिश्चये ॥६५॥

सामान्येन विशेषाणां यथा व्याप्तिस्तथास्य तैः ।
सिद्धे विशेषे सामान्यं सामान्येऽन्यतरः स च ॥६६॥

मनुष्यनिश्चये भाव्यं शूरेण वाऽपरेण वा ।
न च तद्द्वयसन्देहे मनुष्यस्य पराभवः ॥६७॥

निश्चिते तद्द्वयाभावे भवेन्मानुष्यकक्षतिः ।
किं तु मानुष्यकेऽसिद्धे सिद्धे वा न द्वयक्षतिः ॥६८॥

परोक्षे वस्तुनि ततो द्विधाभासक्षतिस्थितौ ।
भासभ्रंशोऽस्तु निश्चेयो भासे त्वेका स्थितिर्द्वयोः ॥६९॥

न प्रकाशेऽस्ति सन्देहः सन्देहस्तु भिदाभिदोः[1] ।
भिदाभिदोरन्यतरा प्रकाशेऽवश्यमन्विता ॥७०॥

भेदाभेदस्थितिर्यद्वदुपपत्तिमपेक्षते ।
नैवं प्रकाशोऽपेक्षायां प्रकाशः कथमुच्यते ॥७१॥

१. भेदाभेदोरिति मातृकायाम् ।

द्वाभ्यां व्याप्तिः प्रकाशस्य स्याच्चेदेकस्थितिर्द्वयोः ।
व्याप्तिश्च न क्वचित् सिद्धा तथाप्यव्यतिरीरिता ॥७२॥

नाभिन्नेन न भिन्नेन वेदने[न] विदित्यतः ।
कथं प्रत्यक्षबाधेति व्याप्तावेवेदमप्यलम् ॥७३॥

उपपाद्यं समक्षत्वमथ चेद् बाध्यवादिना ।
अभ्युपेतप्रमाणस्य प्रत्यक्षं कीदृशं परम् ॥७४॥

व्यापकानुपलम्भेऽपि रूपत्रयनिरूपणे ।
पारम्पर्येण साक्षाद् वापेक्षावश्यं समक्षधीः ॥७५॥

तत्र कीदृक् समक्षं ते यद्यस्माकं न विद्यते ।
तत् सांवृतं चेद् बाधापि सांवृतादस्तु सिद्धिवत् ॥७६॥

रूपाप्तौ सांवृतं शक्तं न बाध इति कः क्रमः ।
यज्जातिकं च तत्सिद्धौ तज्जात्यैवास्तु बाधकम् ॥७७॥

सांवृतत्वं च मानस्य मेयस्य यदि संवृतेः ।
अद्यापि चिन्त्यते सैव न सिद्धा साधनं कथम् ॥७८॥

अन्यस्यासंविदोऽन्येन यदि व्याप्तिग्रहो क्षतिः ।
विलुप्तोऽन्यग्रहश्चास्तु स्ववित्तेः कियती क्षतिः ॥७९॥

अनुपेतप्रमाणस्य ज्यायसो मूकतैव यत् ।
ब्रुवता नियतं किञ्चिद् बाध्यं वा साध्यमेव वा ॥८०॥

संवृतौ मानमिष्टं चेद् विचारोऽप्येष संवृतिः ।
संवृतावपि नेष्टं चेद् ब्रुवन् जेता यथा [134a] तथा ॥८१॥

न च हेतौ प्रकाशादावप्येवं बाधसंभवः ।
असाधारणनिर्भासव्यत्ययस्याप्रसाधनात् ॥८२॥

अमुनापि समक्षेण विषयी[कृति]मात्रकम् ।
न सत्तासिद्धिरस्येति बाधकावसरो न किम् ॥८३॥

विधिसाधनमानेन विषयीकरणात्परम्[1] ।
न सत्तासाधनं क्वापि शक्तिः सत्ता तु लौकिकी ॥८४॥

सर्वत्र मानविहिते सत्ताभेदस्य साधनम् ।
युक्तं नाशादिवत् सत्तावाधकं तु विरुध्यते ॥८५॥

तस्मात् स्वं वा परं वा स्यात् प्रत्यक्षं विषयस्य तु ।
यस्य स्वरूपनिर्भासः स एवाध्यक्षगोचरः ॥८६॥

तदतद्रूपविमतावपि बोध्यवपुः स्थिरम् ।
ज्ञानज्ञेयोपनयनादेव साधकबाधकम् ॥८७॥

न स्वरूपेण रूपं तु गवेष्यं भ्रान्तिशान्तये ।
प्रतिभासिनि रूपे च न भ्रान्तेरस्ति संभवः ॥८८॥

कल्पनापोढमेवास्तु किमभ्रान्तपदं तदा ।
भ्रान्तिद्वैविध्यनिर्वाहनिर्बन्धोऽपि मुधेति चेत् ॥८९॥

[2]सत्यमाचार्यदिग्नागपादेन कृतमेव तत् ।
वार्तिके तु कृतं लोकस्याकारे ग्राह्यरोपणात् ॥९०॥

आकारमाकारतया शुक्तिं शुक्तितया तथा ।
यदि विद्याज्जनः क्वापि कथं स्यात् कस्यचिद् भ्रमः ॥९१॥

अतदात्मनि तादात्म्यव्यवसायस्तदा द्वयोः ।
विकल्पवर्जनेनैव निवर्त्य इति युज्यते ॥९२॥

यदा त्वर्थग्रहो ज्ञानस्याकारे सर्वदेहिनाम् ।
दृष्टोऽतिस्पष्टविच्छिन्नप्रतिभासे विशेषतः ॥९३॥

तदा मृषार्थग्रहणं तदध्यक्षमकल्पनात् ।
प्राप्तं गृहीतग्रहवत् तद्द्वितीयं विशेषणम् ॥९४॥

लोकबुद्धिमपेक्ष्यैव सतैमिरमितीरितम् ।
स्पष्टाभस्यास्य कल्पत्वमोहापोहाय चापरम् ॥९५॥

1. करणाप॰ इति मातृकायाम्  2. ॰दिङ्नागपादेन इति मातृकायाम् ।

तत् तत्त्वचिन्तावसरे कल्पितापेक्षयैव सा ।
भ्रमव्यवस्था स्पष्टाभे न स्वाकारव्यपेक्षया ॥९६॥

भ्रमत्वमविकल्पेऽपि विकल्पान्न ततः परम् ।
अतो विकल्पे विश्रान्तमविकल्पेऽपि कथ्यते ॥९७॥

विकल्पकस्य भ्रान्तत्वे भ्रमोऽन्यः स्यान्न वा भवेत् ।
विकल्पकस्याभ्रान्तत्वे भ्रम एव न विद्यते ॥९८॥

अन्तरश्लोकौ ॥

निर्भासिनः समस्तत्वमसत्यत्वमपोहति ।
अतः प्रकाशे मिथ्यात्वमर्थस्यैव न धीतनोः ॥९९॥

तस्मान्माने भिदाभेदविवादेऽपि प्रकाशिनः ।
प्रत्यक्षगोचरावस्था सिद्धा सत्त्वं तदेव च ॥१००॥

तच्चित्रमेतदद्वैतं ग्राह्यादिविरहान्मतम् ।
सांवृती पुंवदेकाख्यानेकव्यवहृतिर्मुधा ॥१०१॥

यावदेव बहिरध्यवसायस्तावदेव पृथगेतदिदं च ।
तन्मतिस्तु सकलेति स एव ज्ञानपाणिचरणादिरसौ हि ॥१०२॥

नीलादिश्चित्रविज्ञाने ज्ञानोपाधिरनन्यभाक् ।
अशक्यदर्शनस्तं हि पतत्यर्थे विवेचयन् ॥१०३॥

यद् यथा भासते ज्ञानं तत्तथैवानुभूयते ।
इति नामैकभावः स्याच्चित्राकारस्य चेतसः[1] ॥१०४॥

संग्रहश्लोकौ ॥

चित्रविज्ञान इत्याभ्यामेकानेकात्ययः क्रमात् ।
ज्ञानोपाधितया वाध्यं विविच्याशक्यदृक्तया ॥१०५॥

मुधानेकध्वनिस्तं हीत्यादिना शेषसंग्रहः ।
यद् यथेत्यादिना युक्तिरेकसंज्ञा तदेकता ॥१०६॥

---

1. प्र. वा. २. २२०-१

प्रत्यक्षानुमयोर्नापि विरोधे शक्तिसं[134b]शयः ।
अक्षापेक्षानुमा नित्यं नानुमापेक्षमक्षजम् ॥१०७॥

परिहृत्य यथाध्यक्षविरोधमनुमोदयः ।
तथानुमाविरोधं न परिहृत्याक्षसंभवः ॥१०८॥

परोक्षे ध्यानुमान्यत्र विरोध इति कः क्रमः ।
अक्षेण बाध्यते कोऽर्थो नेयं तद्गोचरे प्रमा ॥१०९॥

स्वात्मसत्तास्थितावक्षादनुमानाद् गुणान्तरम् ।
प्रत्यक्षेणाव्यवहृतेः परोक्षत्वव्यवस्थितेः ॥११०॥

ततोऽध्यक्षान्तरेणापि नानुमायास्तुला क्वचित् ।
स्वसंवित्त्या तु यत् सिद्धं तत्र चिन्तैव कीदृशी ॥१११॥

स्ववित्तिरेवापरमानयोर्निनं चेत् प्रमाणं किमिह प्रमाणम् ।
अतस्तया साधितबाधितेषु न बाधसिद्ध्योरपरस्य शक्तिः ॥११२॥

अन्तरश्लोकः ॥

एकानेकात्ययेऽप्यस्मात् स्फुरतः केन वारणम् ।
न च ताभ्यां स्थितिव्याप्तिः प्रत्यक्षेणैव बाधनात् ॥११३॥

लक्षणस्य क्रियाकाले व्याप्तिविच्च हृतामुना ।
बहिरेवैष नियमः सामर्थ्यादवतिष्ठते ॥११४॥

द्वैतेऽपि न बहिर्धर्मः सर्वः साधारणो धियः ।
स्थैर्यास्थैर्यवदद्वैते स्यान्न यद्येप न क्षतिः ॥११५॥

पूर्वापरतया व्याप्तं स्थैर्यादि न तदत्यये ।
एकानेकतयाव्याप्तिः स्थितेर्बुद्धौ न संविदः ॥११६॥

व्याप्तिरेवाथ तदपि सत्त्वादस्त्येकमेनयोः ।
सर्वाकारावसायो हि न प्रत्यक्षेऽपि वस्तुनि ॥११७॥

भासमाने च नीलादौ भास एव समक्षधीः ।
ततो भेदोऽथ निर्भेदशंका पीतादिनः पुनः[1] ॥११८॥

---

1. ततो भेदिनी भेदशङ्केति मातृकायाम् ।

तत्रापि व्यतिनिर्भासादेवाभेदव्यवस्थितिः ।
भेदे हि भेदसन्तानज्ञानवन्न प्रकाशनम् ॥११९॥

उपादानाभिदोऽन्योन्यं प्रकाश इति चेदसत् ।
उपादानाभिदप्येषां न हि भेदमपोहति ॥१२०॥

प्रत्यासत्तिर्यदप्यस्ति ग्रहणार्थस्तु को भवेत् ।
सैव चेत् स्फुरणं साक्षात् न भवेत् सैव हि प्रथा ॥१२१॥

तद्बलाच्च ग्रहे हेतुफलयोः किं न वेदनम् ।
सान्निध्यतारतम्यं [तु] तत्रैवैतदपेक्षया ॥१२२॥

परस्परग्रहार्थोऽत्र साहित्यस्फुरणं यदि ।
आसन्नदेशस्फुरणमग्रहेऽपि मिथो[1] न किम् ॥१२३॥

तस्मान्न चित्रभासः स्यात् संस्तु न क्ष[म]ते भिदाम् ।
अन्योन्यसंविदावेशात् स्वभावाभेदलक्षणात् ॥१२४॥

चित्रादेव सदोत्पत्तावेकोपादानतापि का ।
न सङ्कोचदशायामप्येकान्ताच्चित्रनिश्चयः ॥१२५॥

यावच्च जन्म चित्रस्य चित्रादेवोपलभ्यते ।
भिन्नोपादानता तावत् क्षमते न मिथः प्रथाम् ॥१२६॥

उपादानस्य यदि च चित्रस्याप्येकतास्थितिः ।
उपादेयस्य किं नेति चित्राद्वैतमबाधितम् ॥१२७॥

कथं वा नीलमप्येकमथाणुप्रतिभासनम् ।
ततोऽनेकस्थितिभ्रंशो केन कस्य स्थिरैकता ॥१२८॥

एकानेकत्वविरहोऽप्यत एवेति चेन्मतिः ।
अस्तु सत्त्वस्य बाधा तु न शक्येति निवेदितम् ॥१२९॥

एतत्तु प्रकृतं भेदे युक्तं नान्योन्यभासनम् ।
उपादानाभिदो नाम नोत्तरस्य बलं यतः ॥१३०॥

---

1. मथो इति मातृकायाम् ।

तस्मात्,

सहोपलम्भनियमादभेदो नीलपीतयोः ।
स्वभावो हि [135a] तयोः संविदभिन्नेति भिदा कुतः ॥१३१॥

संवित्तिनियमो नास्ति भिन्नयोर्नीलपीतयोः ।
इत्थमर्थे पतेत् पुंभ्यामेकैकस्यापि दर्शनात् ॥१३२॥

तदाह,

नीलादिश्चित्रविज्ञाने ज्ञानोपाधिरनन्यभाक् ।
अशक्यदर्शनस्तं हि पतत्यर्थे विवेचयन् ॥१३३॥

यद् यथा भासते ज्ञानं तत्तथैवानुभूयते ।
इति नामैकभावः स्याच्चित्राकारेऽपि चेतसि[1] ॥१३४॥

बाह्यवन्न हि बोधेऽपि पुंसोरेकैकदर्शनम् ।
यतोऽन्यथापि ग्रहणान्नियमस्य पराहतिः ॥१३५॥

भासते यद्यदेकं तद् यथा चित्रे सिताकृतिः ।
भासते चाखिलं चित्रं पीतशीतसुखादिकम् ॥१३६॥

एकाभिमतबोद्धारमपेक्ष्येदमुदीरितम् ।
नानैकान्तिकता तस्मात् सन्तानान्तरभासिना ॥१३७॥

दृष्टान्ते साध्यशून्यत्वं न विपर्ययबाधकात् ।
भासः स्थूलतया व्याप्तो न ह्यसावणुशो भिदि ॥१३८॥

एकैकाणुनिमग्नत्वात् संवित्तिर्न परस्परम् ।
न चैकाणुप्रकाशोऽस्ति स्थूलमेव स्फुरत्यतः ॥१३९॥

बाह्याणूनां प्रतीभासो बुद्धिरेका स्थवीयसी ।
ज्ञानाणूनां क एकस्तु प्रतिभासो भविष्यति ॥१४०॥

अनेकत्राप्यवयविन्येका चित्राकृतिर्मतिः ।
खण्डशो व्यवहाराय साध्वी बुद्धौ तु का गतिः ॥१४१॥

१. प्र. वा. २. २२०-१

एकत्राप्यंशिनि मितिः साकारैका प्रसाधिता।
व्यवहारोऽन्यथा नेति स्थौल्यं ज्ञानस्य दुस्त्यजम् ॥१४२॥

तस्मात् स्थूलतया व्याप्तो निर्भासस्तन्निवृत्तितः।
निवर्तमानोऽनेकस्मादेकत्वे विनयस्य ते ॥१४३॥

यथा सजातीयमताद् भागाद् भेदनिराक्रिया।
अनाभासप्रसङ्गेन विजातीयमतात्तथा ॥१४४॥

तन्नास्तु साध्यो दृष्टान्तो न चाशङ्काविपर्यये।
साध्यस्याध्यक्षबाधापि नाध्यक्षस्याप्रतिष्ठितेः ॥१४५॥

न मानमन्यग्रहणं न भेदग्राहिका स्ववित्।
भिन्नमस्मादिदमिति विकल्पो वासनान्वयः ॥१४६॥

यथा बाह्यं स्वतो भिन्नं स्वतन्त्रः कल्पयत्ययम्।
बाह्यं बाह्यान्तराद्भिन्नं तथा कल्पयति स्वयम् ॥१४७॥

बाह्ये सत्यपि नान्यस्मादध्यक्षं भेदवेदनम्।
अन्यस्यापि ग्रहप्राप्तेस्तद्विशिष्टात्मनो ग्रहात् ॥१४८॥

अस्माद्भिन्नमितीदं चेत् स्वरूपं ग्राह्यवस्तुनः।
सावधेरस्य भासः स्यान्न वा ग्राह्यं सदात्मना ॥१४९॥

विनावधिं प्रतीतौ हि भेदोऽभेदः कथं न सः।
भेदोपचारमात्रं स्यान्नभेदस्तत्त्वतस्ततः ॥१५०॥

परासंकीर्णरूपस्य ग्रहणं किल भेदवित्।
परासंकीर्णमन्यस्माद् भिन्नमेकार्थमीदृशम् ॥१५१॥

न त्वन्यसंकीर्णगतावन्यस्याप्युचितो ग्रहः।
अन्याग्रहे त्वकीर्णस्य केवलस्याग्रहः कथम् ॥१५२॥

केवलो यत एवायं भाति तेनैव नान्ययुक्।
अन्यस्यापि प्रकाशे हि गृहीतः केवलः कथम् ॥१५३॥

केवलस्य ग्रहो न स्यादन्यस्य स्फुरणे यथा ।
अन्यस्यास्फुरणेऽप्येवं परामिश्रो हि केवलः ॥१५४॥

अमिश्रोऽयं परेणेति विवर्तो मनसो यथा ।
तथैव यद्यनुभवः परधीः केन [135b] वार्यते ॥१५५॥

परिहृत्य परं तातो यथा मिश्रग्रहो न सन् ।
परिहृत्य परं तातस्तथा भिन्नमहो न सन् ॥१५६॥

वस्तुमात्रग्रहस्तस्मादध्यचेणेति युज्यते ।
न भिन्नं नापि चाभिन्नं ग्रहीतुं तेन शक्यते ॥१५७॥

न भेद्यभासादवधेर्ज्ञातं नाभेद्यशंकरात् ।
नान्यत्र भेदाभेदाभ्यां वस्तु वस्तुग्रहः कथम् ॥१५८॥

सर्वमर्थान्यतिभिदि ज्ञानादपि भिदा कुतः ।
भेदे चावधिभानेऽपि सर्वः सर्वस्य गोचरः ॥१५९॥

किं तु बाह्य[ग्रहा]वेशे चिन्तायां दूषणं समम् ।
यथा भेदग्रहानिष्टौ तथा सत्यवधिग्रहे ॥१६०॥

तस्माद् बाह्यग्रहश्चक्षुर्निमील्यास्तु यथा तथा ।
भेदाग्रहं त्वनुवदन् तत्त्ववित् बाध्यतां कथम् ॥१६१॥

नाध्यक्षं भेदकृत् कल्पं तस्करस्त्विह तत्करः ।
स स्वापराधमध्यक्षे क्षिपतीति भिदः स्थितिः ॥१६२॥

नीलादिव तदेकं च कथमेतत् समेतु चेत् ।
नीलमंशान्तरं चैकमिति किं भाति सङ्गतम् ॥१६३॥

नैकं तदपि चेत् तर्हि काणुतो भिदि भासनम् ।
न परीक्षाक्षमश्चाणुः कुतः कस्य तदा भिदा ॥१६४॥

मा भूदवस्तुतो वा चेत्[1] सोऽप्येकत्वहतौ भवेत् ।
निर्भासादेकतासिद्धौ स्ववित्तेर्वस्तुता स्थिता ॥१६५॥

---

१. चाभेदिति मातृकायाम्

अथ देशवितानाग्निर्नोमान्तरवियोगिनः ।
न देशभानहानौ च भास इत्यपि शक्यते ॥१६६॥

न स्वात्मान्तरमन्यात्मा स बाह्यस्यैव युज्यते ।
बुद्धेः स्ववित्तिनिष्ठाया यः परस्तस्य का गतिः ॥१६७॥

भिन्नोऽपि देशभेदेन बाह्यार्थो गृह्यते धिया ।
धीस्तु देशभिदा भिन्ना केनास्तु व्यवहारभाक् ॥१६८॥

स्थूलदेशापि [1]तेनैक्यान्न बुद्धिर्भेदमर्हति ।
यथा न भेदोऽस्या[भेदे] भेदकस्तद्वदाकृतेः ॥१६९॥

चित्रं तदेकमिति चेदिदं चित्रतरं ततः[2] ।
ततश्चित्रतमं चेदं यद्भेदे वेदनं मिथः ॥१७०॥

चित्रैकबुद्धिनिर्भासे बाह्यः स्याद् वा न वा भवेत् ।
अनाभासप्रसङ्गेऽस्या न बाह्यानि न बुद्धयः ॥१७१॥

अणुत्वे तदभावे वा न धीभासस्य सङ्गतिः ।
तस्मादणुत्वाभावाभ्यां विरुद्धं भासनं धियः ॥१७२॥

तदाह,

नीलादिश्चित्रविज्ञाने ज्ञानोपाधिरनन्यभाक् ।
अशक्यदर्शनस्तं हि पतत्यर्थे विवेचयन् ॥१७३॥

यद् यथा भासते ज्ञानं तत्तथैवानुगम्यते ।
इति नामैकभावः स्याच्चित्राकारस्य चेतसः[3] ॥१७४॥

ज्ञानत्वेन विशिष्टोऽयं नीलादिश्चित्रवेदने ।
मिथः स्वरूपानापन्नोऽस्थूलो द्रष्टुं न शक्यते ॥१७५॥

भेदस्य प्रत्यणु प्राप्तेर्नीलादि चय एव वा ।
अशक्यो द्रष्टुमुदित एकैकस्य ग्रहाद् धिया ॥१७६॥

१. तेनयेनेति मातृकायाम् । २. प्र. वा. २. २०० ३. तत्रैव २. २०१-१; प्रकाशत इति चेतसीति च तत्र पाठः ।

अनेकाकार एकोऽत्र एष्टव्योऽनुभवो यतः ।
अस्मादिदं भिन्नमिति प्रकल्पयति पृष्ठजम् ॥१७७॥

अत एव च नीलादि भिन्दन्नर्थं विवेचयेत् ।
न बुद्धिरूपं तद्भेदे न ज्ञानं न च गोचरः ॥१७८॥

तस्माद् येन प्रकारेण करणेन चकास्ति धीः ।
स्थूलैकत्वेन तेनै[व] विशिष्टा सोपगम्यते ॥१७९॥

विरुद्धधर्माध्यासश्च तत्र भेदाय कल्पते ।
[136a] यत्राध्यक्षकृतो भेदो व्यवहारप्रसाधनात् ॥१८०॥

स्वयं वेदनमेवात्र प्रत्यक्षं न च तद्भिदे ।
नीलादित्वे विकल्पोऽनुवर्तकस्तस्य नो भिदि ॥१८१॥

निर्भासभेदाद् भेदश्चेत् स एवाकार उच्यते ।
बहिर्मेये प्रमाणं स तत्र मेये स्ववित् प्रमा ॥१८२॥

स्वविदेकीकृतस्यास्य भेदाद् भिन्नं कथं बहिः ।
यथा धियोऽक्षाद् ग्रहणं स्वविदा भेदनं तथा ॥१८३॥

स्फुरणं प्रतिभासश्चेत् सा स्वविन्न च विद्यते ।
मेयभूताकृतौ भेदावसायो हन्यते विदा ॥१८४॥

अध्यक्षमेव हि भिनत्ति शितेः सितं चेत्
तद्भिद्यमानमथवाभिदमेव भिन्द्यात् ।
भेदेऽन्यलेशमपि नेति कुतो भिनत्तु
भिन्द्यादभेदि मन इत्यपि कस्य शक्यम् ॥१८५॥

बाह्यं न नश्यति भिदाणुतयाप्यभेदे
स्वर्थक्रियाविरहसंकरतोऽशुमात्रम् ।
बुद्धिस्तु नश्यति भिदैव विदैव सत्ता-
चित्राप्यतो न भिदमेति किमत्र कुर्मः[1] ॥१८६॥

---

१. तुल० रत्न० निब० पृ: १३६

भेदस्तथाप्यबुध बुद्ध्यनुरोधतश्चेद्
एतावतापि तव हेतुरसिद्ध एव ।
एकत्वहानिरथबुद्ध्यनुरोधबाधो
बाधस्तु नस्तदपि नेति परोक्तमेतत् ॥१८७॥

अन्तरश्लोकाः ॥

एकानेकतया वस्तुव्याप्तिः सिद्धा यदि क्वचित् ।
सर्वशून्यत्वसमये हेतुरिष्टविघातकृत् ॥१८८॥

अथ लोकप्रसिद्धौ च न सर्वं लोककल्पितम् ।
तत्त्वव्यवस्था शरणं किं तु मानेन संगतम् ॥१८९॥

न चाध्यक्षानुमानाभ्यामनंशं क्वचिदीक्षितम् ।
यस्य राशिरनेकं स्यान्नापि वस्तु च किञ्चन ॥१९०॥

स्थूलमेकैकमध्यक्षं नैकानेकं व्यवस्यति ।
वस्तुतस्तु किमेकं तत् नाना वा कोऽत्र निश्चयः ॥१९१॥

न चान्योपगमः साधुः स्वतन्त्रे साधने सताम् ।
न प्रसङ्गे च मुख्यार्थः तथात्वे च मतक्षतिः ॥१९२॥

यस्य चैकतरत्वाभ्यां सत्त्वव्याप्तिः स हन्यताम् ।
अभ्रान्तवित्तिमात्रेण सत्तावादी तु जित्वरः ॥१९३॥

सर्वत्र हेतौ व्याप्तिस्तु प्रमासिद्धिमपेक्षते ।
व्यापकानुपलम्भादौ सा च ज्ञेया विपर्यये ॥१९४॥

मानसिद्धं न च व्याप्तिव्याप्यं नोपगतं स्वयम् ।
परवित् परवित्त्यैव बाध्यते त्विति कीर्तितम् ॥१९५॥

न च स्वभावस्वीकारोऽवश्यमेकादिकर्पकः ।
व्याप्तेरसिद्धेरथापि प्रमाणव्याहतं च तत् ॥१९६॥

प्रमाणव्यस्तरूपेण व्याप्तिमादाय वर्तते ।
यदि भावास्वभावत्वं खरशृङ्गात्ययान्न किम् ॥१९७॥

एकानेकात्ययात् तर्हि बाह्यस्यापि कथं क्षतिः।
तत्त्वतोऽनुपलम्भेन ग्राह्यलक्षणहानितः ॥१९८॥

न चानंशैकता किं तु विविच्याशब्ददर्शनम्।
तच्च नास्ति बहिस्तस्याभावतस्तत्समुच्चयः ॥१९९॥

विविच्याशक्यदर्शित्वमेवैकत्वमणावपि ।
चित्रज्ञाने तदक्षीणमरुचिः क्वोपयोगिनी ॥२००॥

बुद्धौ तु चित्ररूपायामशक्यै[क]विवेकदृक्।
परचित्तविवेकेन तदेकानेकलक्षणम् ॥२०१॥

तदाह नीलादीत्यादि स्फुटातोऽन्यधियोऽन्यता।
सा कुतोऽनुमितेः सा चेत् संवृत्त्यास्तु यथा तथा ॥२०२॥

तथापि कल्पितं नित्यमपेक्ष्य क्षणिता यथा।
दृढप्रकल्पान्यमनोऽपेक्ष्यमेकं तथा धियः ॥२०३॥

तद्वशक्यविवेकैकाभावेऽप्यन्यतया ततः।
शक्यभेद[136b]मनेकं स्याद् बाह्येऽप्येकचयेन किम् ॥२०४॥

नैवं यथांशिनि हृते त्वणुरेकोऽवतिष्ठते।
ततस्तत्प्रचयोऽनेकस्तद्दोषादेव दूषितः ॥२०५॥

तथा तत्प्रतिरूपेऽस्मिन्नेकानेकात्यये कृते।
एकसंहतिरेवायमनेको वादिसंमतः ॥२०६॥

शक्यमेवमपि ख्यातुमिति बाह्याधिकारतः।
अवयव्यणुचिन्ताद्यकृतिनोऽभूत्पराशयात् ॥२०७॥

यदा च चित्रबुद्ध्यैव बाधकान्तरहानितः।
एकानेकत्वयोर्बाधः सिद्धिः किं न तया तयोः ॥२०८॥

एकत्वे चित्रताभावो नानात्वे सुतरां यथा।
चित्रत्वान्नैकता यद्व[देका]नेकस्थितिस्तथा ॥२०९॥

अनुत्पन्नत्वमेवास्तु हेतुर्न प्राच्यदूषणात् ।
ज्ञानेऽपि हेतुफलयोः स्फुरद्रूपं क्व गच्छतु ॥२३५॥

तस्माद्धर्मैः कल्पितैरेव रूपैः
शून्यः सर्वो भासमानैव कश्चित् ।
चित्राद्वैतं चित्रचक्रं तदेतद्
भाव्यं भव्यैरप्रपञ्चं शिवाय ॥२३६॥

साक्षात्कारो न कामं भवति भवभृतां यावदस्या दशाया
हेयोपादेयसाध्यप्रभवपरिचयस्तावदस्त्यप्रकम्पः ।
तस्मात् संभारयुग्माभ्यसनपरिणतौ मूर्तिचेतोगुणाभ्यां
योगी योगीश्वरोऽसौ निरुपमनिलये लब्धबोधिः प्रसिद्धः ॥२३७॥

यथा सुवर्णं गुणरूपसंपदः
प्रकर्षपर्यन्तमुपेतमक्षयम् ।
विमुक्तमालोक्यकलङ्कशङ्कया
तथैव बौद्धं वपुरस्तु देहिनाम् ॥२३८॥

॥ इति चित्राद्वैतनिर्णयश्चतुर्थः परिच्छेदः ॥
॥ साकारसंग्रहसूत्रं समाप्तमिति ॥
॥ कृतिरियं महापण्डिताचार्यज्ञानश्रीमित्रपादानाम् ॥

# विशिष्टनामसूची[1]



1. अधस्तादङ्काः पृष्ठसूचकाः।

विना विरुद्धोपनयान्न बाधा प्रतियोगिनः ।
तथानेकहतावेकस्वविदन्तर्गमाद् वद ॥२१०॥

तथा च व्यापकाभावविप्लवः स्यान्मतस्थितेः ।
अस्माकं तु न दोषोऽयं द्वयोश्चेन्मानसिद्धता ॥२११॥

सर्वाकारहानेन किमेकं न समं क्वचित् ।
एकतानेकताभ्यां तत् स्फुरत्ताभ्यां तदन्वितम् ॥२१२॥

स्यान्नाम तत एकत्वं भेदाभेदात्मचित्रके ।
अथैकस्यान्यबाधाय साधनं स्थितये न तु ॥२१३॥

तस्यापि बाधनात् पश्चात् प्रत्याशा महतीदृशी ।
प्रमाणादेकसिद्धिश्चेत् पश्चाद् बाधः कथं भवेत् ॥२१४॥

प्रमाणान्नैकसिद्धिश्चेदन्यबाधः कथं भवेत् ।
एकात्ययो नान्यविधिः स्याद्विरोधः स्वयं यदि ॥२१५॥

विधिश्च चित्रधीर्हन्याद्विरुद्धोपनयात् परम् ।
उदीर्यमाणः शक्तश्चेदहो प्रामाणिकस्थितिः ॥२१६॥

कदापि नोभयभ्रंशस्तथाप्येकैकसंस्थितिः ।
कदाप्येकतयानेकतया भाति कदापि तत् ॥२१७॥

तथापि भाव एकस्यामसिद्धिर्व्यापकच्युतेः ॥२१८॥

अर्थशक्त्यादिरूपं च यदि सत्त्वं निषिध्यते ।
का क्षतिर्भासरूपं तु ब्रह्मणापि न बाध्यते ॥२१९॥

बाधने धर्मिणस्तस्य बाधा स्यादपि न स्वयम् ।
यथा नीलमिदं तद्वद्भाति सत्यं न वा भवेत् ॥२२०॥

सन्देहे धर्मिणो धर्मसन्देह इति चेत् कुतः ।
तादात्म्यात् तत्त्वत इति तुल्यं नाशिकतादिभिः ॥२२१॥

अर्थैकनिश्चयोऽन्यत्र प्रवृत्तमपि संशयः ।
हन्ति व्यावृत्तिभेदेन तदपि प्रस्तुते समम् ॥२२२॥

प्रतीतिरेव सत्तास्तु यदा बाह्येऽपि तत्त्वतः ।
भासिनो धर्मिणस्तर्हि क्व बाधा क्व च संशयः ॥२२३॥

कदाचित् केनचिद् दृष्टस्यानुमानत्वमन्यदा ।
अपात्रं सर्वथा दृष्टेः पात्रं किं सदिति स्थितेः ॥२२४॥

विकल्प एवानुमितेरभावेऽपि प्रकाशनम् ।
तादृशां यादृशी सत्ता प्रतीतिरपि तादृशी ॥२२५॥

प्रतीतिमेव सत्तां च स्फुटयन् वार्तिके कृती ।
अप्रतीत्यैव बाह्यस्य चिन्मात्रं प्रत्यपीपदत् ॥२२६॥

तद्भासमात्ररूपेण भातद्रव्यादिता मुधा ।
चित्रे भासैकभावः स्यान्न प्रपञ्चो गुणादिभिः ॥२२७॥

स्थिति[र्हि] विज्ञाननये तात्त्विकी च फलाङ्गता ।
अहो नैर्लज्ज्यमथवा सर्वं हि महतां महत् ॥२२८॥

पूर्वापरपरिज्ञाने परज्ञाने च तद्ग्रहः ।
कुतः स्ववित्तिनिष्ठायामुभयस्याप्यसंभवात् ॥२२९॥

अभासे पूर्वपरताज्ञानं न [137a] ज्ञानहानितः ।
न भासे पूर्वपरताज्ञानमद्वैतसंगतेः ॥२३०॥

स्वैकरूपे द्वयाभावात् स्वान्ययोः परयोर्न वा ।
फलाङ्गभावः परवित् परिहारात्त न द्विधा ॥२३१॥

तस्माद् यथा परज्ञानं तथा हेतुफलस्थितिः ।
यथा स्ववित्तिविश्रामस्तथा संवृतिसत्यसौ ॥२३२॥

चित्तमात्रव्यवस्थानमनुत्पादं वदन्त्यतः ।
प्रतीत्योत्पन्नताप्यस्मादसिद्धेरप्यसाधनम् ॥२३३॥

न च प्रतीत्योत्पन्नत्वमेव वाच्या च शून्यता ।
अपरस्थितियुग्माद्य नैवं भेदो वृथा श्रमः ॥२३४॥

२

# श्लोकार्धसूची

३

# लोकोक्ति सूची

४

# विशिष्टशब्दसूची

# संशोधनं संयोजनं च

[ अत्र शुद्धप्रयोगा एव प्रदर्शिताः । ते संश्लिष्टस्थलेषु योजनीयाः ]

*Intoduction*

P. 5. line 15 incidentally

P. 10. विभाजिका रेखा २२-पंक्त्यनन्तरं यास्यति ।

P. 17. F. N. 3, *Nayavi*° p. 271

P. 31. line 21, *Kṣaṇabhaṅga*°

30 सहजगुरु°

P. 32. line 32 विपक्षेक्षणम्

P. 36. line 3 नो चेदनिन्द्यमिदमद्वय°

P. 40. line 6 *Malliṣeṇa*

7 एतासु पञ्चस्वव°

8 ईक्षते सः ॥

in the *Syādvādamañjrī* (p. 167).

प्रस्तावनायाम्

| | | |
|---|---|---|
| पृः ४३ | पं १७ | भोटदेशीयग्रन्थेभ्यो |
| | १६ | पुनरागतेभ्यो |
| ४५ | ७ | °शयादिद्युतत् |
| | ११ | °स्यान्तर्भाव इति |

ग्रन्थभागे

| | | |
|---|---|---|
| पृः ३ | पं १६ | जन्माधिकरणं |
| ६ | २४ | नवाभिधानम् |
| १६ | २१ | हेतोरुपपद्यते |
| १७,१६,२१,२३-शीर्षकेषु | | °ध्यायेऽन्वयाधि° |
| २५ | २३ | चातज्जनकत्वं व्यव° |
| ३३ | ४ | °मन्धकारनाशादि |
| ४५ | ६ | °सहभुव आद्या° |
| ४७ | ६ | तिलकचित्रक° |
| ४६ | ७ | बाधकस्यैव विप° |
| ८० | ६ | स्वरूपसाक्षात्क° |
| ८६ | अन्तिमपं° | रक्ष° निम्न° ८१; ८८ |
| ६४ | ५ | [द्रः श्लो.वा. पृः २६६] |
| १०६ | १ | व्याप्यव्यापकभावौ |
| ११३ | ३ | चेदित्युक्तम् । तत्र |
| १३७ | १६ | ग्राह्याध्यवसेय° |
| १४४ | ८ | सोऽयं नयः |
| १५६ | १० | उन्मूल्य क्षणं° |
| १६५ | १६ | °दर्शनमौत्तर° |
| १६६ | २२ | च स्थितिः ॥ |
| | | [कार्यकारणभावसिद्धौ] |
| १८४ | २ | कवलयितुर्नेह |
| १८८ | ७ | न ह्यत्राग्नि° |
| १६१ | ४ | एकज्ञानासं° |
| १६२ | ४ | प्राक् न पश्चा° |
| | २१ | °रजनीसुतप्रति° |
| २०७ | ४ | कथमर्यतोऽपि |
| २०८ | १८ | दृष्टाविवेति |
| | | [ प्रमाणविनिश्चये ] |
| २१७ | १० | °साधारणं द्रष्टृणां |
| २२६ | १६ | शालित्वादिस्थितेः |
| २२६ | ५ | [द्रःसाकारसिद्धौ पृः४४३] |
| २३६ | ६ | प्रसिद्धाविनाभावा° |
| २३७ | पादटीका | शतानन्दस्त्विति |
| २३६ | २१ | क्षित्याद्युपादानं |
| २५० | १७,१८,२५ | कार्य° |
| २७४ | २१ | कश्चिदेकव्यवहार° |
| २८७ | १५ | शरीरोपाधिबुद्धि° |
| २८८ | १ | रूपादिभेदस्यैव |
| २६५ | १८ | कार्त्स्न्यं कुतः |
| | २६ | संकल्पो यथा |
| २६६ | ७ | सर्वकार्यप्रकाराणां |
| ३०५ | १ | न तावता |
| ३०७ | १५ | पाण्डुतयोर्व्यभि° |
| ३०६ | १४ | विपक्षबाधकवशादि-त्यादि [ पृः २६३ ] |

